स बुद्धो भगवान्, अग्र्यं आद्यच्, तस्मै नमः । नमः स्वस्तीत्यादिना (२ । ३ । १६) चतुर्थी । प्रथमत उपदेशादाकाङ्क्षादिमहिम्ना च तं नमस्कृत्येत्यायाति । स देवदेवो यथा सर्व्वज्ञस्तथा तच्चरणानुग्रहादहमपि प्रकृते कर्म्मणि सर्व्वज्ञो भवानीति हृदयम् । वैदिकप्रयोगानर्थिनो लक्ष्मणसेनस्य राज्ञ आज्ञया प्रकृते कर्म्मणि प्रसज्जन् वृत्ते लघुतायां हेतुमाह—'भाषाया मिति' । भाषते लोकोऽनया परिपाट्या, "गुरोश्च हलः" (३ । ३ । १०३) इत्यकारे कृते, भाषा लोक-परिपाटी । यद्यपि अपशब्द-प्रक्रिययाऽपि लोको भाषते, तथापि साधुशब्दसाधकशास्त्रारम्भे प्रयोगात् साधुशब्द-भाषायामिति योज्यम् । तथाहि— "आहिताग्निरपशब्दं प्रयुज्जानः प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्व्वपेत् ।" हे अरय इत्यर्थे हेऽरयो हेऽलय इति वदतोऽसुरान् सुराः पराबभूवुः, * "तस्माद् ब्राह्मणेन यज्ञशालां प्रविश्य न नापभाषितवै न म्लेच्छितवै" इतिश्रुतिः । "मनसा सङ्कल्पयेत्, ततो वाचाऽभिलपेत्, ततोऽनुक्रामेत् क्रियाम्, सा च परिष्कृता-

---

*हे अरय इत्यर्थकथनमात्रम्। भाष्ये त्वेवं पाठो दृश्यते — "तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः तस्माद्‌ब्राह्मणेन न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः ।" व्याख्यायते च कैयटेन — "तत्र केचिदाहुः हे हे प्रयोगे हेहयोरिति प्लुते प्रकृतिभावे च कर्त्तव्ये तदकरणं म्लेच्छनमिति । पदद्विर्वचने वाक्यद्विर्वचनं लत्वं म्लेच्छनमित्यपरे । म्लेच्छितवा इत्यस्य त्वार्थे नापभाषितवा इति । कृत्यार्थे इति तवैप्रत्ययः । म्लेच्छ इति कर्म्मणि घञ् ।"

वागभिमताय फलाय" इति श्रुतेश्च याज्ञिकैन संस्कृतैव वागभिलपनीया । संस्कारश्च त्रैलोक्य एव यः प्रमाणभूतो वैदिकेषु लौकिकेषु च शब्देषु सुप्रयोग निपुणः शिवोदेव स्तदनुगृहीतो वा पाणिन्याऽऽपिशलि-कात्यायन-काशकृत्स्नादीनामन्यतम स्तदभिमतया प्रयोगमर्य्यादया भाषणं भाषा । तथाच — भाषाशब्देन लौकिक-पद-प्रयुक्ति रुक्ता , तस्याश्च विवक्षाविषयत्वं । साधु हिं दानाध्ययनादिकर्मसु प्रवर्त्तमानोऽपशब्दं न भाषेत, युक्तः सदैव संस्कृतं भाषेत ।

यथा बृहस्पतिः —

" नासंस्कृतां वदेद्वाणीं कर्म्म कुर्व्वन्नयज्ञियाम् ।
यज्ञेऽपशब्दतो जल्पन् प्रायश्चित्तीयते द्विजः ॥
असंस्कृतामपि गिरं भाषेतानापदि द्विजः ।
अपभ्रंशाभिधायीतु वर्ज्यः स्याद्धव्यकव्ययोः ॥ "

इति ।

तच्च संस्कृतवाग्वचनं शब्दानुशासन-ज्ञानादेवेति कारुणिकस्य मुने स्तदर्थं शास्त्रनिर्म्माणेऽपि विवरणज्ञानादेव निःसंशयस्तत्तत्प्रयोग इति स्व-परिश्रमस्य प्रयोजनमभिहितम् ।

उक्तश्च —

"सर्व्वस्यैव हि शास्त्रस्य कर्म्मणोवाऽपि कस्यचित् ।
यावत् प्रयोजनं नोक्तं तावत्तत् केन गृह्यताम् ॥ "

इति ।

काले चास्मिन् कनीयसि, सम्प्रत्रतया वेदानामप्रचाराद्वैदिकेषु लोक स्तथा नार्थी, यथा व्यवहार-सम्पादक-प्रयोगेषु, अतो मद्वृत्तिज्ञानाय यतिष्यते लोक इति भावः । केषां वृत्तिः ? इत्याह — 'यथेति'। "मनेरुच" (५७२ उ०) इति मन्यते रिप्रत्ययोऽकारस्योपधाया उत्वञ्चेति । मननात् तत्त्वज्ञानान्मुनिः; त्रयाणां मुनीनां समाहारः त्रिमुनि; तस्य यानि यानि लक्षणानि तेषां, वीप्साया मव्ययीभावे "अमृत्वपञ्चम्याः" (२ । ४ । ८३) इति षष्ठ्या अम्। पाणिनि-सूत्राणि कात्यायन-वाक्यानि भाष्यकार-मतानिच भाषोपयुक्तानि, तेषां वृत्तिरित्यर्थः । लघ्वी अल्पा उक्तरीत्या, "त्रिष्विष्टेऽल्पे लघुः" इत्यमरवचनादिष्टा च अन्यतानथित्वादेव । वृत्तिरिति, — "वृतु विवरणे" इत्यस्य दैवादिकस्य क्तिनि विवरणमित्यर्थः । ये तु दिवादौ वा वृतुधातुं न मन्यन्ते, तेषां "वृतु भाषार्थे" इति चौरादिकस्य वृत्तिपदम् । विधीयते इति विधातुमारभ्यते इत्यर्थः । वुद्धाय नमो विधीयते इति, विधातुमारभ्यते वृत्तियेति काकाक्षिवत् । .

## अथ शब्दानुशासनम् ॥

लौकिकानां प्रकृतिप्रत्यय-विभाग-परिकल्पनया, सामान्यविशेषवता च लक्षणेन, गत्यन्तराभावात् वर्णाना मुपदेशः क्रमसन्निवेशानुबन्धासञ्ज्ञनार्थः। तदुभयं सञ्ज्ञार्थम् । सा च लाघवेन शास्त्रप्रवृत्त्यर्था । अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥

व्याकरणशास्त्रमारभमाणो भगवान् पाणिनिमुनिः प्रयोजन नामनी व्याचिख्यासुः प्रतिजानीते — "अथ शब्दानुशासनम्" इति *। अथशब्दो यद्यप्यारम्भार्थं स्तथापि—

"ॐकार श्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥"

इति स्मरणात् मङ्गलमपि द्योतयतीति मङ्गलपूर्व्वकमारभ्यते इत्यर्थः। अनुशिष्यन्ते व्युत्पाद्यन्तेऽनेनेति करणे ल्युट्, शब्दानामनुशासनमिति शेष षष्ठी समासः; शास्त्रस्येदमन्वर्थं नाम। देवतावन्दनादिकं मङ्गल मन्यत् किमिति मुनिना न कृतमिति न देश्यम्, अलिखितस्यापि तस्य सम्भवात्, आविर्भूत-तत्त्वज्ञानस्य मुने र्व्विघ्नाभावस्य सुविदितत्वाच्च ।

---

* "अथ शब्दानुशासनम्" इति भाष्यकारवचनम्, नैतत् पाणिनि सूत्रम्, आदिम प्रतीकत्वेन महाभाष्ये दृष्टत्वात्, "तथाहि पतञ्जलि र्भगवतो महाभाष्यकारस्य इदमादिम वाक्यम् — अथशब्दानुशासनम्, इति सर्व्वदर्शनसङ्ग्रहे माधवाचार्य्यै रुक्तत्वाच्च।

वृत्तिकृद्विवृणोति— 'लौकिकानामिति'। लोके भवा लौकिकाः अध्यात्मादिः, यद्यपि शब्दशब्दः समासे प्रविष्टस्तथापि केषामिति प्रश्नमुन्नीय व्याख्येयमिदम्। दृश्यते च प्रश्नो यथा — बहुपुत्रेण ममपुत्रो गरीयान् इत्युक्ते स पृच्छति कः स इति *; राज्ञः पुरुषोऽयमित्युक्ते कस्य राज्ञ इति।

" यथोत्तरेण युक्तेन प्रश्नस्योन्नयनं भवेत्।
उत्तरं नाम तद्वाक्यस्यालङ्करण मिष्यते "॥
द्वीपि-विद्रावनीं † विद्यां यदा लेभे पति र्मम।
ततः प्रभृति देशेऽस्मिन् भिक्षो ‡ द्वीपिभयं कुत.॥

अनेनात्र ग्रामे कोदृग्द्वीपिभयमिति भिक्षोः प्रश्न उन्नीयते। एवमिहापि केषामित्युन्नेयम्। प्रयोजनञ्च अपभ्रंशशब्दनिवृत्तिरित्युक्तमेव। अनुशब्देन नित्या एवामीशब्दा निर्व्विकल्प § प्रवृत्त्यर्थमन्वाख्यायन्त एव, नत्वपूर्व्वतया उपादीयन्त इति प्रतिपादितं; अन्यथा अगृहीत-श(स)ङ्केततया अर्थसम्पादका न भवेयुः। अभिधानस्याश्रयत्वात् अभिधान-प्रामाण्याद्धि शब्दप्रवृत्तिः, न हि सुवमस्तीत्येवं प्रयोगो भवति। तथात्वे पञ्चभुक्तवन्तोऽस्येत्यत्रापि बहुव्रीहिः स्यात्, न चैवम्। तस्मात् स्थितमेतत्

---

* बहुपुत्रेण ममपुत्र गरीयस्त मित्युक्ते स पृच्छति कस्य इति (ठ)।

† विद्राविनीं [ठ]।

‡ भिक्षा द्वीपिभय(ठ)।

§ निष्पन्न (ट)।

सिद्धशब्दान्वाख्यानमिदमिति। भर्तृहरिणा तु द्वादशप्रकाराः शब्दा निरूपिताः;—

"यौगिका योगरूढ़ाश्च रूढ़ाः संलक्षिताः स्थिताः।
नानार्थश्चेति षट्शब्दा जात्यादेरभिधायकाः॥
एत एवोपचारेण प्रयुज्यन्ते परे यदि।
तदा लाक्षणिकाः षट् स्यु रुभये द्वादश स्मृताः॥"

योगमूला राजपूरुष पाठकौपगवादयो यौगिकाः। योगे सत्यपि प्रतिनियत विषयाः सप्तपर्ण पङ्कजादयो योगरूढाः।

येषामवयवयोः प्रकृतिप्रत्यययोरर्थौ नानुसन्धीयते गोमहिषाश्वादय औणादिका स्ते रूढ़ाः। यथोक्तम् — "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" इति। अतएव "इदुदुपधस्य चाप्रत्ययस्य" (८।३।४१) इत्यत्र "निर्दुर्बर्हिराविष्प्रादुषाम्" इत्युक्तं; तेन प्रत्ययान्तत्वं तेषु न स्वीक्रियते इति यावत्। "उणादयो बहुलम्" (३।३।१) इति तेऽपि मुनिना उक्ता एव। ये तु लक्षणया वर्त्तमाना अपि वाचका इव द्विरेफादय स्ते लक्षितरूढ़ाः। द्वौ रेफौ यत्र भ्रमरशब्दे बर्बरशब्दे वा स द्विरेफः; द्विरेफो ध्वनतीत्युक्ते न च शब्दो ध्वनतीति द्विरेफशब्द स्तयो रभिधेयावभिधत्ते, न च परागरादिकमभिधत्ते इति रूढ़ एव। ये तु औणादिकेतररीत्या साधिताः शब्दाः, प्रायेण त्यक्तावयवार्थाः सदुक्तिमहिम्ना क्वापि तदर्थसन्दर्शिन स्ते * स्थितरूढ़ाः, यथा,

* तदर्शिन (ट)।

कुशलमण्डपादयः । कुत्सितं यथा स्यात् तथा शलति गच्छति, कुपूर्व्वः पचाद्यजन्तः शलधातु रिति ; अथवा कुशं लाति आदत्ते वा मण्डं निस्नावं पिबतीति "आतोऽनुपसर्गे कः" (३ । २ । ३) इति क-प्रत्ययान्तावेतौ निपुणश्रेष्ठविशेषवाचकौ ।

"यत्रार्थस्य विसंवादः प्रत्यक्षेणोपलभ्यते ।
स्वरसंस्कारमात्रार्था तत्र स्यात् पाणिनेः स्मृतिः ॥"

इति ।

तथात्वेऽपि साधु एव, अयच "राजान इव स्वकर्मकुशला यत्र मुनयः" "यत्रमन्दाग्नय इव सनागरमण्डपाः प्रदेशाः" इति जनपदवर्णने स्वकर्म्म राज्यरचनं हवनञ्च, * तत्र कुशलाः, समर्थाः, अथच कुशं लान्ति गृह्णन्ति ; एवं सनागरं शुण्ठी-सहितं मण्डं पिबन्ति, नागरै र्विदग्धजनैः सहिता मण्ड-पाश्च ; इत्यर्थद्वयवति काव्ये अवयवार्थमपि सुगतः । नानार्था — जीमूतादयः । यद्यपि एते उक्तेषु पञ्चस्वेव प्रविशन्ति, तथापि शब्दस्वरूपमेव प्रवृत्तिनिमित्तमाश्रित्य बहून् अर्थान् प्रतिपादयन्तीति विशिष्योक्ताः । एवं राजपुरुषसदृशो राजपुरुष इत्यनया रीत्याऽऽह — 'एत एवेति' । एते शब्दा उपचारेण गौण्या लक्षणया वा यद्यन्यत्र प्रयुज्यन्ते, तदा लाक्षणिकाश्चेति जाति-गुणक्रियाद्रव्याणां वाचका लक्षकाश्च भवन्त्येव । एवञ्च दत्ता-दयोऽपि क्रियाशब्दा यौगिकाः, प्रतिनियत इत्यादौ लक्षित-

* हवनञ्च (ट)

रूप इति सकलसंग्रहः। जात्यादयश्चेति यथावसरं वक्ष्यन्ते। यद्यपि शब्दा उच्चरितप्रध्वंसिन स्तथापि " स्फुटत्यर्थो यस्मादिति स्फोटाख्येन संस्कारात्प्रतीतेनार्थप्रतीतिः " इति भाष्यम्।

" एकैकवर्णसामर्थ्यान्मेलकानुपपत्तितः ।
एकस्मृते र्नदोदीन-सामर्थ्यात् स्फोट इष्यते ॥
नादै राहितबीजायां मन्त्येन ध्वनिना सह ।
आवृत्तिपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥ "

ध्वनिश्च त्रिधा। यथा —

" शब्दार्थोभयशक्त्युत्थ स्त्रिधा संकथितो ध्वनिः । "

पूर्वपूर्ववर्णानुभवजनित-संस्कारसहित-चरमवर्णाश्रयः स्फोटाख्यः शक्तिविशेषोऽयमिति, शब्दब्रह्मेत्याहुराचार्याः। स एवार्थप्रत्यायक इति स्थितम्। प्रत्यक्षश्च लोक-व्यवहारः शोकानन्दादि रेवात्र प्रमाणम्। अथ यदि पौर्वापर्येण प्रयुक्ता एव शब्दा अनुशिष्यन्ते इत्यलं विश्रमेण, तेषां तथैव सत्त्वात्।

अथ वार्हस्पत्यानां श्रौतमतानाञ्च शब्दानां स्वरूपं मनुष्यैः कुतो ज्ञायते *? पृथिव्यामेव वा दवीयो-द्वीपदेशवासिभिः † प्रयुक्तशब्दाः कथमितरद्वीपवासिभि र्ज्ञायेरन्? तस्मादप्रयुक्ता

* 'ज्ञायेत' (ख)
† जम्बूद्वीपदेशवासिभिः (ग)

शब्देषु परिश्रम्य सर्व्वशब्दानां स्वरूपं यथा सकलैरेव ज्ञायते, तदर्थोऽयमारम्भ इति चेत् — उचितमेव दीर्घायुषां कालप्रभूतत्वेन क्रमायुषान्तु तादृशे महति शब्दार्णवे दुःशकपारबुद्धा जिहीर्षैव न स्यादित्युद्वेग मा गच्छ सुगमां प्रणालीं मुनि रुपदिशति — 'प्रकृतीति'। प्रथमं क्रियते उच्चार्य्यते इति प्रकृति र्धात्वादिः। प्रतीयन्ते विधीयन्ते प्रत्ययाः — तिङ्सुप्-कृत्तद्धित-विकार-विकरणागमाः। तेषां स्वतोऽविभक्तानामपि विभागस्य परिकल्पनया प्रकृतीनामानन्त्येऽपि प्रत्ययादीनां परिच्छिन्नत्वात् तास्वपि परिच्छिन्नत्वं सम्भाव्यत इतिभावः। 'परि कल्पनया' इत्यनेन कल्पनामात्रं, नतु परमार्थत, इति सूचितम्। ननु केऽप्यात्मनेपदिनः केऽपि परस्मैपदिनः केचिदुभयपदिन इति प्रत्येकं तानुद्वार्य्य प्रत्ययविधाने सर्व्वस्वरूपग्रहणे मानुषाणां तथैव समुपेक्षा स्यादित्याह — 'सामान्येति'। धातुत्वं सामान्यं, अनुदात्तेत्त्व-स्वरितेत्त्वादयो विशेषाः। तथा च प्रातिपदिकत्वं सामान्यम्, गर्गादि गड़ाद्यादयो विशेषाः। तद्यथा — तद्वता लक्षणेन बहुलतम मपि प्रत्ययं * सुसङ्क्षिप्तमिव वक्ष्यते इत्यर्थः। लक्षणञ्चासाधारणधर्म्मवचनम्, यथा — गोः सास्नादिमत्त्वम्। वृत्तिकारोऽपिसंग्रह सूत्र स्वत एव सुस्फुटमिति मत्वा मुनिहृदयमपि प्रकाशयन्नाह — 'गत्यन्तराभावा' दिति।

"ज्ञानोपायविशेषेषु स्त्री गतिर्गमनेऽपि च।"

---

* ६३७ (ङ)

इति स्मरणादितिरुपायः। अन्तरशब्दोऽन्यार्थः, यद्यपि विशेषणं तथापि राजदन्तादित्वादस्य परनिपातः। प्रकृतेऽभिमतस्योपायान्तरस्यासम्भवात्। अभावस्य विरोधित्वेऽपि पराश्रितत्वाद्गुणत्वे "विभाषागुणे" (२।३।२५) इति पञ्चमी। अभावो हि स्वसम्बन्धमाश्रयति, न तु ज्ञापकाद्धेतोरेव सेति नियमः, "पुंयोगादाख्यायाम्" (४।१।४८) इति निर्देशात्। सुबन्तानि तिङन्तानि च पदान्यर्थसम्पर्कीणि च न च "अइउण्" इत्यादीनि "वृद्धिरादैच्" (१।१।१) इति वदन्त्ययन्ति। अथ प्रयोगार्हा वर्णाः सुखप्रतिपत्त्यर्थं मुद्राक्रियन्त इति चेत् तदपि न, दीर्घानुस्वार विसर्जनीय-जिह्वामूलीयादीनां मप्रयोगात्। कादयोमावसानाः स्पर्शा इति स्थितौ, तेषां पञ्चानां वर्गाणां मतिविप्रकीर्णत्वात्, केषामपि वर्णानां द्विः* रिह दर्शनात्, मुनिसूत्रस्यसार्थं कतया, अवश्यमेषां चतुर्दशानां सूत्राणां कोऽप्यस्त्वर्थ इति विमृष्य सिद्धान्त माह — 'वर्णानामित्यादि'। वर्णा अकारादय स्तेषा माद्यमुच्चारण मुपदेशः, क्रमेण सन्निवेशो वर्णानां कार्य्यविशेषार्थ मुपादानम्, अनुबन्धानसञ्जनचार्थौ यस्य स उपदेश स्तथा इति प्रकृते योजयति। तदुभयमिति — तयोरुभयं तदुभय, उभावयवौ यस्य द्वन्द्वस्य, तत्र क्रमसन्निवेशानुबन्धलक्षणं प्रत्याहारसंज्ञार्थम्। सति ह्येतस्मिन् "आदिरन्त्येनसहेता" (१।१।७१) इत्येतत् प्रवर्त्तते। तत्रादृष्टौ चाऽकारादीनाम् "अण्" इत्येवमा-

---

* द्विर्नि। (६)

दिकाः संज्ञाः सिध्यन्तीति । 'सूत्रे' ति — संज्ञा लघु इति संग्रहो यथा स्यात् इति कृत्वा तथा चाऽक्षरलादिसंज्ञार्थमेतानि सूत्राणि । सूत्रञ्च —

" स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभमनवद्यञ्च सूत्रं शास्त्रविदो विदुः ॥ " *

इति

स्तोभा निरर्थका स्तहीनं सूत्रम् ।

" पदच्छेदः पदार्थोक्ति र्विग्रहो वाक्ययोजना ।
पूर्वपक्षः समाधानं व्याख्यानं पञ्चलक्षणम् ॥ " †

इति

तत्र तत्रावधेयम् । अनिष्टतर्कः पूर्वपक्षः , समाधानं सिद्धान्तः प्रामाणिकत्वेनाभ्युपगमार्थ इति यावत् । विभक्तयो न कृता न च संहिताकार्याणि , स्वरूपभङ्गभयात् । प्रयोगस्वरूपानुकरण-रूपाणामेषां कार्यार्थमुपात्तानां भेदाभावार्थत्वमिति वा न प्रातिपदिकत्वम् ।

---

* 'स्वल्पाक्षरमसन्दिग्धं सारवद्गूढनिर्णयम् ।
निर्दोषं हेतुमत्तथ्यं सूत्रमित्युच्यते बुधैः ॥ ' (ट)

† 'पदच्छेदः पदार्थोक्ति र्विग्रहो वाक्ययोजना ।
पूर्वपक्ष समाधान व्याख्यान पञ्चलक्षणम् ॥ ' (ड)

" येनाक्षर समाम्नाय मधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ "

इति कात्यायन-वाक्येन सूत्राणां श्रीमहेश्वर-मुखनिःसृतत्वेन वैदिकतया वा सकलं साधुतममेवाभिधत्ते। 'अकार ग्रहणार्थं' इति — कथं, आकारस्य अकारेण सावर्ण्यभावेन दीर्घप्राप्तिः । विवृतं करणं सुष्मणां स्वराणाञ्च तेभ्य ए ओ विवृततरौ, ताभ्यामपि ऐ औ, ताभ्यामप्याकारः, संवृतस्त्वकार इति शिक्षासूत्रप्रणयनात् । अत आह — अकारस्येति । शास्त्रान्ते " अअ " (८ । ४ । ६८) इति, तस्य चायमर्थः — प्रयोगे अकारः संवृतकरणक एव प्रयोज्य., केवल माकारेण सावर्ण्यार्थं तत्र तत्र विवृतत्वेनोपदेष्टव्य इति । विवृतेनाप्यकारेण विवृततमस्याप्याकारस्य सावर्ण्यं, विवृत-पदेश-सामर्थ्यात्, " तुल्यास्यप्रयत्नम् " (१ । १ । ९) इति निर्देशाच्च ।

अ इ उ ण् । ऋ ऌ क् । ए ओ ङ् । ऐ औ च् । ह य व र ट् । ल ण् । ञ म ङ ण न म् । झ भ ञ् । घ ढ ध ष् । ज ब ग ड द श् । ख फ छ ठ थ च ट त व् । क प य् । श ष स र् । ह ल् ।
अकारादीनेतान् वर्णान् क्रमेणोपदिश्यान्ते णकारा-

दीनित्संज्ञकाननुबध्नाति प्रत्याहारार्थम् । तत्र ण-कारादयश्चतुर्दशभि रनुबन्धै र्यथाक्रमं—

" एकं त्रीणि पुनश्चैकं चत्वार्य्येकं त्रयं त्रयं ।
एकं द्वे षट् तथैवैकं चतुःपञ्च षड़ेव च ॥ "

अण् । अक् । इक् । उक् । एङ् । अच् । इच् । एच् । ऐच् । अट् । अण् । इण् । यण् । अम् । यम् । ङम् । यञ् । झष् । भष् । अश् । हश् । वश् । झश् । जश् । पुनर्बश् । छव् । यय् । मय् । झय् । खय् । यर् । झर् । खर् । चर् । शर् । अल् । हल् । वल् । रल् । झल् । शल् । इत्येकचत्वारिंशत् प्रत्याहारा भवन्ति । उरण् रपरः (१ । १ । ५१) चयो द्वितीया (८ । ३ । २८ सिद्धान्तकौमुद्याम् ) ञमन्ता ड्ड (११९ उ०) इत्येते श्चतुश्चत्वारिंशदिति ।

चतुर्दशैव सूत्राणि एकेनोपक्रमेणोपन्यस्य सर्व्वेषामेकेनैव प्रकारेण विवरणं कुर्व्वन् आह 'णकारादीनि' त्यादि । सूत्राणां विच्छेदेन पाठात् णकारादीनामन्त्यत्वात् " आदिरन्त्येन सहेता " (१ । १ । ७१) इति सूत्रस्योपस्थाने तानि तानि नामानि भवन्ती त्याह — 'अन्त' इति । आदित्वन्तु मध्यमस्यापि परमपेक्ष्य भवतीति काण्यनिर्देऽप्यादित्वे इणादिसंज्ञा भवन्त्येव । सर्व्वत्र

णकारादयो हल एव हयवरटादौ तूच्चारणार्थोऽकारः। ननु हल्संज्ञाया अनिष्पत्ते रेषां कथमित् संज्ञा ? इत्याह 'इत्संज्ञका' निति। युक्तिमाह 'प्रत्याहारार्थमिति' अतस्तत् सामर्थ्यादादिरन्त्येनेति (१।१।७१) सूत्रे नैवोपपत्तौ, सहग्रहणादधिकादित्संज्ञा क्रियते इति भावः। प्रत्याहारस्य लघ्वेन प्रबन्धेन बहूनामुपादानं तदर्थम्। ननु अगजादिसंज्ञा-कार्य्यार्थम्। तथाच दोषो णौ (६।४।९०) तिङ्सिच्प्रत्ययः प्रयोगाः, क्रियाविशेषणत्वात् क्लीबत्वम्। यान्युपयुक्तानि तान्येव कारिकया संगृह्णाति 'एकमिति'। नाम्नोऽविशेष्यत्वात् क्लीबत्वमितिभावः। चतुः सहितानि पञ्च शाकपार्थिवादि (२।१।६० वा०)। लृकारोपदेशस्य लृदित्वादङ् (३।१।५५) संक्षप्य इति श्रुतिश्च फलम्। कुमारी ऋतक इति वक्तव्ये लृतक इत्यस्यापि सामर्थ्यात् कुमार्य् लृतक इति लृकारस्याचूले यणादेशः फलमिति। न तु सावर्ण्यम्। ऋकारलृकारयो. सवर्णसंज्ञेत्यपिसिद्धम्। तथाच शुताद्युलृदित (३।१।५५) इति निर्देशः। नापि यखिवी यथासंख्यार्थं आन्तरतम्यात् सिद्धेः। इत्संज्ञाप्यप्रयोजना अङ्विधानसामर्थ्यात्। णकारस्याट्सु प्रवेशात् बर्हिणेति णत्वम्। झलिप्रवेशात् शमेर्यङ्लुगन्तात् लोट्सिपि शंशांहोति दीर्घानुस्वारौ। शलिप्रवेशात् क्सश्च दुहादेः। आद्यो वकारोऽन्तस्थः सानुनासिको निरनुनासिकश्च, दन्त्यौष्ठ्योऽल्पप्राणः। अन्यस्तु जश्त्वविसर्गी वर्ग्य ओष्ठ्य. स्पृष्टकरणो महाप्राण स्तस्येव भयभाव स्तेन मृगानिव विहस्ता धर्म्मतीत्यादौ

न भय्। तथाचापिशलि । "दन्त्योष्ठ्यवा दकारश्च वह व्यध दधा नभषि ति। उदूटो भवतो यत्र यो व प्रत्ययसन्धिज अन्तस्थ त विजानीयाद् वह व्यध दधामपीति * च"।

तथा सवत्सर-शब्दोऽनुस्व रवानेव। अन्तस्था द्विप्रभेदा इत्य त्रारतमे स नुनासिके यक रे सव्वत्सर इति। सम्वदित सम्वाद इत्यादिके वदस्थैर्य्ये वद सदेशे इत्याधृषीयस्य वा ओष्ठ्य- लाभकार परसवर्ण । एव वास उपसेवाया मिति- चौरादिके। रपर इति ऋकारसावर्ण्ये लृकारस्य ग्रहणे तवल्कार इत्यत्र ल भावार्थे र इति । हयवरट् इत्यस्य रवर्णेन लण् इत्यतस्य लकारेण अनुनासिकेन इता प्रत्याहार इति जयादित्यस्य हत्तिकतो मतम् । चयो द्वितीया शरिपौष्क- रसादे रिति कात्यायनश्च इति मतमेतद्द्वयम्। अष्टद्रु- णादि । एक सीणि इत्यादा वैया अप्रवेश । एतास्तु चतुर्दशसूत्रा निवद्धा परास्तु सुट्सुमिडादय कल्पिता सञ्ज्ञा निर्दिश्यन्ते। अयोगवाहाना सामान्येनोपदेश इति शिक्षासूत्रे चव- र्गीयमन्त्यशब्दैकदेश । "जे प्रोष्ठपदाना"(७ । ३ । १८) मित्यत्र ज इतिवत्। वाह्य प्रयत्न घषि वाह्य उच्चारणम्' तेन अन्ययोगो- च्चार्य्याणा मनुस्वारादीना सामान्येन हलादिना व्यवहार इत्यर्थ । सव यथा शक्येत विधि कर्त्तुमिति नातिप्रसङ्गायेति स्थिति ।

---

* अथो वर्गीय उच्यते (ड)।

अत्र प्रत्याहारसूत्रेषु हकारादिष्वकार उच्चारणार्थः, हकारो हिः पठ्यते। 'अटिशर्यपि च प्रवेशार्थं' तेन अर्हणाधुक्षदिति। लण् मध्येऽकारः प्रत्याहारार्थः। ते च प्रत्याहारा एकचत्वारिंशत्। "एकैकस्मात् ङ ञ ण रटा द्वाभ्यां य स्त्रिभ्य एव कणमाः स्युः। ज्ञेयौ चयौ चतुर्भ्यो वः पञ्चभ्यः शलौ षड्भ्यः" इति महाभाष्यम्।

## वृद्धिरादैच्॥ १॥

## आत् ऐ औ वृद्धिसंज्ञकाः स्युः।

'वृद्धिरिति'। संज्ञारूपेणार्थवत्त्वमिति प्रातिपदिकत्वे वृद्धि-शब्दात् सुः। स्वरूपमपि हि शब्दार्थएव *। आदिति ऐजिति च पृथगेव पदे। द्वन्द्वे हि इतरेतरयोगे द्विवचनं स्यात्। समाहारे च "द्वन्द्वाच्चुदषहान्तादिति" (५। ४। १०६) टच् स्यात्। ऐजिति ज्ञापकं, प्रत्याहारे चकारे न कुत्वमिति, गैलीयमिदं सूत्रहतः। 'आदिति' तकारो दकारो वा "अदेङिविति"(२ ३। ५७) वत्-मुखसुखार्थः। ननु तकारोयं "तपरस्तत्कालस्येति" (१। १। ७०) सूत्रे "तादपिपरस्तपर" इति न्यायेन ऐचो द्विमा-

---

* स्वरूपमिति। शब्दे यदा योऽर्थ प्रतीयते। तमाहुरर्थं शब्दस्य नान्यदर्थस्य लक्षणम्। इति स्थिते। (ट)

विकस्यैव ग्रहणं यथास्यात् । यथा जायेन्द्री जायीहत मायीहत इत्यादौ चतुर्मात्राविचौ माभूता मित्यर्थः कथं न स्यात् ? नैवं । तादपि पर इति पचस्य भाषावृत्तिकृता नाभ्युपेतत्वात् । शिवा-सूत्रकृतश्च चिपटिसख्यवर्णनिरूपणेन सन्ध्यक्षराणि स्तो द्विमा-त्राणि प्लुतक्रमेण त्रिमात्राण्यतोऽष्टावेवेति चतुर्मात्राविचौ वस्तुत एव न स्तः। प्लुतं विना च न त्रिमाचौ । प्लुतप्रक्रिया च भाषाया नाद्रियत इति *। तकारो मुखसुखार्थ एव । द्विशब्दार्थं स्त्रीलिङ्ग एव। ये ते इति परसूत्रे विवरणात् । तथाच त्रितन्तोऽय सन्निनावनूद्य प्रथममेवाभिधानान्मङ्गलार्थोऽपि ।

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानिच शास्त्राणि प्रथयन्ति आयुष्मत्पुरुषाणि वीरपुरुषाणि च भवन्तीति " स्थितिः । मध्येच "शिवशमरिष्टस्य करेतातिलि "† ( ४ । ४ । १४३) त्यत्र शिवादोनामुपादानम् । शमीऽल्पाच्तरत्वेन (२ । २ । ३४) पूर्व-निपाते प्राप्ते शिवशब्दस्य प्रागुपादानञ्च । शेषेच "नोदात्त स्वरितो-दयमिति " (८ । ४ । ६७) वैदिकसूत्रे परग्रहणमकृत्वा उदयपद मङ्गलार्थ मेव कृतमिति त्रिमङ्गलमिदं व्याकरणम् । संज्ञासूत्रमिद-

---

* अन्यथैव ' शमोऽल्पाच्तरात् पूर्वनिपातमित्यादि " (२ । २ । ३४) मित्युपपादि-तत्त प्लुता चेति त्रिमन्त्रचकत्रया उहिरिति वा (चरिच पाठ , ८) ।

† (शिवशमरिष्टस्य करे , इत्येव सूत्रम् )।

मित्यालोच्य "यत्रान्यत् क्रियापदं नास्ति तत्रास्तिर्भवन्ती ‡ परः प्रयोक्तव्य" इति भाष्यस्थितेः एकेनैवोपक्रमेण विवृणोति 'वृद्धिसंज्ञकाः स्युरिति'। वस्तुतस्तु आत् वृद्धिः, ऐ वृद्धिः, औ वृद्धिरित्यर्थः। भवन्तीति वर्त्तमानकालप्रतिपादिका विभक्तिः। अत्राज्ञातज्ञापनं विधिरिति विधौलिङ् (३।३।१६१) पठति बभूव इत्यादिवत् न प्रत्ययाः।

अदेङ्गुणः ॥ २ ॥

अत् एङ् गुणसंज्ञकः स्यात्।

'अदेङ्' ॥ अतस्तकार आकार-निवृत्त्यर्थं। न च तस्य वृद्धिसंज्ञा बाधिका, एकसंज्ञाधिकाराभावात्, तरतीति (४।४।५) निर्देशात् सिद्धौ, प्रतोति-लाघवार्थः। 'अत् एङ् गुणः' स्यादिति एकवचनेन विवरणेन अच्च एङ् चेति समाहारद्वन्द्वः सूचितः *। न चात्र मिलितानां संज्ञा भवति नेतु रित्यादिनिर्देशात्। ऋकारस्य गुणे आन्तरतम्याभावादेव त्रयः सर्व्वे गुणाः प्राप्नुवन्ति। तत्र "कार्य्यकाले संज्ञापरिभाषे" इति न्यायात्, गुणविधानकालेसंज्ञासूत्रस्यास्य 'उरण् रपर' इति (१।१।५१)

‡ भवन्ति इति क्वचित् पाठः।

* पूर्व्वसूत्रे ऽप्येवं व्याख्यातं इति समासाभावे स्यात् इत्युक्तदोषात् तदनिर्वचनाय अदोतस्त्यादेकवचनम् एव सूत्रेऽसूचिता। इति पाठान्तरम् (ट)

परिभाषायाश्चोपस्थाने ऋकारस्य गुणो भवन् अण् भवति । स च र-परो भवति । अणित्यस्य च पूर्व्वेण णकारेण प्रत्याहारग्रहणात् । तत्र सन्निविष्टत्वात् रपरोऽकारो गुणो भवतीति भाष्यम् ।

## इकोगुणवृद्धी ॥ ३ ॥

अनुक्तस्थाने ये गुणवृद्धी ते इक एव स्थाने वेदितव्ये । "सार्व्वधातुकार्द्धधातुकयो" (७ । ३ । ८४) रित्यङ्गस्य गुणः । चेता, स्तोता । "सिचिवृद्धिः" (७ । २ । १) अचैषीत्, अलावीत्, अकार्षीत् । कथं द्यौः, सः ? गुणवृद्धिशब्देनानभिधानात् ।

'इकः' । परिभाषासूत्रमिदम् । पवि सर्व्वत्र शास्त्रे उपयुक्ता भाषा भणितिः, परिभाषा । सा लिङ्गवती विध्यङ्गशेषभूता च । या लिङ्गद्वारेणैकभागेन उपयुज्यते, सा लिङ्गवती । या च सकलेनैव * विधिवाक्ये उपयुज्यते, सा परा; सा च काचित् विधेरङ्गभूता, यां विना विधिवाक्यं नैव प्रवर्त्तते, यथा "आदेः परस्येति" (१ । १ । ५४) । नहि तद्विना "ईदासः" इति (७ । २ । ८३) प्रवर्त्तते । काचिच्च विधिशेषभूता "विप्रतिषेधे परमिति" (१ । ४ । २) अविरोधे हृचेष्वित्यादौ झल्येव (७ ।

* मे याच स चनत्र विधिवाक्ये उपयुज्यते(ठ)। सकलैन (ट)।

३ । १०२) मव्याहतमेव । विरोधविषयेषु वृद्धेश्च इत्यादिषु इयं परं कार्य्यं कारयतीति गुणशब्दं वृद्धिशब्दञ्च लिङ्गत्वेनोङ्गाश्य इक इति सूत्रैकदेशेनोपयुज्यते इति लिङ्गवती परिभाषा । ननु " आद्गुण " (६ । १ । ८७) इत्यत्र " इकोयणची "(६ । १ । ७७) इत्यतोऽचीत्यनुवृत्ते " वृद्धिरेचो " इत्यत्र (६ । १ । ८८ ) च आदित्यनुवृत्ते रात्र विधौ किमनया प्रक्रियया इत्याह— 'अनुक्तस्थान ' इति । नोक्तं स्थानं ययो स्ते तथा । ' इकएवेति ' । यत एवकारकरणं, ततोऽन्यत्रावधारण मिति च गुणवृद्धी नियम्येते, इति नियमार्था परिभाषेयं , अन्यथा परसूत्रेण सह एकवाक्यं स्यात् । किमनेन पृथक्करणेन ? तेन याति भवति इत्यत्र न गुणः । असतिह्यत्र नियमे आन्तरतम्या दाकारस्य गुणोऽकारः स्यात् । ककारस्य च कण्ठ्यत्वा दान्तरतम्यादकारः स्यादेव । न च " गापोष्टगिति " (३ ।२ । ८ ) टकः कित्वं आतो गुणाभावस्य ज्ञापकं, यवणार्थंत्वस्यापि सम्भाव्यत्वात् । न च जनेर्ड (३ । २ । ९७) विधानं इलो गुणाभावे ज्ञापकं, आन्तरतम्याभावाद्यकारस्य अकारः स्यादेवेत्यसम्भवः । ' अङ्गस्यगुण ' इति । इकरत्यनुपस्थाने " येन विधिस्तदन्तस्येति " (१ । १ । ७२) इगन्तस्याङ्गस्येत्यायाति । तदाह , चेतेति , ष्टच् । यत्रतु " मिदेर्गुणः " (७ । ३ । ८२) " मृजेर्वृद्धि " (७ । २ । ११४ ) रित्यादा यङ्गमिगन्तं न भवति, तत्राङ्गस्येति इक इति विशेषणीयं , तदुक्तं भाष्ये ' नह्यनिष्टार्था शास्त्रे प्रकृति र्युक्तेति ; भवति हि व्याख्यानतो विशेषप्रतिपत्ति

नहि सन्देहादलक्षण” मिति परिभाषाभ्यां सर्वत्र व्यवहार इति। ‘सिचिवृद्धि’ रिति। “ह्म्यन्तक्षणेत्यत्र” (७।२।५) णिश्रिग्रहणेन ज्ञापित मिदं न सिचन्तरङ्गमस्तीति। अन्यथा अन्तरङ्गत्वाद्गुणेऽयादेशे च यान्तत्वादेव निषेधः स्यादिति। तथाच गौरिवाचारो दगवीत्, धौरिवाचारो द्व्यवीदिति चान्तरङ्गत्वावादेशाभावा दोकाराभ्यसाचारक्विबन्त-धातो र्लुङि नित्या वृद्धि र्न भवति, इक इत्यस्य व्यावर्त्यं, * ततोऽवादेशे क्रते “अतोहलादेर्लिति” (७।२।७) पक्षे वृद्धौ अगवीदगावीदिति इयमेव भवति। ‘कथ’ मिति। आकार ओकारश्च वृद्धिसंज्ञकौ। अकार एकारश्च गुणसंज्ञकौ। तथाच अनेन नियमेनानिका हला कथमेते इति प्रश्नः। ‘गुणवृद्धिशब्देनानभिधानादिति’। प्रकृतत्वात्तयोस्ते इति कर्त्तव्ये यद्‌गुणवृद्धी इति वचनं तस्येदमेव फलं, यत्रगुणवृद्धिशब्देनार्थ्य गुणवृद्धी विधीयेते, तत्रैवोपतिष्ठत इति भावः। यद्यपि वृद्धिशब्दो घ्यन्तस्तथापि अशौरादिपाठाद्गुणवृद्धी इत्यपि। ये तु “तस्य व्याख्यान इति च व्याख्यातव्यनाम्न” (४।३।६६) इति, “तदर्हति” (५।१।६३) निर्देशाच, याति यद्गते इत्यत्र व्यावर्त्यमाहु स्ते “पुगन्तेत्यत्र” (७।३।८६) ख्यापयतीत्याकारस्य गुणो नेति व्यावर्त्यम् इतोक इत्यस्यैव फलम्।

---

* क्रम (ट)।

न धातुलोप आर्द्धधातुके ॥ ४ ॥

धात्वेकदेशो धातुः। धातुलोपनिमित्ते आर्द्धधातुके ये गुणवृद्धी प्राप्नुत स्ते न स्तः। लोलुवः, पोपुवः, मरीमृजः। पचाद्यचि (३।१।१३४) यङो लुक्। इक इत्येव, अभाजि, रागः।

'न धातु' ॥ धातुलोपमपनीय यङ्लुक् इति न कृतं, वैचित्र्यार्थम्। आर्द्धधातुक इत्यपनीय अचीति न कृतं, प्रत्याहाराशङ्का निवृत्तये इत्येके; बोधयितव्यमित्यर्थं मित्यन्ये। अतिङीति न कृतं लिङाद्यर्थम्। धातोः सर्व्वावयवस्य लोपेऽङ्गमेव कार्य्यं नास्ति किं निषेधेनेत्याह 'धात्वेकदेश' इति। लोपपदस्य कर्म्मधमत्वम्। धातो * र्लोपो यस्मिन् तद्धातुलोप मार्द्धधातुकम्। तदेव च यदि गुणवृद्धयो र्निमित्तं, तदा तत्र परे धातो र्गुणवृद्धी न स्त.। तदाह 'पचाद्यचि' 'यङोलुक्' इति। लोलूयादिभ्यः पचाद्यचि (३।१।१३४) विहिते "यङोऽचिचेति" (२।४।७४) "सर्व्वविधिभ्यो लुग्विधि र्व्वलवानिति"। अतो लोपमकृत्वा सर्व्वावयवस्य

---

* धातु (र)

यङो लुकि कृते तस्मिन्नेवाच् प्रत्यये आद्ययोर्गुणः परस्य मृजेर्वृद्धिः (७।२।११४) प्राप्नोति। निषेधान्न * भवति।

धातो लोपे सतीति न व्याख्यायते। धातुलोपशब्देन यदार्द्धधातुकं विशिष्यते, तस्य फलं लोपयतीति। धात्ववयवं प्रकमाश्रित्य लोपो व्याप्नोतीति (६।१।६६ यलोपेऽपि णिचि गुणो भवत्येव। न ह्यत्र धातुलोपस्य निमित्तमार्द्धधातुकमिति कृत्वा चेलोपे रिति (२।४।२२) निर्देशादेव सिद्धमितिकृत्वा कृदन्तादाख्यानात्तदाचष्टे इति णिच् कालुगादि यत्र क्रियते तत्र रावणं भेदयति, सीतां हारयति, इत्यत्र धात्वेकदेशस्य कृतो लोपेऽपि सति णिच्यार्द्धधातुके गुणवृद्धी स्यातामेव, इत्यन्ये वदन्ति। नहि णिचि कृतोलुक् यौगपद्येन विधानात्। धातुग्रहणं बहुव्रीहिसंप्रत्ययार्थम्। लोप इत्युक्ते अनुबन्धलोपे लविलेत्यत्रापि न स्यात्, बहुव्रीहौ तु आर्द्धधातुकोत्पत्तेः प्रागेव अकारस्य लोप इति गुणो भवत्येव। आर्द्धधातुक इति किम्? लोलूयीति।

* यङोऽचि चेति सूत्रेण धातोरवयवस्य यङो लुकि कृते तस्मिन्नेवाच् प्रत्यये आद्ययोर्गुण परस्य मृजेर्वृद्धि (७।२।११४) प्राप्नोति। अस्मान्निषेधान्न भवति। न च यङोऽकारस्यातो लोप (६।४।४८) इति लोपे तस्य स्थानिवत्त्वात् तौ न स्यातामिति वाच्यम्, "सर्वविधिभ्यो लुग्विधिरिड्विधिश्च बलीयानिति" लोपात् प्रागेव यङ् लुको भावात् अयमत्रमिदं अमृतायमिदं बलीयमीति (ग, ठ) पाठान्तरम्।

'अभाजीति'। भञ्जेश्च चिणि (६।४।३३) इत्यनुनासिक-लोपः। 'राग' इति। घञि च भावकरणयोरिति (६।४।२७)। इक एव वृद्धिं निषिध्यते, नानिक इति; अत उपधाया (७।२।११६) इति वृद्धिर्भवत्येव॥

॥ क्ङिति च॥ ५॥

क्ङिति ङिति च निमित्ते ये गुणवृद्धी प्राप्नुत स्ते न स्तः। किति। चितं, स्तुतं *। ङिति। चिनुतः, चिन्वन्ति, मृष्टः †, मृजन्ति, ममृजुः॥ कथं मार्जन्ति, ममार्जुः?

मृजेरजादौ संक्रमे विभाषा वृद्धिरिष्यते॥ *

व्यवस्थितविभाषया नित्यं तुन्दः, परिमृजः॥

'क्ङिति'। इक इत्येव। कामयते कर्मे णिङ्यपि (३।१।३०) वृद्धिः। निगु-शब्दात् § महादित्वात् फकि (४।१।९९) किति चेति (७।२।११८) वृद्धिः, सामर्थ्यात्। मोर्गुणस्तु कथम्?

* चित, स्तुत, मृष्ट, (क, ख,)।

† मृष्ट (क, ख,)।

‡ 'निगु' इति मुद्रितकाशिकायां महादिषु पाठः।

फकः किचात् गुणस्य चावेगात्प्रयत्नात् । न च इक इत्युच्चार्य्ये ये विहिते ते एव न भवत , इत्यत्र विनिगमक मस्ति । उच्यते, घकारोऽत्र क्रियते अनुवर्त्तमानस्यापोकोऽनुकर्षणार्थ स्तेन इक इति शब्देन इको ये गुणवृद्धो ते एव न स्त इति व्याख्येयम् । पूर्व्वसूत्रा-धातुपदमनुवर्त्तते , तेन धातोरेव निषेधोऽनेन नान्यस्येति था । एपश्च बभूवेति । यम-णलि श्चो ऋणितीति (७।२।११५) वृद्धे र्निषेधोऽपि युक्त एव । कडाजिती यस्येति प्रत्ययसमान्यापेक्षया एकत्व,न च च यय संख्य तद्धोते (४।२।५८) तेनदीव्यती (४।४।२) त्यादि नर्देशात् चङ्घयोऽङि गुण (७।४।१६ इत्यत्र तु अत्रैव गुणो नान्यत्रेति नियम यम प स्यादिति न ज्ञापकम् । कङितत्र परत्व तस्मि न्नत निर्दिष्ट पूर्व्वस्य (१।१।६६ इति सूत्रबलाद्याति । तथा चानन्तर्य्य एव निषेधात् , चित मित्येवो-दाहरण युक्तं; न भुक्तमिति । व्यवधान दित्याह' निमित 'इति । एतच तस्मिन्निति उक्ते (१।१।६६) निर्दिष्टपद निर्दिष्टता सूत्र-कृतैव स्वीकृतमितभावः । प्रत्यसत्या आतिदेशिकं उदाहरति, चिनुत इति । स व्यधातुकमपिदिति (१।२।४) ङित्वात् चिन्वन्तीति हुश्नुवो (६।४।८७) रिति यण् ," चगिस्थियदिति परमश्रित्य न लघूपधगुणः । अन्तरङ्गत्वेन वङि इयङा वाधित-त्वात् । मक्रमे निरकारणे प्रजतापवृद्धः ग्लाजिस्थश्चेति (३।२। १३९) क्नु , क्विदेव मगित्, तेन जिष्णुरयादो न गुणः । भूष्णुरित्यत्र गुणवृद्धी न भवतः । केवल स्थानुपदे कित्ति ग्रुमास्येति

(१ । ४ । ६६) ईत्वं प्राप्नोति, तदर्थं तत्र इष्टिः स्वयमेव वृत्तिकृता स्वीकरिष्यते इत्यत्र गकारो न व्याख्यातः । भविष्णुरिति तु भूवश्चेति (३ । २ । १३८) सूत्रेण ग्स्नुचि न निषेधः । निमित्तसप्तमी च, यस्य च भावेन भावलक्षणम् (२ । ३ । ३७) मिति सूत्रेण । क्ङितोर्हि निमित्तयोर्भावेन गुणवृद्ध्योरनिमित्तत्वमभावो लक्ष्यते । निमित्तपदस्य सूत्रे क्ङितोर्व्यस्य विशेषणत्वेन व्याख्येयम्, अन्यथोक्तं किति ङिति निमित्ते इति ।

## दीधीवेवीटाम् ॥ ६ ॥

**दीधीवेव्यौ छान्दसौ । इटो गुणो न स्यात् । अकणिषं, अरणिषम् । लुङि सिपि लघूपधगुणोऽत्र निषिद्धः ॥**

'दीधी' ॥ दिक्षियतुरिति (८ । २ । ४३) सुजन्तयोर्दिंवरोः साहचर्यादेव चतुरिति सुजन्ते ग्रहीष्यतेऽर्थवचनं सहचरितपरिभाषा-व्युदासार्थम् * । तस्य च फलमत्र अदमस्येटो ग्रहणम् । न लिट् गताविन्यस्योदाहरति । अकणिष' मिति । कथं रण

---

* न च सुजन्तेऽपि सामान्यग्रहणं भवति इति वाच्यं, [illegible] सहचरितस्य ग्रहणं न भवतीति ज्ञापकमिदम् (' इ ' प्रकाशः) ।

वण भण शब्दार्थाः, यस्मात् प्रत्ययविधि (१ । ४ । १३) रित्यत्र तदादिग्रहणात् सिजन्तस्याङ्गत्वे गुणप्राप्ति माह, 'लुङि मिपीति'। ननु लुङो ङित्वादेव पूर्व्वेण निषेधः स्यादिति न शङ्क्यं, भूसुवो स्तिङीति (७ । ३ । ८८) निषेधेन ज्ञापित मिदमेतस्याश्रयङित्वे न गुणनिषेध इत्येके। अकरव मचिनव मित्यादौ स्यादेव गुणः। अत्र भाष्यम्। "नेड्वशी (७ । २ । ८) त्यत इड्ग्रहणानुवृत्तौ यदार्द्धधातुक स्येड् (७ । २ । ३५) इति इड् ग्रहणं तत् सम्भवतो विकारस्य निवृत्त्यर्थं मिति गुणो न भविष्यतीति। किमिड् ग्रहणेन? तत्कृतं वैचित्र्यादिति। तथात्वेपि पठीपि ब्राह्मण-कुलायीत्यत्र सान्त (६ । ४ । १०) इति दीर्घो न स्यादिति कर्त्तव्य-मेवेड्ग्रहण मिति तु टीका। वस्तुतस्तु इडिति प्रकृते पुनरिड् ग्रहण मिटो बलवत्त्वबोधनार्थमिति। वयिलेति संप्रसारणात् पूर्व्वमेवे-डागम इति न क्त्वासे (१ । २ । १८) ङिति कित्वनिषेधात् न संप्रसारण मतो दीर्घोसूत्रे युक्तमेवेड्ग्रहणमिति" ग्रहिज्या (६ । १ । १६) इत्यत्र भाष्य एवोक्तम्॥

हलोऽनन्तराः संयोगः॥ ७॥

संलग्ना हलः संयोग इत्युच्यते। अग्निरिति, ग-नौ, स्त्रीति स-त-राः॥

'हलः' ६ बहुवचन मतन्त्रं, तेन द्वयोरपि संलग्नयो र्हलोः

संयोगसंज्ञा। संयोगादेरात (८। २। ४३) इति प्राप्तौ, नश्याख्या मिति (८। २। ५७) ध्याख्यो नैत्वनिषेधात्, तदुच्यते "सूत्रे लिङ्गवचनमतन्त्र" मिति। अत आह 'अग्निरिति' 'गनाः' विति। रूपोदाहरणम्, कार्य्योदाहरणमग्नित्वम्। अकारस्य संयोगे गुरुत्वा दिगन्ताच्च लघुपूर्व्वात् (५। १। १३१) इति नाण्। 'अनन्तरा' इति। विजातीयै रव्यवहिता इत्यर्थं, इति। बहूनामपि संज्ञेत्याह 'स्तोति'। तेन सुस्त्रिया भावः सुस्त्रीत्व मिति पूर्व्ववन्नाण्। संलग्नो हल् सयोग इत्येवास्तु, संसर्गोहि * द्विष्ठ स्त्रिष्ठ च, किं बहुवचनेनातन्त्रेण ? समुदायस्य संज्ञा यथास्यादित्यर्थः †। तेन पठन्निस्यच सलोपे प्रत्येकं संज्ञायां नलोपोऽपि स्यात्। तथा उपेयिवाननाश्वान् (३। २। १०८) इति निर्देशः क्वसु-सलोपेऽपि नकारस्य श्रवणात्। हल इति किं ? तितउच्छत्रम् ‡। अत्र संज्ञायां संयोगान्तलोपः स्यात्।

## मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

मुखसहितया नासिकया उच्चार्य्यते यो वर्णः सोऽनुनासिक-संज्ञकः स्यात्। अँ आँ ङ ञ ण न माः ॥

---

* संसर्गोहि ('ट' पाठान्तरम्)। † स्यादित्येवमर्थं ('ट' पाठान्तरम्)।
‡ अत्र न गुणमता, तनोते डंउ (७४० उ) रिति विधानात्, अन्यदा डौरिति विदध्यात् ('ट' अधिक पाठ)।

'मुञ' । मुखञ्च नासिका च मुखनासिकं, तेन आ समन्तात् उच्यते य: स व र्णोऽनेति विवक्षया मुखपद मनर्थक मेः । आदिर्ञि टुडव (१ । ३ । ५) इति तु इन्द्वपद ना ल्येक मन्वयात । यो मुखेनोच्यते यत्र नासिकयेत्यर्थे वर्णमात्रस्येव मुखभवत्वात् सञ्ज्ञाप्राप्ते न चाभ्युपगम । द्वितीयाश्रित (२ । १ । २४) इत्यादौ श्रित त्यस्याप्य दानुनासि ज्ञ्य क्रिमलो दिति (६ । ४ । १५) दीर्घ नादि प्राप्ते । न हि सोऽस्ति वर्णो यो मुखसम्बन्धं वागि-न्द्रिय विना उच्चरति तथाहि —

" आत्मा बुद्ध्या समर्थ्यार्थांन्नियुङ्क्ते तद्विवक्षया ।
मनःसर्वाग्निमाहन्ति स प्रेरयति मारुतम् ॥
अग्निमारुतसंयोगात् क्षोभाद्वागिन्द्रियस्य च ।
सूक्ष्मा वाग् जायते पूर्व स एव कथितो ध्वनि ॥
ततस्तत्स्थानेष्वथ यदा वायुश्चरति सेन्द्रिय ।
पश्यन्ती वर्णरूपा वाक् तत उत्पत्तिमर्हति ॥
मध्यमा पदरूपार्थां तु) वाक्यरूपातु वैखरो ।
इति वाचा मवस्था स्य र्मुखमध्ये तदिन्द्रियम ॥
अर्थसप्रत्ययो वाक्यात् श्रुत दनुमित भतात ।
विशिष्ट ख मुखं राति विखरा सैव वैखरी ॥
अष्टौ स्थानानि वर्णाना मुर: कण्ठ शिरस्तथा ।
जिह्वामूल च दन्ताश्च नासिकोष्ठ तालु च ॥ "

इति शिक्षास्मरणात् । तथाच, मुखपदमनर्थक, नच नासि-

कण्ठादिस्थानभेदात्; मुखमध्ये तदिन्द्रियमिति नासिका-मध्येनोच्चारणस्य सम्भवात्। तस्मात् अयमर्थः समासः, इत्याह 'मुख' सहितये ... शाकपार्थिवादि (२।१।६० वा०)। तेन पाठ ये न क परा य, सर्वसवर्णविभागः। वचन इति कर्मणि ल्युट्। अ ॐ इति, सकार कारानुनासिकौ ॥

तुल्यास्यप्रयत्नं सवर्णम् ॥ ९ ॥

तुल्यमास्यं ताल्वादि स्थानम्। प्रयत्नः स्पृष्टतादि येषां, तेऽन्योन्यं सवर्णसंज्ञकाः स्युः। वर्गो वर्ग्य॰ सवर्णः। अत. सवर्णा.। अनुस्वारस्य ययि परसवर्णः (८।४।५८)। शङ्किता, कुण्ठिता। अकः सवर्णे दीर्घः (६।१।१०१) दण्डाग्रम् ॥

ऋकारलृकारयोः सवर्णसंज्ञा वक्तव्या ॥ * ॥

होतृ लृकारः होतॄकारः। लृकारस्य दीर्घो नास्तीति ऋकारः ॥

तुल्य। तुलना तुना, "चिन्ति पूजि" (३।३।१०५) इति चकारादङ्, तामर्हति; दण्डादिभ्यः (५।१।६६) यः। तुल्यः सदृशः। तुल्य आस्ये प्रयत्नो यस्य इति हरिवाक्ता ० समास घटः। तत्र च "अनुदेशमस्तकात् स्वाङ्गादकामि" (६।३।१२) इति

अलुक् प्राप्नोति, इति दृष्ट्वा समासान्तरमाह 'तुल्य' मित्यादि। आ स्यन्दने अस्यमस्मादिति, "अन्येष्वपि दृश्यते" (३।२।१०१) इति ड प्रत्यये, आस्यं मुखं, तत्रभवमिति "शरीरावयवाद्यति" (४।१।६) आस्यं, ताल्वादिस्थानं, "हलो यमां यमि लोपः" (८।४।६४) इति यलोपः। आस्यश्च प्रयत्नश्च तौ तुल्यौ यस्येति वर्णसामान्यापेक्षया एकवचनम्। 'स्पृष्टतादि' रिति। स्पृष्टता, ईषत्-स्पृष्टता, विवृतता, संवृतता, चेति चत्वार आभ्यन्तरा प्रयत्नाः। समानश्च सत् वर्णश्चेति सवर्णः; वर्णशब्दोऽर्द्धर्चादिः (२।४।३१)। संज्ञिनि तुल्यशब्दस्य सज्ञायां समानशब्दस्य, "ज्योतिर्जनपद" (६।३।८५) इति वर्णशब्दे सभावात्। सदृशार्थतया साहश्यस्य चोभय निष्ठत्वादाह—'अन्यान्य' मिति। क्रियाविशेषणत्वात् कर्मत्वं, पुंस्त्वं स्वभावात्। क्लीवत्वे हि अमशब्दद्वारा "अमोऽदड्" (७।१।२५) आदेशः स्यात्। तथाच "इतरेतरपरस्परान्योन्य शब्दाः कर्म्मव्यतीहारैकत्वे पुंविषया, निपातनात् साधव" इति वक्ष्यमाणत्वात् क्रियाविशेषणत्वेऽपि पुंल्लिङ्गत्वं स्वभावात्। यद्यस्य समानं, तत्तस्य सवर्णं मित्यर्थः। अ कु ह विसर्जनीयाः कण्ठाः। इ चु य शा तालव्याः। ऋ टु र षा मूर्द्धन्याः। लृ तु ल सा दन्त्याः। उ पूपाध्मानीया ओष्ठाः। अं आं ङ ञ

---

* आपिशलशाखेय।

ए म मा अनुनासिका नासिक्याः। इत्यादिरोष्ठ तात्वादि-स्थानम्। कादयो मावसानाः स्पर्शाः। स्पृष्टं करणं स्पर्शानाम्। अन्तःस्था य र ल वाः। ईषत् स्पृष्टकरणं मन्तःस्थानाम्। उष्माणः श ष स हाः। स्वराः सर्वे एवान्ये। विवृतं करणमूष्मणां स्वराणां चेति, तेभ्य एओ विवृततरौ; ताभ्यामपि ऐ औ; ताभ्यामप्याकारः। संवृतस्त्वकारः। इत्यादिरोष्ठ्या प्रयत्ना उन्नेयाः। तत्र द्वन्द्वपदार्थस्य प्रत्येकं मन्वयात् केवलं यत्नुल्यास्यं, यच्च केवलं तुल्ययत्नं, तस्यापि संज्ञा स्यात्तथा भिन्नस्थानानां तुल्यप्रयत्नानां सवर्णसंज्ञायां सत्यां "झरो झरि सवर्णे" (८।४।६५) इति स्पृष्टकरणस्य पकारस्य शाङ्गि तकारे लोपः स्यात्। भिन्नप्रयत्नानाञ्च तुल्यस्थानानां सवर्णत्वे अदुदग्रीतत इति श्वदम्-शब्दावयव-सकारात् परस्य धात्ववयव-शकारस्य चकारे सवर्णलोपः स्यात्, इति न सम्भाव्यम्। समुदायेन वाक्यपरिसमाप्तिरिति पक्षस्याश्रयणात्। पूर्वं तुल्यस्त् आस्यसत्रिकृतप्रयत्न आस्यप्रयत्न. स तुल्यो यस्येति वा समभनोय्। 'वर्ग्यो वर्ग्येणेति'। वर्गे भवो दिगादित्वात् (४। ३। ५४) यत्। अर्थात् वर्ग्यः स्ववर्गस्य सवर्णः। 'समानाः' इति। समानं स्थानं येषां, करणाधिकरण-ल्युडन्ततया स्थानं प्रयत्नः कण्ठादि च। 'त्वर्णस्य दीर्घो नास्तीति'। अ इ उ ऋ एकमात्रिक द्विमात्रिक त्रिमात्रिकतया

द्वादश। ऌ एकमात्रिक-त्रिमात्रिकतया द्वौ। सन्ध्यक्षराणि च ऌकारहीनान्यष्ट। एवं स्वरा द्वाविंशतिः। कादयः पञ्चविंशतिः य र ल व श ष स हा अष्टौ। अनुस्वारानुनासिकः। जिह्वामूलीयोपध्मानीया चत्वारः अयोगवाहाः। कुं खुं गुं घुं यमाश्चत्वारः। इति त्रिषष्टि-वर्णाः। इति शिक्षाकारोक्त-परिसंख्यया ऌवर्णस्य वर्णत एव दीर्घो नास्तीति ॥ ९ ॥

नाज्झलौ ॥ १० ॥

अच्-हलौ सवर्णसंज्ञकौ न स्तः। दण्ड-हस्तः। दधि-शीतम्। वैपाशो मत्स्यः। आनडुहं चर्म। यस्येतिचेति (६।४।१४८) लोपो न भवति ॥

'नाज्झलौ'। साहित्ये द्विवचनबहुवचने द्वन्द्वो वा अज्झलाविति झयो होऽन्यतरस्याम् (८।४।६२) इतिपूर्वसवर्णतया हकारस्य झकारः। 'दण्डहस्त' इति। अकारहकारयोः सावर्ण्याभावात् अकः सवर्णे (६।१।१०१) इति न दीर्घः एवं 'दधिशीत' मित्यत्रापि इकारशकारयोः। एतदर्थं सूत्रं न कर्त्तव्यम्। अन्यथैव दीर्घविधाना दित्यागतदोदाहरणान्तर-मात्र— 'वैपाश' इति।

" विपाशात्‌ विपाट्‌स्त्रियाम्‌ । "

इति षकारान्तोऽपि । अचौ परस्परं सवर्णौ न भवत इति तु न वाच्यं, नाजिति अत्रैव दीर्घकरणात्‌ । तथा हलौ परस्परं इति च न वाच्यम्‌ । अज्झलाविति पूर्व्वसवर्ण-भकारादेश-विधानात्‌ । आकारान्तस्य स्थानिवद्भावादेव लोपस्याप्रसक्तत्वादिति भावः । विपाश्‌ शब्दः । विपाशि नद्यां भव इति अणि । ककार-सावर्ण्यं यस्येतिच (६ । ४ । १४८) इति अ-लोपः स्यात्‌ । एवमनडुहो विकार आनडुह इति, तस्य-विकारः (४ । ३ । १३४) इत्यणि,अकार-सावर्ण्ये हकारलोपः स्यात्‌ । सति त्वस्मिन्‌योगे यत्तत्र अचीत्येव ' कुमारी ग्रेत ' इति प्रत्युदाहरणं कृतं, तत्‌ प्रथमयोः पूर्व्वसवर्णः (६ । १ । १०२) इति वक्ष्यमाणसूत्रेऽचीत्यनुवर्त्तते इति । इच इत्यत्र न दीर्घं इत्यर्थं गङ्गास्रोतोन्यायेनाचोऽनुवर्त्तत एवेति प्रकाशयितुम्‌ । तच " उपायस्यानुपायतोपालम्भो नतूपात्तेषु नानात्वमिति " न्यायेन । ननु अणुदित्‌ सवर्णस्य (१ । १ । ६९) इति सवर्णग्राहकं सूत्रं, तच " तावदेव स्वास्थ्यं भवतिष्ठते यावत्‌ कस्य कः सवर्ण इति न निर्णय इति " ; तत्र प्रत्याहारसूत्रनिविष्टा अचो हला एव ; तथा सवर्णसंज्ञासमय एव नाज्झलावित्यस्योपस्थानात्‌ । हलानां मध्ये हलाच सावर्ण्यं निषिद्धं, दीर्घाणान्तु हस्वैः सावर्ण्यं मप्रतिषिद्धमस्त्येव । ततो युक्त मचित्येवेति । नैवम्‌ । नञ्रेतत्‌ सूत्रद्वतोऽभिमतम्‌ । तथात्वे हि तुल्यास्यप्रयत्नं

सवर्णम् (१ । १ । ९) अनज्झलित्येकमेव सूत्रं कुर्यात्। पार्थक्यस्येदं फलम्। स्वस्थानप्रयत्नानामचां हलाञ्च पूर्वेण सवर्णसंज्ञाविधानात् अणुदित् (१। १। ६९) इति सूत्रे च तस्योपस्थानात् दीर्घाणामपि ग्रहणं सिद्धम्। ततो 'नाज्झलाविति' निषेधस्य प्राधान्येन विधानात् ह्रस्वदीर्घाणामचां ग्रहणमात्रेण हल्भिः सावर्ण्यं नि षिध्यत इति व्यवस्थितिः। युक्तश्चैतदेव। अन्यथा दास्यतीत्यत्राकारस्य इकारेण सावर्ण्यमस्तीति इणः (८। ३। ३९) इति षत्वं प्राप्नोति; दाता यातेत्यत्र झलः (८। २। ३१) इति दादेर्धातोर्घः (८। २। ३२) इति 'घत्व-ढत्वे स्याताम्। दासीश्चमित्यत्रापि इणः षीध्वमिति (८। ३। ७८) ढत्वं स्यात्। भाः काम्यतीत्यत्र इणः ष (८। ३। ३९) इति षत्वं स्यात्। दीर्घ इत्यत्र षत्वार्थम्। तथापि परेण णकारेण प्रत्याहारस्याश्रितत्वात्। एवं मद्री मद्रीभ्यामित्यत्र झयो हः (८। २। ३९) इति ईकारस्य घत्वं स्यात्। एवं गौतं गौतमित्यादौ "शरः खयो द्वे" (८। ४। ४७ वा॰) इति सकारस्य द्वित्वं स्यादित्यादयो दोषा भवेयु स्तस्मादृक्तिनमिदं ग्रहणमात्रेण सावर्ण्यं नास्तीति ॥ १० ॥

ईदूदेद् द्विवचनं प्रगृह्यम् ॥ ११ ॥

ई ऊ एकारान्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। अग्नी अत्र, वायू अत्र, खट्वे इह, पचेते इह।

मणीवादीनां प्रतिषेध इत्येके । इवार्थे व-कारोऽय मित्यन्ये । मणीव, दम्पतीव ॥

'ईदूद्' ॥ संज्ञात्वादेवो टि सु वादिवत् प्रगृह्यपदसिद्धौ यद्दे: पदत्वे (१ । १ । ११८) रोतिसूत्रे यत्पदग्रहणं तस्य प्रयोजन मिदम् । यत्र प्रगृह्यशब्दः संज्ञा भूयते, तत्र तत्सामानाधिकरण्येन पदमुपतिष्ठते, तदेक पदं संज्ञि ईदादिभि र्विशिष्यते । विशेषणेन च तदन्तविधि र्भवतीत्यत आह, ' ई ऊ एकारान्तमिति '। तपरकरणं स्पष्टार्थम् । द्विवचन मित्यपि द्विवचनान्तमेव, अग्नी इमाविति प्रगृह्यत्वात् प्लुतप्रगृह्या अचीति (६ । १ । १२५) प्रकृतिवद्भावाद् दीर्घाभाव । वायू इति न यणादेशः । खट्वे इत्ययादेशो न भवति । ईदूतौ च सप्तम्यर्थे (१ । १ । १८) इति सूत्रे अर्थग्रहणं । सोम्यौ मधिश्रितौ गौरो अधिश्रित इत्यत्र लुप्तसप्तमीकपदेपि प्रगृह्यसंज्ञार्थम् । तदेव ज्ञापकं । ततोऽन्यत्र प्रगृह्यसंज्ञा प्रत्ययलक्षणद्वारा न भवतीति । तेन कुमार्योरगारं कुमार्यगारं, वध्वोरगारं वध्वगारं इत्यत्र प्रत्ययलक्षणत्वात् द्विवचनान्तत्वेपि न संज्ञा । " इवार्थे वकारोय मित्यन्ये " इति । तेषां मणी इवेति स्यादेव, तथानिष्टमित्यन्यपदेन, द्योतित मित्यतो वक्तव्य एव श्रेयान् । रोदसीव शब्दस्य महावृत्तौ । एवमयमेवेति प्राह । " कुचौ गिरीवाचल कन्यकाया " इति पद्मवृत्तौ प्रयोगा दाकृतिगणोय मिति पञ्चिका । ईदूदेदिति-

किं ? वृक्षावत्र । द्विवचनं किं ? कुमार्यत्र । ११

### अदसो मात् ॥ १२

अदसो मकारात् परमीदूदेत् प्रगृह्यं स्यात् । अमू अत्र, अमू आसाते । मादिति किं ? अमुकेऽत्र । अदसः किं ? शम्यत्र ।

'अदस'। "श्रुतमर्थं समुत्सृज्य कल्प्यतेऽर्थः श्रुतेतरः ।
नियमो बहिरङ्गः स्यादन्तरङ्गो विधिः श्रुतः ॥"

इति वररुचिः अतएव विधिनियमसम्भवे विधिरेव ज्यायान्* । इति न्यायामृत (१ । २ । १) स्वापवादोऽस्ति किन्तु सोऽपि सर्गादिवेति नियमः । अतो यद्यत्र द्विवचनग्रहणमनुवर्त्तेत तदा नियमः स्यादन्यथा हि विधिरिति मत्वाह 'अदसो मकारात् परमिति'। ईदूदिति मकारोत्तरैदूदन्तं पदमित्यर्थः । मादित्यस्य यदि वाऽसिद्धत्वं नास्ति । एकारस्यासम्भवात् न दर्शितः । एदित्यनुवृत्तौ मादित्यपि स्पष्टार्थमेव ।

---

* नियमपक्षे श्रुतस्य द्विर्वचनस्य परित्यागापत्त्या गौरवात् (ट परिभ पाठ)।

[ग्रे ॥ १३ ॥ ]

ग्रे इतिच्छन्दोभागः।

निपात एकाजनाङ् ॥ १४ ॥

एको योऽच् निपातः सः प्रगृह्यः स्यात्। अ अपकर्षे। उ उत्तिष्ठ। आ एवं मन्यसे। अनाङ् किं? आ उष्णं ओष्णं।

"ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥"

'निपात एकाजिति'। पूर्व्वकालैकेति (२।१।४९) तत्पुरुषोऽन्तरङ्गः। बहुव्रीहिस्त्वन्यपदार्थप्रधानतया बहिरङ्ग इति मत्वाह, 'एको योऽजिति'। 'अनाङिति'। आङोऽन्योऽनाङिति तदन्यत्वे समासः। ननु यथा तदन्यत्वे नञ्-समासस्तथा तत्सादृश्येपि। यथा ल्यप्विधावनञ् पूर्व्वे (७।१।३७) इति नञ्-सदृशाव्यय-पूर्व्वे इत्यर्थः। ततश्च तत्सादृश्यादेवैकाच् प्रत्येष्यते। तत् किमेकाज्ग्रहणेनेति? सत्यं। द्विमात्रत्वेन सानुबन्धत्वेन वा सादृश्ये दीर्घङ्आदिष्वेव स्यात्, न स्वरप्रतिरूपके ष्वकारादिषु। तस्मात् सर्व्वकार्थमेकाज्ग्रहणम्। अ इ उ इत्यादय स्वरप्रतिरूपकाः सम्बोधनाद्यर्थाः। न चैकवचनेनैवैकाच् प्रत्येष्यते किमेकग्रहणेनेति वाच्यं? सूत्रे वचनस्यातन्त्रत्वात्,

अचो विशेष्यत्व-बोधनार्थत्वाच्च । निपातस्य परत्वुवर्विशेष्यत्वेन तदन्तविधौ प्राटतीति न स्यात् । नचैव मोदित्यनर्थक मिति शङ्कं, पक्षे तस्य केवलार्थत्वात् । निपात किं ? च इ दन्ते एदन्ते, हे विष्णो इत्यर्थः । एकात् किं प्राटति । 'मर्य्यादाभिविधा-विति' । मर्य्यादा-(२ । १ । ६० वा), सहितोऽभिविधि स्तथा शाकपार्थिवादि नैनेतरेतरद्वन्द्वेर्व्वचनं, अन्यत्र गुणा भवति ।

ओत् ॥ १५ ॥

ओदन्तो यो निपातः स प्रगृह्यः स्यात् । अहो अहं । उताहो इति ।

'ओत्' । निपातस्य विशेष्यत्व मित्याह, 'ओदन्त' इति ।

"अहो अह नमो मह्यं यदुद्दृत्य * समध्यया ।
उक्षाय मयने दोर्वं साकाङ्क मरुमोचित ।"

इति जाम्ब तोविजये जाम्बवतीदर्शनोत्तरं श्रीकृष्णस्योक्ति ॥ १५

सम्बुद्धौ शाकल्यस्येता वनार्षे ॥ १६ ॥

सम्बुद्धौ वोदन्तं शाकल्यस्य मतेन प्रगृह्यं स्यात्,

* यदुदिम 'ट)।

इतौ परे। भानो इति। अन्येषां भानविति। सम्बुद्धौ किं? गवित्यय माह। अनार्षं इत्येकवत्ता। वुपयुक्तम्।

'सम्बुद्धौ'। 'गवित्यय माहेति' प्रत्युदाहरणे अनुकार्यानुकरणयो र्भेदस्या विवक्षितत्वा दनर्थकत्वे प्रातिपदिकत्वाभावा देव विभक्त्यभावः। 'एकवत्ताविति' कारिकावक्ता वित्यर्थः। एकशब्दस्य मुख्यार्थत्वात्, कारिकायां मुख्यवत्तौ, छन्दस्यपि तेन व्याख्याना दिति भावः। भागवृत्ते र्व्यक्तां वा, सा हि इयो विवरणकर्त्री।

उञः॥ १७॥

उञ् इतौ शाकल्यस्य मतेन प्रगृह्यं स्यात्। उ इति। अन्येषां विति।

ऊँ॥ १८॥

उञ इतौ ऊँ आदिश्यते। ऊँ इति, उ इति। अन्येषां विति।

'ऊँ'। सप्तमीन् ऊँ भवति। मनुबदान्त मादेशेनाप्यनेन तत्

किमुच्यते आदिश्यत इत्याह, 'स एवेत्यादि'। एतदाकारेण परिणमतीत्यर्थेऽपि स्यान्न्यादेशः स्यादित्याह, आदिश्यत इति।

[ ईदूतौ च सप्तम्यर्थे ॥ १९ ॥ ]

ईदूतौ चेति सूत्रं छन्दोभागः। उक्तं प्रगृह्यम्।

दाधा घ्वदाप् ॥ २० ॥

दाञ्-दाण-दो-देङः, धाञ्-धेटौ घुसंज्ञकाः स्युः। प्रणिददाति। प्रणिदधाति। अदाविति किं? दाप्-दैपो मा भूत्। दातं धान्यम्। अवदातं वस्त्रम्।

'दाधा'। यद्यपि डुदाञ् दाणनुबन्धको दो-देङौ च लाक्षणिकदारूपौ तथापि गामादाग्रहणेष्वविशेष इति सर्वेषामेव दारूपाणां ग्रहणम्। अत आह, 'दाञ्-दाण-दो देङ' इति। नहि मीनातिमिनोतिदीङां ल्यपि च (६। १। ५०) इत्यात्वे दीङ् अय इत्यपि दा सम्भवति, स कथं नोच्यते? ल्यपि प्रणिदाय एज्विषये च प्रणिदातव्यमिति णत्वं स्यात्। उच्यते, नेर्गदेत्यत्र (८। ४। १७) घ्वादौ घुशब्दस्य घिसंज्ञत्वेऽल्पाच्तरत्वे पूर्वनिपातमकुर्वता सूत्रकृता सूचितमिदमिह क्वापीष्टा प्रकाशत इत्युक्तम्। तेन मा पक्षेण माङ्-मेङावेव गृह्येते। नतु

मीनाति मिनोतीति (६ । १ । ५०) इतात्वा बित्यत्र एत्वाइव-रितो दीङपि तत्र न ग्राह्यः । दाधाघ्व इति प्रतिपत्तिसौकर्य्याय वक्तव्ये घ्विति सङ्कोचो विषयसङ्कोचार्थ इति वा । तथापि यत्र यत्र दाधारूपं तत्र तत्र संज्ञाऽस्तु । दो-देङ्-धेट्सु विकारहीनेषु प्रणियच्छति, प्रणिदयते, प्रणिधयतीत्यादौ कथं संज्ञा ? दाधारूपा-भावात् । सत्यं ईदूतौचेति (१ । १ । १८) सूत्रात्तकारोऽनुवर्त्तते, वृद्धिरादैच् (१ । १ । १) इत्यत्र आदृग्रहणञ्च, अदेङ् (१ । १ । २) इत्यादेङ्ग्रहणं, न धातुलोप (१ । १ । ४) इत्यतो धातु ग्रहणम् , अत आदन्त आदन्तस्य प्रकृति रेङन्तश्च सकारु एव धातु गृह्यते । तेन दोदेङपि गृह्यते । अतएवोच्यते " क्वचि-द्विकृतिरपि प्रकृतिं गृह्णाति " अत एवच धेटोपि ग्रहण मित्याह ' धाञ्-धेटौ चेति ' । तेन दाश्च धौच दाधा इति बहुवचनान्तम् , न त्वेकवचनान्तम् । तत्सामानाधिकरण्येपि घुपद मेकवच-नान्तं क्लीवञ्च सौत्रत्वात् अत आह, ' घुसञ्ज्ञका ' इति । प्रणिददाति इति नेर्गदादिना (८ । ४ । १७) णत्वे नेर्णत्वम् । अथ इत्युक्ते प्रणिदापयतीत्यत्रापि नकारादितिचेत् अपिदित्येवास्तु । नास्ति पित् प्रत्ययो यस्मादित्यपि सन्देहबिभि रायव्हेरत । तथा प्यदाबिति देपो निषेधो नायाति । अदाब्रूपत्वादिति चेन । देपः पकारकरणसामर्थ्यात् , उदोष्ठ्य माङो व्यतीहारे (१ । ४ । १८) इति ज्ञापका यानुबन्धकृत मनेकमत्वमिति । अत आह, ' दाप् दैपोरिति ' । दा लवने ,दैप् शोधने,अघु-

त्वात् दीर्घो (७।४।४६) रिति अच उपसर्गात्तः (७।४।४७) इतिच नभवति।

## आद्यन्तवदेकस्मिन्॥ २१॥

असहाये आद्यन्तवत् कार्य्यमतिदिश्यते। वलादेरिट् (७।२।३५) अलाविषुः। अजाद्यतियङुवङौ (६।४।७७)। श्रियौ, भुवौ। अन्तवत्वे अजन्तात् यत्। अध्येयम्।

व्यपदेशिवदेकस्मिन् इति वक्तव्यम्॥

एकाचो द्वे प्रथमस्य (६।१।१) इति बहुव्रीहिं वक्ष्यति। स यथेह जजागार, तथा इयाय, आर। आदेशप्रत्यययो (८।३।५९) रितिषत्वम्। यथेह पक्ष्यति, तथा अपाक्षीदिति।

'आद्य'। आद्यन्तयोरिवेति वहाम्नात्वति.। षष्ठी सम्बन्ध सामान्य इति। यः परस्य, यः परस्मिन्, यश्च परस्मात् सर्व्व एव गृह्यते। 'असहाय' इति। एकशब्दस्यासहायवचनत्वात् सप्तमी वत्करणादतिदेशविषयतया वलादेरिति वलादेरार्द्धधातुकस्य (७।२।३५) विधीयमान इट् केवले वल्मात्रे नप्राप्नोतीति

तत्रादिवद्भावः क्रियते । अयं वत् अन्यस्यादि रित्यर्थः । एवं स्त्रिया वित्यत्रापि यस्मिन्विधि स्तदादा वल्ग्रहण (१ । १ । ७२ वा) इति न्यायेन अजादौप्रत्यये विधीयमान इयङुवङ् केवले औकारे न स्यात्। अजन्ता दिति धातो रित्यस्य विशेषत्वात् अच इति अजन्तात् यत्प्रत्यय इङ्धातो र्न स्यात् । तस्मादयमेवान्यस्मान्न इवेति तदन्तात् यत् सिध्यति । आद्यन्तवदिति विशेषविधानात् सर्वाग्राहित्वं न भवतीति तदपनीय सामान्येनातिदेशं करोति । 'व्यपदेशिवदिति'। व्यपदेश स्तादृप्येण कथनम् । स विद्यते यस्य स व्यपदेशी तद्वत् । 'वहुव्रीहिमिति'। दिदरिद्रिषतीत्येके दिदरिद्रासतीतिवा इति वार्तिकस्वरसा दस्यदाहरण संग्रहीण, व्याख्याच । तत्र जाग्र धातु र्व्यपदेशी, स इव इण् धातु र्न धातुश्च । तथा चाभ्यासप्रकरणे दीर्घ इणः किति (७ । ४ । ६९) अर्त्ति पिपर्त्त्योश्च (७ । ४ । ७७) इति आदेशप्रत्यययोः (८ । ३ । ५९) इति षष्ठी * प्रत्ययावयवस्य सस्य षत्वमिति प्रकारे उदाहरणम् व्यपदेशो स्य-प्रत्यय स्तद्वत् सिञपि ।

## तरप्तमपौघः ॥ २२ ॥

एतौ घसंज्ञकौ स्यातां । कुमारितरा, गौरितमा ॥

---

* षष्ठा (?)

'तरप्'। एकस्मिन्निति वर्त्तते। "एके मुख्यान्यकेवलाः" इतिवचनात् स च केवलार्थः। "अर्थाच्च विभक्तिविपरिणाम" इति केवलावित्यर्थं इत्याह, 'एताविति'। ननु तदन्तौ, अन्यथा तु "संज्ञाविधौ प्रत्यय ग्रहणपरिभाषया" वक्ष्यमाणेषु तदन्तविधिरस्त्येव। सुप्तिङन्त (१।४।१४) मित्यान्तग्रहणस्य फलम्; अन्यथा * "संज्ञाविधौ तदन्त विधिर्नास्ती" ति मतेतु सर्वनाम-संज्ञायामपि † न स्यात्, तत्रत्यान्तग्रहणस्य फलं वक्ष्यति। 'कुमारितरेति'। इयमनयो रतिशयेन कुमारीति द्विवचनेत्यादिना तरप् (५।३।५७) घरूप (६।३।४३) इति ह्रस्वः। वयसिप्रथमे (४।१।२०) ङीब्‌नस्यादिति वदता अजादौ प्रकर्षप्रत्ययान्तानां पाठो ज्ञापित इति गम्यते। विधिक्रमेण तम-मेव पूर्व्वं निर्देष्टुमुचितं तथाच तरपः प्रागुद्दिष्टत्वात् तदभ्य-र्हितत्व मन्वीयते, स्वातन्त्र्यं चानुमीयते। तेन तस्य स्वार्थिकत्व-मतोऽल्पाच्तर (२।२।३४) मित्यादि सिध्यति। २२

---

* ननु सुप्तिङन्तं पद मित्यत्रान्तग्रहणात् ज्ञापकादेव तदन्तविधि र्न भविष्यति किं एकग्रहणानुवर्त्तनेनेति, इत्याह अन्यथेत्यादि। ('ट' टिप्पणी।)

† ननु च अन्यत्र संज्ञाविधौ तदन्तविधिर्नास्तीत्यस्य व्याख्यानाङ्गीकारे किं दूषण मित्याह सर्व्वनामसंज्ञायामपीति। ('ट' टिप्पणी।)

## बहुगणवतुडति संख्या ॥ २३ ॥

बहुगणौ प्रचुरार्थौ, वतुडती प्रत्ययौ, एते संख्यासंज्ञकाः स्युः । बहुकृत्वः, गणशः, तावत्कः, कतिधा ।

'बहु' । बहुशब्दो वैपुल्ये, बहुरोदनो, बहुः सूप इति । गणसंगण इति व्यक्तारूपे वैशिष गण इति । अनयोरपि संज्ञा प्राप्नोति, साच नेष्यत इत्याह, 'प्रचुरार्थाविति' । अन्योन्यसाहचर्यात् तुल्यार्थाविव गृह्येते, नेतरौ । संख्यायते अनया इति अन्वर्थसंज्ञाकरणा द्वा । बहुकृत्व इति बहून् वारान् इत्यर्थः । कालहरिमत्वात् कालाध्वनो (२ । ३ । ५) रिति द्वितीयान्तात् संख्यायाः क्रियाभ्यावृत्तिगणने (५ । ४ । १७) इति कृत्वसुच् । गणान् वरान् गणकृत्वः । 'वतुडतौ प्रत्ययाविति । यत्तदेतेभ्यः परिमाणे वतुप् (५ । २ । ३९) किमः संख्यापरिमाणे डति च (५ । २ । ४१) प्रत्ययग्रहणे यस्मात् स विहित स्तदादे स्तदन्तस्येति वत्वन्त-डत्यन्तयोः संज्ञा । वतुडतिभ्यां घित्यामिति यत्रचशब्दस्य प्रगृभाव स्तेनाभ्यर्हितत्वाद्रूपसमानार्थौ च पुगसङ्घौ संख्यासंज्ञकौ भवत इति बहुपुगगणसङ्घस्य तिथुगिति (५ । २ । ५२) संख्या द्वारेण डटि तिथुगागमः । यत्र छात मनित्यमिति अनभिधानाच कथा छात्व सुजादिक मिति टीका,भवत्येवेति प्रभुः । २१ ।

ष्णान्ता: षट् ॥ २४ ॥

डति च ॥ २५ ॥

षकारान्त-णकारान्तसंख्या डति प्रत्ययान्तो च षट्-संज्ञाः स्यात्। षट् तिष्ठन्ति पञ्च वा। पञ्च सप्त नव दश एकादश कति सन्ति पञ्च वा।

'ष्णान्ता'। ष्णेति षकार ऐच्छिकः संख्येत्यनुवृत्तस्य विशेषणात् ष्णान्त-तदन्ता विज्ञान्त ग्रहणम् उत्तरत्र विस्पष्टभावार्थम्। षट् संज्ञायां सत्यां षड्भ्यो लुक् (७।१।२२) इति जस्शसो र्लुक्। 'सन्ति पञ्च वेति'। तयो र्द्योतनार्थम्। शतानीत्यत्र नुमि न संज्ञा लाक्षणिकत्वात्। 'कतीति' किम्. संख्या परिमाणे डतिच (५।१।४१) इति डति प्रत्ययः तदन्तस्य संज्ञा। डित्वात् टिलोपः।

क्त क्तवतू निष्ठा ॥ २६ ॥

एतौ निष्ठेत्युच्येते। भिन्नः। भिन्नवान्।

'क्त क्त'। सूत्रमिदं संज्ञा-परिभाषात्मकम्। अत्र व्याकरणे विधावनुवादे वा यत्र यत्र निष्ठापदं तत्र तत्र क्तक्तवतू प्रत्येतव्यौ, इति परिभाषाया आकारः। अत्र तयोरिदं

संधीत्यव्यायातमेव। तदाह, 'एतो निष्ठेत्युच्यते' इति। अत्र विवरणे वदता संज्ञापदं हलितकार यत्र निष्ठेत्युच्यते तत्र क्त क्तवतु शब्दावेवोच्येते इत्यपि प्रतिपादितम्। 'भिन्न' इत्युदाहरणेनच निष्ठेति विधानम्। रदाभ्यां निष्ठातोन (८।२।४२) इति नत्वार्थं मनुवदन च इयमेव दर्शितम्।

## सर्व्वादीनि सर्व्वनामानि॥ २७॥

सर्व्वप्रभृतीनि सर्व्वनामानीत्युच्यन्ते। सर्व्वस्मै, सर्व्वस्मात्। विश्वस्मै, विश्वस्मात्। उभशब्दो नित्यद्विवचन-टाब्विषयः। उभयोन्यत्र। डतर डतम अन्य अन्यतर। अन्यपर्य्यायः त्व त्वत्। नेमभिन्न अर्द्धपर्य्यायः। सम सिम पूर्व्व पर अपर अधर दक्षिण उत्तर अवर स्व अन्तर त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवत् किम्।

'सर्व्वे'। सर्व्व आदिर्येषां तानि सर्व्वादीनि आदिः पूर्व्वव्यवस्थितः पौर्व्वापर्य्यसम्बन्धिषष्ठी। अतः सर्व्वेषामिति (७।३।१००) निर्द्देशात्, सर्व्वशब्दस्य संज्ञेत्याह — 'सर्व्वस्मायिति'। सर्व्वनाम्नः स्मै: (७।१।१४)। 'नित्यद्विवचनान्त टाब्विषय' इति। नित्य द्विवचनं यस्य तथा टापाच विशे-

येण स्त्रीत्व विवक्षायां सिनोत्यात्मानं सम्बध्नाति पचाद्यच् (३। १। १३४) टाब्विषयः। स चासौ अयं चेति स तथा, उभौ साभ्यासस्येति (८। ४। २१) निर्देशात् नित्यद्विवचनान्त एव स्त्रीत्वे टाबन्तादपि द्विवचनमिति बोधयितुम्। तत्र नित्यपदं तस्य सर्व्वनामसंज्ञया सर्व्वनाम्नस्तृतीया चेति (२। ३। २७) तृतीया षष्ठ्योः अकच् प्रत्ययोऽपि। उभादुदात्तो नित्यमिति (५। २। ४४) तु स्वरूपपरो नार्थपरः। अतएव उभ शब्द इति शब्दपदम्। "शास्त्रेशब्दस्तु वाचकः" इत्यभिधानात्। 'उभयोन्यत्रेति'। तस्य उभयस्मै उभयस्मात् इत्यादि, उभयः उभयौ उभये उभयाः उभय उभयौ उभयान् उभयेन उभयाभ्यां उभयैः उभयस्मै इत्यादि, उभावयववावस्य उभयः। डतर-डतमौ प्रत्ययौ। किं यत्तदो निर्द्धारणे द्वयोरेकस्य डतरच् (५। ३। ९२) वा बहूनां जातिपरिप्रश्ने डतमच् (५। ३। ९३)। तदन्तस्य संज्ञा। कतरस्मै कतमस्मै। 'अन्यपर्य्याय' इति। (इतरान्यतरयो र्व्विशेषणं)* तादन्तस्य तृतीया-षष्ठ्या अकच फलम्। नेम शब्दार्थमाह, 'अर्द्धपर्य्याय' इति। सम-सिमौ सर्व्वार्थौ अन्योन्यसाहचर्य्यात्। तेन यथासंख्यमनुदेशः समानां (१। ३। १०) समे देशे यजत इत्यादौ न संज्ञा। अत्र समानामिति तुल्यानां समे निम्नोन्नतत्वादि-दोषरहित इत्यर्थः।

---

* इतरान्यतरयो र्व्विशेषणं (ट)।

अत्र पूर्व्वादीनि निर्व्विशेषणानि क्वचिद्गणपाठे दृश्यन्ते। तत्तु हेयमेव। पूर्व्वपरेति (१ । १ । ३४) सूत्रे व्यवस्थायामिति किमित्युक्त्वा वक्ष्यति दक्षिणाग्गाथा इति तत्र तेन विकल्पाभावे अनेन गणपाठेन या नित्या संज्ञा प्राप्नोति सा कथं न स्यात्? तथा दिग्गणेऽपि पूर्व्वादीनि वक्ष्यमाणसूत्ररीत्यैव पठितव्यानि। मद्यहत्तौ च तथैव सन्तीति सकलं चारु। भवत् शब्दउगित्। सर्व्वनामानीति क्षुभ्नादे (८ । ४ । ३९) पाठात् गणत्वात् पूर्व्वपदात् संज्ञायामग (८ । ४ । ३) इति न णत्वम्। अतएव वा निर्देशो नदनित्यमिति। तेन श्रीनाथ रघुनाथ-रघुनन्दनादयो णत्वाभावात् सिद्धाः। अत्र सर्व्वेषामित्यन्वर्थसंज्ञा ग्रहणात् सर्व्वोनाम कश्चित्। तस्मै सर्व्वायेत्यत्र न भवति। अत्र तदन्तविधे राश्रयणात् परमसर्व्वस्मै इत्यपि भवति, तत्र तृतीया समास (१ । १ । ३०) इति निषेधाज्ज्ञापकात्। तर्हि सर्व्वमतिक्रान्तोऽतिसर्व्वस्तस्मै अतिसर्व्वायेति। अत्र कथं न भवति? नह्येतदन्वर्थसंज्ञया निरसितुं शक्यं, सर्व्वशब्दस्य स्वार्थहनित्वात्। उच्यते, प्रधानाप्रधानन्यायादप्रधानेषु न संज्ञा। तेन अतिसर्व्वायेति सुस्थम्। अतएव संज्ञोपसर्ज्जनीभूताः पाठादेव विवर्जिता इति, तर्हि किं न बहुव्रीहाविति (१ । १ । २९) त्यनेन? सत्य, तत्र वक्ष्यति।

## विभाषा दिक्समासे बहुव्रीहौ ॥ २८ ॥

दिग्बहुव्रीहौ सर्व्वनाम-संज्ञा वा स्यात्। उत्तरपूर्व्वस्यै। उत्तरपूर्व्वायै।

'दि'। दिगुपलक्षितः समासः दिक्समासः। तथाच पूर्व्वसर्व्वकप्रिय इत्यत्र दिक्पूर्व्वपदे उत्तरपदे परे तत्पुरुषेऽपि विकल्पः स्यादिति बहुव्रीहि ग्रहणम्। ततश्च दिङ्नामान्यन्तराले (२।२।२६) इति प्रतिपदोक्तो बहुव्रीहि र्गृह्यते। अपाधान्या टप्रासविभाषेयम्। समासग्रहणात् आबाधे चेति (८।१।१०) द्विर्व्वचने दक्षिणदक्षिणस्यै गतीति बहुव्रीहित्वातिदेशेतु नित्यैव संज्ञेति वृत्तौ समासग्रहणाभावे प्रतिपदोक्तस्य ग्रहणं न स्यात्।

न बहुव्रीहौ ॥ २९ ॥

बहुव्रीहौ संज्ञेयं नास्ति। प्रियविश्वाय देहि। स्मै भावो नास्ति। त्वत्कपितृको, मत्कपितृकः। कुत्साद्यर्थे प्राक्टेरकच् (५।३।७१) न भवति। प्रागिवात् कएव (५।३।७०) भवति॥

'न'। "प्रधानाप्रधानयोः प्रधाने कार्य्य-संप्रत्ययः" इति

प्रियविश्वायेत्यादौ स्मैस्मादादयो न भवन्त्येव । किन्तु त्वं कुत्सितः पिता यस्येति वाक्ये अन्तरङ्गत्वात् प्रथम मेवाकच् प्राप्नोति । ततश्च त्वकत्' पितृक इति भवेत् । त्वत्कपितृक इति नस्यात् । यथायं प्रयोगो भवति तदर्थमिदम् । सति त्वत्र सूत्रे धनेनैव सर्व्वं सेत्स्यतीति । प्रियविश्वायेत्यत्र स्मैभावो न भवतीत्यपि दर्शितम् । "एकेनैवद्वयमुत्तीर्णं" मितिन्यायात् । एवं त्वर्यादापतति वहुव्रीहावितत् सूत्र-सामर्थ्या दन्तरङ्गोऽकच् न भवति । कुत्सितं त्वा मतिक्रान्तेनेति विवक्षायान्तु अतित्वकयेत्यादि स्यादेव । त्वा मतिक्रान्तेन कुत्सितेनेति विवक्षायां कमेव अतित्वकेनेति । तदुक्तं कातन्त्रवररुचि-वृत्तौ — "यत् सर्व्वनाममान्नातु कार्य्यं प्राधान्य एवतत् । तद्वृपेप्यन्तरङ्गत्वा द्वहुव्रीहिं विना क्वचित्" इति । प्रियविश्वायेति सर्व्वनामसंज्ञायां उपसंख्यान (२ । २ । ३५ वा) मित्यपिनास्ति असर्व्वनामत्वा दतो वा प्रियस्येति (२ । २ । ३५ वा) प्रियशब्दस्य वा पूर्व्वनिपातः । त्वत्कपितृक इत्यत्र विशेषणत्वात् युष्मदः पूर्व्वं निपातः ।

## तृतीया-समासे ॥ ३० ॥

अत्र संज्ञेयं नास्ति । मासपूर्व्वाय देहि । पुनः समासग्रहणात् वाक्येऽपि, मासेन पूर्व्वाय ।

'वृत्ती'। पूर्व्वसदृशेत्यनेन (२ । १ । ३१) यः प्रतिपदोक्तः

समासः सएव गृह्यते । द्वन्द्वेचेति चकारस्य समुच्चयार्थत्वा द्वाक्येऽपि तद्विषय एव न भवतीत्युदाहरति । (मासपूर्व्वायेति) मासेन पूर्व्वायेति । कर्त्तृकरणे कृतेति (२ । १ । ३२) सामान्यलक्षणेन समासे वाक्येच त्वकत् कृतं त्वकया कृत मिति स्यादेव । ( दिक्समासे (१ । १ । २८) इत्यतः समासग्रहणानुवृत्ते· पुनः समासग्रहणाद्गौणेसमासेऽपि । गौणत्वन्तु यस्मिन् यदर्थात् तस्मिन्नपि नाच्छब्दंत्र भवतीति केचित् । )

द्वन्द्वे च ॥ ३१ ॥

द्वन्द्वे संज्ञेयं नास्ति । पूर्व्वापराणाम् । कतरकतमानाम् ।

विभाषा जसि ॥ ३२ ॥

द्वन्द्वे जसि सा संज्ञा वा स्यात् । कतरकतमे, कतर कतमाः ।

'वि' । द्वन्द्वे जसि वास्यादिति द्वन्द्वसाहचर्य्यात् जसीत्यपि विषयसप्तमी । तथाच जस्विषयकं कार्य्यं शी-विधानमेव विकल्प्यते * । चकात्तु द्वन्द्वचेति (१ । १ । ३१) नित्य

* नाकाच् चकाच पुन द्वंन्द्वेचेति नित्य निषेधात् (ठ) । चकाचत्तु द्वन्द्वेचेति निषेधात् ('च') ।

निषेधात्। कतरकतमा इत्येव भवतीति वृत्तिः *। अतः कतरकतमे इति वत् कतरकतमके इति न भवतीति † व्यवस्थित विभाषात्वात् जस कार्य्यं प्रति संज्ञाविकल्पः। अथवा कार्य्य-शब्दाध्याहारात् जसाधार कार्य्ये औभावे संज्ञाविकल्प इति केचिदाहुः।

**प्रथमचरमतयाल्पार्द्धकतिपयनेमाश्च ॥ ३२ ॥**

एते जसि सर्व्वनामानि वा स्युः। प्रथमे, प्रथमाः। चरमे, चरमाः। तयप्। द्वितये, द्वितयाः। द्वये, द्वयाः। अल्पे, अल्पाः, इत्यादि।

'प्रथम'। अत्रापि तथाविधानात् तथैव विकल्प इति प्रथमके इति न भवति। किन्तु प्रथमका इत्येव ‡। अत्र च केन व्यवधाना न औ भावः। सर्व्वादिषु उभयनेमयो र्गण-

---

* कतरकतमका इति क एव भवतीति वृत्ति ('ठ')('च')।

† "इति नभवति" इत्यत्र 'ठ' 'च' पुस्तकयो र्विद्यते, "इति व्यवस्थित विभाषे" त्यादिक केवल 'ट' पुस्तक एव।

‡ प्रथमे इतिवत् प्रथमके इति नभवति। किन्तु प्रथमका इति क एव ('ठ' 'च')।

पाठेन सर्व्वनामत्वा दुभयके नेमके, नित्यमकच् । इह तु नेमाः उभया इत्यर्थं विभाषाविधिः । अत्र हत्तिः । गणपाठादुभयशब्दस्य संज्ञा नित्यैव । ललनेन विभाषातयम् सम्बन्धे नानुमितत्वात् । "शुभाशुभमितयोर्हिं शुत. सम्बन्धो बलवान्" इति उभया इति न भवतीति ।

पूर्व्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थाया मसंज्ञायाम् ॥ ३४ ॥

इमानि जसि सर्व्वनामानि वा स्युः । पूर्व्वे, पूर्व्वाः ; परे, पराः । व्यवस्थायां किं ? दक्षिणा स्नाताः प्रवीणा इत्यर्थः । असंज्ञायां किं ? उत्तराः कुरवः ।

'पूर्व्व' । शब्दरूपापेक्षं क्लीवत्वमिति कर्त्तृकतोऽवधिनियमो व्यवस्था । अतएव निर्द्देशाच्च लिङ् । न चडिति अभिधानप्रामाण्यादिति स्वागादि (१ । १ । ८१) सूत्रे वक्ष्यते । 'उत्तराः कुरव' इति । सत्यामेव व्यवस्थायामिय संज्ञा । (अत्र जम्बुद्दीपं सुमेरुं वा अवधिमपेक्ष्य उत्तरशब्दो वर्त्तत इति व्यवस्था भवतीति न्यासः । ) अत्रानेन विकल्पाभावेऽपि सर्व्वादित्वात् संज्ञा या नित्या प्राप्नोति, सा कथं नेति न देश्यम् । अत्रोऽपि व्यवस्थायामसंज्ञायामित्यादि विशेषण मस्तोत्येतुक्तं प्राक् ।

स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥

जसि स्वं सर्वनाम वा स्यात्। स्वे गावः। स्वा गावः। अज्ञाति धनाख्यायां किं? स्वा ज्ञातयः, प्रभूताः स्वा दीयन्ते।

'स्वं'। "स्वो ज्ञाता वात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। इह च स्वमिति क्लीबत्व मविवक्षितं ज्ञातिनिषेधात्। ततश्च शब्दरूपापेक्षं क्लीबत्वम्। 'स्वा अज्ञातय' इति। स्वा ज्ञातयोऽन्निवदित्यर्थः। 'स्वा ज्ञातय' इति पाठे वा इत्यस्यार्थकथनं ज्ञातय इति। "पर्यायशब्दोऽपि यत्रानेकार्थः सन्दिग्धार्थो वा भवति तदर्थस्यैवाभिव्यक्तीकरणार्थः"। आख्याग्रहणेन यदा त्वात्मीयेऽर्थे स्व-शब्दो ज्ञाति सामानाधिकरण्येन प्रयुज्यते, तदा स्यादेव विभाषेति बोध्यते। अमी ज्ञातयो मम, स्वे आत्मीया इति अद्रोहिण इति यावत्।

अन्तरं बहिर्योगोपसंव्यानयोः ॥ ३६ ॥

अन्तरं जसि सर्वनामसंज्ञं वा स्यात्। बहिर्योगे, अन्तरा अन्तरे गृहाः, ग्रामबाह्या इत्यर्थः। उपसंव्यान मधोवस्त्रम्। अन्तरे अन्तराः शाकटाः परिधेया इत्यर्थः॥

अपुरीति वक्तव्यम् ॥ * ॥

अन्तरायां पुरि वसति सर्व्वादित्वात् प्राप्तिः।

वा प्रकरणे तीयस्य ङित्सूपसंख्यानं कर्त्तव्यम् ॥ * ॥

द्वितीयस्मै, द्वितीयाय।

'अन्त'। अत्रापि शब्दरूपापेक्षं क्लीवत्वं। "बाह्ये च परिधाने च सदृशे चान्तरोऽस्त्रिया" मिति रुद्रधरलिखनादन्तरशब्दः पुंलिङ्गोऽपि। बहिर्येन योगो यस्य स बहिर्योग इति बाह्य उच्यते। बहि रित्यनेन अनावृतो देश उच्यते, तेन योगो बहिर्योगः। स चानावृतस्य बाह्यस्य वस्तुनो भवतीति न्यासः। "अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुक" इति वचना दाह — 'उपसंव्यान' मिति। संवीयते परिधीयतेऽनेनेति संव्यानम्। तत्समीपमुपसंव्यान, वस्त्रान्तरेण व्यवहितवस्त्रमिति टीकायां स एवाभिप्रायः। वस्त्रमन्तरं परिधानं येषां ते वस्त्रान्तराः। कम्बलोऽन्तरं परिधानं येषां ते कम्बलान्तराः। कम्बलान्तराश्च वस्त्रान्तराश्च ते कम्बलान्तर वस्त्रान्तराः। इत्यत्र सर्व्वादित्वा न संज्ञा, अप्राधान्यात्। न चानेन "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति"। सर्व्वादित्वात् प्राप्तिरिति लिङ्गविशिष्टग्रहणा दित्यभिप्रायः।

तत्रापि 'बहिर्योग' इति विशेषणात् मूलनगरवाह्याया मित्यर्थः । प्राकारा दश्विर्व्वर्त्तनीया पू स्तस्या मित्यर्थो वा । 'वा प्रकरण' इत्यादि । तीयस्येति पुंलिङ्गनिर्द्देशा द्विभक्तौ लिङ्गविशिष्टग्रहण मिति स्याड्विधौ विभाषा द्वितीया तृतीयाभ्या मिति (७ । ३ । ११५) सूत्रं प्रपञ्चार्थं वा ।

## स्वरादि निपात मव्ययम् ॥ ३७ ॥

स्वरादयो निपाता श्चाव्यय मुच्यते । स्वर्, प्रातर्, अन्तर्, उच्चैस्, नीचैस्, दिवा, वहिस्, मृषा, स्वयं, हे, है, स्वाहा, स्वधा, अद्धा, कं, शं शुभं,। स्वस्ति, अस्ति, आभीच्णे। निपाताः च, वा, इव, एव, इति। इह स्वरादयो वाचका, चादयो द्योतका इति भेदः।

'स्वरा'। 'आभीक्ष्ण' इति। आभीक्ष्णे ये डि-स्वादयः प्रत्यया स्तेपोत्यर्थः। लुनीहि लुनीहि, लुनीष्व लुनीष्व, इति। ननु स्वरादयोऽपि चादिषु पठ्यन्ताम्। तथाच निपातत्वे निपातोऽव्यय मित्ये वास्तु किं स्वरादि पदेनेत्याह, 'स्वरादय' इत्यादि। चादयोऽसत्वे (१ । ४ । ५७) इति ये निपातसंज्ञका स्ते अद्रव्यवाचय इति। असत्वत्वा हि यन्निकटे प्रयुज्यन्ते तदर्थद्योतकाः।

स्वरादयस्तु द्रव्यवृत्तयः स्वतन्त्रा इति चादिषु नैषां प्रवेशो युक्तः । स्वरादिष्वपि चादयो न विशन्ति असत्त्व एव तेषां निपातत्वात् । तदर्थं प्रादर्थञ्च निपातग्रहणस्यावश्यकत्वमिति भावः । अत्रापि प्रधानन्यायाश्रयणात् परमस्वरौ परमस्वर इत्यादौ नाव्ययत्वम् । न व्येत्यव्ययमिति महती संज्ञा । तदाश्रयणा दप्राधान्ये निषेध स्तदन्तविधिश्चेति पञ्जिका ।

"सदृशं त्रिषु लिङ्गेषु सर्व्वासु च विभक्तिषु ।
वचनेषु च सर्व्वेषु यन्न व्येति तदव्ययम् ॥"

इति । अस्यार्थः, त्रिषु लिङ्गेषु स्त्रीपुंनपुंसकेषु सदृशं तुल्यं लिङ्गविशेषस्य अपरिग्रहात् । लिङ्गसामान्योपादानाच्च विभज्यते प्रातिपदिकार्थं आभिरिति विभक्तयः, कारकाणि । अभिधायकोपचारात् वचनानि एकत्वादीनि च एतेषु च सदृशं यस्मा न्न व्येति लिङ्गादि विशेषानुपादानात् । विविध नानात्वं न गच्छति यस्मा दव्यय मित्यन्वर्थता । अतोऽपठितमपि कु-प्रभृतीत्यादि अव्ययं भवति । कुगतीत्यत्र (२ । २ । १८) महावृत्तिस्वरसात् । "स्कन्धात् प्रभृत्येव सपक्षपातो" ति कुमारकाव्ये । एवं वर्षाणि संवत् । तथा क्रियार्थोपपद न्तुमुन् अव्यय-संज्ञाबलादेव न कर्त्तरि । अव्यय मिति विवरणे अव्ययानीत्यर्थः । "अव्ययाः परे" इत्यमरप्रयोगाऽर्द्धर्चादित्वात् ।

तद्धितश्चासर्व्वविभक्तिः ॥ ३८ ॥

सर्व्वा विभक्ति र्यतो नोत्पद्यते स तद्धितोऽव्ययं स्यात्। ततः यत्र विना नाना तसिलादिर्धाञन्तः, कृत्वसुच्-सुचौ, शस्तसौ, च्व्यर्थाश्च, किम्-तिङव्यय घा-द्वा-स्वद्रव्यप्रकर्षे किन्तरां। वति, ब्राह्मणवत्।

'तद्धित'। अविद्यमाना सर्व्वा विभक्ति र्यस्य स तथा। यस्मात् सुबन्तत्वेन पदत्वार्थं सु-मात्रमेव केवलं सुत्पद्यते नान्या काच विभक्तिः, तावतैव साधुत्वात्। 'स तद्धित' इति तत्तद्धितान्त इत्यर्थः। तत्र स्वत्वेति तद्धितान्तस्य, प्रादिपदिकत्वे पञ्चमीसप्तम्यो र्लुक्। तद्धितसो र्व्विभक्तित्वे तयोः परतः त्यदाद्यत्वं समुदायात् * साधुत्वार्थं प्रातिपदिकार्थं (२।३।४६) सूत्रे प्रातिपदिक ग्रहणात् सुः। अनेनाव्ययत्वे तस्याव्ययादाप्-सुप (२।४।८२) इति लुक्। 'विना नाना' इति। विनञ्भ्यां नानाञौ न सह (५।२।२७) इति वि शब्दात् नञ्-शब्दाच नानाञ् नकारस्याकारवृद्धिः †। 'तसिला-

* समुदाय (ट)।

† इदमेव शब्दशक्ति यथा विना मूलात् पदार्थ् अभिदधानावपि विना-नाना शब्दौ कारणतां नाहत केवलं वजमाने वर्त्ते वर्त्तेते (इत्यधिक. पाठ 'ङ'।

दिरेधेत्यादि ' पञ्चम्या स्तसिल् (५ । ३ । ७) इत्यत आरभ्य । एधाच् (५ । ३ । ४६) पर्य्यन्ता ये तद्धिता स्तदन्तोऽव्ययम् । कृत्वसुच् (५ । ४ । १७) सुचौ (५ । ४ । १८) संख्याया विहितौ । शस् बह्वल्पार्थादिभि (५ । ४ । ४२) र्विहितः तसिश्च प्रतियोग (५ । ४ । ४४) इत्यादिभि स्त्वार्थाय डाच् प्रत्ययान्ताः (५ । ४ । ५७ — ६७) आम् प्रभृतयश्च । ' वतीति ' तेनतुल्यमित्यादिना सूत्रेण विहितः ब्राह्मणवदिति दिग्दर्शनाय । तद्धितः किं ? एको द्वौ बहवः । गोदौ नाम ह्रदौ । तयो रदूरभवो ग्राम इति अदूरभवश्चे (४ । २ । ७०) त्यणो वरणादित्वा (४ । २ । ८२) ल्लुपि । लुपि युक्तवदिति (१ । २ । ५१) युक्तवत्वात् यद्यपि द्विवचनान्तमेव तत् तथापि गोदौ ग्राम स्तिष्ठतीति गोदौ ग्राम गच्छति गोदाभ्यां ग्रामेण सम्पृगुषित मित्यादिरीत्या सर्व्वविभक्तित्व मिति नैतत् सूत्रविषयः ।

कृन्मेजन्तः ॥ ३८ ॥

मान्तः कृदव्ययं स्यात् । कर्त्तुं स्वादुङ्कारं स्वपोषं पुष्टः, ईहाञ्चक्राते । एजन्तः कृच्छान्दसः (३ । ४ ९ — ११ १४ १५ ) ।

' कृन्मे ' । ' मान्तः कृदिति ' प्रत्ययग्रहण-परिभाषया

छदन्त उपपदः। स च मकारेण विशिष्यत इति येन विधि रिति (१।१।७२) तदन्तविधि रस्त्यव। तथाप्यन्त-ग्रहणस्य फलं वक्ष्यति। 'वार्त्तुमिति' मकातोव्यादि शेषम्। 'ईहाञ्चक्राते' इति ईहधातो रिजादेश्चेत्या (३। १। ३६) मि लेः चाम इत्यामः (२।४।८१) परस्य लिटो लोपेऽपि प्रत्यय-लक्षणेन (१।१।६२) ईहाम् शब्दः छदन्तः। लिटः कर्त्तृ-प्रकत्वात्। चाम् तु द्वितीयधात्वधिकारे विहितो नेति न कृत्। तर्हि नमु म्नामौ क्विपि चनुनासिकस्य क्विझलोरिति (६।४।१५) दीर्घत्वे प्रतामौ प्रताम इत्यत्र वत्भाव भवति चत्रापि मान्तस्य छदन्ततया छदन्तत्वात्। उच्यते। प्रत्यया प्रत्यय परिभाषया प्रत्ययावयवमकारान्तत्वं ग्रहीष्यत इत्य-दोषः। तर्हि चातो मनिन् (३।२।७४) सुदामा, तमाचष्टे णिच् सुदामयति ततः क्विपि सुदामौ सुदाम इत्यत्र स्यात्। एतदर्थं मेवान्तग्रहणं प्रत्ययावयवोऽन्तएव यो मकारस्तदन्तः छदन्तोऽव्ययम्। सुदामा विव्यत्र विकारे सत्येव मान्ततेति सकल चारु। ईहा मित्यत्र तु छदन्तत्वेन प्रातिपदिकत्वे प्रथमा द्विवचनं तस्यानेनाव्ययत्वे लुक्, पदत्वे मोऽनुस्वारस्य (८। ३।२३) ययि परसवर्णौ (८।४।५८) चकारः। महाप्रत्ती तु चाम्स्वरादिष्वेव पठित इति तेनैवाव्ययत्वम्। 'एजन्तः छदिति' नच कुम्भकारेभ्य इति भाष्येले (७। ३। १०३) चिकोर्षवे इत्यादौ घेर्ङिति (७।३।१११) गुणे च यद्वाम्।

लाक्षणिकत्वात् भूवादय (१। ३। १) इति निर्देशा च।

क्त्वा तोसुन् कसुनः ॥ ४० ॥

क्त्वा अव्ययं स्यात्। कृत्वा, प्रकृत्य। तोसुन् कसुनौ छान्दसौ (३। ४। १३, १६)।

'क्त्वा'। 'प्रकृत्येति' स्थानिवत्त्वा दव्ययत्वम्।

अव्ययीभावश्च ॥ ४१ ॥

अव्ययं स्यात्। उपाग्नि, प्रत्यग्नि, इह लुगेव संज्ञाप्रयोजनं। नाव्ययीभावादिति (५। ३। ७१) स्मृतिः। उक्तमव्ययम्।

'अव्य'। 'उपाग्नीति' नित्यसमासस्थले वाक्य-व्युत्पादनाय तदर्थं अन्यपदे स्वार्थं दर्शित इति अग्नेः समीपमिति वाक्यम्। अव्ययं विभक्तीति (२। १। ६) समासः, 'प्रत्यग्नीति' अग्नेरभिमुखं लक्षणेनाभिप्रती (२। १। १४) इति समासः। 'इहेति' तद्धितेत्यादि सूत्रचतुष्टय इति केचित्। तदयुक्तम्। तस्य इत्यव्ययत्वस्याभावात् कटं कृत्वेत्यव्ययेन

योगे षष्ठीनिषेधात्। "अनुकृत्य रघो राज्ञ" इति वृन्दावन-काव्ये तु शेषविवक्षया। तस्मात् इहेति अव्ययीभावश्चेति सूत्रे। 'स्मृति रिति' अभिधानाभावादकजादि रिह न भवति। आदिपदाच्च गौणेऽपि सादृश्ये पुत्रस्य सदृशी सपुत्रं सपुत्र मात्मानं मन्यते सपुत्रम्मन्या कन्येति अव्ययसंज्ञाया अभावात् अनव्ययस्येति न निषेध इति। अतद्धितपदअन्तस्येति (६। ३। ६७) मुम्भवति। ननु उपपयःकार. उपपयःकाम इति, अतः कृकमीति (८। ३। ४६) सत्वं अनव्ययस्येति निषेधान्नास्तीति विसर्गजिह्वामूलीयौ भवत इति। तत्र हसि स्यात् किमुच्यते लुगेवेति? सत्यं। अनुत्तरपदस्थस्येत्यनुवर्त्तते तत एव। तत् सिद्धेः अकचोऽभावात् कमत्यय इति उपास्तिकमिति भवति।

शि: सर्व्वनामस्थानम् ॥ ४२ ॥

सुडनपुंसकस्य ॥ ४३ ॥

जसिशसोः * शिः (७। १। २०) अनपुंसकस्य सुट् सर्व्वनाम स्थानमुच्यते। शिः, कुण्डानि, दधीनि। सुट्, राजा, राजानौ, राजानः;

* 'जश्शसोः शि' इति पाठः काशिकादौ अन्यत्रापि च दृश्यते।

राजानं, राजानौ। सीमा। अनपुंसकस्य किम्? सामनी, धामनी।

'शिः'। 'सुट्'। सर्व्वनामस्थानमिति महती संज्ञा। सर्व्वेषां नाम्नां प्रातिपदिकानां स्थानमिहेति। अत्रहि सर्व्वाण्येव प्रातिपदिकानि स्वरूपपोषेणावतिष्ठन्ते। असादिषु तु भत्वपदत्वादिभिः प्रायेण विकृतानि भवन्तीति बोधयति। पेचुषः पचुष इत्यादौ क्वसोऽपीड्विधिर्निवर्त्तते। सम्प्रसारणेन निमित्तस्य वलादित्वस्य (७।२।३५) विहितत्वात् "एकदेशविकृतानन्यत्वेऽपि सामान्यातिदेशे विशेषस्यानतिदेश" इति विशेषानतिदेशात्। नित्यत्वादेव सम्प्रसारणं भविष्यति, किमनेन यत्नेन? नैवम्। अन्तरङ्गत्वात् भसंज्ञा-निमित्तप्रत्ययोत्पत्तेः प्रागेव इटो जातत्वात्। तथापि सम्प्रसारणं तदाश्रयञ्च कार्यं बलीय इति इटोपि पूर्व्वं तदेव स्यादिति च न वाच्यम्। इटो विषये तस्य वचनस्याभावात्। तथाहि वशित्वेति (७।२।८) प्रथम मिट्, ततश्च न क्त्वा सेडिति (१।२।१८) कित्वनिषेधात् न सम्प्रसारणमिति व्यवस्था तस्मान्महत्याः संज्ञाया एतदेव फलम्। अन्यथा प्रदेशवाक्ये शि न मान्यसुटीति अस्तु किं संज्ञया न मविषयस्यानिगमेति स्वरसूत्रे सर्व-शब्दो नपुंसकार्थं ततोऽन्यस्य सुडित्यर्थः। सुडितिप्रथमैकवचनात् औटष्टकारेण संज्ञा। कुण्डानीति जसः शिः (७।१।१०) नपुंस-

कस्य झलच (७।१।७२) नुम्, सर्व्वनामस्थाने चेति (६।४।८) दीर्घः, राजेति पुंसि। सोमा इति स्त्रियाम्। मन (४।१।११) इति निषेधाच्च ङीप्। डाप्च (४।१।१३) पाक्षिकः। 'सामनी' इति सर्व्वनामस्थानत्वाभावान्न दीर्घः।

## नवेति विभाषा ॥ ४४ ॥

न-वा-शब्दयोरर्थो विभाषासंज्ञकः स्यात्। निषेधेन समीकृते विषये विकल्पः प्रवर्त्तते, उभयत्र विभाषा प्रयोजनम्। यथा विभाषाश्वेः (६।१।३०) सम्प्रसारणम्। शुशाव, शिश्वाय, शुशुवतुः, शिश्वियतुः।

'नवा'। नवाशब्दो निषेधवाची नवा गताश्च भुक्तार्थस्त्वा दित्यादिदर्शनात्। अखण्डोऽप्येको निपातोऽस्ति। स नेह गृह्यते। विभाषा इति प्रकृते बहुव्रीहौ पुनः प्रतिषेधात्। किन्तु नशब्दो निषेधवाची। वाशब्दो विकल्पार्थः। यत्र यत्र विभाषापदं, तत्र तत्र नवाशब्दावुपतिष्ठेते। उपस्थाय च स्वार्थं प्रकाशयत इति क्रम मनुसन्धाय चाह, 'नवाशब्दयोरर्थं' इति। फलमाह निषेधेनेति। वस्तुतो न समः। किन्त्वनेन नवाशब्दान्तर्गतेन निषेधेन समः क्रियत इति चिः। ननु

वाशब्द एव लोके विकल्पार्थत्वेन प्रसिद्धः। प्रदेशेष्वपादीयमानी विकल्पेन कार्य्यं सम्पादयिष्यते। तथाहि प्राप्ते विकल्पः क्रियेत। अप्राप्ते वा तत्र यथायोगं विधिः प्रतिषेधश्च पाक्षिकः स्यादेव, किं संज्ञाकरणेनेत्याह, 'उभयत्रेति'। उभयत्र प्राप्ते चाप्राप्ते च विभाषाश्वेरिति (६। १। ३०) तत्र लिड्यङो रित्यनुवर्त्तते। अत्र यदि यजादित्वात् किति (६। १। १५) प्राप्तं लिटि विकल्प्यते तदा शुशुवतुः शिश्वियतु रित्यत्रैव स्यात्। न शुशाव शिश्वाय इति। असंयोगाल्लिट् किदि (१। २। ५) त्यत्रापि इत्यनुवृत्तेः। यदि अप्राप्तमेव विधीयते तत्साहचर्य्येण लिड्यपि अकिति पर्य्यात् पित्येव स्यादिति। ततश्च शुशाव शिश्वाय इत्यत्रैव स्या न किति उभयत्रापीष्यते तदर्थमिदम्। अत्र विभाषापदेन प्रथमं निषेध उपस्थितः। ज्ञायते यदुक्तं तल्लिटि नास्ति। *यत्र न प्राप्नोति तत्र नास्त्येव, यत्र प्राप्त तत्रापि निषेधितम्।* अनन्तरं वेति लिङ्-यङ्माते उभयत्र भावाभावौ भवत इति सूत्रार्थः। इति शब्दोऽव्ययानामनेकार्थत्वा चकारार्थ इति विभाषा जसी (१। १। ३२) त्यादौ विकल्पार्थमेव संज्ञासंज्ञि-सम्बन्धेन तरप्तमपौ घ (१। १। २२) इत्यादिषु दृष्टमपि स्वपदपदार्थं नात्र गहंर इति-करणात्। इति-शब्दो विपर्य्यासकृत् यथा गवित्ययमाहेति। अत्र तु गोशब्द सर्वपदात्मकत्वात् प्रच्याव्य शब्दपदार्थकेऽवस्थापयति। तथा इहापि स्वपदात् प्रच्याव्य न-वा-शब्दो अर्थपरत्वेऽवस्थापयति इति-शब्द इति नन्दी। "ट

धो श्वि गतिवृद्ध्योः" लिट् णल् विभाषा श्वे रिति (६।१।३०) सम्प्रसारणम्। सम्प्रसारणाच्चेति (६।१।१०८) पूर्व्वरूपत्वं अचोञ्णिति (७।२।११५) वृद्धि रौकारः शौरूपस्य द्विर्व्वचनम्।

## इग्यणः सम्प्रसारणम् ॥ ४५ ॥

यणः स्थाने भूतो भावी वा य इक् स सम्प्रसारण मुच्यते। इष्टं, उप्तं, गृहीतं, शौयत। अथ षष्ठीनिर्द्देशमधिकृत्याह।

'इग्यणः'। इदमपि पूर्व्ववत् संज्ञापरिभाषात्मकं सूत्रम्। परिभाषात्वमाह, 'भूतो भावी वेति'। यत्र सम्प्रसारणं विधीयते तत्र भाविपदम्। यत्र कार्य्यार्थं मनूद्यत इति तत्र भूतपदं, तत्र यण इगिति विधौ उपतिष्ठते। 'इष्टमिति' यजादीनामिति (६।१।१५) विधिः सम्प्रसारणाच्चेति (६।१।१०८) परस्य अकारस्य पूर्व्वरूपत्वमित्यनुवादः। यण इगिति यथासंख्यभावेनोपतिष्ठत इति ऐधिषितरामित्यत्र लुङि लादेशेऽपि इटि सम्प्रसारणपदेन न व्यवहार इति सम्प्रसारणस्येति (६।३।१३८) न दोषः। इष्ट मिति यज देवपूजादौ क्तः। एकाच इतीण्निषेधः। व्रश्चादिसूत्रेण (८।२।३६) षत्वं ष्टुत्वञ्च

(८।४।४१)। 'स्पष्टोत मिति' ग्रहिज्येति (६।१।१६) सम्प्रसारणं ग्रह (७।२।३७) इति दीर्घः। षिषानुपहार्थं- माह, 'षयपष्ठीति' पारिशेष्यात्।

## आद्यन्तौ टकितौ ॥ ४६ ॥

षष्ठीनिर्दिष्टस्य आदिष्टिट्भवति। अन्तः किद्भवति। लविता, भीषयते।

'आद्यन्तौ'। आद्यन्तशब्दाववयववचनौ। आदित्वे लवितेति इड्विधे लीनवत्त्वात् पूर्व्वमित्यार्धधातुके (७।१।८४) गुणः। अन्तत्वे भियोहेतुभये षुगिति (७।१।४०) षुकि अनजन्तत्वाद्भीषयते इति णिचि न वृद्धिः। एवं पकारविंशति रिति एकस्य चतुर्कि (६।१।१६) पदान्तदकारस्य यरोऽनुनासिका (८।४।४५) भवति वा।

## मिदचोऽन्त्यात् परः ॥ ४७ ॥

अचां मध्येऽन्त्यादचः परो मित् स्यात्। पयांसि सिस्नति। रुणद्धि।

मस्जिरन्त्यात् पूर्वं नुम मिच्छन्त्यनुपङ्गसंयो-

गादिलोपार्थम् ॥ * ॥

मङ्क्ता, मग्नः।

'मिद्'। अन्त्यादचः पर इति वर्णानां समाप्तिरन्तस्तत्र भवोऽन्त्य इति दिगादित्वात् (४।३।५४) यत्। एवं वनानि कुण्डानीत्येव स्यात्। पयांसीत्यादौ तु अचोऽन्त्यत्वं न सम्भवतीति दृष्ट्वा विशिनष्टि। 'अचां मध्य' इति। निर्धारणस्य साजात्यमूलकत्वात् तृणहइमिति (७।३।९२) निर्द्देशाज्जात्यो व्यजेन गृह्यते। अच इति निर्धारणषष्ठी जातावेकवचनं (२।४।६)। अचां मध्ये योऽन्त्योऽच् तस्मात् परो मिदिति फलार्थः। तृणह इति निर्द्देशात् श्नम आगमत्वं प्रत्ययत्वञ्च, प्रत्ययत्वेहि मकारस्येत्संज्ञा। पयांसीति सान्तमहत इति (६।४।१०) दीर्घः। अनुषङ्गेत्यादि मग्न इत्यत्र उपधा-नकारस्यानुषङ्गस्यानिदितामिति (६।४।२४) लोपो यथास्यात्। मङ्क्त्वेत्यत्र स्कोः संयोगाद्योरिति (८।२।२९) सकारलोपो यथा स्यात् इत्येवमर्थम्। मस्जेरन्त्यात् पूर्व्वं नुममिति अन्यथा अचां संयोगसंज्ञायां सकारो मध्यः स्यादिति भावः। अनुषङ्ग इति उपधा-नकारस्य पूर्व्वाचार्य्यसंज्ञा। इच्छन्तीतिपदेन अन्य-त्रापि सूचितः। अचः पर एव नुम्भवतु। कथं त्रिषु हल्सु मिलितेष्वपि द्वयोः संयोगसंज्ञास्यादेव? तथाच सकार-जकारयोर्हलोः संयोगसंज्ञायां स्कोरिति (८।२।२९) लोपे मङ्क्तेति

स्यान्नचैव सिन्दिद्वीयिषतीति संयोगादिदकारस्य द्विर्वचनं निषेधः प्रज्ञः । अजादेरित्यनुवर्त्त्य आदेरचः परस्य संयोगादेरिति महावृत्तौ व्याख्यानादत्र न नकारेण व्यवधानात् । मग्न इत्यत्र च स्कोरिति (८ । २ । २९) सलोपे परत्वान्न सुपधानकारस्य लोपे कर्त्तव्ये सलोपस्य असिद्धत्वा दनुपधात्वमिति नलोपो न प्राप्नोति । तदर्थं काचि वाचि आकाङ्क्षायां, ग्राचि ध्याचि घोरे वासिते च इत्यादीनां सिद्धत्वं ज्ञापकं । अनुपधानकारस्यापि क्वचिल्लोपः । अन्यथा प्रक्रियालाघवाय काङ्गादीनेव पठेत् । तदेवमत्र लोपो माभूदिति । अन्यथा सोऽनुपधात्वादेवाप्राप्तः । नमुने इति (८ । २ । ३) योग-विभागश्च न्यासे । ततोऽपि न-मं.पः स्यादिति वा वक्तव्यम् । ओदित-श्चेति (८ । २ । ४५) निष्ठानत्वं तस्यासिद्धत्वा चोः कुरिति (८ । २ । ३०) कुत्वम् ।

एच इग्घ्रस्वादेशे ॥ ४८ ॥

एच स्थाने ह्रस्वादेशे इगेव स्यात् । अतिरि कुलं, अतिनु, उपगु ।

'एच' इति । परिभाषा सूत्रमिदं, समुदायात्मना सर्वा समुदायान्तरतमो नास्तीत्यवान्तरतम्या दकारोऽपि प्राप्तः ।

अनेन नियमेन व्यावर्त्त्यते। अकारेण श्लिष्ट इकार एकारो भवति, उकारश्च ओकारः। अकारश्लेषेण स ऽ ऐ औ च भवतीति परम्परया क्लृप्तानन्तरतम्य ऌकार-ऋकारनिवृत्यर्थं माश्रितम्। अतएव ए ऐ कण्ठतालव्यौ ओष्ठौ इति शिक्षा-कारा:। राय मतिक्रान्तं कुलं प्रादिसमासः, ह्रस्वो नपुंसक इति (१।२।४७) ह्रस्व इकारः। स्वमो रिति (७।१।२३) सुलुक्। अतिरि इति नलुमताङ्गस्येति (१।१।६३) निषेधा दत्र रायो हलीति (७।२।८५) न भवति। अतिरिणीति सन्निपातपरिभाषावलात्*। अन्यत्र अति-राभ्या मतिराभि रितीत्वन एव। अप्रधानेऽपि व्याख्या नाव-मतिक्रान्त मतिनु, गोः समीप मुपगु, अव्ययं विभक्तीति समासः अव्ययीभावश्चेत्यव्य-यत्वम्। गो स्त्रियो रिति (१।२।४८) पूर्व्वेण वा ह्रस्वत्व विधित्वाभावादत्र न यथासंख्यमिति न्यासः। अत्रापि परम्पराक्लृप्तान्तरतम्यमवश्यं वाच्यं तथासे-त्याकिञ्चित्करमेतत्।

## षष्ठी स्थानेयोगा ॥ ४९ ॥

अयोगा अव्यक्तसम्बन्धा षष्ठी स्थाने वेदितव्या।

---

* स इति एकार ओकारः ऐ औ इति भवन (टिप्पनी 'ट')।
* अत्र नास्ति (टिप्पनी 'ट')।

अस्ते र्भूः (२ । ४ । ५२) भविता। ब्रुवो वचिः (२ । ४ । ५३ वक्ता। अयोगा किं? ऊदुपधाया गोहः (६ । ४ ८९) निगूहयति (?)।

'षष्ठी'। यत्र यत्र षष्ठी तत्रैवावयवावयविभावसम्बन्धः सुस्फुट स्तस्य बाध एव सम्बन्धान्तरं कल्प्यते, यथा अस्ते-र्भूरि (२ । ४ । ५२) त्यादौ अस्तेरवयवो भूः स्या दित्यर्थं मव-दनिष्ट मिति नियमसूत्रमिदम्। इह शास्त्रे षष्ठी स्थाने-योगा वेदितव्येति भाषावृत्तौ। स्थाने प्रसङ्गे योगो यस्या इति वैयाधिकरण्येऽपि समासः सप्तम्यलुक्च निर्देशात्। एवञ्च सूत्रार्थे ऊदुपधाया गोहः (६ । ४ । ८९) इत्यत्र उपधाया इति षष्ठी तावत् स्थाने-योगैव गोह इति षष्ठी। कथं स्थाने योगा नेति दोषमाशङ्क्यानियतयोगेति षष्ठ्या विशेषणं येनोक्तं वृत्तौ समाल मिद माकलय्य नञ्प्रश्लेषेण सूत्रमिदमयमन्यथा व्याचष्टे। 'अयोगेति' 'अव्यक्तसम्बन्धेति'। तद्विवरणं स्थाने वेदितव्येति। यद्यपि सकलैव षष्ठी समुचिता प्रसङ्गे। अप्रसङ्गे षष्ठीं विदधदाचार्य्य उपेक्षणीयः स्यात्। तथापि नवेति (१ । १ । ४४) सूत्रात् इति-पदमनुवर्त्त्य स्थाने इति वेदितव्येति योज्यम्। ततश्च सम्बन्धान्तरनिरासेन स्थानसम्बन्ध एवात्र पक्षरोप्यते इति अस्तेः स्थाने प्रसङ्गे भू र्भवतीति। गोह इति अवयवसम्बन्धे षष्ठीति। न तत्रास्यावसरः। स्थितिः स्थान

मिति भावसाधनम्। विषा स्थानशब्दः, अपकर्षो निवृत्तिः प्रसङ्गः। गोस्थानेऽश्वो बध्यतां, श्लेषणः स्थाने त्रिकटुकमौषध, दर्भाणां स्थाने शरै रास्तरितव्यमिति। तत्राद्यो न सम्भवत इतीह प्रसङ्गः स्थानशब्दार्थः। प्रसङ्ग च सार्थकानर्थकसाधारणः प्रस्ताव इति। निरर्थकेच चोः कु (८।२।३०) रित्यादावपि स्थानषष्ठेव। अर्थक्रियानिमित्तभूतस्य कालस्यावसरः प्रसङ्गः। यथा असेः प्रसङ्ग इति अस्तेर्या अर्थक्रिया स्यार्थः। अत्रापिशलिः —

"आगमोऽनुपघातेन विकारः योपमर्दनात्।
आदेशस्तु प्रसङ्गेन लोपः सर्वापकर्षणम्॥"

इति न्यायेद्विमर्शनमेवापकर्षणात्। तदीयाभ्या नेवाग-मविकारशब्दाभ्या मत्रापि व्यवहारः। उपगूहयतीति गुह संवरणे णिचि लघूपधगुणे गोहयते ओकारस्य ऊकारः।

## स्थानेऽन्तरतमः॥ ५०॥

स्थाने प्राप्यमाणानां सदृशतम आदेशः स्यात्। लताग्रं। कण्ठ्ययोः कण्ठ्यएव दीर्घः। अर्थतः, तरुणयुवती तरुण्यर्थ एव, पुंवत् उच्यते। गुणतः, पाक त्यागो रागः। अल्पप्राण-महाप्राणयो रघो-ष-घोषवतो स्तादृगेव कुस्यम्। प्रमाणतः, अमुष्मै

अमूभ्यां ह्रस्वदीर्घयो सत् प्रमाणावेव उकार-ऊकारौ। स्थानग्रहणं, स्थानार्थगुणप्रमाणेषु स्थानान्तर्यं बलीयो यथा स्यात्। चेता स्तोता प्रमाणान्तर्य्या इकारो माभूत्। तमप्ग्रहणं बह्वन्तरेष्वन्तरतमो यथा स्यात्। वाग्घसति त्रिष्टुब् भवति।

'स्थाने'। 'प्राप्यमाणानामिति' विधेयानामित्यर्थः। 'सदृशैश्चान्तराऽस्त्रिया मिति" दृष्टाह 'सदृशतम' इति स्थानसदृशतम इति स्थानसदृश उदाहरण 'लतायमिति'। अर्थसदृश माह 'तरुणयुवति रिति'। तरुणस्य स्त्री तरुणी, गौरादीति (४।१।४१) ङीप्। कर्मधारय (६।३।४२) पुंवत्त्वात् रूपातिदेशेन तरुणी-शब्दस्य स्थाने पुंलिङ्गादेशे कर्त्तव्ये अर्थप्रत्यासत्त्या तरुणशब्द एवायाति। एतच्च प्रत्यासत्तेरेव पर्यायान्तरं उदाहरणान्तरञ्च। पचतीत्यस्य निवृत्ताया द्विरुक्तौ पचति पचतीत्येव भवति नच पचति भुज्यतीति। प्रत्यासत्तावप्यर्थो विद्यते इति गुणत उदाहरति 'पाकस्थग' इति। चकार-जकारयो स्तद्गुणवानेव कु। वर्गाणां प्रथमद्वितीयाः श्वासा अघोषाः। घोषवन्तोऽन्ये। वर्गाणां प्रथम-तृतीय-पञ्चमा यरलवाश्च अल्पप्राणाः। चकार-जकारौ अल्पप्राणौ। द्वितीय-चतुर्थाः महाप्राणा इति 'प्रतिपादयन्नाह ' अल्पप्राण-महाप्राण

योरिति'। प्रमाणसादृश्ये अमुमायिति अकारस्य मात्रिकस्य मात्रिक उकारः। अमूभ्यामित्यत्र सुपिचेति दीर्घत्वे कृते द्विमात्रिकस्य द्विमात्रिक ऊकारः। पूर्व्वस्मादेव स्थानग्रहणानुवृत्तौ पुनः स्थानग्रहणं किमर्थमित्याह 'स्थानमित्यादि'। इकार स्तालव्य, एकारश्च कण्ठतालव्यः, उकार ओष्ठ्यः, ओकारश्च कण्ठोष्ठ्य., इति स्थानसाम्या न्मात्रिकमपि अकार मपास्य एकार-ओकारौ क्रियेते। 'वह्वित्यादि'। उपाणः प्रयत्ना इति। तेन सोष्मणा हकारस्य झयो होऽन्यतरस्या मिति (८।४।६२) पूर्व्वसवर्णे वर्ग-द्वितीय-चतुर्थाः सोष्माण इति वर्गद्वितीय-चतुर्थौ प्राप्नुतः। घोषवन्तोऽन्य इति हकारस्य घोषवतो वर्ग-तृतीयोऽपि घोषवान् प्राप्त, इति द्वितीय-तृतीय-चतुर्थेषु सम्भवत्सु चतुर्थ एव भवति। सोष्मत्वघोषवत्त्वरुपद्वयसत्वात्। द्वितीयो ह्यघोष स्तृतीयश्च न सोष्मेति।

## उरण्रपरः ॥ ५१ ॥

ऋवर्णस्य स्थानेऽण् रपरो भूत्वा प्रसज्जति। कर्त्ता, किरति, द्वैमातुरः, खट्वर्घ्यः, तवल्कारः।

'उ'। इयमपि परिभाषैव। तेषु तेषु विधिसूत्रेषूपस्थाय तत्तद्विधिसूत्रेण विहितस्याणो रपरत्वं करोति। स्थानग्रहणानुवृत्त्या उरिति स्थानषष्ठी। 'रपरो भूत्वा प्रसज्जतीति'

" कार्य्यकाले संज्ञा-परिभाषे " इति न्यायाद्वितीयमाभीऽण् परिभाषया अनया प्रथमं रपरो भवति, अनन्तर मादेशो भवतीत्यर्थः । नचैवं सर्व्वादेश-प्रसङ्गः । तरति (४ । ४ । ५) निगरण (१ । ३ । ८३) किरता (६ । १ । १४०) विति निर्द्देशेभ्यः । कर्त्तेति गुणः, किरतीति ऋत इद्धातो (७ । १ । १००) रितीत्, द्वैमातुर इति द्वयो र्म्मात्रो रपत्यं, मातुरुत् संख्ये (४ । १ । ११५) त्यण् ऋकार उकार आदिवृद्धिः । खट्वर्श्य इति आद्गुणः (६ । १ । ८७) योऽयमुभयस्थाने निष्पद्यते लभते असावन्यतरव्यपदेश मिति । पूर्व्वपरयो राकार-ऋकारयो राद्गुणो (६ । १ । ८७) भवन्नपि ऋकारसम्बन्धितया व्यवह्रियते यथा शक्येत विधि' कर्त्तुमिति । अतएव इतरर्त्ते पर्व्वर्धा (२ । ४ । ११) इत्यादि निर्द्देशाः । ऋकार-लृकारयोः सावर्ण्यं रपर (१ । १ । ५१) इति हयवरट् इत्येतत्सूत्रस्थरशब्देन लण्णित्यत्रस्थ-णकारेणव सह र इति प्रत्याहारोऽत्र गृहीत इत्युदाहरति ' तवल्कार ' इति । अण् किम् ? सुधातुरकङ् च (४ । १ ८७) सौधातकिः । अणिति पूर्व्वेण णकारेण च प्रत्याहार ग्रहणमिति उवर्त्तत: (७ । ४ । ७) अवीवृतत् अमीमृजत् इत्यादौ न रपरत्वम् । मसज्जति इति सद्य सञ्जंश सञ्जेति (६ । ४ । २५) न लोपः ।

अलोऽन्त्यस्य ॥ ५२ ॥

आदेशोऽन्त्यस्यालः स्थाने स्यात्। इद्गोण्याः (१।२।५०) पञ्चगोणिः, इनस्तच (३।१।१०८) ब्रह्महत्या, राज्ञः कच राजकीयः, रुहः पः (७।३।४३) रोपयति।

'पञ्चो'। 'पञ्चगोणिरिति'। पञ्चभिः गोणीभिः क्रीत इत्यर्थे समासः (२।१।५१) क्रीतार्थे आर्हीयष्ठक् (५।१।३७) तस्य अध्यर्द्धेति (५।१।२८) लुक्। लुक्तद्धित लुकीति (१।२।४९) स्त्रीप्रत्ययस्य लुकि प्राप्ते इद्गोण्या (१।२।५०) इतीकारः।

ङिच्च ॥ ५३ ॥

ङिच्चादेशोऽन्त्यस्यालः स्थाने स्यात्। आनङृतो द्वन्द्वे (६।३।२५) माता पितरौ। अनङ् (७।१।९३) सखा। तातङो ङित्त्वसामर्थ्या न्नाय सन्वविधिः स्मृतः। कुरुतात्।

'ङिच'। चकारेण ङिदेव समुच्चीयते। ङिदेव यो ङित् यस्य ङकारस्यान्यत् प्रयोजनं नास्ति सोऽन्त्यस्य भवति।

तुद्योस् मातङ्गो (७ । १ । ३५) गुणवृद्ध्यभावादिकमपि फलमिति । सोऽनेकाल्त्वात् सर्व्वादेश एव, चितुतात् मृष्टादिति ।

## आदेः परस्य ॥ ५४ ॥

परस्य कार्य्य मुच्यमान मादेरलः स्थाने प्रत्येतव्यं, यत्र पञ्चमीनिर्द्देशः । ईदासः (७ । २ । ८३) आसीनः । अलोऽन्त्यस्य (१ । १ । ५२) पवादत्वात् अनेकाल् शि (१ । १ । ५५) दित्यनेन बाध्यते अतोभिस ऐसिति (७ । १ । ९) सर्वैः ।

'आदेः' । परस्येति सम्बन्धि-शब्दत्वादाह 'यत्र पञ्चमीनिर्द्देश' इति । ईदिति तकारो मुखसुखार्थ इति नानेकाल्त्वं अनेकाल्शिदिति (१ । १ । ५५) शिद्ग्रहणात्, तानुबन्धकृत मनेकाल्त्वम् । णलस्तु इत्संज्ञानन्तरं हि णकारस्यानुबन्धता इत् संज्ञा च । चुटू (१ । ३ । ७) इति प्रत्ययादित्वे । अतो विधानकालेऽनेकाल्त्वमेव सम्पन्नमिति युक्तैव सर्व्वादेशता । यद्येवं शिदित्यनर्थकं, शि-शीप्रभृतौ लशक्क तद्धिते (१ । ३ । ८) इति इत्संज्ञा । सा च प्रत्ययादित्वे । अतो विधानकालेऽनेकाल्त्वात् सर्व्वादेश एव स्यात् । सत्यम् । अतएव भाषावृत्तौ एश् उदाहरिष्यते । तत्रहि हलन्त्यमिति (१ । ३ । ३) शकारस्येत् संज्ञा । नानुबन्धकृतमनेकाल्त्व मित्यस्य ज्ञापकमेव ।

अनेकाल् शित् सर्व्वस्य ॥ ५५ ॥

अनेकालादेशः शिच्च सर्व्वस्यैव स्यात् । अस्तेर्भूः (२ । ४ । ५२) भविता, लिटस्तझयोरेशिरेच् (३ । ४ । ८१) पेचे । उक्ताः षष्ठीनिर्द्देशाः ।

'अनेक'। एकस्मादन्योऽनेकः । द्वौ च बहवश्चेति । इरेच्-स्थादिवद्रूपि सर्व्वादेश एव ।

स्थानिवदादेशो ऽनल्विधौ ॥ ५६ ॥

आदेशाः स्थानिवद्भवन्ति । ब्रूञ् वक्तव्यं वक्ता । धातोरिति तव्यदादयः । आवधिष्ट आहन्तः आङो यमहन (१ । ३ । २८) इत्यात्मनेपदम् । अनल्-विधौ किम् ? वर्णविधौ माभूत् । द्यौः, पन्थाः, सः । हल् (६ । १ । ६८) इति न सुलोपः ।

आङ्गिभुवोरीटि प्रतिषेधो वक्तव्यः ॥ * ॥

आस्थ, अभूत् । ब्रुव ईट् (७ । ३ । ९२) अस्ति सिचोऽपृक्ते (७ । ३ । ९६) इतिचमाभूत् ।

'स्थानि'। स्थानमस्यास्तीति स्थानी पूर्व्वस्थितः । तदा-

स्थं कार्य्यं मादेशेषु न प्राप्नोतीति तद्विधानार्थं मतिदेशसूत्र-मिदम्। स्थानिना तुल्य वर्त्तत इति स्थानिवत्। कया क्रियया तुल्यमित्याह 'भवन्तीति'। स्थानि यथा कार्य्याणां निमित्तं भवति तथा आदेशोऽपि भवतीति भावः। "यत्रान्यत् क्रिया-पदं नास्ति तत्रास्ति र्भवन्तिपरः प्रयुज्यते" इति न्यायात्। तथाच अध्याहृत-क्रियया तुल्यत्वे पिबति रित्यत्र स्थानिवदि-त्येव ज्ञापकम्। तथाच पुनः पितृवद् गोमानित्यपि भवति।

"तत्पक्ष्यस्य शेषाहिः सखिवद्दक्षुवानलः।
महासाहसिना माघं तमीड़े जलशायिनम्॥"

इति रुद्रः। स्थानी भवतीत्येतावतापि सिध्यति। स्थानि-विधानसामर्थ्यात् अन्यथा तत् कार्य्यकारित्वमेव आयास्यति। किं वतिना? नच स्थानिसंज्ञायां विशेष-विहित मेव स्यात् इति शङ्क्यं व्याप्तेर्न्यायात्। सत्यं वत्करणादादेशस्य स्थान्य-यमपि कार्य्यं भवति तेनावरिष्टेत्यत्रानेकाच्त्वा देकाच (७। २।२०) इत्यादिना नेट्प्रतिषेधः। नच पक्षे अकारकरणस्य सामर्थ्यादिट् स्यादिति वाच्यम्। अवधीदित्यत्रालोपस्य (६। ४।४८) स्थानिवत्त्वादतो हलादेरिति (७।२।७) हलन्तस्य अहिम्माभूदित्येव मर्थत्वात्तस्य। अभूदिति आर्द्धधातुके विषयभूते अनुपपन्न एव मुवोवधि (२।४।५२) हतो धातुत्वात्तव्यदादय उक्ताः। 'आहन्ते रात्मनेपदमिति'। यद्यपि आत्मनेपदे-ष्वन्यतरस्यां (२।४।४४) इत्यात्मनेपदेष्वेव वधादेशो विधीयते

तथाप्यार्द्धधातुक इति विषयसप्तम्यन्तस्य प्रकरणात् आत्मनेपदेष्विति च विषयसप्तम्येव स्यादितीदमुक्तम्। ननु युष्मदस्मदोरनादेशे (७।२।८६) इत्यनादेश-ग्रहणाज् ज्ञापकात् स्थानिकार्य्यस्य भ्रादेशे सिद्धौ किमनेन सूत्रेण ? नैवम्। यदि तत्र अनादेश-ग्रहणं न स्यात् तदा युष्मद्गच्छति इत्यत्र नित्यत्वात् परत्वाच्च प्रथममात्वं स्यात्। तत्र आदेश इत्यनिष्टं स्यात्। शब्दान्तरस्य हि प्राप्नुवन् विधिरनित्य एव। अनादेश-ग्रहणेतु तत् सामर्थ्यां न भवति। 'वर्णविधौ माभूदिति' स्थान्यल्माश्रित्य यो विधिः प्राप्नोति स न भवतीत्याह 'अल्' इत्यादि। आदेशा लाश्रयविधावित्यादि इतितु न वाच्यम्। द्यौ रित्यादौ सुलोपप्राप्तेः। सोऽचि लोप (६। १। १३४) इति च तदा न प्रयुज्येत त्यपो लकारस्येत्संज्ञार्थम्। स्थानिवत्त्वेन प्रत्ययत्वाच्च; अतएव मयूरव्यंसकादी (२।१।७२) प्रोष्यपापीयानिति कष्टायेति च आदेशमाश्रयं हलिच (८। २। ७७) इति दीर्घत्वं न स्यात्। तस्मात् स्थान्यलाश्रयविधाविति सिद्धम्। ननु च अदोजग्धि (२। ४। ३६) रित्यत्र ल्यप्ग्रहणं ज्ञापकं भविष्यति। यदि अल्विधावपि स्थानिवत्त्वं स्यात्। किं ल्यपा तिकितीति सिद्धेः। तस्मात्तत एव सिद्धौ किं अनल्विधिग्रहणेन ? नैवम्। स्थितेऽपि प्रतिदीव्य इत्यत्र इड्भावार्थं ल्यब्ग्रहणं ज्ञापकम्। "अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते" इति अन्यथा पूर्व्वमेव आवश्यार्था जग्धिः

स्यात्। नच इट् सहितस्यैव क्त्वो ल्यबादेशः (७। १। ३७) स्यात्। निर्दिश्यमान-परिभाषाबलात् न क्त्वा सेड़िति (१। २। १८) कित्वनिषेधे पूर्व्वासिद्धत्वाद्दीर्घे निरस्ते गुण-प्राप्तेश्च। क्वतेतु ल्यबादेशे वलादित्वम् (७। २। ३५)। अलमाश्रित्य इड्-विधि रिति न स्थानिवत्त्वम्। "सानुबन्धकत्वेन इड्विधि र्नाल्विधि रिति" अग्रहीदित्यत्र ग्रहोऽलिटि दीर्घस्य (७। २। ३७) स्थानिवत्त्वादिट्त्वमिति इट ईटीति (८। २। २८) सिचोलोपः, अतएव अह ईड्लिटीति नोक्तमिति न्यासः। स्थानिसम्बन्धादेव प्रतीता आदेशवचनं साक्षात्-सम्बन्धि-प्रतिपत्त्यर्थं, तदुच्यते "शाब्दीह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते" इति इटि प्रतिषेध इति। ईटि विषये स्थानिवद्भावस्य प्रतिषेध इति। बूहारा अस्तिदारा च ईस्भवति।

### अचः परस्मिन् पूर्व्वविधौ ॥ ५७ ॥

अल्विध्यर्थीय मारम्भः नियमार्थो वा। अजादेशः परनिमित्तकः पूर्व्वस्मिन् विधौ कर्त्तव्ये स्थानिवद्भवति। पटयति, लघयति। अवधीत्, टिलोप (६। ४। १५५ वां) स्तागो लोपश्च (६। ४। ४८) च स्थानिवत्त्वान्नवृद्धिः।

'अचः'। अचोऽन्त्यादि टि (१।१।६४) इति टि संज्ञा क्रियते। यत्र च आदिपदार्थः सम्भवति तत्रातामाथा मित्यादौ टित्वमबाधित मेव। यत्र तु अचः परभागो नास्ति तत्र एकस्यैव तस्य व्यपदेशिवद्भावेन टित्वं क्रियत इति एके, व्यपदेशिवत्त्वेन अनजादेरपि अजादिसमूहत्व प्रकल्प्य टित्वं क्रियत इत्यन्ये। एव मङ्गाधिकारेऽपि विशेषण–विशेष्य-भावस्य कामचारात् अतो लोप (६।४।४८) इत्यत्राङ्गावयवस्यातोऽन्त्यस्य लोपो भवति अकारान्तस्याङ्गस्य लोप उच्यमानोऽन्त्योऽन्त्यस्य भवन् अकारस्य भवतीति वा। तत्राद्ये शुद्धस्य वर्णस्य टेरिति लोपेऽङ्गावयवस्य अतो लोपेच अल्विधित्व मिति पूर्व्वेण न प्राप्नोतीत्याह 'अल्विध्यर्थोऽयमारम्भः'। अल्त्वेतु व्यपदेशेन समुदायस्य टेर्लोपे अदन्तस्याङ्गस्य लोपेच अनल्विधित्वमेव किमनेनेत्याह 'नियमार्थो वेति'। सावधारणत्वात् सकलवाक्याना मच एवादेश इति व्याख्यानात् हलचोरादेशे न स्थानिवदिति विंशमित्यत्र तिलोपेऽपि पररूपत्वम्। परस्मिन्निति निमित्त-सप्तमीत्याह 'परनिमित्तक' इति। परो निमित्तं यस्य स तथा तेन युवजानि रित्यत्र जायाया निङ् (५।४।१३४) इति अपर निमित्तको निङ् यलोपे कर्त्तव्ये स्थानिवन्नभवति। हलस्यादेशः परनिमित्तकोऽपि न स्थानिवत् तेन आगत्येति वा ल्यपीति (६।४।३८) अनुनासिकलोपः तुकि न स्थानिवत्। अजादेशोऽपि पूर्व्वस्य विधावेव स्थानिवत्

तेन वैधेय इत्यत्र वि-पूर्व्वस्य धा-धातोः सुलक्षण-कि-प्रत्यये आतोलोप इटि चे (६ । ४ । ६४) त्याकार-लोपः। इतश्चानिञ (४ । १ । १२२) इति ढग्लक्षणे टकि प्रत्ययविधौ न स्थानिवत्। पटयतीति पटुं करोतीति णिचि इष्टवद्भावेन टिलोपे स्थानिवद्भावादत उपधाया (७ । २ । ११) इति न वृद्धिः। प्रातिपदिकादेव णिजिति पक्षे सुबन्तात् णिजिति पक्षेऽपि नपदान्तेति (१ । १ । ५८) निषेधस्य न विषयो वृद्धे रपदान्तविधित्वात्। क्विलुगुपधात्वेत्यादि रिति वक्ष्यमाणेन मतविशेषेण उपधात्वे स्थानिवत्त्वं नेति च न निषेध.। तस्य लुक्साहचर्य्येण प्रत्ययविधिविषयत्वात्। तथाच स्तुहि-स्तडीति (३ । २ । १५८) निर्द्देशो णिचि लघूपध-गुणो (७ । ३ । ८६) न भवति। कथीति न चात उपधाया (७ । २ । ११६) वृद्धिः पूर्व्वस्य इत्युक्तेऽपि विधाविति लभ्यते। किं विधि ग्रहणेन ? उच्यते, पूर्व्वस्मात् विधिः पूर्व्वविधिरिति पञ्चमी-समासस्यापि परिग्रहो यथास्यात्। तेन मथितं पण्यमस्य माथितिक इत्य त्राकार-लोपस्य स्थानिवत्त्वात् इसुसुक्तान्तात् कः (७ । ३ । ५१) इति इकारादेशस्य स्थानिवद्भावेन ठस्य कादेशो (७ । ३ । ५०) न भवतीति सुस्थमिदम्। ठस्य वर्णमात्रस्य ग्रहणादनल्विधा विति निषेधे कुत इकस्य कादेशप्रसङ्गः ? तर्हि वेभिदितेत्यत्र यङोऽकारलोपस्य स्थानिवत्त्वादेकाच (७ । २ । १०) इति इट् प्रतिषेधो न भवतीति। नैवम्। एकाच इति विहित-विशेषण

पद्याध्ययनेनैव सिद्धेः। तस्मादयुक्त एवैष पूर्व्वस्माद्विधिरिति पक्षः। अन्यथा वैधेय इत्यत्र द्व्यचः प्रातिपदिकात् प्रत्ययविधिरिति स्थानिवत्त्वे इग्लक्षणः प्रत्ययो न स्यात्। तथाहि गौरित्यत्र सत्यामपि वृद्धौ एङ् ह्रस्वात् सम्बुद्धे रिति (६।१।६८) सुलोपे कर्त्तव्ये स्थानिवत्त्वं स्यात्। ननु पयो॑ऽठ-मित्यत्र पूर्व्वस्माद्विधिरिति मते णिलोपस्य स्थानिवत्त्वा दभ्यस्तादिति (३।४।१०८) झेर्जुस् न भवतीति स्थितम्। तस्य समासस्यापरिग्रहे च कथं सिजभ्यस्तेति (३।४। १०९) न जुस्। भ्रान्तोऽसि। असत्यपि णिलोपस्य स्थानिवत्त्व चङोऽकारेण व्यवधानात् यद्येवं पूर्व्वस्येत्यस्तु किं विधिग्रहणेन? सत्यम्। विधिग्रहण मधिकविधानार्थम्। यत्र पूर्व्वस्य यथाकथञ्चि द्विधि स्तत्रापि स्थानिवदिति तच्चास्तीत्यत्र स्थानिवद्भावा दिड्-विधि र्न भवति। अत्रापि आयन्तौ टित् कितावि॒ति (१। १। ४६) इटौ विधेयं पूर्व्वम्। अथ वैयाकरणः सौवश्व इत्यादौ यणः स्थानिवत्त्वे अपि आयावादेशौ कथं न भवत इति चेत्, न। वैयाकरणाख्यायां (६।३।७) हैप वैयाघ्रादिनि ४।२। १२) च सामान्यनिर्द्देशात् तत् सिद्धम्। "असिद्धं बहिरङ्ग" इति अन्तरङ्गे आयादौ कर्त्तव्ये बहिरङ्गत्वा दैजेवासिद्ध इति वा। नन्वत्र यकार-वकारयोः कृतयोरेव ऐच् प्राप्तिः। तथाच आदिष्टादचः पूर्व्वत्वा च स्थानिवदिति कथं नोच्यते? उक्तं हि भाष्ये "योह्यनादिष्टादचः पूर्व्वस्तस्य विधिं

प्रति स्थानिवदिति"। सत्यम्। नहि तत् सूत्रकारीयम्। न पदान्तेत्यत्र (१।१।५८) परसवर्णग्रहणात् शिण्ढीत्यत्र अनुस्वारस्य ययिपरसवर्णो (८।४।५८) लोपाजादेशात् पर एव न पूर्व्व इति प्राप्तिरेव नास्ति। किं सवर्णविधौ निषेधेन? एवं सति अचीकरदित्यादौ परत्वादुपधा-ह्रस्वत्वे द्विर्व्वचनमिति सन्वत्वं न प्राप्नोति। उपधा-ह्रस्वत्वस्य स्थानिवत्वे अलघुपरत्वात्। सत्यम्। अत् स्मृदृत्वरे (७।४।९५) इत्यकारविधानात् सन्वत्वे स्थानिवत्त्वम्। नेति। तत्र व्याख्यानात्, प्रपञ्चस्त्वन्यत्र। अवधीदिति हन्तेलुङि चेति (२।४।४३) अदन्तो वधादेशः। वधसम्बन्धिनोऽकारस्यार्द्धधातुक इति परसप्तम्या अतो लोपे तस्य स्थानिवत्वेन अतो हलादेर्लघो रिति (७।२।७) न वृद्धि स्तत्र हलन्तस्येत्यनुवृत्तेः अनेकवर्णव्यवधानाद्वा। हरिवर्म्मा तु पूर्व्वसूत्रे विधिग्रहणादलाश्रयो विधि रल्विधि रित्युत्तरपदलोपिसमासाश्रयणा दलाश्रय एव विधौ प्रतिषेधः। पटयतीत्यत्र च अलभावाश्रयात्रास्ति रस्तः पूर्व्वेण नाप्राप्तिः। अर्थाभावकृतं दुर्भिक्षं वर्षाकृतं सुभिक्षं। तद्वदलभावाश्रय-विधि रल्विधि रिति मते विधि रित्युक्तवान्।

न पदान्तद्विर्व्वचनवरेयलोप-स्वर-सवर्णानुस्वार-दीर्घ-जश्-चर्व्विधिषु ॥ ५८ ॥

एषु विधिष्वजादेशः स्थानिव न भवति । पदान्ते कौस्तः आवादेशः स्यात् । द्विर्वचने दृष्टान्त अनचि चेति (८ । ४ । ४७) द्विर्वचनं न स्यात् । वरच्यतो लोपि याथावरः यातो लोप इटि चेति (६ । ४ । ६४) स्यात् । सवर्णविधो असोरल्लोपः (६ । ४ । १११) । शिण्ढि पिण्ढि अनुस्वारस्य ययि परसवर्णो (८ । ४ । ५८) न स्यात् । अनुस्वारे शिंषन्ति पिषन्ति न सापदान्तस्य झलि (८ । ३ । २४) इत्यनुस्वारो न स्यात् । जश्‌विधौ अभ्यस्तस्याकारलोपः यक्ष्णे यक्षं जश्त्वं न स्यात् । चर्विधौ गमहनेत्युपधालोपः (६ । ४ । ९८) जक्षतुः जक्षुः खरि चेति (८ । ४ । ५५) चर्त्वं न स्यात् । अतः स्थानिवत्त्वं निषिध्यते । स्वर-दीर्घ-यलोपेषु लोपाजादेशो न स्थानिवत् । तत्रेह स्वरो नोदाह्रियते । दीर्घविधौ अल्लोपोऽनः (६ । ४ । १३४) प्रतिदीव्ना हलि चेति (८ । २ । ७७) दीर्घो न स्यात् । यलोपे क्ङिच्यतो लोपः (६ । ४ । ४८) कण्डूतिः वलि (६ । १ । ६६) यल्लोपो नस्यात् । लोपः किम् ?

वायोः यणादेशः स्थानिवदेव ततो वलि (६ । १ । ६६) लोपो न भवति । क्विलुगुपधात्व चङ् परणि (७ । ४ । १) ह्रस्व-षत्व-कुत्वेषु न स्थानिवत् । लावयतेः क्विप् लौः क्वौ लुप्तं न स्थानिवदिति णिलोपस्य स्थानिवत्त्वनिषेधादूठ् । लुकि आमलक फलं नित्यं वृद्धशरादिभ्यश्चेति (४ । ३ । १४४) मयट्, फले लुकि (४ । ३ । १६३) लुक्, तद्धितलुकीति (१ । २ । ४९) स्त्री प्रत्यय-निवृत्तौ तस्य स्थानिवत्त्व-निषेधात् यस्येति चेति (६ । ४ । १४८) लोपो न भवति । उपधात्वे पारिखीयं चातुरर्थिकाणन्तादाखेति चेति (६ । ४ । १४८) लोपस्य स्थानिवत्त्वात् खोपधाच्छः (४ । २ । १४१)। चङ्परे णिज् ह्रस्वे (७ । ४ । १) अवीवदद्वीणां परिवादकेन । प्रथमस्य णिचोऽस्थानिवत्त्वात् णौ चङीति (७ । ४ । १) ह्रस्वः । (एवं) पापच्यतेः पापक्तिः । पाचयतेः पाक्तिः । यायज्यते यायष्टिः । याजयते याष्टिः । अल्लोप-णिलोपयोः स्थानिवत्त्व-निषेधात् झलीति कुत्व- (८ । २ । ३०) षत्वे (८ । २ । ३६) भवतः ।

'न'। पदेऽन्तः पदान्त इति सप्तमीसमासः। तेन वेतस-, शब्दात् ड्मतुपि डिति टिलोपे भकार-लोपस्य स्थानिवत्त्वात् सत्वं न भवति। न ह्ययं पदेऽन्तो ड्मतुपोऽपदत्वात् तद्विधौ स्थानिवदेव। कौस्त इत्यत्र तु स्त इति पदे कावित्यस्यान्तस्य विधिरिति न स्थानिवत्। स्त इति अस्तेस्तम्। सार्व्वधातुकमपित् ङित् (१।२।४) ङित्वे श्नसोरल्लोपः (६।४।१११) स्थानिवन्न भवति। पदसंस्कारप्रयुक्तत्वा इत्याकरणस्य स्त इत्यादिकं पदान्तरनिरपेक्षमेव संस्क्रियते। तत्रयानादिष्टादच इति न सम्भवतीति न वाच्यम्। युष्मद्युपपदे (१। ४। १०५) इति प्रथयनाद्वाक्य-संस्कार प्रयुक्तमप्यस्ति। द्विर्व्वचनं नयादिति अनचिचेत्य (८। ४। ४७) नेन। वरे इति सप्तम्यन्तं सौत्रत्वादलुक्। केचित्तु ईकार-प्रश्लेषेण ईविधिं प्रति न स्थानिवत्। तथा॰ आमलक्या फल आमलकं इत्यत्र ङीपो स्थानिवत्त्वात् यस्येति चेति (६।४-।१४८) लोपो न भवति। पटयतीतिवत् यद्बाधकं पौर्व्वापर्य्य मित्याहुः। यायावर इति यातेः यङन्ताद् यश्च यङ इति (३।२।१७६) वरचि कृते अत्र अतोलोप (६।४।४८) इति अल्लोपे स्थानिवत्। आतो लोपः (६।४।६४) स्यादिति अवश्च टोडी युडविकङिङतोऽयतो (६।४।६३) इत्योत्यनुवर्त्तते। अतोऽकारे अवयवेऽपि कङिति आतो लोपः स्यात्। ननु सामान्यातिदेशे विशेषातिदेशा दार्द्धधातुकत्वं अजादित्वं विशेषो कथ मनये स्याताम्?

उच्यते, इदमेव वरे-पदं ज्ञापकं, क्वचिद्विशेषोऽप्यतिदिश्यत इति, तेन आवधिष्टेत्यत्र आङ् हन् सम्बन्धादात्मनेपदं स्यादेव । समुदाय कार्य्यं मवयवे चेति मतोऽङ्गत्वमस्त्येव । नेड्वशि कृती (७ । २ । ८) तीट् निषेधः । 'स्वरदीर्घेति' वक्ष्यमाणत्वाच्चलोप-मुल्लङ्घ्याह 'सवर्णविधाविति' । 'शिण्ढीत्यादि' शिष्लृ विस-रणे, पिष्लृ संचूर्णने, लोट् मिप् तस्य हि । श्नम् हुझल्भ्यो हेर्धिः (६ । ४ । १०१) ष्टुत्वं (८ । ४ । ४१) झलां जश् झशीति (८ । ४ । ५३) षकारस्य डकार । श्नसोरल्लोपः (६ । ४ । १११) नश्चे (८ । ३ । २४) त्यनुस्वारः, अत्रापि न स्थानिवत्त्वं अनु-स्वारग्रहणात्, स्थानिवत्त्वनिषेधात् परसवर्णो णकारः । न चादि-ष्टादच' पूर्व्वत्वमिति वाच्यम् * ? स्थानि मकारस्थानादिष्टाजपेक्ष पूर्व्वत्वस्य स्थानिवद्भावेनाश्रयणात् । परसवर्णं निर्मुक्त मनुस्वार विधि माह 'शिंषन्तीति' । अन्यथा नान्तरीयकत्वात् † पर-सवर्ण-विधौ स्थानिवद्भावे प्रतिषिद्धे अनुस्वार-विधावपि सम्भा-व्येत । दीर्घो वक्ष्यते इति जश्विधिमाह । श्नाभ्यस्तयो रात इति (६ । ४ । ११२) आकारलोप. । 'धद्ध' इति । धाञो लट् शपः श्लु. द्वित्वं झषस्तथोर्धोऽधः (८ । २ । ४०) अभ्यासस्य धत्वं जश्त्वमिति प्रकृति-धकारस्य झलां जश् झशीति

---

* मकारस्य स्थाने इति टिप्पणी ।

† अविनाभावित्वात् इत्यर्थः ।

(८।४।५३)। 'जक्षतुरिति'। अदे लिंघन्यतरस्यामिति (२।४।४०) घस्लृ-उपधालोपः तस्य स्थानिवत्त्वनिषेधात् धकारस्य चर्त्वंककारः शासिवसीति (८।३।६०) षत्वं स्थानिवद्भावाद्वसो द्विर्वचनम्। अन्यः स्थानिवद्भावो निषिध्यत इति सर्व्वत्र वाक्यशेषः। 'प्रतिदीव्नेति'। गुहविभ्यीत्यादिना (उः १६१। दिवेरौणादिकः कनिन् तनस्तृतीयैकवचनं तत्र भत्वे अल्लोपोऽन (६।४।१३४) इत्यकारलोपस्य स्थानिवत्त्वे दीर्घो न स्यात्। अतः स्थानिवत्त्वाभावे हलि चेति (८।२।७७) दीर्घः स्यादेव। नचात्र न भकुर्छुरा मिति (८।२।७९) निषेधे स्थानित्व-निषेध-सामर्थ्यं दीर्घत्वमिति वाच्यम्। स्थानिवद्भावनिषेधस्य पिपठोरित्यत्र सत्वात् क्विपि अतो लोपे सत्वे चास्थानिवत्त्वा द्रेफान्तस्य दीर्घत्वेन अर्थवत्वात् तत्र चाँरित्युदाहृतेः रेफवकारान्तस्य भस्य तद्दीर्घत्वं प्रतिषिध्यते। 'काण्डूतिरिति, कण्ड्वादिभ्यो यक् (३।१।२७) ततः क्तिच् क्तौ च संज्ञायामिति (३।३।१७४) क्तिचि योऽतोऽकारलोप स्तस्य स्थानिवत्त्वनिषेधाल्लोपो व्योरिति (६।१।६६) यलोपः। ननु लोलुव इत्यादावपि अल्लोपस्य (६।४।११४) स्थानिवद्भावादेव गुणवृद्धी न भविष्यत इति किं न धातुलोप (१।१।४) इति सूत्रेण? नैवम्। तत्र हि यङोऽचिचेति (२।४।७४) विशेष विधानात् लुका अतोलोपो बाध्यते इति तत्वबोधम्। "सर्व्वविधिभ्यो लुग्विधि र्व्वलवानिति"। 'यायावर' इत्यनेनैवा-

वगतेः कण्डूति रिति प्रपञ्चार्थोदाहरणान्तरम्। लोपः क्वि-
मिति ? लोपाजादेश इत्यत्रस्थः क्विलुगित्यादि वार्त्तिकं यद्यपि
महावृत्तौ नास्ति तथापि मपर्य्यन्तस्ये (७। २। ८१) त्यत्र
वामनवृत्तौ स्वीकृतं इति व्याचष्टे क्विप लुक्चेत्यादिकं वाक्यम्।
एतच्च योगविभागादेव धार्य्यम्। यत्प्रणाल्याकारेणोक्तं वैलौ-
कारप्रश्लेषं नेच्छन्ति परे इत्यत्र, ते आमलक्याः फलं विकारः
आमलक मित्येतदर्थं योगविभागं कुर्व्वन्तीति। तदुपलक्षणं
'क्वौ लुप्त मिति'। अत्र द्वैतम्। यत् क्वौ लुप्तं तत् क्वि-
निबन्धकार्य्ये कर्त्तव्ये न स्थानिवत्। पिब येरमिटीत्यमेन (६।
४। ५१) क्वावेव लुप्त.। क्विनिबन्धे जठि कर्त्तव्ये न स्थानि-
वदिति जठि लोरिति एत्ये त्यूठ् खिति (६। १। ८८) वृद्धिः।
यदन्यत्र लुप्तं तदपि क्वि-निबन्धकार्य्ये कर्त्तव्ये न स्थानिवदिति।
देवमाचष्टे इति णिचि टिलोपेऽपि क्वावूठ् स्यादेव। दयूरिति
धातुवृत्तौ, द्वयमेवैतत् सम्भवति। तथाप्याद्यं पक्षमाश्रित्य द्वितीयः
पक्षो न व्याख्यात इत्यसर्व्वसम्मतत्वमस्य। लुकोत्यादि पूर्व्वं
आमलक्या विकारः फलमिति नित्यं वृद्धेति मयट् (४। ३।
१४४) तस्य फले लुगिति (४। ३। १६३) लुकि यस्येति चेति
(६। ४। १४८) लोपो न भवतीति। यद्यपि स्त्री-प्रत्यये परे
यः पूर्व्वं स लुप्त आसीत् तथापि "निमित्तापाये नैमित्ति-
कस्याप्यपाय" इति वचना कौरव्यादिङोपो (४। १। ४७) निवृत्तौ
लोपोऽपि मर्व्वलित इत्येवोर्जितोऽकारः। पयश्च उपजात-

निमित्तो प्युत्सर्ग 'उपजनिष्यमाण-निमित्तेनापवादेन बाध्यत इति। यत्र तद्धितलुकि स्त्रीप्रत्ययस्य लुकः सम्भावना तत्र पूर्व्वमपि यस्येतिचेति (६।४।१४८) लोपो न भवतीति उक्त-मन्यत्र। खोपधाच्छ (४।२।१४१) इति शैषिकः परिखायां अदूरभवः पारिखः अदूरभव चेत्यण् (४।२।७०) परिखा शब्दस्याकारलोपः। परिखस्येदं वृद्धादकेकान्तखोपधादिति (४। २। १४१) पारिखशब्दाच्छ इष्यते। स न प्राप्नोति खका-रस्यालोऽन्त्यात् पूर्व्व (१।१।६५) इत्युपधासंज्ञायां तदाकार लोपस्य स्थानिवत्त्वे न स्यादिति उपधात्वे स्थानिवत्त्वं नेति। चङ्परे णौ ह्रस्वो (७।४।१) ह्रस्वस्य विधानम्। तत्र वादि-तवन्त प्रयोजितवान् इति हेतुमन्ण्यन्तान्णिचि अवीवददिति रूपम्। 'पापक्तिरिति' पचे यङन्तात् क्तिच् क्तिचावादिभ्य (३।२।८४ वा) इति वा। एवं पाक्ति-याष्टी इति यजन्तात् कुत्वं चोः कुरिति (८। २। ३०) षत्वं व्रश्चभ्रस्जेति (८। २। ३६) तयो र्झलो झलीत्यतो (८।२।२६) झलीत्यनुवृत्तेः। अत्रापि सूत्रे विधिशब्दो भावसाधनः कर्मसाधनश्च तन्त्रेणानु-वृत्त्या उपात्तः तेन यथागमतया सुदेश्यावसरः।

## द्विर्वचनेऽचि ॥ ५९ ॥

द्विर्वचननिमित्तेऽचि अजादेशः स्थानिरूपेण भवति। क्वचिद्द्विर्वचन एव कर्त्तव्ये। कृते द्वि-

र्व्वचने पुनरादेश रूपं नटवद्गृह्णातीति। पपतुः पपुः, जग्मतुः जग्मुः। अतो लोपस्य (६।४।४८) गमहनेत्युपधालोपस्य च स्थानिवत्त्वादेकाचो द्विर्व्वचनं सिद्ध्यति। निनाय लुलाव, आयावोः स्थानिवत्त्वात् नेलौ शब्दौ द्विरुच्येते। अचि किम्? जेघ्रीयते, यङोत्वं न स्थानिवत्। उक्तः स्थानिवद्भावः।

'द्वि'। कार्यस्य प्राधान्यात् प्रकरणं कार्यातिदेशार्थम्। इदन्तु रूपातिदेशार्थं अज्ग्रहणात्। कार्यातिदेशेहि जेघ्रीयत इति ईत्व (७।४।३१) कृतेऽपि द्विर्व्वचनं भवेदेव, रूपातिदेशेहि घ्रा-रूपेण यथा न द्विर्व्वचनं स्यात् तदर्थमतोऽपि क्रियत इति। रूपातिदेशस्य ज्ञापकमिदमेव। द्विर्व्वचने कर्त्तव्ये सति अचि परतो योऽजादेशः स स्थानिरूपः स्यात्। एवञ्च दिवेः सनि दुद्यूषतीत्यत्र यणादेशस्य स्थानिवद्भावेन द्विर्व्वचने अभ्यासे उकार श्रवणं नस्यात्। * तस्मात् प्रत्यासत्त्या द्विर्व्वचननिमित्तेऽचि योऽजादेशः स स्थानिरूपेणावतिष्ठते इति व्याख्येयम्। एवमपि णौद इत्यादौ चरितार्थं आतो लपः पपतुरित्यादौ न स्यात्, द्विर्व्वचन निमित्तेऽचि प्राप्नुवन् अजादेशः स्थानिरूपेणावतिष्ठते इति व्याख्यानादतो जिघ्रासत्यत्र कथं?

| | | |
|---|---|---|
| Nyāyavartt ka (Text) Fasc 1 6 @ /10/ | Rs 3 | 2 |
| Nityacārapaddhati Fasc. 1 7 (Text) @ /1 / each | 4 | 6 |
| N tyacraapradiph Vol I Fasc. 1-8, Vo II Fas 1 3 @ / o/ | 6 | 14 |
| Nyayabindutika Fasc 1 | 0 | 10 |
| Nyaya Kusun añj... Prakarana Vol II, Fasc 1 3 @ /10/ each | 1 | 14 |
| Nyaya sarāh | 2 | 0 |
| Padumawa i Fasc 1-5 @ 2/ | 10 | 0 |
| Prak ta Paingalam Fasc 1 7 @ /1 / each | 4 | 6 |
| Prak ta Lakṣa am Fasc 1 @ 1/8/ | 1 | 8 |
| Paracara Smriti Vol I Fasc. 1 8 Vol II Fasc 1-6, Vol III Fasc. 1-6 @ /10/ each | 12 | 8 |
| Paracara Institutes of (English) @ 1/ | 1 | 0 |
| Prabandhacintamani (English) Fasc 1 3 @ 1/4/ each | 3 | 12 |
| Rasarnavam Fasc 1 3 | 3 | 12 |
| Sankhya Sutra V tti Fasc. 1 4 @ /10/ | 2 | 8 |
| Ditto (Eng ish) Fasc 1 3 @ 1/ each | 3 | 0 |
| Samaraicca Kaha Fasc. 1 3 @ /10/ | 1 | 14 |
| Shaddarsana San uccaya Fasc 1 2 @ /10/ | 1 | 4 |
| S x Buddhist Nyaya Tracts | 0 | 10 |
| Sraddha Kr ya Kaumud Fasc 1-6 | 3 | 12 |
| Sragdhara Stotra (Sanskr t a d Tibetan) | 2 | 0 |
| Sucruta Sa nh tá (Eng ) Fasc 1 @ 1/ | 1 | 0 |
| Suddhi Kaun udi Fasc 1 4 | 2 | 8 |
| Surdaranandan Kavyam | 1 | 0 |
| Suryya Siddhanta Fasc I | 1 | 4 |
| Syain ka Sastra | 1 | 0 |
| *Taittereya Samhita, Fasc 27 45 @ /10/ each | 11 | 14 |
| * Ditto Brahman Fasc 6 25 @ /10/ | 12 | 8 |
| Tandya Brahman (Text) Fasc 6 19 @ /10/ each | 6 | 14 |
| Tantra Vartika (Eng h) Fasc 1-6 @ 1/4/ | 7 | 8 |
| Tattva Cintamani Vol I Fasc 1 9 Vo II Fas 2 10 Vol III Fasc. 1 2 Vol IV, Fasc 1 Vol V Fasc 1 5 Part IV, Vol. II Fasc 1 12 @ / / each | 24 | 6 |
| Tattva Cintamani D ih ti Vivriti Fasc. I @ /1 / each | 0 | 10 |
| Ditto P akas Fasc. 1 3 @ /10/ each | 1 | 14 |
| Tattvarthādh gan a Sutrom Fasc 1 3 | 1 | 14 |
| Tirthac ntamoni Fasc I @ /10/ each | 0 | 10 |
| Trikanda Mandanom Fasc. 1 3 @ /10/ | 1 | 14 |
| Tul si Satsai Fasc. 1 5 @ /10/ | 3 | 2 |
| *Upam ta bhava prapañcha katha Fasc 1 2 5 13 @ /10/ each | 6 | 14 |
| Uvāsagadasao (Text and Engl sh) Fasc 1 6 @ 1/ | 6 | 0 |
| Vallala Car ta Fasc 1 | 0 | 10 |
| Varsa k yā Kaumud Fasc 1 6 @ /10/ | 3 | 12 |
| *Vayu Purana Vol I Fasc 3 5 Vol II Fasc 1 7 @ /10/ each | 6 | 14 |
| V lhāno Pangat Fasc 1 8 Vol II Fasc 1 @ / o/ Vol II 2 4 @ 1 4 | 9 | 6 |
| Vi adaratnākara, Fasc 1 7 @ /10/ each | 4 | 6 |
| V hat Sayambhu Purāna Fasc 1 6 | 3 | 12 |
| Yogasastra Fasc 1 3 | 3 | 12 |

*Tibetan Series.*

| | | |
|---|---|---|
| Bauddhasto rasangraha V 1 I | 2 | 0 |
| A Lower La lakhi vers on of Kesarsaga Fasc 1 4 @ 1/ each | 4 | 0 |
| Nyayabindu of Dharmak rt Fasc. I | 1 | 0 |
| Pag Sam Thi Śin Fasc. 1 4 @ 1/ each | 4 | 0 |
| Sher Phy n Vol I Fas 2 5 Vol. II Fasc. 1 3 Vol III Fasc 1 6 @ 1/ each | 14 | 0 |
| Rtogs brjod dpag hkhar Śi ( Tib & Sa s Abadan Kalpalata ) Vol I Fasc. 1 6 Vol II Fasc. 1 5 @ 1/ each | 16 | 0 |

*Arabic and Persian Series*

| | | |
|---|---|---|
| Al M quaddas (Engl sh) Vol I Fasc 1 3 @ 1/ | 4 | 0 |
| Āin i Akbari Fasc 1 22 @ 1/8/ each | 33 | 2 |
| Ditto (Eng sh) Vol I Fasc 1 7 Vol II Fasc 1 5 Vol III Fasc 1 5 Index to Vol II @ 2/ each | 36 | 0 |
| Akbarnamah with Index (Text) Fasc 1 37 @ 1/8/ | 55 | 8 |
| Ditto (English) I Fasc 1 8 II Fasc 1 7 III Fasc I @ 1/4/ | 20 | 0 |
| Arab c B bli g aphy by Dr A. Sp enger | 0 | 10 |
| Catalogue of Arab c B oks and Manuscripts 1 2 | 2 | 0 |

# मुग्धबोधं व्याकरणम् ।

मङ्गलाचरणम् ।

मुकुन्दं सच्चिदानन्दं प्रणिपत्य प्रणीयते ।
मुग्धबोधं व्याकरणं परोपकृतये मया ॥

ॐ नमो गणेशाय ।

* ब्रह्मादिदेवासुरवृन्दवन्दिते, पद्मालयेगार्चितसरोजराजिते ।
कन्दर्पदर्पान्तकपादनीरजे सन्तु प्रणामा वरदोद्भवव्रजे ॥
पञ्चानन चन्द्रकलाविशुद्ध नाद दधान प्रकृतिप्रयुक्तम ।
व्यस्त समस्त स्वरित सुसिद्ध चांष्टोदित त त्रिगुण नमामि ॥
दनुजकुल विपक्ष क्षुब्ध दुग्धाब्धि गर्भो
ल्लसदमृत समाना रेजिरे यस्य वाच ।
मुखर खल खरोक्ति ध्वान्त विध्वस भानो
स्त्रिभुवन वुध वक्त्र चैव पीयूषहृष्टे ॥

* ब्रह्मादि श्लोकव्याख्या अन्याश्च कतिपयटीकाटिप्पन्य परिशिष्टे द्रष्टव्या ।

तेन व्याकरणं कृतं कलियुगे दृष्ट्वा भवाब्धौ नरा-
नज्ञानावृतमानसान् करुणया श्रीमुग्धबोधं भुवि ।
पाणिन्यादिमतावलोकनपरः श्रीरामशर्म्मा,कृती
तस्यैतां सुधिया प्रमोदजननीं टीकां तनोति स्वयम् ॥
गुणवद्भिर्गुणो ज्ञेयो न दोषस्त्विह यत्नतः ।
सतां स्खलनजो दोषः परिष्कार्य्यः सतां पुनः ॥
परेऽत्र पाणिनीयज्ञाः केचित् कालापकोविदाः ।
एके विद्यानिवासाः स्युरन्ये साचिप्रसारकाः ॥

इह खलु सकलशिष्टैकवाक्यतया प्रारिप्सितग्रन्थसमाप्ति-प्रतिबन्धकीभूतासाधारणदुरदृष्टनाशजनकेश्वरनमस्काररूपं मङ्गलं कुर्व्वन् शिष्यशिक्षायै आदौ श्लोकेन निबध्नाति मुकुन्दमित्यादि। ननु कथं नमस्कारादभिमतसिद्धिः, मङ्गलसत्त्वे कादम्बर्य्यादावसमाप्तेः तदसत्त्वे शिशुपालवधादौ समाप्तेश्चेति। मैवं, इह विघ्नो माभूदिति कामनया शिष्टैः क्रियमाणस्य तस्याभिमतसमाप्ति-प्रतिबन्धकीभूतविघ्नाभावः फलम्। असमाप्तिस्तु कादम्बर्य्यादौ विघ्नस्य प्राचुर्य्यात्। नहि सहस्रजनसाध्यं कर्म्म शतेन साधयितुं शक्यते। शिशुपालवधादौ तु स्वभावसिद्धविघ्नाभावान्मङ्गलं विनैव समाप्तिः। अथवा तत्र नमस्कार एवासीत्, कायवाङ्मनोभिरेव तत्सम्भवात्। न चात्र प्रायश्चित्तवद्विघ्ननिवृत्तावधिकार इति वाच्यं, तत्सन्देहेऽपि शिष्टाः प्रवर्त्तन्ते यत इति। अन्यथा अनुपस्थितारातिसम्पन्नो रथ करि तुरग-पदाति सेना-सेनापति समादरणं न स्यादिति दिक्।

सच्चिदानन्दं प्रणिपत्य मया व्याकरणं प्रणीयत इत्यन्वयः। संश्चासौ चिच्चासावानन्दश्चेति सच्चिदानन्दः। अ-सः। असत् भावे शतृ, श्नसोरल्लोप इत्यादिना अकारलोपः, पश्चात् सौ नुम्, स्यान्तस्य लुपि, सन् सत्यः (१)। चिती संज्ञाने क्विपि चित्, विशिष्ट-ज्ञानम्। आङ्पूर्व्वे टुनदि समृद्धौ, घञ्, आनन्दः, अनवच्छिन्नप्रेमा-स्पदीभूतसुखमिति यावत्। तथाच "सत्यं विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। सच्चिदानन्दं किंविशिष्टं? मुकुन्दं, मुक्तिं ददातीति डप्रत्यये मनीषादित्वान्मुक्तिशब्दस्य मुकुमादेशः। यद्यपि सच्चिदा-नन्दशब्देन ईश्वरएवोच्यते, तथापि मुमुक्षूणां यागयोगाद्यनुष्ठान-द्वारा मुक्तिदातृत्वज्ञापनाय मुकुन्दमितिविशेषणीयम्। यद्वा श्रवणमननिदिध्यासनादिसाध्यमुक्तेर्यो दाता भवति, स भक्ता-भीष्टफलप्रदो भवतीति ज्ञापनाय। प्रणिपत्येति पतॢजगत्यैश्व-र्य्ययोः, क्त्वाच्, व्यादनञः क्त्वोयपे इति यप्, प्राग्वन्नोण इति नो णः। प्रधानप्रणयनक्रियायाः पूर्व्वकालीनत्वं प्रणिपातस्य संलक्ष्य तदुत्तरकालीनत्वं प्रणयनक्रियायाः संलक्ष्यते। अभिधानादेकधत्वम्। यद्यपि निपूर्व्वपतधुर्नत्यर्थस्तथापि भक्तिश्रद्धातिशयपूर्व्वक-स्वापकर्ष-बोधकव्यापारविशेषज्ञापनाय प्रशब्द इति। व्याकरणमिति व्याङ्-पूर्व्वकृञधुर्व्युत्पादनार्थः, व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृतिप्रत्ययपरि-कल्पनया सिद्धशब्दा अनेनात वा, घे ङे वानटि ण्र्धूडिति णः, पश्चात् लिङ्गसंज्ञायां बेर्म। प्रणीयत इति प्रपूर्व्व-णीञप्रापणे क्त्यर्थः, तस्मात् टे ते यक् च, किल्वाव्र णः, प्राग्वन्नो ण इति णः। ननु

(१) नित्य इति पाठान्तरम्।

अन्यानि व्याकरणानि सन्ति, किमनेन इत्यत आह मुग्धबोधमिति। मुग्धः सुन्दरो बोधो यस्मात् तन्मुग्धबोधं, अन्यापेक्षया प्रकरणशुद्धा झटितिपदपदार्थज्ञानं यस्मात् इत्यर्थः। यद्वा मुग्धानां मूढ़ानां बोधो ज्ञान यस्मात् तत्। तथाच सर्व्वेषां विशिष्टज्ञानजनकतया अत्युपादेयमिति। मुग्धः सुन्दरमूढ़योरिति धरणिः। बुध्यौ ञ बोधे घञ्, णः। ननु ग्रन्थकृतां ज्ञानमस्त्येव, किमनेनेत्याह परोपकृतये इति। परेषामुपकृतिः परोपकृतिस्तस्यै परोपकृतये, उपकृतिरुपकारः। ग्रन्थकृतां प्रवृत्तिश्च ईश्वरवत् फलानुसन्धानं विनैव। यद्वा पराचासावुपकृतिश्चेति परोपकृतिस्तस्यै, परा श्रेष्ठा, ततश्च स्वीयपरकीयोपकाराय। तथाच, स्पृशति रोदसीं चास्य यावत् कीर्त्तिरनश्वरी। तावत् किलायमध्यास्ते सुकृती वैबुधं पदमितिस्मरणात् स्वीयोऽप्युपकारः। केचित्तु चिश्चासावानन्दश्चेति चिदानन्दः, पश्चात् सश्चासौ चिदानन्दश्चेति सच्चिदानन्दस्तमिति यगर्भ-यसं स्वीकुर्व्वन्ति, यस्य (कर्म्मधारयस्य) पत्वात् (तत्पुरुषत्वात्) द्विदयोरेवेति। तन्न, जिनेन्द्रबुद्धिपादाः—काला (१) इति सूत्रे द्वे अहनी जातस्य द्व्यह्नजात इति त्रिपदतत्पुरुषं स्वीकृतवन्तः। अतएव यसप्रकरणे ग्रन्थकृतोक्तं सश्चासौ चिश्चासावानन्दश्चेति सच्चिदानन्द इति। यद्वा चिश्च

---

(१) काला· परिमाणिना (२।२।५)—परिच्छेद्यवाचिना सुबन्तेन सह काला· समस्यन्ते। द्वे अहनी जातस्य यस्य स द्व्यह्नजात· यस्य हि जननाद्द्वे दिनद्वयं गतं, स द्व्यह्नजात इति व्यवह्रियत इति पाणिनीये।

१। ओं नमः शिवाय।

( ओं। १।, नमः। १। शिवाय ४। )

इति नमस्कारसूत्रम्।

आनन्दय तौ चिदानन्दौ, सन्तौ चिदानन्दौ यस्मात् स तं। तथा च तत्त्वज्ञानं स्वर्गादिसुखञ्च यस्माद् भवतीति।

१। ओमिति। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः। उद्देशो लक्षणं परीक्षा चेति। उद्देश उपदेशः, सदाशिव परमात्म स्वरूप-ब्रह्मण उपदेशः (१)। यतः, सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति। सिद्धोऽभिधेय', अर्थः प्रयोजनं, सिद्धश्च अर्थश्च तत्, सिद्धेन सह सम्बन्धः सिद्धसम्बन्धस्तम्। तत्र किं केन कथ(२)मिति जिज्ञासायां, किं प्रयोजनं? शिवम्। यतः, प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते। तदुक्तं, सर्व्वस्यैव हि शास्त्रस्य कर्म्मणोवापि कस्यचित्। यावत् प्रयोजनं नोक्तं तावत् तत्केन गृह्यते इति। तथाच शिवाय शिव-प्रयोजनाय ओङ्कारप्रतिपाद्याय तस्मै परमात्मने नमः।

सिद्धसम्बन्धप्रकारमाह।

आत्मा बुद्ध्या समर्थ्यार्थान्नियुङ्क्ते तद्विवक्षया।
मनस्तद्वह्निमाहन्ति स प्रेरयति मारुतम्॥
वह्निमारुतसंयोगात् क्षोभाद् वागिन्द्रियस्य च।
सूक्ष्मा वाग्जायते पूर्व्वं स एव कथितो ध्वनिः॥

(१) नामकीर्त्तनमिति यावत्, ओमितिशब्दब्रह्मण इतिशेष।

(२) किं प्रयोजनम्, केन सह व्याकरणस्य किम्प्रकार सम्बन्ध।

तत्तत्स्थानेष्वथ यदा वायुश्चलति सेन्द्रियः ।
पश्यन्ती वर्णरूपा वाक् तत उत्पत्तिमर्हति ॥
मध्यमा पदरूपाथ वाक्यरूपाथ वैखरी ।
इति वाचामवस्थाः स्युर्मुखमध्ये तदिन्द्रियम् ॥
अर्थप्रत्ययोर्वाक्यात् श्रुतादनुमितान्मतात् ।
विशिष्टं खं सुखं राति विखरा सैव वैखरी ॥

जायते प्रादुर्भवति । तथाच भगवद्वाक्यम्—

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्निति ।

एतेन श्रंशब्दैरित्यादि-बहुलं ब्रह्मणीत्यन्त-दशाध्यायिरूप-व्याकरणस्य साध्यत्वं, शूद्राणामनधिकारित्वञ्च प्रत्युक्तमिति । अथ वर्णदेशना ।

हृत्कण्ठजिह्वं खलु तालु मूर्द्धा दन्तास्तथौष्ठावथ नासिका च ।
वर्णप्रकोष्टानधजर्द्धभेदानित्याह चाष्टावुपदेशतोऽन्यत् ॥

तथाचाहुः शिक्षाकाराः—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा ।
जिह्वामूलञ्च दन्ताश्च नासिकौष्ठञ्च तालु च इति ॥

किं पुनः कस्य प्रयत्नः (१) ।

स्पृष्टत्वमीषत्स्पृष्टत्वं विवृतत्वं तथैव च ।
संवृतत्वं च वर्णानामन्तः प्रयत्न उच्यते ॥ इत्याहुः । (२)

---

(१) वर्णोच्चारणानुकूल आभ्यन्तरो व्यापारविशेष ।

(२) स्पृष्टत्वं ईषत्स्पृष्टत्वं विवृतत्वं संवृतत्वञ्च वर्णानां अन्तःप्रयत्न आभ्यन्तरप्रयत्न उच्यते । एतेषामाभ्यन्तरत्वं वर्णोत्पत्तिप्रागभावित्वात्, तथाहि नाभि

२। शं शब्दैः। (शं। १। शब्दैः ३॥)।

शब्दैर्मङ्गलं स्यात्। इति प्रयोजनाभिधेयसम्बन्धाः।

---

इदमादिमङ्गलं, तथाचाह मनुः—

ओंकारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा।

कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ इति।

अथ त्यादिरुच्यते इत्यथशब्दः मध्यमङ्गलं, बहुलं ब्रह्मणीति ब्रह्मशब्दोऽन्तमङ्गलं शास्त्रस्याभ्युदयपरम्। तथाच, मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राण्यव्याहतप्रसराण्यायुष्मत्पुरुषाण्याख्यातॄणि भवन्तीति श्रुतेरिति। यद्वा अकारोकारमकारप्रतिपाद्याय ब्रह्मविष्णुशिवात्मकाय नमः, शिवाय कल्याणाय। एके तु उभयोरुपास्यत्वात् उभयनमस्कारः, अथ वा सूत्रवृत्त्योर्निर्विघ्नसिद्धये इत्याहुः। ननु प्रकृतिप्रत्ययपरिकल्पनया साधुशब्दव्युत्पादनाय प्रतिज्ञायामनेन कः साधुशब्दो व्युत्पादित इति शङ्कां निरस्यन्नाह इतीति। इतिशब्दः प्रक्रान्तपरामर्शी। तथाहि ओं नमः शिवायेति नमस्कारसूत्रम्।

२। शं शब्दैः। किमर्थमेतयोरुपदेशः? सिद्धार्थे सिद्धसम्बन्धे

---

प्रदेशात् प्रयत्नप्रेरितो वायुः प्राणो नाम ऊर्द्ध्वमाक्रामन्नुरःप्रभृतीनि स्थानान्याहन्ति, ततो वर्णस्य तदभिव्यञ्जकध्वनेर्वा उत्पत्तिः, तदुत्पत्तेः प्राग्यदा जिह्वाग्रोपाग्रमध्यमूलानि तत्तद्वर्णोत्पत्तिस्थानं ताल्वादि सम्यक् स्पृशन्ति तदा स्पृष्टता, ईषत् यदा स्पृशन्ति तदा ईषत्स्पृष्टता, समीपावस्थानकाले संवृतता, दूरत्वे विवृतता। अतएव इचुयशानां तालव्यत्वाविशेषेऽपि तालुस्थानेन सह जिह्वाग्रादीनां चवर्गोच्चारणे कर्त्तव्ये सम्यक् स्पर्शः, यकारे ईषत् स्पर्शः, शकारेकारयोः समीपदूरावस्थितिरिति तत्त्वबोधिनी।

श्रोतुं श्रोता प्रवर्त्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति। तथा च सिद्धसाध्यसमभिव्याहारात् सिद्धः साध्यायोपयुज्यते इति हेतुत्वेन। ननु नित्यानां वर्णानां साध्यत्वमेव कुतः इति चेत् सत्यं, तेषां व्यञ्जकवायोर्जन्यत्वमादाय साध्यत्वव्यवहारो ननु वर्णानामिति। शब्दैः शमिति, शब्दैः परम्परया काव्यरचनादिद्वारा ऐहिकं, यागयोगाद्यनुष्ठानद्वारा पारलौकिकं स्वर्गमोक्षरूपं कल्याणञ्च भवतीत्यर्थः। इत्यादि, इतिशब्दः प्रक्रान्तपरामर्शी। शं शब्दैरिति वाक्येन प्रयोजनाभिधेयसम्बन्धाः, प्रयोजनं कल्याणम्, अभिधेया वक्ष्यमाणसाधुशब्दाः, सम्बन्धो जन्यजनकभावः, प्रदर्शिता इति शेषः। अथ साधुशब्दव्युत्पादनाय शास्त्रं करिष्यमाणः परामृशति। साध्वसाधुशब्दान् प्रत्येकमुल्लिख्य साध्वसाधुशब्दपरिज्ञानं युगसहस्रेणाप्यशक्यं, शब्दानामनन्तत्वात्। ततश्च बहुतरविशेषावच्छिन्नसंग्राहिकैकैका संज्ञा विधेया व्यवहारार्थम्। तथाच, संज्ञा च परिभाषा च विधिर्नियम एव च। अतिदेशोऽधिकारश्च षड्‌विधं सूत्रलक्षणम् इत्युक्तम्। व्यवहारार्थं स्वशास्त्रे कृतःसङ्केतः संज्ञा,यथा अक् इक् इत्यादि। परितो व्याप्ता भाषा परिभाषा। सा द्विविधा न्यायमूला ज्ञापकसिद्धा च। यथा शिवेहीत्यादौ स्थानिवदादेश इति न्यायात् आदिष्टाडि अवर्णलोपः। राज्ञी इत्यत्र सदानोऽल्लोप इति नित्यमकारलोपः, आदीपोरित्यत्र निरनुबन्धस्य ग्रहणेन न सानुबन्धस्य ग्रहणमिति ज्ञापनात्। विधानं विधिरप्राप्तिप्रापकः, क्वचित् वर्णोत्पादनरूपः क्वचिदभावरूपः, तस्यैव भेदौ नाशनिषेधौ, क्वचिदादेशरूपश्च। यथा

स्याद्यन्ताधिकारः। सन्ध्यध्यायः।

## अथ संज्ञा।

३। अ इ उ ऋ ऌ क, ए ओ ङ, ऐ औ च, ह य व र ल, ञ ण न ङ म, झ ढ ध घ भ, ज ड द ग ब, ख फ छ ठ थ, च ट त क प, श ष सा द्यन्ताख्याः। (अ—स।१।।, आद्यन्ताख्याः १।।)।

एषां मध्ये ये वर्णास्ते आदिवर्णान्त्यवर्णसमाहारसंज्ञाः स्युः।

---

रामाणां, शिवायोन्नमः, अ अनन्तः, मुरारिरित्यादौ नुमादि-विधिः। सामान्यप्राप्तकार्य्यस्य विशेषावधारणं नियमः, यथा हक्कहा इत्यादौ घंनियमः। अन्यधर्म्मस्य अन्यत्रारोपणमतिदेशः, यथा भव्यं भाव्यमित्यादौ घत्वातिदेशादवादयः। पूर्व्वसूत्र-स्थितस्य दस्य परसूत्रोपस्थितिरधिकारः, यथा सह र्षे घं इत्यतः सह-शब्दस्यादिगेबोरित्यादावनुवृत्तिः। उक्तयोः (१) कथं सूत्रत्वं—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुरिति (२) दर्शनात्।

---

३। अइ। अश्च इश्च उश्च ऋश्च ऌश्च ते अ इ उ ऋ ऌ लुप्तप्रोक्तं

---

(१) ओं नमः शिवाय शशक्कैरित्यनयोः।

(२) अल्पाक्षरमिति—अल्पाक्षरं संक्षिप्तवर्णविन्यासमसाध्यम्। असन्दिग्धं—इदमेतदन्यद्वेति बुद्धिभेदाजनकम्। सारवत् निष्कृष्टार्थयुक्तम्। विश्वतोमुखं बहुषु लक्ष्येषु प्रवृत्तम्। अस्तोभं निरर्थकशब्दवर्ज्जितम्। अनवद्यं अश्लीलत्वादि-दोषशून्यम्।

दं, तेभ्यः कमितं करोति, अ इ उ ऋ ऌ क ए ओ ङ इत्यत्र ककारं विना अ इ उ ऋ ऌणामनुवृत्त्या तेभ्यः ए ओ इत्येताभ्यां ङमितं करोति, एवं ङकारं विना अ इ उ ऋ ऌ ए ओ इत्येषामनुवृत्त्या तेभ्यः ऐ औ इत्येताभ्यां चमितं करोति, तथा च विना हससूत्रे अनुवृत्तिरित्यर्थः (१)। चत्वारि दानि, अन्यथा एकदले कङचां चावयवत्वे (२) ह्रादिवदित्त्वं न स्यात्। एषामसन्धिर्ञो अन्त इत्यादिना चादिपाठात् (३)। हय यव वय इत्यादि चसः। ह्रादिसान्ता लुप्तप्रोक्तान्ताः। अन्तश्च अन्तश्च अन्तौ ताभ्यां सह आदिः आद्यन्तौ राजदन्तादित्वादादिशब्दस्य पूर्व्वनिपातः शाकपार्थिवादित्वान्मध्यपदलोपः, आद्यन्तौ आख्या येषां ते आद्यन्ताख्याः (४)। एषां मध्य इति, एषां अकारादिसकारान्तानां मध्ये यान् वर्णानपेक्ष्य य आदि स्तेन सह यान् वर्णानपेक्ष्य योऽन्त-स्वरूपो योऽवयवश्च स तेषां सञ्ज्ञेत्यर्थः (५)। अतएवोक्त समाहार-

---

(१) इत्थं परपदे सर्व्वेषां पूर्व्ववर्णानां अनुवृत्तावपि यन्प्रयोगानुसारेण तत्तत्सञ्ज्ञा वेदितव्या। तेन अक् इक इत्यादिवत् अक् इत्यादीनामप्रयुक्तत्वादनादेयत्वमिति। अतएव "अक् इत्यादिसञ्ज्ञा यथायोग्यप्रयोजनग्राहिस्य योज्या" इति का षि।

(२) द्वन्द्वसमासावयवत्वे सति।

(३) चादिर्गिर्निरिति वक्ष्यमाणसूत्रे चादिगणे अथ पाठादित्यर्थः।

(४) कश्चिदादिवर्णेन सह अन्त्यस्वरूपोऽन्तस्थितो यो वर्णस्तमादाय संज्ञा भवेत्। यथा अक् इत्यादय। कश्चिच्च अन्तावयव स्वरूपवर्णमादायेत्यर्थः। यथा अश् इत्यादय।

(५) अन्तश्च अन्तश्च अन्ताविति एकशेषे एकेनान्तशब्देन कङचा इतो वर्णा अन्येन द्वन्द्वसमासावयवीभूतवर्णा ग्रह्यन्ते इत्याशयः। 'एषामिति अभेदसम्बन्धे

४ । इत् कृते । ( इत् ।१।, कृते ।४। ) ।

कस्मैचित् कार्य्यायोच्चार्य्यमाणो वर्णः इत्संज्ञः स्यात् । तस्य-कार्य्येऽनुच्चारः । यथा अचि कङचाः संज्ञार्थाः । इसे अकार उच्चारणार्थः ।

---

संज्ञाः स्युः, सम्यक्प्रकारेण प्राहरणविधायिकाः(१) संज्ञास्तेषां भवन्तीत्यर्थः । अन्यथा यदि सर्व्वेषामादिवर्णेन सह सर्व्वेषामन्तः सकारः सर्व्वेषां संज्ञा भविष्यति तदा सर्व्वान् वर्णानुल्लिख्य एकाक्षरसंज्ञा कृता स्यात् न तु आद्यन्ताख्या इति (२) । प्रत्याहारा हि—अक् अच् अव् अम् अय् इक् इङ् इच् इल् (उक्) (३) ऋक् एङ् एच् एह् ऐच् हल् हय् हस् यल् यम् यप् वस् ञम् ञप् ञस् णङ् णम् णप् झभ् झय् झप् झस् ढभ् जय् खय् खप् खस् छत् चक् चप् सस् । एते चत्वारिंशत् शब्दाः प्रत्याहाराः ॥

॥ । इत्कृते ॥ कृते इति निमित्तार्थे र्थ्यं, एति गच्छतीति इत् । कस्मैचिदित्यादि । कस्यचित् कार्य्यस्य हेतोरुच्चार्य्यमाण उपदिश्य-

---

पठो, मध्ये इत्येकारान्ताव्ययशब्दोऽधिकरणमात्रवाची तेनातस्थले वे वर्णो" इति । का-शि । "मध्यशब्दस्येह मध्यावयववाचित्वे तु चकारसकारयोः प्राप्तिर्न स्यादि"ति दुर्गादासः

(१) सम्यक् प्रकारेण ग्रन्थोपयोगित्वेनेत्यर्थः । व्याहरणम्—सेलनम् ॥

(२) वक्ष्यमाणफभीत्यादिवत् येन केनचिदेकाक्षरेणैकां संज्ञामकरिष्यदित्यर्थः । "स्युरिति बहुवचननिर्द्देशात संज्ञानां नानात्व ज्ञापितमिति" । का-सि ।

(३) आचार्य्यप्रयुक्ताः संज्ञाश्चत्वारिंशत । तर्कवागीशेन तु परमतमनुसृत्य स्वकृतटीकायां उक् इति संज्ञायाः प्रयुक्तत्वादिहापि उक् संज्ञा कृतेति ।

५। आ वत् स्वर्णम्। ( आ ।१।, वत् ।१।, स्वर्णम् ।१। )।

अ आ अ ३ इति वर्णत्रयं क्रमेण स्वर्णसंज्ञं स्यात् । वत् शब्दात् इ ई इ ३ इत्यादिषु च । स्व एज् नास्ति ।

---

मानो वर्ण इत्संज्ञः स्यात् । तथाच आचार्य्यैर्यत् यत् कार्य्य-मुद्दिश्यैव यद्यदुपदिष्टं तत्तत् प्रयोजनमुद्दिश्यैव इत् संज्ञा कृता । तेषां तु प्रयोगकाले अनवस्थानं अन्वर्थसंज्ञाबलादित्याह तस्ये-त्यादि । तस्य इत्संज्ञकवर्णस्य कार्य्ये कार्य्यकाले अनुच्चारः अप्रयोग इत्यर्थः । ननु अक् इङ् एजित्यादौ यथा प्रत्याहारार्थमुपदेशः कङचां, तथा कथं नाकारादीनामिति चेन्न, आदिशब्दस्यावय-वार्थत्वात् । अन्तशब्दस्तु स्वरूपावयवार्थ इति । इत्संज्ञस्य प्रयोगकाले अनवस्थानं दर्शयति यथेत्यादि । अचि अकारादि-नववर्णमात्रघटितप्रत्याहारे कङचां अक्इङ्एजित्यादिसंज्ञा-प्रयोजनका इत्यर्थः । एवं हसे अकारस्य प्रयोजनान्तराभावात् उच्चारणप्रयोजनकत्वमेव ।

५। आ इति बहुचणोच्चरितं लुप्तप्रोक्तं दं, वत्शब्दः सादृश्यार्थ्यं, स्वर्णम् लुप्तप्रोक्तं दं, स्वय घैय भुय तत् । नन्वेक-वर्णस्य भ्रष्टात्वय निरर्थकं, एकेनैव चरितार्थत्वात् । न च यथा प्रादे-गिनिव्यसंज्ञात्रयं तथात्रापीति वाच्यं, इह फलभेदाभावात्, तत्र तु गिनिव्यानां फलभेदेनावश्यविधेयत्वमिति । नापि त्रिवर्णात्मकसंज्ञा वाच्या, एकाचरेणैव चरितार्थत्वात् गौरवाच्च, यतो मात्रालाघवे-नाचार्य्याः पुत्रोत्सवं मन्यन्ते इति स्मरणात् । तस्मात् संज्ञात्रयेण

संज्ञित्रयमुपस्थाप्यते। तथाहि यदैकक्षणोच्चरिताकारस्तदा तस्य ह्रस्वसंज्ञा, यदा द्विक्षणोच्चरिताकारस्तदा तस्य दीर्घसंज्ञा, यदा बहुक्षणोच्चरिताकारस्तदा तस्य प्लुतसंज्ञा, बहुक्षणोच्चरितस्य एकद्विक्षणोच्चरितत्वं विना बहुक्षणोच्चरितत्वासम्भवात्। तथाचाहुः शिक्षाकाराः।

एकमात्रो भवेत् ह्रस्वो द्विमात्रो दीर्घ उच्यते।
त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं चार्द्धमात्रकमिति॥

अत्र त्रिमात्रपदं बहुमात्रोपलक्षणम्। एके तु अत्र आत्र अत्र सौत्रत्वात् सन्धिः बहुलं ब्रह्मणीत्युक्तेः, तथाच छन्दोवत् सूत्राणि भवन्तीति भाष्यमित्याहुः। वदिति आशब्दसमभिव्याहारात् अचस्त्वैकमात्रत्वद्विमात्रत्वबहुमात्रत्वधर्म्मेण सादृश्यं गृह्यते। तेन इ ई इ ३ इति, आदिना उ ऊ उ ३ ऋ ॠ ऋ ३ ऌ ॡ ऌ ३। (१) नन्वेचः सन्ध्यक्षरत्वात् ह्रस्वाभावं दर्शयति ह्रस्वएज् नास्तीति। व्युत्क्रमेणान्वय स्तेन ए ए ३ ओ ओ ३ ऐ ऐ ३ औ औ ३ इति। अनच्त्वात् (२) प्रतक्ष्य प्ररक्ष्य इत्यादौ ह्रस्वाभावात् ह्रस्वस्य तन् पितीति तन् न स्यात्।

---

(१) "केचित्तु आवदित्येकपदं मत्वा इ ई इ ३ इत्यादीनां संज्ञात्रयं सिद्धं कुर्व्वन्ति. तन्मते कथमसिद्धस्योपमानत्वं सङ्गच्छते। अतस्तवत् दधि भुङ्क्ते इति प्रयोगे अदृष्टास्तस्य यथा स्वादुत्वम् अर्थतो दधिभोजनद्वारा सिद्ध्यति तथात्र कल्पनादित्याहुः'। का—सि।

(२) द्वयोर्व्यञ्जनयोर्द्वाभ्यामर्द्धमात्राभ्यां यद्येकमात्रा भवेत् तदा प्रतक्ष्येत्यादौ एकमात्रस्य ह्रस्वत्वेन ह्रस्वस्य तन् पितीति कथं तन् न स्यादित्याशङ्क्याह अनच्त्वात् व्यञ्जनानामजभिन्नत्वात् अचामेव ह्रस्वदीर्घप्लुतसंज्ञाविधानादित्यर्थः।

६। अपोऽक् समोर्णं ऋटक् च। (अपः १।, अक् ।१।, समः १।, र्णः १।, ऋटक् ।१।, च ।१।)।

समानो अपोऽक् च परस्परं र्णसंज्ञः स्यात्, ऋटक् च। साम्य-न्त्वेकस्थानत्वम्।

अवर्यं एह क ख ग घ ङाः काण्ठ्याः।

इवर्यं च छ ज झ ञ ग्रा ए ऐ यास्तालव्याः।

ऋवर्यं ट ठ ड ढ ण र षा मूर्द्धन्याः।

ऌवर्यं त थ द ध न ल सा वो दन्त्याः।

उवर्यं प फ ब भ म वा ओ औ ओष्ठ्याः।

एषां मध्ये यो येन समः स तस्य तत्र ततः।

---

६। अपः। अपाऋटकाः(१) प्रत्याहाराः। अपाकोः पृथक् करणात् अप् अपेनैव अक् अकेनैव र्णसंज्ञस्तेन कुम्भकार इत्यादौ न सह र्णं र्णः। ऋकारऌकारयोः स्थानवैषम्यात् पृथग्टकोविधानं, तेन होतृकार इत्यादौ ऌकारेण सह ऋकारस्य र्णः। साम्यमिति समस्य भावः साम्यं ब्राह्मणादित्वात् ष्यः। एकस्थानत्वमिति एक-स्थानोच्चरितत्वमित्यर्थः। एहः प्रत्याहारः ए ओ ऐ औ ह इति। काण्ठ्याः कण्ठे भवाः, शरीरावयवाद्द य इति यः, एवमन्यत्र। उभयत्र पाठात् ए ऐ कण्ठ्यतालव्यौ, ओ औ कण्ठ्यौष्ठ्यौ, वकारो दन्त्योष्ठ्यः। नच अवयम् एहकवः (२) काण्ठ्या इत्यादि वाच्यं, अन्योन्याश्रय-

---

(१) अप + अक + ऋटकः।

(२) कव इति कुचन्द्राख्यानि रूपम्।

दोषात् (१)। सवर्ण इति परे। एषामिति। एषां अ आ अ३ ह क ख ग घ ङ इत्यादिवर्णानां मध्ये येन वर्णेन समो यो वर्णस्तस्य सामान्येन विधानेन सम आदेशः स्यात् नत्वसमादेशः। यथा भृज्जौ भृज्जः इत्यादि। तत्रेति परमी, पूर्व्वस्य परनिमित्तकसामान्यादेशे परवर्णस्य सम आदेशः। यथा शान्तः अङ्कित इत्यादि। तत इति पी, परस्य पूर्व्वनिमित्तकसामान्यादेशे पूर्व्ववर्णस्य सम आदेशः। यथा वाग्घरिः अज्झसोरित्यादि। अनियमे प्राप्ते वचनम्। अत्र वदन्ति—

सूत्रे प्रान्तं यद्विधेयं द्यन्तं यत्प्राप्यते हि तत् ।
त्रन्तं यत् तस्य योगी स्यात् प्यन्तं यस्मात् परन्तु तत् ॥
यस्य स्थाने भवेत् कार्य्यं तत् ष्यन्तं समुदाहृतम् ।
सन्तं गम्ये परे वाच्ये यस्मिन्नुपपदे हि तत् ॥
क्वचिद्व्यत्ययतो (२) ज्ञेयमिदं पाणिनिसम्मतम् ।

यथा—सहर्षंघं इत्यादि, शीवे लृतो ञिमित्यादि, वारादर्थै-रित्यादि, आदिगीचोरित्यादि, जसशसोः शिरित्यादि, चेशप्रे इत्यादि। परे तु तुल्यास्यप्रयत्नं सवर्णमिति (१।१।९) (३) प्रयत्नसाम्ये। प्रयत्नास्तु—

---

(१) स च दोषः स्वग्रहणापेक्ष-ग्रहणापेक्ष-पङ्कत्वरूप। तथाच वर्णानां स्थाननिर्द्देशे कर्त्तव्ये कु इत्युक्तौ सवर्णत्वज्ञानमेकस्थानत्वज्ञानमपेक्षते, एकस्थानत्व-ज्ञानमपि सवर्णत्वज्ञानमपेक्षते इत्यन्योऽन्याश्रयदोषापत्तेरित्यर्थः।

(२) व्यत्ययस्तु सेभयप्यदे· ढ्लोऽढ्णो रे इत्यादौ बोध्य ।

(३) ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चेत्येतदुभयं यस्य येन तुल्यं तन्मिथः सवर्ण संज्ञं स्यादिति वृत्तिः।

७। चपोदिताकानिता र्णः। (चपा ३।, उदिता ३।, अका ३।, अनिता ३।, र्णः १।)

उकारेता चपेन इद्रहितेनाका र्णो गृह्यते।

---

आभ्यन्तरीणाश्चत्वारः स्पृष्टत्वादय ईरिताः।
बाह्या विवारसंवारौ श्वासो नादश्च घोषतः॥
अघोषश्चाल्पप्राणश्च महाप्राणोऽष्ट ते मता इत्याहुः।

अस्मन्मते तु आस्यसाम्येनैव सिद्धेः।

७। चपोदिता। उत् इत् यस्य स उदित् तेन, चप् प्रत्याहारः च ट त क प इति तेन, उदितेति चपेत्यस्य विशेषणं, नास्ति इत् यस्य सोऽनित् तेन, अकेत्यस्य विशेषणम्। तथाच च ट त कपा एते यदा उदितः स्युः तदा र्णं गृह्णन्ति, एवं अक्, अ इ उ ऋ ऌ एते यदा इद्रहितास्तदा र्णं गृह्णन्ति इत्यर्थः (१)।

---

(१) "अत्र सामान्यशब्दस्य विशेषपरत्वात् कार्यान्तरासम्पादकीभूतेदित्त्वं समानवर्णग्राहकत्वं, तेन भवोनस्तुड्ग्रस्यत्र ठढः समानवर्णग्राहकत्वम्, अतो-ऽकारस्य कार्यान्तरसम्पादकत्वात्, कार्यान्तरन्तु एतत्कार्यातिरिक्तकार्यं भिदयो-ऽद्धेर्मुख्विति। दम्भोवाश्विति ज्ञापकात् कार्यस्वरूपेदृद्दिताकः समानवर्णग्राह-कत्वं यथा टेरक्षौ चैश्वासुद् अथलुपोऽर्थवादित्वाद इत्यादिषु प्रदर्शितम्। एतस्येनु मनीयस्य कार्यभावात्क इत्यत्र च इकारबोधक इत्प्रत्ययोपादानं ज्ञापक-सिद्धस्यानित्यत्वज्ञापनार्थम्। केचित्तु दम्भोवाश्वित्यस्य ज्ञापकत्वेन प्रथमाद्येयो-समानवर्णग्राहकत्वं नास्तीति व्याख्याय भवोन इत्यत्र ठढोऽपि समानवर्णग्राह-कत्वमिच्छन्ति। तत्र युक्तं स्नुयुभिः तुभि- तु इत्येतयोरुक्तौ समानवर्णग्राहकता-पत्तेः। तत्रैव ट ठ इत्यवर्णयाकाभकार्यसम्भवस्य तुसेकारप्रयोगेणाप्राप्त-मिति ज्ञापकमनुविपर्ययेण अतएव तेषां मते स्नुयुभिरित्यादौ न दोष किन्तु भवोन इत्यत्र गम्यभाव इत्यवधेय"मिति। का-मि।

८। इङोऽरलेङ् गुः। (इङ. ६।, अर् अल् एङ् ।१।, गुः १।, )।

इङः स्थाने अर् अल् एङ् एते गुसंज्ञाः स्युः।

---

८। इङः। अर्च अल्च एङ्च तत्, एङ्प्रत्याहारः, यद्वा प्रत्येकं द्वं, एषां यो येन सम इति नियमात् इदुतोरपि एकार-ओकारौ भवतः न तु ऋकारस्य लृकारस्य च। ऋकारे त्रयोऽज्भागाः सन्ति तन्मध्यवर्त्ती तुरीयो रेफ इति (१) इकारो-कारभागसत्त्वेऽपि (२) अरुपदेशात् (३) अरेव गुसंज्ञः न तु इवरौ; एवं लृकारेऽपि (४)। इङ इति मौनिर्देशात् एङ एव एङ्, यथा प्रेजते परोखति इत्यादौ गुः। गुण इति परे।

---

(१) अस्यायमाशयः 'उरण् रपरः' (उः ६। अण् ।१। रपरः १।) इति पाणिनि-सूत्रम्। ऋकारस्य स्थाने अण् अर्थात् अ इ उ एते त्रयो वर्णा रपरा भवन्ति। रइति रलयोः संज्ञा। ऋकारेणात्र लृकारोऽपि गृह्यते। तेन ऋस्थाने अर्, इर्, उर् एते स्युः। एवं लृ स्थाने अल् लादिति सूत्रार्थः।

(२) यद्यपि ऋस्थाने इर्, उर् इत्यपि भवतस्तथापि।

(३) गुणसंज्ञासूत्रे इति शेषः।

(४) त्रयोऽज्भागाः सन्तीत्यनेनान्वयः। तत्र इल्, उल् इत्येतयोरप्रयोगात् अलेव गुणसंज्ञः। अतएव कार्त्तिकेयसिद्धान्तेन च ऋकारे त्रयोऽज्भागाः इत्यादि एवं लृकारेऽपीत्युक्तं तर्कवागीशवचनमुद्धृत्य "तर्कवागीशस्तु पाणिन्यादिमतमव-लम्बयाह" इत्युक्तम्। अन्यच्च, "सर्व्वत्र गुविधायकस्थले इङः प्राप्त्यर्थमियं संज्ञा, तेन गुर्भूङ इत्यत्र अन्त्येङः प्राप्तिः। आदिगेचोरित्यनेन इको गेर्वोरित्यनेन एङश्च गुविधानेनैव इङः प्राप्तौ अत्र इङ उपादानं व्यर्थमिति चेन्न,—अमौजसुविरिति-वत्, उद्देश्यविधेयभावान्वयात गुपदेन अरलेङ् इत्यस्योपस्थितत्वात्। अत्र तु गुपदेन इङ्स्थानकर्त्तव्यारलेङ् वाच्यमिति न तु केवलारलेङ्। अत्र कार्य्येण कार्य्युपस्थाप्यते, तेन प्रजवदेतिसूत्रे त्रिपदेन कार्य्यिस्वरूपाजुपस्थाप्यते, अच आराजैज् इत्यत्र अचपदस्यापि" इत्युक्तम्। "समत्वादिवर्णएकारयोरेकारः उवर्ण-

९। अच आरालैज् व्रिः। (अचः ६।, आ आर् आल् ऐच्।१।, व्रिः १।)।

एते व्रिसञ्ज्ञाः स्युः।

१०। प्रपरापसंन्यवानुनिर्दुर्व्यधिसूत्परिप्रत्यभ्यत्यप्युपाङ् गिः। (प्र—आङ।१॥, गिः १।)।

एते विंशतिर्गिसंज्ञाः स्युः।

अत्रार्चायां स्वती, नातिक्रमेऽतिः, पर्य्यधी गतौ।
अपिः पदार्थ-सम्भाव्य-गर्हानुज्ञा-समुच्चये॥

---

९। अचः। आश्च आर् च आल् च ऐच्च तत्, ऐच् प्रत्याहारः, सोचत्वात् सान्तविधेरनित्यत्वाद्वा न चैक्यादः; शेषं पूर्व्ववत्। वृद्धिरिति परे।

१०। प्रपरा। प्रश्च परा च अपश्च सम्च निश्च अवश्च अनुश्च निश्च दुश्च विश्च अधिश्च सुश्च उत्च परिश्च प्रतिश्च अभिश्च अतिश्च अपिश्च उपश्च आङ् च ते। विंशतिरिति स्वरूपकथनम्।

अत्रेत्यादि। अत्र प्रादौ स्वती पूजार्थौ न गी, यथा सुस्तुते, अतिस्तुते। अतिक्रमे अतिर्न गिः, फलोदयेऽपि क्रियाप्रवृत्तिरतिक्रमः तस्मिन्, यथा अतिसिञ्चति शालीनित्यादि। गतौ पर्य्यधी न गी, यथा परिसेधति अधिसेधति इत्यादि। याभ्यां पर्य्यधिभ्यां योगे गत्यर्थधुः स्वार्थं न जहाति, गत्यर्थधुसमभिव्याहृतौ पर्य्यधी

---

ओकारयोरौकारः। ततोऽर्णाद्दौ चरमौ रषयो मध्यतान् क्रमेण ऋवर्ण-लृवर्णयोः स्याताम्, अनुदात्तवाप्याभावे ओविवक्षायामपि प्राप्नुयादि'ति-दुर्गादासः।

इत्यर्थः, (१) तथाच अधिपरी अनर्थकाविति परे। अपिः पदार्थेत्यादि। पदार्थश्च सम्भाव्यश्च गर्हा च अनुज्ञा च समुच्चयश्च तत् तस्मिन्, अप्रयुज्यमानपदस्यार्थः पदार्थस्तस्मिन्, यथा सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्, बिन्दुपदस्यार्थे अपिशब्दः (२)। सम्भाव्यं सम्भावनं योग्यतेति यावत्, यथा अपि सिञ्चेन्मूलसहस्रम्। गर्हा निन्दा, यथा अपि स्तुयात् वृषलम्, अपि सिञ्चेत् पलाण्डून् ब्राह्मणकः। अनुज्ञा प्राकाम्यं, यथा अपि सिञ्च अपि स्तुहि यथेष्टं कुरु इत्यर्थः। समुच्चयः परस्परसंश्लेषः, यथा अपि सिञ्च अपि स्तुहि, उभयं कुरु इत्यर्थः, सर्व्वत्र षत्वाभावः फलम्। स्वादेरनुकरणात् सोर्लुक्, न गौणानुकरणयोरिति निषेधात्। ननु चादिर्गिनिरित्यतः प्राक् गिसंज्ञा क्रियतां कथमिहेति चेन्न, घुसंज्ञायाः प्राक् गिसंज्ञाविधानं धोः प्राड्नियतप्रयोगार्थं, तेन प्रकृष्टं नयति प्रणायकः, प्रकृष्टमेजते प्रेजकः इत्यादौ णत्वणत्वे स्तः, न तु प्रगतो नायकः, प्रनायकः, प्रगत एजकः प्रेजकः इत्यादौ (३), द्रव्ययोगे व्यस्येति सत्वाभावात्। कथं तस्य व्यत्वमिति, चादिपाठात् (४)। ननु प्रजयति अभ्यागच्छति प्रतिष्ठते इत्यादौ

---

(१) अतएव उपसर्गस्य द्योतकत्वं न तु वाचकत्वमित्युक्तम्।

(२) अत्र अप्रयुज्यमानबिन्दुपदस्यार्थं आक्षिप्यते इति का-वि। पदार्थोऽल्पत्वं अपि सिञ्चति अल्पं सिञ्चतीत्यर्थं इति दुर्गादासः।

(३) प्रनायक इत्यादौ प्रादीनामध्याहृतगतिक्रियां प्रत्युपसर्गत्वं न तु नयनादिक्रिया प्रतीति। अतएव प्रगतोऽध्वानं प्राध्व इत्यत्र गेरध्वन इत्यप्रत्ययः।

(४) द्रव्ययोगे विशेषणभावापन्ने सतीत्यर्थं, व्यस्येति-व्यसन्यनुकारेति सूत्रेण, सत्वाभावात्-समासत्वाभावात् न णत्वषत्वे इति पूर्व्वेणान्वयः। धातुप्रकरण-घटित-षत्वविधे पूर्व्वं व्यसन्यनुकारेति समासविधानात् समासाभावे षत्वं नस्यादिति-

## ११। भ्वादिर्धुः। (भ्वादिः १।, धुः १।)।

भू-सत्तायामित्यादिर्गणो धुसंज्ञः स्यात्।

---

प्रकर्षाभिमुख्यसामीप्यगमनं गेरेव कल्प्यते, तदन्वयव्यतिरेकानुविधानादिति(१) चेत् न, वधार्थराधां क्षमार्थक्षमामिति विशेषणेन धोरेवानेकार्थत्वकल्पनात्, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च (२)। अतएव गेर्द्योतकत्वं, न वाचकत्वं, द्योतकत्वं हि सामान्यशब्दानां विशेषतात्पर्यग्राहकत्वम्। प्रतिष्ठते इत्यत्रापि विरोधिलक्षणया धोर्गमनोपस्थितितात्पर्यसंग्राहकत्वमिति। तथाचोक्तं कामधेनौ "क्रियावाचित्वमाख्यातुं प्रसिद्धार्थः प्रदर्शितः। प्रयोगतोऽन्ये मन्तव्या अनेकार्था हि धातवः"। तथाच भट्टौ सहस्रशोऽसौ शपथानशप्यत्, अकरोदित्यर्थः।

११। भ्वादिः। भूरादिर्यस्य गणस्य सः, तद्गुणसंविज्ञान-

---

सूचितम्। तेन प्रणायक इत्यत्र उपसर्गत्वाभावात् समासाभावे णत्वं नस्यात्। प्रैजन्त इत्यत्र च अनुपसर्गत्वात् गेर्धोरित्यनेन गुणोऽपि नस्यात्। अतएवोक्तं "प्रादीनामुपसर्गत्वं धातुयोगे च सम्मतः। अव्ययत्वं क्रियायोगे कथितं पूर्वसूरिभिरित्युक्तं प्रादयो यदा धातुयोगो भवति तदा तस्योपसर्गत्वं, यदा क्रियायोगो तदा तस्याव्ययत्वमिति। प्रणायकः प्रगतो नायको यस्मादेशात् इत्यादौ प्रादयो नोपसर्गाः अपि तु तत्प्रतिरूपकाः। तेन तेषां चादिगणे पाठात् निपातत्वेऽव्ययत्वं सिद्धमिति'।

(१) अन्वयः कारणसत्त्वे तत्सत्ता व्यतिरेकः कारणाभावे तदभावः, ततश्च प्रकृत्यर्थोऽपि उपसर्गे प्रयोगार्थं, भवति च तस्मिन् तदभाव इत्येवमन्वयव्यतिरेकाभ्यां तदर्थबोधकत्वमित्यर्थः।

(२) प्रणयति इत्यादौ विशेषणीभूतं धातूनां प्रकृतित्वम् न तु प्रादीनां सुपरिहार्यमिति।

इ: । पृथ्वीवाचकभूशब्दस्य धुसंज्ञां निरस्यन्नाह भूसत्ताया-मित्यादि । गणशब्दः समूहवचनः । तथाच भूसत्तायामित्यादि-दशगणपठितानां क्रियावाचिनां धुसंज्ञेत्यर्थः । क्रिया तु क्वचित् सिद्धा, आकाशादेर्यदस्तित्वादिकम् । क्वचिदसिद्धा, तण्डुलादेः पाकाद्यन्वितक्रमरूपा पूर्व्वापरीभूतावयवा च (१) साध्यत्वेन विवक्ष्यते इति । यदुक्तं, यावत्सिद्धमसिद्धं वा साध्यत्वेन विवक्ष्यते । आन्वितक्रमरूपत्वात् सा क्रियेत्यभिधीयते (२)। यद्वा क्रिया धात्वर्थः (३)। स च परिस्पन्दनसाधनसाध्यः, यथा गमनादिः, अपरि-स्पन्दनसाधनसाध्योऽपि, यथा अवस्थानादिः । गणे पाठाभावात् अलपयति वर्षयति संग्रयति इत्यादेर्न धुत्वम् (४)। गणपाठात्तु श्वेतते मेघः, रज्यते रविः, नीलति तमालवनं, शोणति कोकनदं, स्यमति वायुः, विश्रेपयति अर्थं, समवैति घटं, जानाति शिवं,

---

(१) पूर्व्वापरीभूतौ अवयवौ यस्यास्ताद्दशी, पूर्व्वावयवोऽधिश्रयणं तत्र पुत्रस्य स्थालीस्थापनं, अपरावयवो जलतण्डुलाद्यर्पणम् । अतएवोक्तं विक्लित्यनुकूल-व्यापारः पाक इति ।

(२) सिद्धं नित्यं सत्तादिकं, असिद्धं अनित्यं गुणाभावादिकं वा, यावत् यत् समस्तं वस्तु साध्यत्वेन प्रयत्नादिक्रियारूपत्वेन विवक्ष्यते, आन्वितक्रमरूपत्वात् आन्वितं प्राप्तं क्रमरूपं पूर्व्वापरीभावः येन तत् आन्वितक्रमरूपं तस्य भावस्तस्मात् सा क्रियेत्यभिधीयते ।

(३) अस भव प्रभृतिवाच्यानां सत्ताभावादीनां पूर्व्वापरीभावस्याभावात् कथं क्रियात्वमित्याशङ्क्याह यद्वेति । पूर्व्वाचार्य्यकृतगणपठितानां भ्वादीनां वाच्यैव क्रियेति निष्कर्षः ।

(४) शिष्टप्रयोगानुसारीदं लक्षणं ( धातुलक्षणं ) शिष्टैश्च एते ( अलपयती-त्यादयः ) न प्रयुक्ता इत्येषामर्थवत्त्वेव नास्तीति कातन्त्र टीका ।

१२। सित्यादिः क्तिः। (सित्यादिः १।, क्तिः १।)

स्यादिस्त्यादिश्च क्तिसंज्ञः स्यात्।

सुखमिच्छति, शत्रुं द्वेष्टीत्यादौ गुण-विशेष-समवायादीनां क्रियात्वमेवेति शाब्दिकाः प्राहुः (१)। भूसत्तायाम् अस भुवीत्युक्ते विवरणार्थकथने अन्योन्याश्रयो न दोषः। यद्यपि विकल्पे वा, विशेषे वि, आङ् च अवधारणे, इत्यादीनां क्रियार्थत्वं, विकल्पते इत्यादिप्रयोगात्, तथापि वादीनां विकल्पाद्यर्थद्योतकत्वान्न धुसंज्ञेति। जॄ-श्वि-प्रभृतीनां सौत्राणां गणे पाठाभावेऽपि धुअधिकारे पाठादेव,धुसंज्ञा। दशगणा हि, भ्वाद्यदादि-जुहोत्यादि-दिवादि-स्वादयः स्मृताः। तुदुधादी तनादिश्च क्रीचुरादी इमे दश। चुरादेर्ञेरन्तत्वादेव धुत्वे सिद्धे विकल्पितञेरन्तानां ञेरभावपक्षे धुत्वार्थोऽत्र पाठः। पूर्व्वाचार्य्यकृतधातुपाठाभिप्रायेणेद सूत्रितम्, अन्यथा स्वकृतगणक्रमेण जॄ-श्वि-स्तन्भु-विपेत्यादीनाम् ॠदित्त्वादेव ङे सिद्धे पृथग्विधानमनर्थकं स्यात्। धातुरिति परे।

१२। सित्यादिः। सिश्च तिश्च तौ सितौ तावादौ यस्य स सित्यादिः। तद्गुणसंविज्ञानहः। द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसंबध्नातीति न्यायादाह स्यादिस्त्यादिश्चेति। स्यादय एकविंशतिः त्यादयः साशीतिशतसंख्यका वक्ष्यन्ते। विभक्तिरिति परे।

(१) श्वेतते मेघ इत्यादौ श्वितप्रभृतीनां गुणादिवाचकत्वेऽपि गणपाठात् धातुत्वमिति दर्शितम्। एवं गडि वदनैकदेशे, द्रव्येऽपि वर्त्तमानस्य गण्डेर्धातुत्वं,

१३। कदव्यान्येकद्विबहुष्वेकशः।

( कदव्यानि १।।।, एकद्विबहुषु ७।।।, एकशः ।१।।। )

त्रेरेकैकं वचनं क्रमात् क-द-व्य-संज्ञं स्यात्, तानि च क्रमादेक-द्वि बहुष्वर्थेषु प्रयुज्यन्ते।

---

१३। कद। एकम् एकम् एकशः वीप्सायां शसू। एकशब्दस्य ससम्बन्धिकत्वात् (१) त्रिं विपरिणम्याह त्रेरिति। अर्थेष्विति। अर्थशब्देन सित्याद्योरर्थो गृह्यन्ते। तेन रामः, कृष्णः, देवैर्गम्यते स्वर्गं इत्यादौ लिङ्भ्यां लिकर्त्राद्योरेकत्वद्वित्वबहुत्वविवक्षायां कदव्यानि भवन्तीत्यर्थः। यद्यपि कदव्यमेकद्विबहुष्वेकशः इति सूत्रिते सिद्धे व्यनिर्देशः क्वचित् व्यभिचारार्थः। तथाहि, विंशत्यादेरनावृत्तौ व्ये कम्। विंशत्यादिपरार्द्धपर्यन्तेभ्यो व्ये कं स्यादनावृत्तौ। एकोनविंशतिः शूराः, विंशतिः शैलवासिनां, परार्द्धमणवः। अनावृत्तौ किं, द्वे शते शूराणां, द्वे विंशती घटानामित्यादि। तथाच शतैस्तमक्ष्णामनिमेषवृत्तिभिरिति रघुः। तिष्यपुनर्व्वसुभ्यां भे चे दम्। तिष्य एकः, पुनर्व्वसू द्वौ, एभ्यो नक्षत्रे चे व्ये दं स्यात्। तिष्यश्च पुनर्व्वसू च तिष्यपुनर्व्वसू दृश्येते। तिष्यार्थग्रहणात् पुष्यपुनर्व्वसू सिद्धपुनर्व्वसू इत्यपि। तिष्य-

---

तेन गरुड इत्यपि सिद्धमिति कातन्त्रपञ्जी। गडि गण्डे इति कविकल्पद्रुमः। "यत्र द्रव्यनिर्देशस्तत्र तच्छिक्रियाविशेष उपलक्ष्यते इति मैत्रेयवोपदेवौ। केचित्तु गरुड इति शब्दस्य व्युत्पत्त्यर्थमेवायं धातुर्मन्तव्यो नान्यस्यान्यत्र प्रयोग इत्याहु"रिति तट्टीकायां दुर्गादासः।

(१) सम्बन्धिसापेक्षत्वात्।

पुनर्व्वस्वोरिति किं, राधानुराधाः (१)। मे किं, तिष्ये जातः पुनर्व्वस्वोर्जातौ इति जातार्थ-त्य-लुकि तिष्यश्च पुनर्व्वसू च ते तिष्यपुनर्व्वसवः। चे किं, यस्तिष्यः स एव पुनर्व्वसू येषां ते तिष्य-पुनर्व्वसवः, ये दृष्टिदोषेण विपर्य्ययेण पश्यन्ति इत्यर्थः। व्वे किं, एकत्वे माभूत्, तेन तिष्यपुनर्व्वसु इति (२)। सर्व्वो हि द्वन्द्वो विभाषयैकवद्भवति इत्यस्य ज्ञापकमिति। जात्यर्थादसंख्यया व्वं वा क्ते। जात्यभिधेये गम्यमाने क्ते व्वं वा स्यात्, न तु संख्यया योगे। सम्पन्नो यवः सम्पन्ना यवाः, गौरियं गाव इमा इत्यादि। सम्पन्नादेर्व्वं जातिवाचिविशेषणत्वात्। (३) वस्तुधर्म्मस्वरूपस्य योऽर्थः स्यात् परिचायकः। सा जातिराकृतिर्गम्या उपदेशादपि क्वचित्। असंख्यया किं, एको व्रीहिः। क्ते किं, व्रीहियवौ। अर्थेति किं, काश्यपस्य प्रतिकृतिः काश्यपः,(४) जातीति किं,देवदत्तो यज्ञदत्तः। लेगौरवे। लेगौरवे गम्यमाने क्ते व्वं वा स्यात्। त्वं गुरुः यूयं गुरवः महाशयः महाशया इत्यादि। अविशेषणास्मदो द्वे च। अविशेषण-स्यास्मदः क्ते द्वे च व्वं स्यात् वा। अहं ब्रवीमि वयं ब्रूमः, आवां

---

(१) राधे विशाखे द्वे अनुराधा. अथ चतस्रो वा, तासां द्वन्द्वे बहुत्वमेव।

(२) अत्र समाहारद्वन्द्वः।

(३) जातिमाह्वस्तुधर्म्मेति।

(४) यद्यपि गोत्वस्य चरणैः सहेत्युक्तेरस्य जातित्वमस्त्येव तथापि नात्र जात्यभिधानं चिकीर्षितं अतएव "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्या"-मिति पाणिनि (१।२।५८)। अत्र आख्यायामिति किं काश्यपप्रतिकृतिः काश्यप। भवत्ययं जातिशब्दो न त्वनेन जातिराख्यायते। किं तर्हि? प्रतिकृति-रिति। काशिका।

१४ । त्र्यन्तान्यौ दली । (त्र्यन्तान्यौ १॥, द-ली १॥)

त्र्यन्तशब्दो दसंज्ञः स्यात्, अन्यस्तु लिसंज्ञः ।

---

ब्रूवः वयं ब्रूमः । अविशेषणेति किं, अहं पटुर्ब्रवीमि । वयमप्रगल्भमनसः इति तु विशेषणविशेष्यभावस्य कामचारात् अस्मद एव विशेषणत्वम् । यदा तु अस्मद एव विशेष्यत्वं तदा न स्यात् । फल्गुनीप्रोष्ठपदाभ्यो भे द्वे । फल्गुनीभ्यां प्रोष्ठपदाभ्याञ्च द्वे व्वं वा स्यात् नक्षत्रे । पूर्व्वे फल्गुन्यौ पूर्व्वाः फल्गुन्यः ; पूर्व्वे प्रोष्ठपदे पूर्व्वाः प्रोष्ठपदाः । प्रोष्ठपदाशब्देन भाद्रपदाशब्दस्यापि ग्रहणम् । भे किं, फल्गुन्यौ माणविके । वर्षादेः क्वद्वयोर्व्वा तु वल्कजादेः । वर्षादेः क्वो द्वे च व्वं नित्यं स्यात् वल्कजादेस्तु वा ।

वर्षा दारा गृहा लाजाः सिकताश्च जलौकसः ।
बहुलाः कृत्तिका आपो वस्नान्ति तु दशा मघाः ।
अविज्ञातार्थकाः सर्व्वे यथा तव सुताः कति ।
वल्कजा वल्कजयाप्सरसश्चैवाप्सराः समा ।
समाः कविभिरुक्ताः सुमनसः सुमना अपि ॥

१४ । त्र्यन्तान्यौ । त्रिरन्ते यस्य स त्र्यन्तः, त्र्यन्तश्च अन्यश्च तौ, दश्च लिश्च तौ । त्र्यन्तदेन लुप्तत्रिकस्यापि ग्रहणं, न ट तसाविति ज्ञापकात् । लिङ्गसंज्ञायाः प्राक् धु-त्रि-दसंज्ञाविधानात् धु-त्रि-दभिन्नस्य लिङ्गसंज्ञा इत्यर्थः (१) । तेन हन्धो दिप् मम्, अहन्

---

(१) चतुष्करकस्थे ॥ धातुविभक्त्योरपि लिङ्गत्वं स्यात्, यथा धव मानौ वा मम्, चे जषि वा इत्यादि ।

## १५ । लुपि न सन्ध्याद्यविधी ।

( लुपि ७।, न ।१।, सन्ध्याद्यविधी १॥ )

लुबिति लोपे कृते यो लुप्तस्तदाद्यन्तयोः सन्धिर्न स्यात्, तदाद्यस्य च यो विधिः स च न स्यात् ।

इत्यत्र न नस्य लुप्, (१) भवतीत्यादेर्न स्याद्युत्पत्तिश्च । हरिहरौ पीताम्बरः इत्यादौ समुदितस्यावयवस्य त्र्यन्तत्वेऽपि समुदितस्य लिसंज्ञा तस्यात्त्र्यन्तत्वात् । अन्यशब्देन इहार्थवदनर्थवतोर्ग्रहणं, तेन रामो गच्छ स्नानं प्र परा च वा इत्यादीनां लित्वमिति । न चार्थवद्ग्रहणे नानर्थकस्येति परिभाषया अनर्थवतो न ग्रहण-मिति वाच्य, परिभाषायाः काचित्कत्वात् । एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । कूर्मलोमपटाच्छन्नः शशशृङ्गधनुर्द्धर इत्यादौ तु समुदायस्य वाच्याप्रसिद्धावपि लित्व, खण्डशः प्रसिद्धेः । पृथक् सग्रहणादिति परे (२) । दं पदं, लिलिङ्गम् (३) ।

१५ । लुपि । आदौ भवः आद्यः, अथासौ आद्यश्चेति आद्यः,(४) आदेर आद्यः.(५) अ आद्यो यस्य तदाद्यं, सामान्यत्वात्

(१) तत्र प्रकृतिमान्तलिङ्गस्य नस्य लुब्विधानात् ।

(२) पाणिनीये "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" १।२।४५। इति प्रातिपदिकस्य प्रथमलक्षणम् । "कृत्तद्धितसमासाश्च" १।२।४६। इति द्वितीय-लक्षणम् । तत्र समासस्य पृथक् ग्रहणात् वन्ध्यासुतादिशब्दानां प्रातिपदिकत्व-मित्युक्तम् ।

(३) प्रातिपदिकमिति परे ।

(४) आदिरवर्ण इत्यर्थः ।

(५) अत्र आदेरिति पञ्चम्यन्तं, तेन सुप्तस्य आदिवर्णादुत्तरो योऽवर्णः स आद्य इत्यर्थः । अतएव भो अत्र इत्यादौ नाकारलोपः ।

क्लीवत्वं, पश्चात् आद्यश्च आद्यश्च आद्यश्च आद्यं, क्लीवाक्लीवयोः क्लीवं वा तु क्रममिति क्रम्। तस्य विधिराद्यविधिः, ततः सन्धिश्च आद्यविधिश्च तौ (१)। लुबिति वर्णानामदर्शनं विच्छेद इति यावत्। यद्यपि विष्णु इति, श्रिया एति, क इह, देवा अत्र, भो अत्र, राजभ्यां, राजभिरित्यादावुक्तरूपेण (२) सिध्यति तथापि सन्धिग्रहणं स्यादिलुपि (३) सन्धिज्ञापकमिति। अतएवाग्रे सन्धिग्रहणात् सन्धिलुप्येव न सन्धिरिति वक्ष्यति। शार्ङ्गिंषु विपक्षु इत्यादौ षत्वं स्यादेव अनवर्णाश्रितत्वात्। मघवान् इत्यादौ तु नो लुप् फेधाविति प्रकृतिनाम्नस्यैव ग्रहणात् न नो लुप्। लुपि युक्तवत् लिङ्गं संख्या च (४)। लुबिति यो लुप्तस्तदर्थे युक्तवत् प्रकृतिवत् लिङ्गसंख्ये स्याताम्। अङ्गस्यापत्यानि अङ्गास्तेषां निवास इत्यर्थे

(१) सन्धिशब्देनेह सन्ध्यध्यायसूत्रविहितकार्यमिति बोध्यम्। आद्यविधिरित्यत्र आदिशब्दस्य साकाङ्क्षत्वात् सर्वत्र लुप्तस्येत्यनेनान्वयः। तेन लुप्तस्य य आदिवर्णस्तस्य विधिर्न स्यात्। अतएव राजभ्यामित्यादौ आत्विमभवीति नाकारः। एवं वल्गनामचष्टे इति औ डिलोपे क्विपि अन्त्यलोपे वल्न् इति स्थिते सो स्यान्तस्यादीति रेफस्य लुपि लुप्तस्यादिवर्णत्वेन नकारस्य पुङ् इति ङ् न स्यात् तेन वल इत्येव। तथा लुप्तस्य य आदिवर्णस्तन्निमित्तकोऽपि विधिर्न स्यात्। तेन राजभिरित्यादौ न ऐस्। गङ्गे अत्र इत्यादौ अदेऽमौ इत्येकारस्य सन्धिनिषेधे तन्निमित्तकस्याकारलोपस्यापि निषेधदर्शनेन सन्धिनिषेधप्रसङ्गे आदिविधेर्निषेधेनैव तन्निमित्तकविधेर्निषेधस्यापि प्राप्तत्वात् भो अत्र इत्यादौ एडोऽत इति नाकारलोप इति दुर्गादासमतम्।

(२) आद्यविधिनिषेधेन।

(३) स्याद्यन्तप्रकरणोक्तसूत्रेण लुपीत्यर्थः।

(४) लुपशब्देन लोपे सति यथा सन्ध्याद्यविधिनिषेधस्तथा क्वचित् तद्धितप्रत्ययानां लुपि तदन्तशब्दानां प्रकृतिवल्लिङ्गवचने स्यातामिति परेषां मतम्, भेदश्चात्र लुपीति।

ण्यस्तस्य लुपि अङ्गा जनपदः। एवं पञ्चालाः पुण्ड्राः कुरवः। लुपि किं, लवणेः संस्कृतः, लवणालुक्, लवणः सूपः (१)। ट-भेदात् क्वचित् संख्यैव प्रकृतिवत्। यथा खलतिकस्य गिरेरदूरभवानि वनानि खलतिकं वनानि (२), वरणादित्वात् (३) ण्यस्य लुप्। क्वचिल्लिङ्ग प्रकृतिवत् यथा—हरीतक्याः फलानि, हरीतक्यः फलानि, विकारे फले लुप्। से त्वविषयस्योत्तरदस्यैव युक्तवद्भाव इति भाष्यं, मथुरा च पञ्चालाश्च मथुरापञ्चालाः। त्वविषयस्योत्तर-दस्यैवेति किं, पञ्चालमथुरे। एकस्मिन्नाद्यन्तवद्व्यपदेशिवच्च। (४)

---

(१) लवणाल्लुगिति सूत्रेण लुकि कृते लुपकार्य्याभावात्पूर्व्वोक्तं कार्य्यमिति।

(२) अत्र खलतिकशब्दस्य पुंस्त्वं न, केवलं वचनमेव।

(३) वरणादेश। वरणादेश्चातुरर्थिकेषु उत्पन्नस्य ण्यस्य लुप् स्यादिति तद्धित-टीकायां चातुरर्थिकप्रकरणे मध्यतोऽयुक्तं वरणादित्वादिति।

(४) इदानीमाद्यन्तशब्दार्थं निर्व्वक्ति एकस्मिन्निति। उक्तञ्च, आद्यन्तवदेक-स्मिन्।१।१।२१। इति पाणिनीयसूत्रटीकायां तत्त्वबोधिन्यां "सत्यस्मिन् यस्य पूर्व्वो नास्ति स आदि। सत्यस्मिन् यस्य परो नास्ति सोऽन्त इति लोके प्रसिद्धं, तदुभयमेकस्मिन्नसहाये न सम्भवतीति तत्र आद्यन्तव्यपदिष्टानि कार्य्याणि न स्युरतोऽयमतिदेश' इति। अस्यायमाशयः—यत्र द्वित्रा वर्णा सन्ति तत्र यस्य पूर्व्वो नास्ति स एवाद्य, यस्य च परो नास्ति स एवान्त्य इति यत्तु युज्यते लोकप्रसिद्धं। यत्र तु एक एव वर्णस्तत्र कथमाद्यन्तव्यवहार इत्याशङ्कायाम् असहाये एकस्मिन् वर्णेऽपि आद्यन्तवत् कार्य्यमतिदिश्यते आरोप्यते। आद्यन्त-वदिति आद्यन्तयोरिवेति सप्तम्यन्ताद्वत्प्रत्ययः। आद्यन्तनिर्देशेन यत्कार्य्यं विहितं तदत्रापि भविष्यतीत्यर्थः। अतएव औप तैङ इत्यादौ सुप् तिङ् शब्दाभ्यां णे कृते लोकप्रसिद्धनिरुक्तादिलक्षणविरहितत्वेऽपि ञ्णिरादाव इति वृद्धिः स्यात्। आययतीति इनुभोऔ ञ्चिस्त्वेति वृद्धिः। एवमन्यत्र। व्यपदेशिवच्चेति। अस्यायमर्थः—"विशिष्टोऽपदेशो व्यपदेश मुख्यो व्यवहार सोऽस्यास्तीति व्यपदेशी मुख्य इति यावत् तेन तुल्यं मिति तत्त्वबोधिनी।

१६। चादिर्गिर्निः। (चादिः १, गिः १, निः १)।
चादिर्गणो गिश्च निसंज्ञः स्यात्।

---

एकस्मिन्नसहाये विषये आद्यन्तवत् कार्य्यमतिदिश्यते, व्यपदेशिवच्च। सीपः, तेङः, आदिवत्त्वादाद्यचो व्रिः। एवम् आययति इत्यादावन्तवत्त्वात् व्रिः। आर्थं ऋदन्तत्वात् घ्यण्। एवम् इः कामदेवः तस्मिन् ङौ अन्तवत्त्वाड्डौ। व्यपदेशिवदिति, व्यपदेश्यस्तादूप्येण कथनं विद्यते यस्य स व्यपदेशी तद्वत्, इ एव (१) यथा—एकोऽच् यस्य स एकाच् तस्मादिव स्यात् अवान् इत्यादौ।

१६। चादिः। च आदिर्यस्य स चादिः तद्गुणसंविज्ञान-हीन चस्यापि निसंज्ञा। चादिर्यथा। च श्रौषट् वषट् स्वधा सह समं साकं पुरा हन्त किं वा तु स्वित् यदिवाऽथवा चण चन

---

(१) भिन्नाश्चैकार्थेति सूत्रस्य टीकायां “समस्यमानपदार्थोऽपि अन्यपदार्थः स्यात्, व्यपदेश्य-व्यपदेशिवद्भावात्। यथा—‘शोभनशरीरः शिवाश्रय’, तमार्हन्-शालमस्तुर्थं एवं व्युत्पत्ता तर्कवागीशेन व्यपदेश्य—व्यपदेशिवद्भावो बहुव्रीहिसमास एवेति दर्शितम्, तत्र यत्र बहुव्रीहौ समस्यमानपदार्थान्यपदार्थयोरभेदावगम-स्तत्रैव व्यपदेशिवद्भाव इति निष्कृष्टार्थः।

उक्तञ्च कार्त्तिकेयसिद्धान्तेन अन्याजादिरिति सूत्रटीकायाम्—“अन्यपदार्थ-समस्यमानपदार्थयोरेकार्थप्रतिपादकत्वं कुर्वन्नपि बहुव्रीहिरुभयपदस्य प्राधान्यम्; यथा—शोभनशरीरः शिवाश्रयः, तमार्हन्शालमस्तुर्थं इत्यादौ अवयवावयवि-सम्बन्धेनान्यपदार्थाभावादेकार्थप्रतिपादकत्वम्। अतएव अन्यज्ञता बध्वाशोपक्षमा-रात्मव इति सप्तपूरणदा उदाहरणानन्तरं अल्पाश्चपक्षमीक पश्च इति प्रत्युदाहृत्य रात्रि पूरण्योराश्च्या चेति पुर्वोक्त सुव्यवस्थितमुक्त मिति।

प्याड्ड हंहो नहि। किंवा वै नहिकं कुवित् पशु सुकं हाहेति हे है नवा तावदाढ़मलं कच्चेतिथमहं सत्यं हिकं वाव रे। नूनं पर्य्यनुकं इहा ह नकिरा श्रखत् किमु प्राड्यो वेलायामुत हुं तथाहि चिदरे सवा धगाहो श्रथो। मात्रायां वद्दो कु हो वशमये नोचेदयि प्रत्यले खाहा हाह धिगास्तु वौषड्हहावस्थं सहामास्म चेत्। संवत्तयाच शीघ्रं खम् मा माङ् मा किनकिम् सु ना। ननु आहोस्विदाहोस्वित् 'सार्द्धं कचि-दतिस्वपि। यावत् शंसु न चेदेव होही यद्यपि ह्रं स्रते श्रोमेवं थाट् स्वकं नोचेत् व्यच-क्ति-प्रतिरूपकाः (१)॥ श्रौषट् वौषट् स्वधा स्वाहा अलम् एतेषां पृथक् पाठः द्रव्ययोगार्थः (२)। कश्चित् स्वाहा सह समं साकं सार्द्धमलमिति स्वरादौ, स्रते उच्चैर्नीचैः शनैरित्यपि चादावाह। परि आङ् अप अनु अति सु अपि अधि प्रति उप इत्येषां भागमर्य्यादाद्यर्थद्योतकत्वात् द्रव्ययोगाच्च पाठः। गिप्रतिरूपकाः प्रदत्तमवदत्तमित्यादि। अच्प्रतिरूपकाः अ इ उ ऋ ऌ ए ओ ऐ औ इति। त्यन्तप्रतिरूपकाः वनै ब्रूहि अस्ति खलै मन्ये इत्यादि। दभेदात् द्रव्यवृत्तिचादीनां न नित्यं, तेन पशुः पुरुषः स्वाहा अग्नायी, तथाच स्वाहयेव हविर्भुजमिति रघुः। निपातानां द्योतकत्वं न तु वाचकत्वं, (३) तेन रामस्य

---

(१) एते चादयः साकल्येन परिसंख्यातुमशक्याः। यदुक्तं "इयन्त इति संख्यानं निपातानां न विद्यते। प्रयोजनवशादेते निपात्यन्ते पदे पदे" इति।

(२) चादयोऽसत्त्वे १।४।५७। इति पाणिनिः। असत्त्वार्थे चादयो निपातसंज्ञाः स्युरिति वृत्तिः। लिङ्गसंख्यान्वितं द्रव्यमिति तत्त्वबोधिनी।

(३) 'निपाताश्चादयो ज्ञेया उपसर्गाश्च प्रादयः'। द्योतकत्वात् क्रियायोगे

## १७। णमितोऽन्त्याचोऽन्तेऽन्त्यस्यादौ।

( णम्-इतः १॥, अन्त्याचः ५।, अन्ते ७।, अन्त्यस्य ६।, आदौ ७। )।

णित् यस्योच्यते तस्यान्त्यादचः परः, निदन्ते, ङिदन्त्यस्य स्थाने, मिदादौ स्यात्।

## १८। परस्त्यः। (परः १।, त्यः १।)।

प्रकृतेः परो यः स त्यसंज्ञः स्यात्।

---

सदृशः देवस्य समुच्चय इतिवत् रामो न, देवस इत्यादौ षी न स्यात्, नञादेः सादृश्यादिद्योतकत्वात्।

१७। णमितः। णम् प्रत्याहारः, ण न ङ म इति इत् येषां ते णमितः। अन्ते भवमन्त्यम्, अन्त्यश्च तत् अचेति अन्त्याच् तस्मात् अन्त्याचः, णिद्यस्येति षीनिर्देशात् यस्य णिन्निङ्मि-द्विधानं तस्यायं नियमः। यथा पयांसि पुंस्कोकिलः पुमान् रामाणाम् इत्यादि। षीनिर्देशनियमात् ग्राहो पच इत्यादौ न स्यात्।

१८। परः। परशब्दस्य सम्बन्धिकत्वात् प्रकृतिमुप-स्थापयतीत्यत आह प्रकृतेरिति(१)। ननु वहुगर्त्तः वहुपटुरित्यादौ

---

मोचादयस्तथा इमे' इत्युक्तम्। निपाता अपि द्योतका एव न तु वाचकाः, तेषां वाचकत्वे तु घटस्य सम्बन्ध इत्यत्र यथा सम्बन्धे षष्ठी तथा घटच इत्यत्रापि षष्ठ्यापत्तिः। इष्टापत्तौ तु घटशब्देनैव समुच्चया समुच्चयप्रतिपादनसामर्थ्य तद्द्योतकत्वात् षष्ठीति दुर्गादासः।

(१) प्रक्रियात् प्रथमं क्रियतेऽनयाविति प्रकृतिः, लिङ्गं धातुश्च। प्रतीयते येनार्थः स प्रत्यय इति व्युत्पत्तिरिति वाक्यमर्थाति।

१९ । अं अः नुवी । (अं अः ।१॥, नु वी १॥) ।
अकार उच्चारणार्थः, बिन्दुद्विबिन्दुमात्रौ वर्णौ क्रमान्नुविसंज्ञौ स्तः ।

२० । क+पौ*m* मून्यौ । (क+पौ*m*१॥,मून्यौ१॥) ।
कपावुच्चारणार्थौ, वज्रगजकुम्भाकृती वर्णौ क्रमान्मूनीसंज्ञौ स्तः ।

---

बहोरप्रत्ययत्वप्रसङ्गस्तस्मिन् सति बहुगर्त्तं इत्यत्र गर्त्तोत्तरादित्यनेन ईये कृते बहुगर्त्तीय इत्यनिष्टं स्यात् इति चेन्न, प्रकृतेः पर इति दिग्लक्षणा पो, निर्द्देशविहितोपलक्षणत्वात्(१) सेवंहुः प्रागित्यत्र प्राक्शब्दयोगे पौविधानात् तस्य त्यत्वमिति दिक् ।

१९ । अं अः । अं अः इति लुप्तप्रथमैकवचनम्, अं च अश्च तौ, नुश्च विश्च तौ । उच्चारणार्थं इति प्रयोजनान्तराभावात् । नुरनुस्वारः विर्विसर्ग इति परे ।

२० । क+पौ*m* । क+श्च प*m* श्च तौ । यद्यपि कखपफयोर्मून्यावित्यत्र मून्योः स्थाने क+पा*m* विति कृते हरि+काम्यः कृष्ण *m* पाता इत्यादि सिध्यति, तथापि मूनीनुवीनां षत्वविधौ स्वरता स्वरसन्धौ व्यञ्जनता इत्यस्य ज्ञापनार्थं पृथक् संज्ञाविधानमिति । तेन उर+कायेण उर *m* पेण इत्यादौ षत्वम् । हरि+काम्यः हरि*m* पाता इत्यादौ न षत्वम् ।

---

(१) दिग्लक्षणा पौति—सामान्यतो दिग्वाचकशब्दयोगे पञ्चमीत्यर्थः । निर्द्देशेति—यत्र यथा निर्द्देशेन यद्विहितं तस्य उपलक्षणत्वात् प्रतिपादकत्वात् परशब्दस्येति शेषः । तेन प्रकृतेः परवत् कचिन्निर्द्देशानुसारेण पूर्व्वोऽपि प्रत्ययसंज्ञः स्यादित्यर्थः ।

२१। हो भस्। (हः १।, भस् ।१।)।

हकारो भस्संज्ञः स्यात्।

इति संज्ञापादः।

---

तथाचाहुः शिक्षाकाराः—अयोगवाहा अनुस्वारविसर्ज्जनीयजिह्वामूलीयोपध्मानीयाः, एषां सामान्येनोपदेशः स्वरता णत्वविधौ व्यञ्जनता परगमनार्थमिति। मूर्जिह्वामूलीयः नीरुपाध्मानीय इति परे।

२१। होभस्। भस्प्रत्याहारेण यद् विधेयं तद्धकारेणापि भविष्यति इति, तेन वृंहितमित्यादौ हेऽपि नुः। यद्यपि शषसान्ते हकारोपदेशात् अर्हेण अघुचदित्यादि सिध्यति, तथापि एह प्रत्याहारस्यान्त्यहकारसन्देहनिरासार्थमिदमिति कश्चिदित्येके। वस्तुतस्तु एकस्थान प्रयत्न विशिष्ट वर्णद्वयाभाव ज्ञापनाय हस्य पृथगुपादानमिति(१)। यद्यपि चपोदिताऽकानिता णः, लुपि न मन्ध्याद्यविधौ, णमितोऽन्त्याचोऽन्तेऽन्त्यस्यादाविति सूत्रितं, तथापि सञ्ज्ञायाः प्राधान्यात् संज्ञापादः। पादोहि एकार्थावच्छिन्नसूत्रसमूहः।

अथ रामो रामाः भवति भवतः इत्यादौ सन्धेरुपयुक्तत्वात् सर्व्वशामादौ सन्धिं निरूपयति। सन्धिस्तु संहिता, संहिता तु परः सन्निकर्षः, स चार्द्धमात्रा-कालातिरिक्त-कालानुच्चरितत्वे सत्युच्चार इति। यदुक्तं, संहितैकपदे नित्या नित्या धातूपसर्गयोः। सूत्रेष्वपि तथा नित्या सेवान्यत्र विभाषया इति।

---

(१) हो भस् इति सूत्रेणेति शेषः।

## अथ सन्धिः ।

### २२ । सह र्णे घं: । ( सह ।१।, र्णे ७, घं: १। ) ।

र्णे परे पूर्व्वस्य र्णेन सह घं: स्यात् ।

मुरारिः, लक्ष्मीशः, विष्णूत्सवः, धातॄद्धिः, शक्लृदन्तः, होतॄकारः ।

---

२२। सह। लुप्तप्रोक्तं द, तस्मिन्निति सौनिर्द्दिष्टे पूर्व्वस्येति(१) नियमादाह पूर्व्वस्येति। सहशब्दस्य साकाङ्क्षत्वात् प्रयन्तर्णस्य विभक्तिविपरिणामादाह र्णेनेति। एज्भसोः र्णवेयोरभावात् अक एव घं: । मुरारिरित्यादि, मुरनाम्नोऽसुरस्यारिः, लक्ष्म्या ईशः, विष्णोरुत्सवः, धातुः ऋद्धिः, शक्लृनामा कश्चित् शक्लृश्चासावॢदन्तश्चेति, होतुश्चारित ऌकार इति वाक्य, शाकपार्थिवादित्वान्मध्यपदस्य लोपः। शक्लृदन्त इति नेच्छन्ति परे(२)। चैत्रेण सह मैत्रः स्थूलः, पुत्रेण सह आगतः पिता इत्यादौ सहशब्दस्य पृथक्त्वप्रतीतावपि वालुकाभिः सह मृत्पिण्डं घटं करोति इत्यादिवत् अत्रैकत्वप्रतीतिरिति, लाघवात्। अतएव मुरारिरित्यादौ एक एव घं: ॥

---

(१) नियमसूत्रमयम्—तस्मिन्निति निर्द्दिष्टे पूर्व्वस्य (१।१।६६) इति पाणिनिसूत्रम्। सप्तमीनिर्द्देशेन विधीयमानं कार्य्यं वर्णान्तरेणाव्यवहितस्य पूर्व्वस्य बोध्यमिति वृत्तिः।

(२) ऌकारस्य दीर्घस्य प्रयोगो नास्तीति पाणिनिक्रमदीश्वरादिमतं दुर्गादासः।

२३। आदिगैचोर्णुत्री। (आत् ५।, इक्-एचोः ६॥, णुत्री १॥)।

अवर्णात् परयोरिगैचोरवर्णेन सह क्रमात् णुत्री स्तः।
हृषीकेशः, दामोदरः। सन्धिग्रहणात् सन्धिलुप्येव न सन्धिः।
माधवर्द्धिः, शिवल्कारः, कृष्णैकत्वं, मुकुन्दौकः, कृष्णैक्यं, भवौपधम्।

२४। गैर्धौरनेधिन एङ्क्टकोः।

(गैः ६।, धौः ६।, अन्-एध्-इनः ६।, एङ्-क्टकोः ६॥)।

---

२३। आत्। आदिति पौ-क्षान्तं दं, अकाऽनिता र्यौ गृह्यते इति। तस्मादित्युत्तरस्येति (१) नियमादाह अवर्णात् परयोरिति। हृषीकेश इति, हृषीकाणि इन्द्रियाणि तेषामीशः। दाम रज्जुः उदरे यस्य इति वाक्यम्। सन्धिग्रहणादिति। सन्धिग्रहणात् लुपि नित्यादावितिशेषः, उक्तरूपेण(२) राजभ्यां राजभिः श्रिया एति भो अत्र इत्यादौ सिद्धे, सन्धिलुपि सन्धिप्रकरणीयसूत्रकृतलुपि न सन्धिः, एवकारस्य व्यवच्छेदात् (३) स्यादिलुपि सन्धिरित्यर्थः। माधवस्य ऋद्धिः, शिवेनोच्चारित ऌकारः, कृष्णस्य एकत्वं, मुकुन्दस्य ओकः स्थानं, कृष्णस्य ऐक्यं, भवस्य औपधमिति वाक्यम्। इगैचोरिति पौनिर्देशात् तत्समादेशः।

---

(१) नियमदायम्—तस्मादित्युत्तरस्य (१।१।६७) इति पाणिनिसूत्रम्। पञ्चमीनिर्द्देशेन क्रियमाणं कार्यं वर्णान्तरेणाव्यवहितस्य परस्य ज्ञेयमिति वृत्तिः।

(२) तत्र स्यादिविधिनिषेधेन।

(३) अन्ययोगव्यवच्छेदादित्यर्थः।

गेरवर्णात् परयोरेधिनवर्जितस्य धोरेङृकौरवर्णेन सह क्रमात् णवौ स्तः ।

प्रेजते, परोखति, अपार्च्छति । अनेधिनः किं—उपैधते, अवैति ।

---

२४ । गेर्धोः । एध् च इन् च तौ स्वरूपौ, तयोः समाहारः, न एधिन् अनेधिन् तस्य, एङ् च ऋक् च तौ तयोः, आत् सह वेत्यनुवर्त्तते । एधङ वृद्धौ, इन ल गतौ एतदुभयभिन्नस्य धोरवयवभूतयोरेङृकोस्तद्गेरवर्णात् (१) परयोरित्यर्थः, तेन प्रगत एजकः प्रैजकः इत्यादौ न स्यात् गतसमभिव्याहृतस्य प्रादेरेजतीत्यादेरगित्वात् (२)। भ्वादिपाठे ऌकाराभावात् परलोदाहरिष्यति ।

---

(१) तद्गेरिति. तस्य धातोः पूर्व्ववर्त्तिनो गेरित्यर्थः ।

(२) उक्तञ्च गोयीचन्द्रेण—धात्वन्तरोपसर्गस्य सम्बन्धिनोऽवर्णात् परयोरेङृकोः गुणवृद्धी न स्तः । प्रगत एजको यस्मात् इति वाक्ये प्रैजक इत्यत्र प्र उपसर्गो गमेरेव न त्वेजेरिति । यदा तु प्रकृष्टार्थेन प्रशब्देन सह प्रादिसमासस्तदापि प्रैजक इति । प्रादीनां क्रियायोग एवोपसर्गत्वं, अत्र तु कर्त्तृयोगेनानुपसर्गत्वादिति ।

कार्त्तिकेयसिद्धान्तोऽप्याह—

अत्र निरुपसर्गं "प्रादीनामुपसर्गत्वं धातुयोगे च सर्व्वदा । अव्ययत्वं क्रियायोगे कथितः पूर्व्वसूरिभि"रिति न्यायात् धातुयोगिप्रादीनां नित्यमभिहितं तस्य पक्षत्वात् धातुसम्बन्धिनोरेङृकोः प्राप्तावपि गुणग्रहणं धात्वन्तरसम्बन्धिगेरवर्णेन सह अनेन गुणवृद्ध्यभावार्थम् । एतेन मध्यपदलोपसमासेऽप्यनधिकारः सूचितः, तेन प्रगता एजका यस्मात् स प्रैजक इत्यत्र मध्यपदस्य गतभागस्य लोपे तत्सम्बन्धिनः प्रशब्दस्य एजधातोः सम्बन्धाभावान्नवृद्धिरिति । ननु प्रगत इति क्तान्तं नाम, एजक इति अकान्तं नाम तद्योगिप्रादेर्गित्वं कथं सम्भवतीति चेत् सत्यं, प्राक् प्राप्तधातुयोगप्रादेर्गित्वं पश्चात् अकान्तक्तान्तादिनामयोगे कथिध निवर्त्तते इत्यत्रान्यत्र प्रेप्य प्रेष्य इत्युदाहरणे प्रदर्शितत्वात् । न च तर्हि

२५ । लिधोर्वा । ( लिधोः ६।, वा ।१। ) ।

लिधोस्तु पूर्व्वोक्तं कार्य्यं वा स्यात्। प्रेकीयति प्रैकीयति, प्रोघीयति प्रौघीयति, प्रार्च्चीयति प्रर्च्चीयति, प्राल्कारीयति प्रल्कारीयति ।

---

२५ । लिधोः। आदौ लिः पश्चात् धुस्तस्य। सिद्धे सत्यारम्भो नियमार्थः(१) । अनेधिन इति नानुवर्त्तते । पूर्व्वोक्तरेन गिरवर्णात् परयोर्लिधोरेड्ऋकौरवर्णेन सह क्रमात् ऐऔ वा स्त इत्यर्थः । *एधिनो निवृत्तिं दर्शयति प्रैकीयति इत्यत्रगतौ च (२) एकः तं* इच्छति, कचोऽस्यादिति क्य च ई एकीय, धुसंज्ञातिवादयः, व्यस्येति प्रस्य समासः, एवमन्यत्र। प्रोढ्काम्यति प्रोढ्कारीयति इत्यादौ परत्वादवर्णलोपः(३) ।

---

धात्वर्थद्योतकानां प्रादीनां धात्वन्तरसम्बन्धित्वाङ्गीकारे प्रकृष्टं एजते प्रेजते इत्यादावपि क्तान्तरूपधातुयोगित्वे एजधात्वादिसम्बन्धाभावात् तत्संज्ञाया अविषय इति वाच्यम् । समस्यमानपदसम्बन्धिप्रादीनां तदर्थद्योतने पदभेदाभावात् मध्यपदलोपसमासात्तुपपत्तेः । प्रादीनां द्योतकत्वं आख्यातनिष्पन्नधातुयोगे ज्ञेयं, अतएव प्रकृष्टं एजते इत्यत्र प्रकृष्टार्थस्तु एजधातुना द्योत्यते, तेन धात्वन्तरत्वाभावादस्य विषय इति । ननु प्रकर्षं प्रतिषिध्यते इति न्यायात् समासनिष्पन्न-प्रैजक इत्यत्र नामसम्बन्धिन एङः सन्धिः कथं प्रतिषिध्यते इति चेन्मन्य, यद्यपि सन्धिर्नाम नाम इति प्रागभिहितं तथापि तेषां क्रियावाचकत्वात् क्वचित् धातुत्वं व्यवह्रियते, तेन भूस्योयोजननमरेऽर्कमित्यादौ भूस्य इत्यादीनां क्रियात्वेन व्यवहृतत्वात् अन्यत्रापि तथा चिन्त्यमिति ।

(१) लिधोर्विति नियमफलमित्यर्थः।

(२) औणादिकः क प्रत्ययः ।

(३) विप्रतिषेधे परं कार्य्यम् । (१।४।२) इति पाणिनिः । तुल्यबलविरोधे परं कार्य्यं स्यात् । इति वृत्तिः ।

२६ । लोपोऽस्योमाङोः । (लोपः १।, अस्य ६।, ओम्-आङोः ७॥)।

अवर्णस्य ओमाङोः परयोर्लोपः स्यात् ।

शिवायोन्नमः, शिवेहि, ब्रह्मोतं, राजर्षिः ।

स्थानिवदादेशः । द्वयोर्विभाषयोर्मध्ये विधिर्नित्यः ।

---

२६ । लोपः । ओम् च आङ् च तौ स्वरूपौ तयोः, पुनरस्योपादानं सहादिनिवृत्त्यर्थं, लोपपदोपादानात् एत्रीति निवृत्तम् । शिवायोन्नम इति लोपोऽप्यादेश उच्यते इति न्यायात् स्थानिवत्त्वेन अयां व्योरिति यकारस्य न लुप् । शिवेहि इति आङ्पूर्व्वादिनधोर्हि शपोलुक् शिध्योर्नित्यसापेक्षत्वात् आदौ आदिगेवोरिति एः पश्चादनेनाकारलोपः । ब्रह्मोतमिति आङ्पूर्व्व उङ् शब्दे तः(१) ब्रह्म वेदः तस्य आ सम्यक् प्रकारेण उतं उच्चारितमिति यावत् । राजर्षिरिति आ सम्यक् प्रकारेण ऋषिः अर्षिः राज्ञोऽर्षिः राजर्षिः(२) । स्थानिवदादेश इति । स्थानमस्यास्ति स्थानी पूर्व्वस्थितः, स्थानीव स्थानिवत्, आदिश्यते असौ आदेशः, परस्मिन् पूर्व्वविधावच इति शेषः(३) । तथा च परनिमित्तकपूर्व्वविधौ कर्त्तव्ये अचः स्थाने य आदेशः स स्थानिवत्, स्थानी यथा

---

(१) वेञ्धातो क्त उतमिति केचित् ।

(२) राजर्षिशब्दः प्रायश कर्म्मधारयनिष्पन्न एव प्रयुज्यते । इह तु षष्ठीतत्पुरुषोऽयमिति ।

(३) स्थानिवदादेश इत्यस्मिन्नर्थे परस्मिन् पूर्व्वविधावच इत्यंशोयोज्य इत्यर्थः ।

कार्य्याणां निमित्तं भवति तयादेशोपीत्यर्थः, तेन पिवति गणयति नातेहि इत्यादौ न णत्वबादयः स्युः। अतिदेशकार्य्यं क्वचित् न स्यात्, यथा—न तु द्वि र्घ यलोपेषु दान्त-चप्-जय् जमेषु च। झभेषु पङ्क्डोरेवं जिघ क्विजरोसु जिस्तथा(१)। एषु स्थानिवन्न स्यात्। संयन्ति इनो यादेशे मस्य नुः, न य स्थानिवत्। कथं किमुक्तं, यं दृष्ट्वा यस्योत्पत्तिः स तस्य सन्निपातः, सन्निपातविधिरनिमित्तं तद्विघाताय इति न्यायात् न नुः। दध्यत्र इत्यादौ इकोयलादेशे स्वादनचीति धस्य द्विः, न य स्थानिवत्। प्रतिदीव्न इत्यादौ प्रतिदिवन् शब्दस्य पोपरे सदान इत्यल्लोपे व्यंनच् तयोरिति घः, अल्लोपस्य न स्थानिवत्त्वं। यायावर इत्यत्र याधोर्यंङि यायायधोर्वरे इत्याल्लोप इत्यकारलोपे य्वोर्लोप इति यकारलोपः, यकारलोपो न स्थानिवत्। को स्त इत्यादौ लोपोऽस्यसोरित्यकारलोपो दान्तकार्य्ये यादेशे न स्थानिवत्। ओमाङोः स्थानिवत्वातिदेशादोमाङ्भिन्ने दान्ते यस्य विषयः। जक्षतुरित्यादौ यदधार्यमादेशे हनगमेत्युङलोपः झपझमोरिति चस्य क, उङलोपो न स्थानिवत्। अद्दि इत्यत्र धाधोर्ध्वे, गधोलुक्, द्वादिरिति द्विः, आदरोरित्याकारलोपः, झभासध्यति धेर्दस्य

(१) [illegible] द्विर्हल, वोरोर्ये, यलोप, दान्त इति [illegible] तत्र चार्थं [illegible] चप् जय् जम इति [illegible] एषु वर्णविधेषु आदेशो न स्थानिवत्। एवं झभेषु झभ् इति [illegible]। पङ् इति [illegible] द्विर्हलं। क्ड् इति कुक् [illegible] द्विर्हलः। एषु वर्णविधेषु [illegible] न स्थानिवत्। [illegible] [illegible] तद्विधौ [illegible] न स्थानिवत्। [illegible]

धः, पश्चात् प्रकृते घँस्य झप्झसोरिति जवे आकारलोपो न स्थानिवत्। गोन्ति इत्यत्र गोमत् क लेपने गोमधो ञँन्तात् क्विः, ञिलोपे मकारस्य नुः, पश्चात् जपे जम्नोरिति जमे अकारलोपो न स्थानिवत्। पिपिष्ट इत्यादौ पिपधोर्हिः न णौ मे इति नृत्वे जपे जमनोरिति जमादेशे न् न स्थानिवत्। दाह-माचचाण इत्यादौ णौ क्विपि दादेर्घ इति घः धाक् इत्यत्र झभान्तस्येति झभादेशे न ञिः स्थानिवत्। एवं धाक् धाग्भ्या-मित्यादौ चपजवोरपि(१)। यायष्टि रित्यादौ यजधो यँङन्त-ञन्तात् क्वौ यङि ञिलोपो न स्थानिवत्। पापक्तिरित्यादौ यङन्तञन्तात् पचधोः क्वौ कङि ञिलोपो न स्थानिवत्। नाययतीति(२) क्विपि नौः इत्यत्र जटि ञिलोपो न स्थानिवत्। वादयन्तं प्रेरिरत् भवीवदत् इत्यादौ जादिकार्य्ये(३) ञिलोपो न स्थानिवत्। ननु कथमोढारीयदिति (४) चेत् सत्यं भूयो-ऽस्मगादेरिति सूत्रमकृत्वा वजादिग्रहणमेवं ज्ञापयति सप्तसप्त-म्यचर्णं प्रवर्त्तते इति, तथाच एकस्यामो ञोपे परामसादाय ञिः। क्वचिदपवादविषये उत्सर्गोऽभिनिविशते इति न्यायात् उपसर्ग-स्याङि वा अकारलोपः तेन उपेहि उपैहि। तथाच तामुपेहि

---

(१) चपि जपि च कर्त्तव्ये ञि नं स्थानिवदित्यर्थः।

(२) नाययते इति क्वौ तिपि रूपम्।

(३) ञे परे चटिपरे जटौ गुणादिकार्य्ये इत्यर्थः।

(४) ओढारोयदिति नामधातोर्दिपि रूपम्। अत्र ओम् शब्दे परे आकारस्य आद्‌आर' इत्थं न भवते इत्याशङ्काह भवितेति।

२७ । एवेऽनियोगे । ( एवे ७, अनियोगे ७। ) ।

अवर्णस्य एवे परे लोपः स्यात् अनियोगे ।

अद्येव, नियोगेतु—अद्यैव गच्छ ।

२८ । वौष्ठोत्वोः से । (वा ।१।, ओष्ठोत्वोः ७॥, से ७।)

अवर्णस्य ओष्ठोत्वोः परयोर्लोपः स्यात् वा से सति ।

विम्बोष्ठः विम्बौष्ठः, स्थूलोतुः स्थूलौतुः । से किं तवौष्ठः ।

---

महाराज इति चण्डी, पूर्व्ववाशब्दव्यवस्थया वा। ननु पूर्व्वसूत्रादानुवर्त्तते कथं नित्यमिदमित्याह इयोरित्यादि, विभाषयोर्वाशब्दयोरित्यर्थः ।

२७ । एवे । नियोगो व्यापारविशेषः, न नियोगः अनियोगस्तस्मिन् । सामान्यशब्दस्य विशेषपरत्वात् अनियोगेऽपि साहश्यसम्भावनातिरिक्ते न लोपः, तेन इहैव वयं धीराः, मिथ्यैव श्रीः श्रियंमन्या इत्यादि । साहश्यसम्भावनयोस्तु चर्म्मेव रज्जुः तदद्येवाभूदिति । एके तु साहश्यनियोगेऽपि यालेव गच्छ मालेव तिष्ठ इत्याहुः ॥

२८ । वौष्ठो । ओष्ठश्च ओतुश्च तौ तयोः, सः समासस्तस्मिन् । विम्बोष्ठ इति, विम्बाविव ओष्ठौ यस्य इति वाक्यं, एवं स्थूलयासावोतुश्चेति । सन्निहितालाभे विप्रकृष्टं विधिरपेक्षते इति न्यायात् यस्य इस्य ओष्ठोतुभ्यां स स्तस्यावर्णस्य तयोर्लोप इत्यर्थः, तेन हे राजपुत्रौष्ठौ ते, हे राजपुत्रौतुस्ते, हे देवदत्तौष्ठकमलं

२९ । वीसे त्वृतो व्रिं । (वी-से ७, [illegible] ।१।, ऋतः १।, व्रिं २। ) ।

अवर्णात् पर ऋतो व्रिमाप्नोति वीसे सति । शीतार्त्तः ।

वीसे किं परमर्त्तः । त्वन्तस्य नानुवृत्तिः ।

---

ती, हे देवदत्तोतुव्याघ्रस्ते इत्यादौ न स्यात् ( १ ) । वाशब्दस्य व्यवस्थावाचित्वात् प्रोष्ठः प्रोष्ठपदा प्रोष्ठीति(२) नामजात्योर्नित्यम् । तवौष्ठ इति, वसे तु आ ओष्ठादोष्ठं ओष्ठं, तस्मिन् (३) तवौष्ठं, तवोष्ठं इत्यपि लोपोऽस्येत्यादिना नित्यं भवति ।

२९ । वीसे । वी तृतीया तया सः वीसस्तस्मिन् । व्रिं विपरिणम्याह अवर्णात् पर इति, तथाच व्या अव्यवहित-ऋत-ऋकारस्य व्रिर्नतु ऋत-ताकारस्य । शीतार्त्त इति शीतेन ऋतः पीड़ित इत्यर्थः, एवं क्षुधया ऋतः क्षुधार्त्तः । परमर्त्त इति परमश्चासावृतश्चेति यसः । कथं नार्त्तः कालमपेक्षत इति चेत् आङ्पूर्व्व-ऋधोः क्ते आर्त्तः पश्चान्नञा योगः । नचानेनैव सिद्धे किमर्थमिदमिति वाच्यं ऋतशब्देन शीतर्त्त इत्यनिष्टवारणार्थमिदमिति ।

---

(१) एषूदाहरणेषु अवर्णान्तशब्देन सह तत्परवर्त्तिनोरोष्ठोतुशब्दयोः समासाभावादवर्णस्य लोप इति ।

(२) प्रोष्ठोष्ठ, प्रोष्ठपदा नक्षत्रविशेषः, प्रोष्ठी मत्स्यविशेषः ।

(३) ओष्ठशब्दे परे इत्यर्थः ।

**३० । ऋण प्र वसन वत्सर वत्सतर दश कम्बल-स्यर्णः ।** ( ऋण—कम्बलस्य ६।, ऋण: १। ) ।

एषामवर्णात् पर ऋणो त्रिमाप्नोति । ऋणार्णं, प्रार्णं ।

**३१ । स्वाच्चयोरीरोहिण्यौ ।** ( स्व-अक्षयोः ६॥, ईर-ऊहिण्यौ १॥ ) ।

अनयोरवर्णात् परावेतौ त्रिमाप्नुतः । स्वैरः, अक्षौहिणी ।

---

३० । ऋण । ऋणार्णमिति ऋणाहणं, (१) प्रकृष्टमृणं, वत्सरेण देयमृणं, वत्सतरार्थमृणं, दश ऋणानि सन्ति यस्मिन् देशे नद्यां वा दशार्णो देशः दशार्णा नदी, ऋणं असदुर्गभू', कम्बलार्थ-मृणं कम्बलार्णमिति । एषामिति किं अधमर्णं इत्यादि ।

३१ । स्वाक्ष । स्वैर इति ईकिं गतौ तुदि, (२) भावे घञ् ईरणमोरः स्वस्य ईरः स्वैरः(३), काशिकायां स्वैरमिति क्लीवं, तथासक्तता ईरस्याकार उच्चारणार्थस्तेन ईरेरिणोरपि ग्रहणं, स्वैरं स्वैरी स्वैरिणीति व्याख्यातम् । स्वेरा इत्यत्र न स्यात् अनभिधानात् । अक्षौहिणीति अक्षान् ऊहितुं शीलमस्या इति वाक्यम् । णत्व-निर्देशात् सेनायामेव । ससेपुस्थादेरिति वा णत्वविधानात् पाशकस्त्रिया वा णत्वे अक्षौहिणी, अणत्वपक्षे अक्षोहिनीत्येके ।

---

(१) ऋणस्यापनयनाय यदन्यदृणं क्रियते तदृणार्णमिति सिद्धान्तकौमुदी ।

(२) तुदि प्रेरणे इत्यर्थः ।

(३) तर्कवागीशमते स्वैर इति पुंलिङ्गपाठ ।

३२। प्रस्योढ़ोढ्यूहाः। (प्रस्य ६।,ऊढ़-ऊढ़ि-ऊहाः१।।)

प्रस्यावर्णात् परा एते त्रिं यान्ति। प्रौढ़ः, प्रौढ़िः, प्रौहः।

३३। वैवैष्यौ। (वा ।१।, एष-एष्यौ १॥)।

प्रस्यावर्णात् परावेतौ त्रिं वा प्राप्नुतः। प्रैषः प्रैष्यः, प्रेषः प्रेष्यः।

---

३२। प्रस्य। शाकटायनसम्मतत्वादूहग्रहणम्। प्रौढ़ इति ऊहधोः क्तः, एवं क्तिः प्रौढ़िः, ऊहसाहचर्य्यात् ऊहनिर्द्दिष्टक्तक्त्यो-र्ग्रहणम् न तु वहनिष्पन्नयोः, (१) तेन प्रोढ़ोभारः, प्रोढ़ीरथानां इत्यादि (२)। एवं आङ्पूर्व्ववहेरपि प्रौढ़ः प्रौढ़िः। प्रौह इति ऊहनमूहः भावे घञ्।

३३। वैष। प्रैष इति इष्य सर्पणे घञ्, प्रैष्य इति घ्यणन्त-निर्द्देशः (३) एष इति घनव्ययसाहचर्य्यात्, तेन प्रेष्य गतः (४) इत्यत्र यवत्ते न स्यात्। गेर्धोरिति नित्ये प्राप्ते वचनमिदं। नित्यमिति परे (५)।

---

(१) ऊढ़ इति वहेः क्तेन निष्पादितमिति बहूनां मतम्, ऊहधौ क्ते ऊढ इति कथं सिध्यतीति सुधीभिश्चिन्त्यम्।

(२) ऊढ़ोढ़ी अत्र वहनिष्पन्नौ।

(३) न तु आङ्पूर्व्व इष धातोः ल्यपो यपि रूपम्। अत हेतुमाह एष इति।

(४) आगत्य गत इत्यर्थः।

(५) प्रैषः प्रैष्य इति पदद्वयं ईषधातोः क्रमेण घञि घ्यणि च ईषः ईष्य इति स्थिते गुणे कृते सिद्धमिति सिद्धान्तकौमुदी।

३४ । मनीषाः ।—( १।।। )

मनीषाद्या निपात्यन्ते ।

मनीषा, हलीषा, लाङ्गलीषा, शकन्धुः, कुलटा, सीमन्तः, पतञ्जलिः, सारङ्गः ।

---

३४ । मनी । शब्दव्युत्पादनप्रस्तावेऽर्थे कार्य्याभावात् मनीषाशब्दः स्वरूपपरः, (१) तस्य एकत्वे बहुत्वानुपपत्त्या त्वन्निर्दिष्टमनीषाशब्दो गणं सूचयति(२) । तथाच भाष्ये "यल्लक्षणेनानुत्पन्नं तत्सर्व्वं निपातनात्सिद्ध"मिति । तस्य सिद्धिस्तु क्वचिद्वर्णविपर्य्ययैः क्वचिद्वर्णविकारैः क्वचिद्वर्णागमैः क्वचिद्वर्णनाशैः क्वचिद्धात्वर्थातिशयैर्ज्ञातव्या । तथाच—वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तमिति ३) । मनीषादिर्यथा—मनीषा हलीषा शकन्धुः समर्थो रयप्पा पिशाचः कपित्थो दधित्थः । मरुत्तो लुलायो जिमो यस्कनिष्के मयूरो हनूमान् हयो सिंह-रवे । सारङ्ग-कारस्कर-किष्कुकुम्भाः सीमन्त-कन्दर्प-धुरन्धराश्च । दूडाश-दूणाश-परःशताद्याः

---

(१) शब्दव्युत्पादनप्रकरणे वाच्ये, कार्य्याभावात्—तत्तत्कार्य्याणां साकल्येन लक्षणनिर्द्देशाभावात् । स्वरूपपरः मनीषाशब्दस्य स्वरूपनिर्द्देशः, यः शब्दो व्युत्पाद्यः स एव स्वरूपतो निर्दिष्ट इत्यर्थः । एतेनैवंविधाः शब्दा निपात्या इति सूचितमिति ।

(२) इत्यादि-बहुवचनान्ता गणस्य बहुत्वका मयनीति न्यायादित्यर्थः ।

(३) धात्वर्थातिशयेन धातूनामनेकार्थत्वकल्पनेन । निरुक्तं वेदाङ्गशास्त्रविशेषः । शिक्षा, कल्पो व्याकरणं निरुक्तं ज्योतिषनया । छन्दश्चेति षडङ्गानि वेदानां वैदिका विदुरिति । निरुक्तं पदभञ्जनमिति हेमचन्द्रः ।

कुद्दाल कुस्तुम्बुरु-कुञ्जराश्च । यथायथं षोड़श-कान्दिशीक-कास्तीर-पारस्कर-मस्कराश्च । सस्तीर-भद्रङ्करणाग्निमिन्धा बलाहकोडुम्बर-विष्किराश्च । अट्टहासस्तथता दिवौकाः शुद्धोदनोदुम्बर गोष्पदानि । पतञ्जलिर्मस्करि-लाङ्गलीषा-ऽपरस्परापस्कर-तस्कराश्च । परस्परा ऽवस्करमन्तितान्तमं मध्यन्दिनाऽन्योन्यमनीषितञ्च । लोकम्पृणो धूर्जटि-शोणितार्थौ प्रतिस्कशोऽश्वत्थ-बृहस्पती च । समग्रनमटविर्दर्चिणतारं हनुमदुदूखलसुपाङ्करणम् । कीचक-कुलटा-लोकम्प्रीणं तैलम्पाताऽङ्गणगव्यूती । प्रायश्चित्तं प्रायश्चित्ति-र्जीमूत-वनस्पति-गन्धर्व्वाः । अश्वत्थामास्सदमर्दयनं किष्किन्धो-लूखलमाथर्व्वम् । श्येनम्पाताऽर्णवो दूव्यो धेनुभव्या पृषोदरः । भ्राष्ट्रमिन्धः एयोयानं कोयवाव्यमुपर्बुधः । श्मशानमन्तिषत् द्वन्द्वं परोक्षं पुङ्गलोऽन्तिमम् । अनभ्यासमित्यः पयाङ्ग दूडभो ब्राह्मणस्तथा । मस्तुम्पति रजस्तुन्दमन्यदीयश्च वाङ्गलिः । प्रस्क-ण्वोऽन्यत्कारकश्च हरिश्चन्द्रः किकीदिविः । चर्म्मण्वती च राजन्वान् ह्यपण्वो ह्यपण्वसः । भुवर्लोको मनुष्वचाऽङ्गिरसश्चेतरेतरम् । नभस्वश्च मुकुन्दश्च मन्मथोऽन्ये प्रयोगतः ॥

मनीषेत्यादि । ईषङ सर्पणे षेमक्तात् सरोरिति स्त्रियां भावे अः मनस ईषा, हलस्य ईषा अनयोष्टेर्लोपः मूर्द्धन्यास्तः, ताल-व्यान्तस्तु हलीशा हलेशा इति केचित् । शकस्य नृपतेरन्धुः कूपः । समोऽर्थोऽस्य समर्थः । रथेन याति रथ्या नदी वर्हिष्ठादित्वात् यः । पिशितमश्नाति पिशाचः । कपयस्तिष्ठन्त्यस्मिन् कपित्थः । एवं दधित्थः । मरुता दत्तो मरुत्तः । अपु लुनाति लुलापो महिषः ।

जितमनेन जिनः। यशः कीर्ति यक्षः। निकाम्यते निष्कं हिरण्यम्। मह्यां रौति, मेऊ इति रौति वा मयूरः। हनुरस्यास्तीति हनूमान्। ब्रुवन्तः सीदन्त्यस्यां वृषी (१)। हिनस्तीति सिंहः अत्र अचरविपर्य्ययः। रतीस्तननं(२)। सारमङ्गं यस्य सारङ्गः(३)। कारं करोति कारस्करो वृक्षः। कारकरोऽन्यः। कीयते श्रायते मृगत्वादित्वात् कुः किष्कुः। केनोभ्यते(४) कुम्भः। सीमानमन्तति सीमन्तः केशविन्यासः, अन्यत्र सीमान्तः। कं न दर्पयति कन्दर्पः। धुरं भारं ध्रियते (धरति) धुरन्धरः। दुःखेन दाश्यते दूडाशः। दुःखेन दाश्यते दूणाशः मूर्द्धन्यः। शतात् परं परःशतं वेः श इति कश्चित्, एवं परःसहस्रमित्यादि। कुं उद्दालयति कुद्दालः। कुत्सितं तुम्बुरुः कुस्तुम्बुरुः धन्याकम्। कौ जीर्य्यति कुञ्जरः। यथायथीत्यर्थे यथायथं क्लीवलम्। षड़धिका दश षोड़शः। कां दिशं गच्छामीति चिन्तयन् पलायितः कान्दिशीकः। कु ईषत् कुत्सितं वा तीरं प्रान्तभागोऽस्य कास्तीरम्। पारं करोति पारस्करो देशः। मा क्रियते अनेन मस्करो वेणुः। सत् ईषत् तीरं सत्तीरम्। अभद्रं भद्रं करोत्यनेन भद्रङ्करणम्। अग्नेरिन्धः अग्निमिन्धः। बलाद्याहृतं कमनेन बलाहको मेघः। उद्गतोऽम्बरं उडुम्बरः। विकिरति विष्किरः शकुनिः। वेदपाठात् विकिरोऽपि। अट्टं अट्टं

(१) ब्रुवन्त सीदन्त्यस्यामिति क्वचित् पाठः।

(२) रतिं अनुरागं तनोतीत्यर्थः।

(३) सारङ्गपातकादि:, अन्यत्र सारङ्ग इति।

(४) केन जलेन अभ्यते पूर्यते इत्यर्थः। उम्भ ६ पर।

हसति अट्टहासः(१)। अट्टाहास इति मैथिलाः। तथ्यस्य भावस्तथता। द्यौरोकः स्थानं यस्य दिवौकाः, यद्यपि दिवित्यकारान्तोऽप्यस्ति तथापि वान्तादोकारनिवृत्त्यर्थं पाठः। शुद्ध ओदनो यस्य शुद्धोदनः। उडुम्बरवत् उदुम्बरः। गवां पदं गोष्पदं गोभिः सेवितो देशो मानश्च। पततां प्राणिनां अञ्जलिर्यस्मै स पतञ्जलिरनन्तः। काम्यकर्माणि मा कर्त्तुं शीलमस्य मस्करी भिक्षुः। हलीषावत् लाङ्गलीषा। अपरे च अपरे च अपरस्पराः क्रियासातत्ये, अपरस्पराः सार्थां गच्छन्ति अविच्छेदेन यान्तीत्यर्थः। अपकरोतीति अपस्करो रथाङ्गं, अन्यत्रापकरः। तत्करोतीति तस्करश्चौरः। परे च परे च परस्परं क्रियाविनिमये। अवस्करः पुरीषे, अन्यत्रावकरः। अन्तिकादन्तितः तस्य तः। अन्तिकात् तमे तिकलोपे अन्तमः। दिनस्य मध्यं मध्यन्दिनम्। अन्ये च अन्ये च क्रियाविनिमये अकारस्योकारे अन्योन्यम्। मनसा ईषितं मनीषितम्। लोकस्य पृणे मन् लोकम्पृणः, लोकम्पृणमिति केचित्। धूरिव जटा यस्य स धूर्जटिः शिवः। शोणितमर्षो यस्यास्ति स शोणितार्षी। प्रतिष्कशः पुरोयायी (२) अन्यत्र प्रतिगतः कशां प्रतिकशोऽश्वः। अश्वास्तिष्ठन्त्यस्मिन् सोऽश्वत्थः(३)। बृहतां पतिः

(१) अट्टमट्टं हसनमित्यर्थेऽपि। मूलोदाहरणे टात् अस्तीति पक्षे। हार्थे वाच्ये एव निपात्य इति।

(२) प्रतिपूर्व्वक कशे पचादित्वादच् इति सिद्धान्तकौमुदी।

अन्यत्र "ग्राममद्य प्रवेक्ष्यामि भव मे त्वं प्रतिष्कशः" इति काशिका।

(३) यदा अश्वत्थत्वेन अश्व इव तिष्ठतीति के अश्वत्थ इत्यमरटीकायां भरतः।

बृहस्पतिः सुराचार्य्यः। समंमशनं समशनम्। अटन्तो वयः पक्षिणो यत्र अटविः अरण्यम्। दक्षिणतीरमित्यर्थे दक्षिणतारं, दक्षिणस्य तत्तीरञ्चेति वाक्यं, वेदपाठात् दक्षिणतीरमपि। हनूमान् पूर्व्ववत्। ऊर्द्धं खन्यते उदूखलम्। उष्णस्य करणे मन् उष्णद्भरणम्। चीक कि मर्षणे णकः वर्णविपर्य्यये कीचको वंशदैत्ययोः। कुलान्यटति कुलटा भिक्षुक्यां असत्याञ्च(१)। लोकम्पृणमिति लोकम्पृणवत्। तिलपातोऽस्यां क्रियायां तैलम्पाता पितृक्रिया। अङ्गन्त्यस्मिन् अङ्गणं मूर्द्धन्यात्मम्। गवां यूतिः गव्यूतिः क्रोशयुगम्। प्रायात् वित्तचित्तयोः सुम् (२) प्रायश्चित्तं प्रायश्चित्तिः। जीवनं जलं भूतं बद्धमनेन जीमूतो मेघः। वनस्य पतिः वनस्पतिः वृक्षः। गानं धर्म्मोऽस्य गन्धर्व्वः। अश्वस्येव स्थाम (बलं) यस्य अश्वत्थामा द्रोणपुत्रः। आस्पदं प्रतिष्ठायाम्। अर्द्धमशनं अर्द्धशनम्, इदं नेच्छन्ति केचित्। किञ्चित् ध्यायते चिन्त्यते यस्मिन् किञ्चिन्धोऽद्रिः। उलूखलमुदूखलवत्। आश्चर्य्यमद्भुते, अन्यत्र आचर्य्यं कर्म्म शोभनम्। श्येनपातोऽस्यां क्रियायां श्यैनम्पाता मृगया। अर्णः पानीयमस्ति अर्णवः केशादित्वाद्वे सकारलोपः। दुःखेन ध्यायति दूध्यः।

---

(१) 'अटतीत्यटा पचाद्यचि टाप्। कुलस्य अटा कुलटा। यदि तु कुलम् अटतीति विग्रह्यते तदा कर्म्मण्यणि ङीपि कुलाटीति स्यात्"—इति तत्त्वबोधिनी।

(२) चित्त चित्तिशब्दौ निश्चयार्थौ। तथाच प्रायोनाम तपः प्रोक्तं चित्तं निश्चय उच्यते। तपोनिश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्॥ निश्चयसंयुक्तं पापक्षयमात्रसाधनत्वेन निश्चितमित्यर्थः।

धेनुर्भविष्यति धेनुम्भव्या। पृषदुदरमस्य पृषोदरः। भ्राष्टस्येन्धं मन् भ्राष्टमिन्धः। पृषदुद्यानमस्य पृषोद्यानम्। केशिनमवधीत् केशवः। आधारयति आध्यायतीति वा आढ्यः। उषसि बुध्यते उषर्बुधः, उषोबुध इति कश्चित्। शवानां शयनं यत्र श्मशानम्। अन्तिके सीदति अन्तिषत्। द्वौ द्वौ द्वन्द्वं, द्वन्द्वं रहसि चार्थेच वैरे मिथुनयुग्मयोरिति धरणिः। अक्षिभ्यां परं परोक्षं, पृथोरसि साधयन्ति केचित्, तन्मते अत्र पाठः परशब्दे ऽनिष्टवारणार्थः। पूर्य्यते गलति च पुद्गलः शरीरम्। अन्तिके भव इत्यर्थे मत्यः, मे कास्य लोपः, अन्तिमः। यद्वा अन्तिकात्तमः प्रकृतिप्रत्यययोः क-त-लोपे अन्तिमः। वेदपाठात् अन्तिकतमश्च। अनभ्यासे दूरे इत्यः (१) मेय अनभ्यासमित्यः, परिहार्य्यसन्निधि-रित्यर्थः। पश्चादर्द्धं पश्चार्द्धम्। दुःखेन दभ्यते वञ्च्यते दूड़भः। वाञ्छितं पापमनेन ब्राह्मणः। गवि कर्त्तरि प्रस्य सन् तुम्पतौ। प्रस्तुम्पति गौः अन्यत्र प्रतुम्पत्यश्वः। (२) अजस्येव तुन्दमस्य अजतुन्द नगरम्। अन्यस्येदं अन्यदीयम्। वाग्वादस्यापत्यं वाड्वलिः। प्रगतं कल्मषं पापमस्य प्रस्कण्व ऋषिः। अन्यस्य कारके दन्, अन्यत्-कारकं। हरिरिव चन्द्रो रमणीयः, हरिश्चन्द्रो राजा। किकीपूर्व्वं दिवधोः क्री दिवेर्दिव्यादेशः, किकीदिविः चातकपक्षी। चर्म्म अस्या अस्ति चर्म्मण्वती नदीकदल्योः। राजा अत्रास्ति राज-

(१) इत्यः गम्य इणधो ढे मयप्।

(२) तुम्पतीति तौदादिक तुपधातोस्तिपि रूपम्। प्रस्तुम्पति गौ. हिंस-तीत्यर्थः।

३५। यलायवायावोऽचीचः।

( यल्-अय्-अव्-आय्-आवः १।।।, अचि ७।, इचः ६। )

इचः स्थाने य् व् र् ल् अय् अव् आय् आव् एते अचि परे क्रमात् स्युः। त्र्यम्बकः, विष्वीशौ, धात्रच्युतौ, लाकृतिः, हरये, प्रभवे, नायकः, पावकः।

---

न्वान्, सुराज्ञि देशे, अन्यत्र राजवान्। हयशोऽश्वः हयगश्वः। हयशोवसः हयगवसः। भुवर्लोक इत्यत्र सस्य रेफः। मनुरिव मनुष्वत्। अङ्गिरा इव अङ्गिरस्वत्। इतरे च इतरे च क्रियासातत्ये इतरेतरम्। नभ इव नभस्वत्। मुक्तिं ददातीति मुकुन्दः, वेदपाठात् मुक्तिदश्च। मनो मथ्नाति मन्मथः कामः। शेषं प्रयोगानुसारेण ज्ञेयम्। अन्यस्याऽषीवान्तस्य दश्चाशादौ से। षीवान्तभिन्नस्यान्यस्य दन् स्यात् आशादौ से सति, अनावितौ। अन्याचाशावाशाचेति अन्यदाशा। एवं अन्यदाशीः अन्यदास्थितः अन्यदास्था अन्यदर्थः अन्यदूतिः अन्यद्रागः अन्यदुत्सुकः। अर्थशब्दस्य वेदपाठात् अन्यार्थोऽपि। अषीवान्तस्येति किं अन्यस्यान्येन या आशा अन्याशा (१)।

३५। यल। यलाजिचः प्रत्याहाराः। इच इति षीक्षान्तं द(२) यलस्थावयवापेक्षया यथाक्रमसुत्रम्। त्र्यम्बक इति त्रीणि

---

(१) "दृश्यन्ते एते कथञ्चिद्व्युत्पाद्यन्ते इत्यवयवार्थे नाग्रहः कार्यः" इति तत्त्वबोधिनी। एते मनीषादयः शब्दा इत्यर्थः।

(२) इच इति पदं षोडशान्तमित्यपि कश्चित्पाठः।

३६ । वाव गोर्दान्ते ।

( वा ।१।, अव ।१।, गोः ६।, दान्ते ७। ) ।

गोरिचः स्थाने अवः स्याद्वा अचि परे दान्ते ।

गवेशः, गवीशः । दान्ते किं गवे ।

---

त्र्यम्बकानि चक्षूंषि यस्य त्र्यम्बकः, लोचनं चक्षुरम्बकमिति शाश्वतः । विष्णुश्च ईशश्च तौ, धाता च अच्युतश्च तौ, खरस्याकृतिर्यस्य इति वाक्यानि ।

३६ । वाव । अव इति लुप्तप्रोक्तं दं, पृथक् विधानादकारान्तादेशः । दस्यान्तो दान्तस्तस्मिन् । गोरिच इति अन्येज-भावादोत इति ज्ञेयः । गवेश इति गवामीशः से लौकिदान्तत्वादवः । चित्रगविह इत्यादौ लाघविकत्वान्न स्यात्(१) ।

---

(१) लाघविकत्वात् गौणत्वादिति । एतेन गोरिच इत्यत्र तस्यस्यैव गोमह्स्येति तर्कवागीशव्याख्या॰ ।

पूर्व्वत इकचावनुवर्त्तेते । इचः समुदायस्य प्रयोजनाभावेऽपि लाघवा-दनुवर्त्तनं यथोऽरस्येत्यत्र यथ इन-विधान-सामर्थ्यम् । ननु वाव गोः पि इति क्रते-ऽपीष्टसिद्धौ यत् दान्तग्रहणं तत् निमित्तोऽपि समासावयव-पदादित्वज्ञापनार्थं तेन गवेश इत्यादय सिद्धा॰ । अन्यथा चित्राङ्गवः, परमगवः, इत्यादौ अवा देशापत्तेरिति । का-वि ।

इको गोरिचो गणनात् गवावादेरिति सूत्रे उकारस्याप्यवादेशे चित्रगवा-चार्य्यं इत्यादि सिद्धमित्येके इति दुर्गादासः । सिद्धान्तकौमुद्यान्तु सर्व्वत्र विभाषा गोः ( ६।१।१२२ ) इति सूत्रोदाहरणे चित्रगवपमित्युदाहृतम् ।

गवीश इत्यत्र चर्व्वा ओरिच्यादिना वकारलोपाभावस्तु तत्सूत्रीयदान्तग्रहण-सामर्थ्यादिति दुर्गादास । कार्त्तिकेयसिद्धान्तस्तु चर्व्वा ओरिच्येत विधा एति दिग्गा उभ्य इत्याद्युदाहरणेनाप्यस्यास्य एव विषयस्य व्यापितत्वादित्याह ।

३७। गवेन्द्रगवाक्षौ। (१॥)। (१)

नित्यम्।

३८। अयां य्वोर्लुब्वा।

( अयां ६॥, य्वोः ६॥, लुप् ।१।, वा ।१। )।

दान्ते स्थितानामयादीनां यवयोर्लुप् स्याद्वा।

हरएहि हरयेहि, प्रभइदं प्रभविदं, श्रियाएति श्रियायेति, विष्णाउक्तः विष्णावुक्तः।

---

३७। गवे। गवेन्द्रश्च गवाक्षश्च तौ। गवामिन्द्र इति वाक्यम्। गवामक्षीव गवाक्षः, वातायने एवाभिधानात् अन्यत्र प्राण्यङ्गे गवामक्षीव गोऽक्षं इति, असंज्ञायां नित्यमकारलोप इति भाष्यम्। गोऽक्षं गो अक्ष मित्यन्ये।

३८। अयां। य च व च तौ तयोः। अयामिति व्यनिर्द्देशो गणार्थः, तेन अय् अव् आय् आव् इत्येषां सामान्यतो ग्रहणं(२)तेन अव्ययमाचक्षाण आस्ते अव्य-आस्ते अव्ययास्ते, मूलद्वयमाचक्षाण

---

(१) प्रचरत्सु सद्रित-मुग्धबोध-पुस्तकेषु "गवेन्द्र-गवाक्षौ नित्य" मित्यंशो मूलत्वेन निर्द्दिष्टः। तच्च समीचीनं मन्यामहे, बहु-टीकाकार-मत-विरुद्धत्वात्। ततश्च 'गवेन्द्र गवाक्षौ" इति सूत्रं, नित्यमिति वृत्तिः। अत्र प्रमाणानि—दुर्गादासेन गवेन्द्र इत्युदृत्य विभाषाद्वयमध्यवर्त्तित्वादस्य नित्यत्वमित्युक्तम्। कार्त्तिकेय-सिद्धान्तेनापि तर्कवागीशवत् समासवाक्यं लिखित्वा "नित्यमिति वृत्तिः', वाद्वय-मध्यवर्त्तित्वात् नित्य' मित्यभिहितम्। अतोऽत्र पुस्तके गवेन्द्रगवाक्षाविति पृथक् सूत्रत्वेन निर्द्दिष्टम्।

(२) यथा कथमपि अकाराकाराभ्यां यवयोर्योगनिष्पन्ना अयवादयो ग्राह्या न तु पूर्वसूत्राद्दिष्टा एवेत्यर्थः।

३८। एङोऽतः। ( एङः ५।, अतः ६। )।

दान्ते स्थितादेङः परस्याकारस्य लुप् स्यात्। हरेऽव, विष्णोऽव।

---

आस्ते मूल आस्ते मूलवास्ते इत्यादि। वाशब्दस्य व्यवस्थावाचित्वात् हवे च नित्यं, तेन अव्यहसति मूलवृहि हवे किं अव्ययम् मूलवृस। आत् क्विवन्तयोरेव नित्यमिति केचित्। क उ पश्यन्ति, हा उ पश्यत इत्यादौ नित्यं उत्रि य्वोर्लुविरत्यन्ये। आङ् य्वोर्लुग्वेति सिद्धे अयामिति निर्देशात् अज्झ्योरनाद्योर्हसि नित्यं लुप्। (१) तेन उं शिवं अधिकृत्य आस्ते, अध्यु आस्ते अध्वास्ते, साधोरीर्लक्ष्मीः तस्या उदयः, साध्वो उदयः साध्युदयः इत्यादि। अनाद्योरिति किं, इश्च उश्च तौ यू तयोरर्थः य्वर्थः। अज्झ्योरिति किं वाय्वर्थः। हसि किं अर्यीः शम्भोः। आद् य्वावीषत्स्पृष्टतरौ वा। अवर्णात् दान्ते स्थितौ यकारवकारावीषत्स्पृष्टतरौ वा स्यातां अचि परे। तयार्थाः त आर्याः पट एहि, पटयेहि इति रूपद्वयम्। ईषत्स्पृष्टता हि उच्चारणस्थानगैथिल्यमिति (२)।

३८। एङ। एङ् प्रत्याहारः अत इति तपरकरणात् पटवा-गच्छ इत्यत्र न स्यात्। वादयमध्यस्थत्वात् नित्यम्। विशेषविधा-नादयवावनेन बाध्यते।

---

(१) अचोरामेते अज्झौ। यश्च वश्च तौ य्वौ। अज्झौ च तौ य्वौ चेति तयोः। अच स्थाने जातयोरनादिस्थयोर्यवयोर्नित्यं लुप् स्यात् हसि परे।

(२) अत्र पक्षे अयादीनामेवपदान्ते एव यवयोर्लोपविकल्पेन पुत्र पठ इ इति, पुत्र पठ य् इति पुत्र पठा य् इति, पुत्र पठ आ य् इत्यादौ मा भूदिति दुर्गादासमतम्।

४०। **गोर्व्वा।** ( गोः ६।, वा ।१। )।

गोरति वाऽसन्धिः। गो अग्रं गवाग्रं गोऽग्रं।

४१। **नाजोऽन्तोऽनाङ् निः प्लुश्च।**

(न ।१।, अच् ।१।, ओऽन्तः १।, अनाङ् ।१।, निः १।, प्लुः १।, च ।१।)।

---

४०। गोः। पूर्व्वसूत्रादत इत्यनुवर्त्त्य क्ति-विपरिणामादाच्यतीति। वाशब्दस्योभयपक्षाश्रितत्वान्निषेधपक्ष आश्रीयतेऽत्र (१)। तथाच दान्ते स्थितस्य गोशब्दस्य अति यत्कार्य्यं प्राप्तं तन्न भवति वेत्यर्थः। तेन गो अग्रमित्यत्र वा सन्धिनिषेधः। पक्षे वाच गोरित्यवादेशे गवाग्रमिति, उभयत्यक्तपक्षे गोऽग्रमिति। वा द्वयेन रूपत्रयम्।

४१। नाजो। अजिति लुप्तप्रोक्तं दं, ओ अन्तो यस्य स ओऽन्तः, न आङ् अनाङ्, अचो विशेषणं, निरित्यस्य उभयत्रान्वयः। मण्डूकगत्या अचीति अनुवर्त्तते, तथाच अज्मात्रनिः ओऽन्तनिश्च अचि सन्धिं नाप्नोतीत्यर्थः। तेन जानु उ, जानू-अत्र जान्वत्र, मधु उ, मधू-अत्र मध्वत्र इत्यादौ नैर्गुणीभूतत्वात् सन्धिः(२)। अजोऽन्तः इत्येकदत्वे सिद्धे विभिन्नदकरणमेवं

---

(१) गो अग्रमित्युदाहृतवताचार्य्येण अकारे परे गोशब्दस्य सन्धिनिषेधोऽपि स्यादिति सूचितम्। ततश्च गोरति वा सन्धिरिति इत्थं सन्धिर्विधीयते उत वा-सन्धिरित्यत्र अकारपरेणैव सन्धिनिषेधो विभाव्यते इत्यापद्यते वा मद्ध्येति।

(२) एवमपि परे सन्धिनिषेधात् अचः परत्वेन सन्धिर्भविष्यतीति चेदनिति। बा—वि।

अन्मात ओकारान्तश्च निराड्वर्जः सन्धिं नाप्नोति मुग्ध (१)।
अ-अनन्तः, इ ईश्वरः, उ-उमेशः, अहो ईशान, कृष्ण एहि ।
अनाङ् किं—

मर्य्यादायामभिविधौ क्रियायोगेषदर्थयोः ।
य आकारः सङित् प्रोक्तो, वाक्यस्मरणयोरङित् ॥
आत्मबोधादेकदेशादालोक्योपरतैरिः ।
आ एवं तत्त्वमर्य्यादा, आ एवं तत् ज्ञातं मया ॥

ज्ञापयति ओऽन्तमधिकृत्य यः सन्धिः सोऽपि न स्यात्, तेन अहो अत्र, नो अत्र इत्यादौ नाकारस्य लुप्। मुरित्यत्र योग-

(१) (मूले ओदन्त इत्यत्र सन्धिकरणं लीलयात्र) ओदन्त इति पृथक्करणाद् ओत्पदेन तन्मात्रं प्रतीयते। अन्यथा प्रभवदरवत्रनिभ इत्यादिवत् अजन्तस्यैव प्राप्तिः स्यात्। किञ्च ओ इति पृथक् पाठेनापि ओदन्तप्राप्तौ अन्तपदं ओदन्तस्य अनावयवीयसन्धेरेव निषेधो न तु सर्ववर्णानामिति ज्ञापनार्थम्। अनावयवीयसन्धिः अचि परे एव सम्भवतीति अचि परे एव निषेधः। तत्स्यात्पर्य्यात् अप्रमात्तक्तयोरपि अचि परे एव सन्धिनिषेध इति बोध्यम्। तेन अनन्त अ ईशान अहो इत्यादौ सन्धिः स्यादेव। न च अनन्त अ इत्यादौ अकारादेः सन्धिस्थानित्वाभावादेव सन्धिनिषेधस्य न प्रसङ्ग इति वाच्यम् यस्य यस्य सन्धिनिषेधस्तन्निमित्तस्यापि निषेध इत्यस्य प्रसक्तत्वात्। अन्यथा गङ्गे अत्र इत्यादावपि अकारलोपः प्रसज्येत्। अत एव अवशिष्ट-अवन्तावपाते अवमानितश्च परिभूते। हलादौ अश्व इत्यत्रोऽपि प्रगच्छते। ननु कृष्ण एहि इत्यादौ प्लुतान्तस्य सेवोप- कथमिति चेत् वर्ण-आदौ प्लुतान् निषेधे पदसंज्ञायां पञ्चाद्दूराह्वानादौ प्लुतत्वे सन्धिनिषेध इति दुर्गादासः।

ओऽन्त इत्यत्र यद्यपि येन विधिस्तदन्तस्येति न्यायात् ओकारपदेन ओका- रान्तो लभ्यते तथापि अन्तपदं, अनावयवस्य सन्धिनिषेधार्थं ननु सहायत्व, तेन ईशानादौ इत्यादौ सन्धि- स्यादेवेति का—वि।

विभागः कर्त्तव्यः (१)। पूर्व्वसूत्राद्वाशब्दं प्लावनुवर्त्त्य तस्य व्यवस्थया विकल्पयन्ति, तेन कृष्ण इति कृष्णेति द्रुतावेवेति केचित्। चकारोऽनुक्तसमुच्चयार्थः (२) यथा परे—

दूराह्वाने तु वाक्यस्य धावन्त्याच् प्लुर्विभाषया। पर्य्यायेण तथान्त्यद्रुर्हैहयोरन्त्ययोरपि। अनन्त्ययोरथादूरे भवेत् प्रत्यभिवादने। नाम्नो गोत्रस्य चैवान्त्याजस्त्रीशूद्रानसूयके। अथ पूजा-प्रतिक्षेपानुयोगेषु (३) च वाक्यतः। इवार्थेन चिता योगे, तथा प्रश्नोत्तरे तु हेः। अथान्त्याच् चेद्विरुक्तस्य पर्य्यायेणैव भर्त्सने। अथ पूर्व्वस्य निन्दायामसूया सम्मति-क्रुधि। तथा विचार्य्यमाणानामथान्त्याजङ्गयोगतः। त्यादि-सापेक्ष-त्यादेराशिषि प्रेष्यनिन्दयोः। तथाय सर्व्वदानाच प्रश्नाख्याने भवेदथ। पूजा-प्रश्न-विचारेषु तथा प्रत्यभिवादने। एचः प्लुतादिभागः स्यादन्त्यभागस्य युद्भवेत्। न तु हैच, इति प्राह लौकिके शाकटायनः।

वाक्यस्य मध्ये धौ अन्त्याच् प्लुःस्याद्वा दूराह्वाने सति, स्वाभाविक-प्रयत्नातिरिक्त-प्रयत्नोच्चरितत्वं दूराह्वानं तस्मिन् सति। कृष्ण३ एहि, एहि कृष्ण३, पक्षे कृष्णेहि। तथा (अन्त्यदरुः) ऋद्विमौ रुसंज्ञकौ धावच् पर्य्यायेण प्लुर्वा स्यात् दूराह्वाने सति। दे३वद३त्त३ एहि, एहि देवदत्त३, पक्षे देवदत्तेहि। रु इति किं एहि सु-

(१) प्लुतस्य नञा योगसाम्य विभागश्च। सन्धिनिषेध पक्षिस भवतीत्यर्थः।

(२) अनुक्तानां समुच्चयः सम्बन्धोऽर्थो यस्य सः। अत अपरेऽपि केचित् नियमाः सन्तीति चकारेण सूचितमित्यर्थः।

(३) प्रतिक्षेपस्तिरस्कारः, अनुयोगः प्रश्नः।

रथ३ अत्र अन्त्यात् पूर्व्वेण (१), सुरथेहि च। अन्तदितिकिं कृष्ण३ एहि। अन्त्ययोरनन्त्ययोश्च ऐहयो(२)रच् प्लुःस्याद्वा दूराह्वाने सति। अम्ब है३ है३ अम्ब, अम्ब हे३ हे३ अम्ब, यद्वि अम्ब३ऐ अम्ब३हे हायम्ब३ हेऽम्ब३। है हे शब्दौ सम्बोधनार्थद्योतकौ। स्त्रीशूद्रानस्यकभिन्नानां (३) प्रत्यभिवादने नाम्नो गोत्रस्य च भावन्त्याचः प्लुः स्याद्वा। अभिवादितेन गुरुणा प्रयुक्ताभिवादकस्याशीः प्रत्यभिवादनम्। आयुष्मान् भव वशिष्ठ३, आयुष्मान् भव गार्ग्य३। नामगोत्रयोरितिकिं आयुष्मान् भव वत्स। स्त्रीशूद्रादौ तु आयुष्मती भव गार्गि, आयुष्मान् भव नापित, आयुष्मान् भव जाल्म। अदूरार्थोऽयमारम्भः, दूरे तु पूर्व्वेणैव। पूजार्थेषु वाक्यानामन्त्याच् प्लुः स्याद्वा। पुनर्वाक्यग्रहणं अधिसाधारणमुत्वार्थं (४) शोभनः खल्वसि मैत्र३, मैत्र भोः किमायष्मिं३, अद्य यादमित्यात्य३, अयमप्यदूरार्थः। इत्यर्थचित्शब्दयोगे वाक्यानामन्त्याच् प्लुः स्याद्वा। राजाचिद्भुंते३ राजवद्भुदतीत्यर्थः। प्रश्नोत्तरे हे रन्त्याच् प्लुः स्याद्वा। कटमकार्षं हि३ प्रश्नस्य प्रतिवचनं तत्र। भर्त्सनेऽर्थे पे हिंसायामन्त्याच् पर्य्यायेण प्लुः स्याद्वा। कर्ण३ कर्ण३ अद्य त्वं गम्यते, कर्ण३ अद्य त्वं गम्यते। निन्दार्थेषु हे: पूर्व्वदस्यान्त्याच् प्लुः स्याद्वा अर्ज्जुन३ अर्जुन धिक्

(१) पूर्व्वेण पूर्व्वनियमेन अन्त्याच: प्लुतोऽहिरित्यर्थः।

(२) ऐहे इति ग्रहणयोः।

(३) असन्ततयो प्लुत।

(४) सम्बोधनाद्यवोधकत्वाभावाद्यम्।

त्वामित्यादि । इदमन्यत्राप्यूहनीयम् (१) । सन्दिग्धे वस्तुनि तत्त्वपरीक्षा विचारः, तद्विषयाणां वाक्यानां पूर्व्वंदस्यान्त्याच् प्लुः स्याद्वा अहिः३ नुं रज्जुः । अङ्गशब्दयोगे त्याद्यन्त सापेक्ष त्याद्यन्तस्यान्त्याच् प्लुः स्याद्वा । अङ्ग क्रीड३ पुरा बुध्यसे जाल्म । अन्यत्र अङ्ग-क्रीड़ अङ्ग कूज । आशीर्व्वादाद्यर्थेषु चानङ्गयोगेऽपि त्याद्यन्त-सापेक्षत्याद्यन्तस्यान्त्याच् प्लुः स्याद्वा । रुद्रं भज३ चिरं जीव्याः । भृत्य धान्यं लुनीहि३ अजाश्च रक्ष । स्वयं दुग्धं भुङ्क्ष्व३ उपाध्यायं तक्रं पाययति ।

प्रश्नाख्यानयोः सर्व्वेषां दानां अन्त्याच् प्लुः स्याद्वा । अगम३ः पूर्व्वा३न् ग्रामा३न् अग्निभूते३ । अगम३ पूर्व्वा३न् ग्रामा३न् भोः । पूजाद्यर्थेषु एच आदिभागस्य प्लुः स्याद्वा, अन्त्यभागस्य युत्स्याद्वा न तु इनिष्पन्नस्य एचः । शोभनः खल्वसि अग्न३इ, पूजायाम् (१) । आगच्छ३इः शैल३इ अग्निभूत३इ, प्रश्ने । होतव्यं दीक्षितस्य गृह३इ, विचारे । आयुष्मती भवतं वत्स३उ, प्रत्यभिवादने । एषु किं शोभनः खल्वसि अग्ने । दूरे तु शोभनः खल्वसि अग्ने३ । इस्य एचस्तु आयुष्मती भवतं कन्ये३ इति पूर्व्वेण प्लुः न अत् युतौ । यत्र यत्र प्लुस्तत्रैव विकल्पः, यत्र यत्राचि प्लुर्व्विहितः तत्र सन्ध्यभावः, यत्रानचि तत्र प्रसङ्गादुक्तः । प्लु-प्रकरणं छान्दसमिति परे । शाकटायनस्तु भाषायामपि अतएव लिखितमस्माभिः ।

---

(१) अन्यत्रापि यज्ञयाद्यर्थेष्वपि, इह धिक् त्वामिति ।

४२ । व्हेऽमीरवे ।

( व्-हे ७।, अमी ई ऊ-ए = रवे ।१। ) ।

व्वे निष्पन्नो ऽमी शब्दो, हे निष्पन्न ईदूदेदन्तश्च सन्धिं नाप्नोति ।

अमी-ईशाः, हरी-एतौ, विष्णू-इमौ, गङ्गे-इमे ।

व्हे किं अम्ययं, वध्वर्थः ।

---

मर्य्यादायामित्यादि । मर्य्यादा सीमा, अभिविधिरभिव्याप्तिः, क्रियायोगो धातुना सह सम्बन्धः, ईषदर्थोऽल्पार्थः, क्रमेणोदाहरति आत्मबोधादिति । आ आत्मबोधात् आत्मज्ञानपर्य्यन्तं आ एकदेशात् एकदेशं व्याप्य हरिः आलोकि सम्यक्प्रकारेण दृष्टः । आ उपरतैरीषद्विरक्तैर्जनैरित्यर्थः । ग्रडिदुदाहरति आ एवमिति । मर्य्यादा महिमा, आ इति वाक्यं, तत्त्वस्य तवान्तःकरणस्य एवं एतादृशी मर्य्यादा, अर्थात् मया यदुक्तं तत् त्वया न कृतं इति भावः ; तत्त्वं ब्रह्मणि तद्भावे वाक्यभेदे च चेतसीति धरणिः । आ एवं भवता एतादृक् कथमुच्यते तदाख्यामया यदप्रोक्तं तत्कृतमेवेति पूर्व्ववाक्यानन्तरं स्मरणं, उभयत्र न सन्धिः ।

४२ । व्हे । व्वश्च हश्च तत् तस्मिन् । अमी इति लुप्तप्रोक्तान्तं टं, रवे इति लुप्तप्रोक्तं टं, ईश्च ऊश्च एश्च ते । भिन्नदार्थ्यां व्हदयोः क्रमेणोदाहरति अमी ईशा इत्यादि । गङ्गे इमे इति । द-निष्पन्नस्य एकारस्य निषेधात् पचेते इमौ इत्यादौ न स्यात् । पचेते अत्र इत्यादौ तन्निमित्तत्वाभावाल्लुप् । अर्थोत्यनुवर्त्तते, तेन कामशास्त्रकात् इ शब्दात् औ ई, दधि ई दधी इति स्यादेव,

## ४३ । स्योदेतौ ।

( सि ओत् = स्योत् ।१।, वा ।१।, इतौ ।७। ) ।

सौ जात ओकारः सन्धिं वा नाप्नोति इतौ परे ।

विष्णो इति विष्ण-इति विष्णविति ।

---

एवं मधु ज मधू। नञा निर्दिष्टस्यानित्यत्वं तेन अमुकेऽत्र, अतएव अदसो मात् पर ईदूदेत् सन्धिर्न स्यात्, अके तु अच स्यादिति परे, द्वे सम्ध्येऽस्तमनोदये, मणीवादयश्च सिद्धाः। मणी आदीनामिवे एव नान्यत्र तेन मणी अत्र मणी इति। मणी आदयस्तु—मणी भार्य्यापती चैव जायापती च जम्पती। वाससी रोदसी चैव पेचुषी दम्पती तथा इति। यद्यपि कादम्ब-खण्डितदलानि व पङ्कजानि, प्रशस्तलिखितानि व केचिदन्त-क्षतानि, शात्रवं व यशः पपुरित्यादौ इवार्थेऽपि वशब्दोऽस्ति, तथापि इवे अनिष्टवारणार्थमिदम्। अम्ययमिति अमधोर्भावे घञ् स्वपचे (१) अमो रोगः अस्यास्ति असौ अमी। बध्वर्थं इति बध्वा अर्थं इति वाक्यम्।

४३। स्योत्। सौजात ओत् स्योत् शाकपार्थिवादि-त्वान्मध्यपदलोपः। विष्णो इति। सन्ध्यभावपचे ओरवादेशे अयामित्यादिना वा लुप्, लुवभावपचे विष्णविति। सौजात इत्युक्तेः गवित्यत्र अनुकरणे माभूत्।

---

(१) अनवश्च इत्यादिना लुक्पचे ।

४४ । उञ् णपात्त्वचि व वा ।

( उञ् ।१।, णपात् ५।, तु ।१।, अचि ७।, व ।१।, वा ।१। ) । उञ् सन्धिं वा नाप्नोति इतौ परे, णपात् परस्तु वो वा स्यादचि । उ-इति, विति । किम्वुक्तं किमु उक्तम् ।

४५ । वेक् स्वश्चार्णेऽसे ।

( वा ।१।, इक् ।१।, स्वः १।, च ।१।, अर्णे ७।, असे ७। ) । इक् सन्धिं वा नाप्नोति, स्वश्च वा स्यादर्णे परे, नतु से, दान्ते । गार्ङ्गी-अत्र शार्ङ्गि-अत्र शार्ङ्ग्यत्र । असे किं—इय्यर्था ।

---

४४ । उञ । उञ्निः प्रश्नार्थः । इतावित्यनुवर्त्तते अत आह इतौ परे इति । णप् प्रत्याहारः तस्मादुञो वोऽचि वेत्यर्थः । उ इतीति पूर्व्वेण नित्यं निषेधे प्राप्ते विकल्पः । पक्षे विति । किम्वुक्तमिति सन्निपातलक्षणस्य विधेरनिमित्तत्वान्नतुः । रूपान्तरत्वात् शर्म्मयुमाचक्षाणः शर्म्मय् उ, शर्म्मयु इति शर्म्मयिति इति तु पूर्व्वभागे न । णपात्तानुनासिको व-इत्यन्यः । किमु उक्तमिति व-विधानाभावपक्षे नाञोऽन्त इति सन्धिनिषेधः, उपदेशावस्थायां केवलाचो ग्रहणात् । यागन्द्व्यवस्थया इतौ उञः सानुनासिको वादेशः तेन वँ इति इत्यपि ।

४५ । वेक् । इक् प्रत्याहारः । न र्णः अर्णस्तस्मिन् । शार्ङ्गि अत्र इति स्वविधानसामर्थ्यान्न यः । यागन्द्व्यवस्थायामित्यात् पदान्तेऽपि क्वचित्, यथा— चक्री अत्र, चक्र्यत्र, ...

४६ । ऋत्यक् । ( ऋति ७।, अक् ।१। ) ।

अक् सन्धिं वा नाप्नोति ऋति परे ह्रस्व वा स्यात् ।

ब्रह्मा ऋषिः, ब्रह्म-ऋषिः, ब्रह्मर्षिः ।

इति अच्-सन्धिपादः ।

---

अर्थ्यर्त्ति इत्यादि । हर्य्यर्चेति हरेरर्चा इति वाक्यं, इदन्तु ( १ ) भाष्यमते । परे तु नित्यसवर्ज्जनात् नद्या अश्व इत्यर्थे नदी अश्वः, नदि अश्वः, नद्यश्व इति । नित्यत्वे तु नद्यर्थमिति स्यादेव ।

४६ । ऋति । ऋगकौ प्रत्याहारौ । अत्रास इति नानुवर्त्तते, तेन महायासातद्विधेति महाऋषि, महऋषि, महर्षिरिति । तथाच उच्चारित रुचिर-ऋचां चाननाना चतुर्णामिति सूर्य्यशतके । अत्रापि नित्यसवर्ज्जनात् अश्वर्च्छी इत्यादि उदाहरन्ति केचित् । वा शब्दस्य व्यवस्थावाचित्वात् गौः परार्द्धतीत्यादौ न स्यात् । अत्र केचिदाहुः—"ऋतोरलाद्दृल्-तोर्व्वा लोपस्ताभ्याम् चेत" । ऋकारस्य ऋकारे परे रः ऌकारे परे लः स्याद्वा, ऋतो लोपश्च वा ऋदॄल्तोः परयोः, रलाभ्यां परयो ऋदॄल्तोर्घश्च ।, पितॄर्णं, पितृण, पितॄण पक्षे पितृऋण, पितॄणम् । होत्लृकारः, होतृऌकारः, होत्लृकारः पक्षे होतृ-ऌकारः, होतॄकारः इति । परे तु, ऋत ऋदॄल्ताद्दृल्दृभ्या

---

(१) समासमात्रवर्ज्जनन्तु ।

वा ऋता तु ऌट् ऌतः। ऋकारस्य ऋकारेण सह रेफभागद्वययुक्त ॠत्, ऋकारस्य ऌकारेण सह लभागद्वययुक्त ॡत् वा स्यात्, ऌकारस्य तु ऋकारेण सह लभागद्वययुक्त ॡच वा। होतृ ऋकारः, होतृ ऌकारः इत्यत्र होतॄकारः, होतॄकारः। गम्लृ ऋकार इत्यत्र गम्ॡकारः पक्षे यथा प्राप्तम्। असन्मते तु वा शब्दस्य बाहुल्यात् ऋकि ऋको घं-सन्ध्यभाव-स्वाः प्रवर्त्तन्ते। तथाहि पितॄणं, पितृऋणं, पितृणम्। प्राग्ऋको घाभावात् "सहर्णेर्घं"इति घे कृतेऽपि वा स्वः। स रेफभागद्वययुक्तः। ऋकारे द्वयोऽज्भागाः सन्ति तन्मध्यवर्त्ती तुरीयोरेफः। इकारभागः पूर्व्वार्द्धे उपर्य्यध उवर्णभाक्। पूर्व्वार्द्धभागवर्णांशो रेफस्तन्मध्यसंस्थित इति शिक्षाकारवचनात् ऋकारद्वयादेशे घस्य स्थले रेफभागद्वयासिद्धेः तेन पितॄणं इति (१)। क्वचिदपवादविषयेप्युत्सर्गोऽपि निविशते इति न्यायात् यलायवायाव इति रत्वे तेन पितृणं, पितॄकारः, गम्ॡकारः।

इकोयलन् वार्णेऽचि। इकः क्रमात् यलन् वा स्यात् अर्णे अचि परे। अनावितौ। दधियत्र, मधुवत्र, कर्त्तृरत्र, ऌलत्र। एवं वेऽपि। त्रियम्बकः, भूवादय इत्यादि, पक्षे दधि अत्र दध्यत्र इत्यादि। अर्णे किं दधीदम्। अचि किं–दधि तिष्ठति।

(१) स रेफभागद्वययुक्त इत्यारभ्य तेन पितॄणमित्यन्तस्य टीकांशस्य टिप्पणी परिशिष्टे द्रष्टव्या।

४७। स्तु श्चुभिः श्चुशात्।

( स्तु ।१।, श्चुभिः ३।।।, श्चु ।२।, अशात् ५। )।

सकारतवर्गौ शकारेण चवर्गेण वा योगे शकारचवर्गौ क्रमात् प्राप्नुतः, न तु शात् परौ। सचित्, शार्ङ्गिञ्जय। अशात् किं प्रश्नः।

४८। ष्टुभिः ष्टुष्वदान्तटोः।

( ष्टुभिः ३।।।, ष्टु ।२।, अपि ७।, अदान्तटोः ५। )।

---

४७। स्तु श्चुभिः। स च तुश्च तत्, श च चवश्च ते श्चवः तैः, अवयवापेक्षया श्चं, यथा—श्चः श्चामिति, श च चुश्च तत्। हविषये श्वनिर्देशात् (१) नञ् तत्पुरुषः, क्षञ् धातुः, अच् तकार इत्यादौ न स्यात्। एके तु अध्यच्ताच्येप्पिरिति ज्ञापकात् दान्तचोः परस्य स्तोश्चुत्वं न स्यादित्याहुः। अच्श्च नञ्श्च इत्यादौ चञाभ्यां सस्य श इति केचित् (२)। सस्य शत्वं यथा कष्णश्चिन्त्य इत्यादौ। दान्तादान्तसाधारणोऽस्य विषयः, अतएवादान्ते प्रत्युदाहरति प्रश्न इति। प्रच्छ धोः स्वपरचेत्यादिना नङ्, न जिश, छ्वोः शूटाविति छस्य शः।

---

(१) श्चुभ्यामितिकर्त्तव्ये श्चुभिरितिकरणात्।

(२) 'अत्र अचश्भिरिति अध्यच्ताच्येप्पिरित्यादिज्ञापकात् विभक्त्यन्त चवर्गान्तात् परौ सकारतवर्गौ शकारचवर्गौ न स्यातामिति बोध्यम्, ज्ञानक ज्ञापिताविम्बयो लक्षणमनुसरन्तीति न्यायात्। तेन नञ्समास क्षञ्धात्वादयः सिद्धाः। किन्तु अच्श्च नञ्श्च इत्यादौ उभयोः परयोश्चवर्गस्य दान्तत्वेऽपि विभक्त्यन्तत्वाभावात् सपः सस्य तालव्यशकारत्वम्"—इति दुर्गादासः।

सकारतवर्गौ षकारेण टवर्गेण वा योगे षकारटवर्गौ क्रमात् प्राप्नुतः, न तु षकारे परे, न च दान्तात् टवर्गात् परौ।

तट्टीका, चक्रिण्ढौकसे। अपि किं सत् षष्ठः। अदान्तटोः किं षट्-ते।

४९। षणां षण्णवति षण्णगर्य्यः। (१॥।)।

एते निपात्यन्ते।

५०। ले लस्तोः। (ले ७, लः १।, तोः ६।)।

ले परे तो लकारः स्यात्। तल्लयः, विद्वाँल्लिखति।

---

४८। ष्टुभिः। ष्टुभिरिति पूर्व्ववत्। ष च टु च तत्, न ष अष तस्मिन्, दस्यान्तो दान्तः स चासौ टुश्चेति सः, न सः अदान्तटुस्तस्मात्। तथाच दान्तटवर्गात् उच्चार्य्यमाणौ सकारतवर्गावित्यर्थः। तेन षट्सन्त इत्यत्र तनि कृते अदान्तत्वेऽपि प्राग्दान्तपरत्वान्न ष्टुत्वमिति। व्यनिर्द्देशान्न यथासङ्ख्यम्। स्तु इत्यनुवर्त्तयन्नाह सकारतवर्गाविति। अस्यापि दान्तादान्तयोर्व्विषयः।

४९। षणाम्। षणाञ्च षण्णवतिश्च षण्णगरी (१) च ताः। अनुकरणात् न लेर्लुक्। षणामिति नुमि डे प्राप्ते णो निपात्यते। नषतिनगर्य्योर्दान्तटोः परत्वादप्राप्ते णत्वं निपात्यते। नगरीति स्त्रीलिङ्गनिर्द्देशात् षड्नगरमित्यत्र न स्यात्।

५०। ले। तल्लय इति। लीयत इति भावे अल्; तस्य लय इति वाक्यम्। यद्वा लीयते अस्मिन् लयः, स लयो यस्येति

---

(१) षण्णां नगरीति दुर्गादासः, षण्णां नगराणां समाहार इति गोयीचन्द्र।

यलो द्विधारो निरनुनासिकः सानुनासिकः।
अमोऽनुनासिक स्तेन तत्स्थाने सानुनासिकः॥

५१। म्नो नुं झंस्यदान्ते।

( म्नोः ६॥, नुः १।, झसि ७।, अदान्ते ७। )।

अदान्ते स्थितयो र्मनयो र्नुः स्यात् झसि परे। रंस्यते, बृंहितं।

---

विग्रहः। ननु यलस्य सानुनासिकत्वं कुत इत्यत आह यलो द्विधेत्यादि। नास्ति रो यस्मिन् सोऽरः, यल इत्यस्य विशेषणं। तथाच रभिन्नयलो द्विधा द्विप्रकारः, एको निरनुनासिकः अनुनासिकत्वधर्म्मरहितः, (१) अपरः सानुनासिकः अनुनासिकत्वधर्म्मसहितः। तथाच शिक्षाकाराः—अन्तस्था यरलवा ईषत्-स्पृष्टा, रेफवर्ज्जिताः द्विप्रभेदाः सानुनासिका निरनुनासिकाश्च इत्याहुः। अम इति, अमः प्रत्याहारः। अनुनासिक इति अनु पश्चात् नासिकया उच्चार्य्यते यः सोऽनुनासिकः। अमस्तु अनुनासिकएव तेन हेतुना तत्स्थाने य आदेशः सः सानुनासिकः स्यात्, न निरनुनासिक इत्यर्थः। विद्वाँल्लिखति इत्यादौ सानुनासिको लकारः। एवं यँय्यम्यते सँव्वत्सर इत्यादि।

५१। म्नोः। म च न च तौ तयोः। न दान्तोऽदान्तस्तस्मिन्। रंस्यते इति रम धोः स्यते। बृंहितमपि बृहि वृद्धौ क्त, इदित्वान्नुन्, अनेन नस्य नुः।

---

(१) निराकुल इतिवदत्र अनुनासिकशब्दस्य धर्म्मपरतया निर्द्देशः।

५२ । ञपे ञम् नो । (ञपे ७, ञम् ।१।, नोः ६।) ।

अदान्ते स्थितस्य नो ञपे परे ञम् स्यात् । शान्तः, अङ्कितः ।

५३ । वा त्वरयपेऽरयम् ।

( वा ।१।, तु ।१।, अरयपे ७, अरयम् ।१। ) ।

दान्ते अदान्ते वा स्थितस्य नो रेफवर्जयपे परे रेफवर्जयम् वा स्यात् । यमो ऽनुनासिकः । यँय्यस्यते यंयस्यते, हरिँभज हरिंभज । कम्पते इति पूर्व्वेण नित्यम् । अरे किं—रंरस्यते ।

---

५२ । ञपे । ञप्ञमौ प्रत्याहारौ । शान्त इति शम् धोः क्ते अमुञोभस्यणाविति घः, पश्चात् पूर्व्वेण नो कृते अनेन नः । अङ्कित इति अकिक् लक्षणे (१) क्त, इम्, नुण्, पश्चात् पूर्व्वेण नो कृते अनेन ङः । अत्र पूर्व्वसूत्रात् म्नोरित्यनुवर्त्त्य तयोरेव ञम् तेन जंजप्यते इत्यादौ न नित्यं, किन्तु परसूत्रेण विकल्पः (२) झपीति कृते सिद्धे ञप इति करणात् इन्दांचकार इत्यादौ धामो नो न नित्यं ञम्, गौरवादर्थाधिक्यमिति ।

५३ । वा त्व । नास्ति रो यस्मिन् सोऽरः, अरश्चासौ यपश्चेति स तस्मिन् । एवं अरश्चासौ यम् चेति सः । यप्यमौ प्रत्याहारौ । अदान्त इत्यनुवर्त्तते, सिंहावलोकितन्यायेन दान्त इत्यपि ; अत आह दान्तेऽदान्ते इति । यँय्यस्यते इति यमधातोः यङ्, अमजपेत्यादिना गुण् । इह सामान्यनोर्ग्रहणात् यम् ।

---

(१) अत्र निवृत्तग्रहणमस्तीति दुर्गादासः ।

(२) जजम्यते इत्यादौ अमजपेत्यादिना अनुस्वारागमेन तस्य म्नोः स्थाने आन्तराभावात् निर्व्विकल्पः ।

## ५४ । दान्ते मो ऽसम्राजो हसे नुः ।

( दान्ते ७, मः ६, असम्राजः ६, हसे ७, नुः १ ) ।

दान्ते स्थितस्य मस्य हसे परे नुः स्यात्, न तु सम्राजः ।

शिवंस्तौति । असम्राजः किं—सम्राड़िति ।

---

एवं यँय्यम्यते संयम्यते, लँल्लयते, संलयते इत्यदान्ते । दान्ते तु सँय्यन्ता, संयन्ताः, सँव्वत्सरः, संवत्सरः, सँल्लयः, संलय इत्यादि । कम्पत इति कपि ङ चलने, ते, इदित्त्वान्नुण्, म्रो नुँरिति नौ क्षते अपि अम् इति । वाशब्दस्य व्यवस्थावाचित्वात् हकारस्य व्यवधानेऽप्ययमयम्, तेन किँय्ह्यः, किह्यः, किँव्ह्लयति किंह्लयति, किँल्ह्लादयति किंह्लादयति, किन्ह्नुते, किंह्नुते, किम्ह्मलयति, किंह्मलयति (१) । पद इति किं—किं ह्लादयति ।

५४ । दान्ते । दस्यान्तोदान्तस्तस्मिन् । न सम्राट् असम्राट् तस्य । क्विबन्तनिर्देशात् संराजते इत्यादौ न स्यात् (२) । "वा विरामे" इत्यन्यः । रामं, रामम् । दान्ते किं गम्यते । हसे किं ? अहमत्र ।

---

(१) "नमयवला परभूता यस्मिन् तस्मिन् हकारे परे पदान्ते मकारस्य स्थाने यथाक्रम नमयवला वा भवन्ति । यवला सानुनासिका निरनुनासिकाश्च भवन्ति, इह तु सानुनासिकानामेव विधानम । ह्नुते इति ह्नुङ अपनयने । ह्मल ह्मल सञ्चलने घटादि । ह्य इत्यव्यय गतदिनमभिधत्ते । ह्लादो सुखे च इति गोयीचन्द्र ।

(२) इति शब्देन सम्राट शब्दो यस्मिन्नर्थे रूढ तत्रैव पर्य्यानमिति बोध्यते । रूढिस्तु—येनेष्ट राजसूयेन मण्डलस्येश्वरश्च य । शास्ति यश्चाज्ञया राज्ञ स सम्राडित्यमरोक्ते । तेन स शोभन राजते संराट् चन्द्र इत्यत्र स्यादेवेति दुर्गादास ।

५५ । पुंसः सन् खप्यम्परेऽख्ये ।

( पुंसः ६।, सन् ।१।, खपि ७।, अम्परे ७।, अख्ये ७। ) ।

पुंसो मस्य सन् स्यात्, अम्परे खपि परे, न तु ख्ये ।

पुंस्कोकिलः । अम्परे किं—पुंक्षीरम् । अख्ये किं—पुंख्यातः ।

---

५५ । पुंसः । अम् प्रत्याहारः । अम् परो यस्मात् स तस्मिन् । न ख्योऽख्यस्तस्मिन्, खपीत्यस्य विशेषणम् । पुंस्कोकिल इति पुमांश्चासौ कोकिलश्चेति इति वाक्यं । विधानसामर्थ्यात् न पुनः स्यात्सलुक् । एवं पुंस्करोति पुमितिपदं करोतीति वाक्यम् । पुंस्कानमित्यादि । पुंक्षीरमिति पुंसः क्षीरमिति वाक्यम् । पुंख्यात इति पुंसा ख्यात इति वाक्यम् । सन्यनुनासिको नोर्वा समस्तु सुमि सन्नपि । नो रनुनासिको वा स्यात् सनि, सुमि तु समः सन्च वा स्यात् ।

सकतानां (१) क्रमाद्द्वित्वे सर्व्वेषाञ्च (२) द्वयोर्द्वयोः ।
अनुस्वारे भवन्त्यष्टावष्ट स्युरनुनासिके ।
मते षोड़श वा ज्ञेयाः कज्जट-श्रुतिपालयोः ॥ (३)

संस्कर्ता संस्कर्ता संस्कर्त्ता संस्स्कर्ता संस्सकर्त्ता संस्क्कर्त्ता संस्कर्त्ता संस्स्कर्ता । सँस्स्कर्ता सँस्कर्ता सँस्कर्त्ता सँस्स्कर्ता सँस्सकर्त्ता सँस्क्कर्त्ता सँस्कर्त्ता सँस्स्कर्ता । कज्जटश्रुतिपालयो

---

(१) स क त एषां वर्णानां ।

(२) सर्व्वेषां सकतानां ।

(३) कज्जटश्रुतिपालयोर्नामद्वयस्य वैयाकरणविशेषयोः ।

५६ । नो ऽप्रशामश्छते ।

( नः ६।, अप्रशामः ६।, छते ७। ) ।

दान्ते स्थितस्य नस्य सन् स्यात्, अम्परे छते परे, न तु प्रशामः । शार्ङ्गिँश्छिन्धि, चक्रिंस्त्राहि । अम्परे किं सन्त्सरः । अप्रशामः किं—प्रशान्तनोति ।

५७ । कांस्कान् नॄः पि वा ।

( कांस्कान् ।१।, नॄः ।१।, पि ७, वा ।१। ) ।

कांस्कान् कान्कान्, नॄः पाहि नॄन्पाहि ।

---

मतभेदात् षोड़शरूपाणि (१) । केचित् सनि मलोपे चत्वारि यथा—सस्कर्ता सस्कर्ता सस्स्कर्ता सस्कर्ता इत्याहुः ।

५६ । नो । न प्रशान् अप्रशान् तस्य । शार्ङ्गिंश्छिन्धि इति, छिदधोर्हि श्नण्, नणो न, हेर्धिः, सनि वानुनासिकः शार्ङ्गिँ-श्छिन्धि इत्यपि । चक्रिंस्त्राहि इति त्रायते इति त्राः, त्रा इव आचरेति क्विः, हिः, त्राहि । अन्ये तु त्राधुरदादिरप्यस्ति इत्याहुः । सानुनासिके चक्रिँस्त्राहि इत्यपि ॥

५७ । कां । कानिति द्वीप्सान्तस्य कानिति द्वीप्सान्ते, नॄन् इत्यस्य पकारे सन् वा स्यात् । कांस्कानिति । सानुनासिके काँस्कान् । सनभावपक्षे कान् कान् वीप्सार्थे द्विः । नॄनित्यस्य

---

(१) "द्वि-सकारमेकसकारं त्रिसकारं रूपत्रयं सानुस्वारसानुनासिकभेदात् षट्प्रकारं, तदेव द्विककारभेदात् द्वादशप्रकारमेतदेव भाष्ये दर्शितम्" इति गोयीचन्द्रः ।

५८। न ण टन ङ ञकन् श शस् स शसि वा।

(न ण टन ङः ६।, चकन् ।१।, श शस् स शसि ७।, वा ।१।)।

दान्ते स्थितस्य नस्य चन् शे, णस्य टन् शसि, टनयो स्तन् से, ङस्य कन् शसि, स्याद्वा। सञ्छम्भुः सञ्च्शम्भुः सञ्शम्भुः, सुगण्ट्षष्ठः सुगण्षष्ठः, षट्त्सन्तः षट्सन्तः, सन्त्सः सन्सः, प्राङ्क्षष्ठः प्राङ्षष्ठः।

५९। चपोऽवे जब्। (चपः ६।, अवे ७।, जब् ।१।)।

दान्ते स्थितस्य चपस्य जब् स्यात् अवे परे। वागीशः, चिद्रूपः।

---

पकारे पञ्चधा—नॄः पाहि नॄंः पाहि नॄंस्पाहि। सर्व्वत्र निपातनात् सन् विध। पक्षे नॄन् पाहि नॄंस्पाहि इति परे॥

५८। टश्च नश्च तत्, नश्च णश्च टनश्च ङश्च तत्, तस्य। एवकार उच्चारणार्थः। चकः प्रत्याहारस्तआद्यमितं करोति, तेन चकन्, तथाच चकोपस्थितचतुर्णां न इत्यर्थः, अतएव यथाक्रमं दर्शयति दान्ते स्थितस्येति। सञ्छम्भुरित्यादि—नस्य चनि कृते आगमो यद्गुण स्तद्ग्रहणेन गृह्यते (१) इति न्यायात् नस्यादान्तत्वे ञ्नोर्नुरिति नुः, ययात् अपे अम्, शहोश्चपादिति वा छ। चनभावपक्षे सञ् शम्भुः। सुगण्ट्षष्ठ इति शसः प्रत्याहारत्वज्ञापनार्थं मूर्द्धन्येनोदाहृतम्। एवं टनि वा कृते सुगण्ट्छम्भुः सुगण्ट्शम्भुरिति, एवं सुगण्ट्साधुरिति। प्राङ्क्षष्ठ इत्यादि॥

---

(१) यद्गुणो यस्य स्यागमभाक्तः। तद्ग्रहणेन गृह्यते तद्गत् ग्रायते इत्यर्थः। अत इर्गाद्राकः—न ण ट म ङ इत्यस्य पञ्चम्यन्तले चकि कृतेऽपीष्टसिद्धौ यत्रन्तस्य चकन् विधान तद्गुणेन चकादीनां षष्ठ्यन्तत्वार्थमित्याह।

६० । ञमे ञम् वा । (ञमे ७, ञम् ।१।, वा ।१।)।

दान्ते स्थितस्य चपस्य ञमे परे ञम् वा स्यात्। एतन्मुकुन्दः एतद्मुकुन्दः।

६१ । त्ये । (७।)।

त्ये मे परे दान्ते स्थितस्य चपस्य ञम् स्यान्नित्यम्। चिन्मयं, वाङ्मयम्।

---

५९। चपो। चप्जबौ प्रत्याहारौ। परबकारेणावप्रत्याहारं ज्ञापयन्नाह चिद्रूप इति।

६०। ञमे। पूर्व्वसूत्राच्चप इत्यनुवर्त्तते। अत्र यद्यपि अन्ते चप्जबाविति विधानात् (१) वाकारं विनैव एतद्मुकुन्द इति सिध्यति (२) तथापि वाशब्द एवं ज्ञापयति विरामाभावे दान्ते झपचप् एव, विरामे चप्जबाविति, तेन (३) परसूत्रस्य सार्थकत्वमिति। एतन्मुकुन्द इति।

६१। त्ये। दान्तस्थितस्य चपस्य नित्यं ञम् स्यादित्यर्थः। त्ये ञणनङाभावादाह त्ये म इति। चिदात्मकमित्यर्थे मयट्।

---

(१) चप्जबाविति विधानात् वक्ष्यमाण झप्झबोरिति सूत्रे इति शेषः।

(२) इति सिध्यति—एतद्मुकुन्द इत्यत्र एष चासौ मुकुन्दश्चेति समासे लुप्तविभक्तिकत्वेन दान्तत्वे सिद्धे विरामपरतया झबो जबि कृते दकारो भवत्येवेत्यशङ्क्याह तथापीति। एतद्मुकुन्द इत्यत्र तु दान्तत्वेऽपि विरामाभावात् न झप् झबोरित्यनेन जब्।

(३) तेन अत्र सूत्रे विकल्पविधानेन। अन्यथा चिद्मयमित्यनिष्टं स्यात्।

৬২ । শহোশ্চপাৎ বামি ছঝভৌ ।

( শহোঃ ৬॥, চপাৎ ৫।, বা ।১।, অমি ৭।, ছ-ঝভৌ ১॥ ) ।

দান্তে স্থিতাৎ চপাৎ পরয়োঃ শ-হকারয়োঃ ক্রমেণামি পরে ছ-ঝভৌ বা স্তঃ । তচ্ছিবঃ তচ্শিবঃ বাগ্‌ঘরিঃ বাগ্‌হরিঃ । অমি কিং—বাক্‌শ্চ্যোততি ।

৬৩ । স্বাস্তডোঽচি দ্বিঃ ।

( স্বাৎ ৫।, ঙড: ১।, অচি ৭।, দ্বিঃ ১। ) ।

স্বাৎ পরো দান্তে স্থিতো ঙডো দ্বিঃ স্বাদচি পরে ।

সুগণ্ণীশঃ সন্নচ্যুতঃ প্রত্যঙ্ঙাত্মা ।

---

৬২ । শহোঃ । শচ হচ তৌ তয়োঃ, ছচ ঝভ্ চ তৌ, অম্ প্রত্যাহারস্তস্মিন্ । তচ্ছিব ইতি স চাসৌ শিবশ্চেতি বাক্যং, পক্ষে তচ্শিবঃ । এবং বাক্ছ্লক্ষ্ণঃ বাক্শ্লক্ষ্ণঃ বাক্ছ্মশানং বাক্শ্মশানং ; অনয়োঃ পরয়োঃ শস্য নেচ্ছন্তি চান্দ্রাঃ (১) । বাগ্ঘরিরিতি, এষাং যো যেন ইতি নিয়মাৎ প্রাক্ সমো ঝভ্ পয়াৎ চপো জব্ । ত্রিষ্টুব্‌ভসতি ত্রিষ্টুব্‌হসতি ইত্যাদি ।

৬৩ । স্বাৎ । ঙড প্রত্যাহারঃ । সুগণ্ণীশ ইতি সুগণয়তি ইতি ক্বিপ্, পশ্চাদনেন দ্বিঃ । স্বাদিতি কিং—মহানয়ং, প্রাঙাস্তে । সনয়ঙন্তো দ্বিরিতি নির্দ্দেশাৎ স্ব-ঙডো দ্বির্ন স্যাৎ, তেন সনন্তাত্র সনিষ্যতে ইতি ভট্টবার্ত্তিকম্ । সন্নিচ্ছায়ামিতি নির্দ্দেশাশ্চ সূত্র-

---

(১) অনয়োঃ লকারমকারয়োঃ পরস্য শস্য ছত্বমিতি যেষাং, তথাচ "হসপরস্য নেতি কাতন্ত্রম্" ইতি সংক্ষিপ্তসারমূলম্ ।

६४। छोऽचः। (छः ११, अचः ५। )।

अचः परश्छकारो द्विः स्यात्।

---

क्तं विकल्पयति। नञोऽनाविति निर्देशात् अनो न द्विः तेना-नन्तः अनेक इत्यादि (१)।

६४। छो। अच् प्रत्याहारस्तस्मात्। दान्त इति नानु-वर्त्तते। मण्डूकगत्या ग्रहीयपादित्यादिना वानुवर्त्यं तस्य व्यवस्था-वाचित्वात्—

परस्परानपेक्षायां दान्तात् सदाथ वा भवेत् (२)।

अमाङऽस्तात्तथा विश्वजनादेयेति कीर्त्तितम्॥

यथा—तिष्ठतु कुमारी च्छत्रं हर देवदत्तेत्यादि (३) नित्यम्। माङ्‌वर्ज्जिताभ्यां अमुभ्यां विकल्पः। गौरीच्छाया गौरीछाया, कण्याश्च्छिन्धि कण्याश्छिन्धि। माङस्तु माच्छादयति। दान्ता-दिति किं म्लेच्छयति, पूर्व्वेण नित्यम्। विश्वजनच्छत्रं विश्वजन-छत्रं, दधिच्छाया दधिछाया इत्यादि छान्दसमित्यन्ये (४)।

---

(१) "अत्र अनडुत्तरोऽचावी भिन्योरिति, यङन्तिपदादे भिन्नान् मे इति, अनुयङन्तोहिरित्यादिवाचकादसमासेऽस्य विषयो बोध्यः। तेन समन्त इति, अनुयङन्तोहिरित्यादिवाचकादसमासेऽस्य विषयो बोध्यः। तेन समन्त यडन्त तिडन्ताः सिद्धाः। सन्धिग्रहणैः समादि इत्यादौ तु वाचकसिद्धस्यानित्य-त्वात्"—का सि।

(२) परस्परापेक्षा यत्र नास्ति तत्रापि पदान्तदीर्घादुत्तरश्छो नित्यं द्विर्भवति इत्येके। अत्रानेकाचार्य्याणामसम्मतिरेव—इति गोयीचन्द्रः। यत्र चाजन्तपदस्य छादिपदस्य च परस्परमन्वयो न स्यात् तत्रेत्यर्थः।

(३) नात्र परस्परापेक्षा, वाक्ययो र्भिन्नत्वात्—इति गोयीचन्द्रः।

(४) अस्य सूत्रस्य वृत्तौ अचीति पाठः बहुषु पुस्तकेषु दृश्यते। संक्षिप्तसारे-ऽपि "छोऽचः" इत्यस्य वृत्तौ "अच उत्तरश्छकारः स्वरे परे द्विर्भवती"त्युक्तम्।

अचो ह्राभ्यामरो यपः । अचः पराभ्यां हकाररेफाभ्यां रभिन्नयपो द्विः स्याद्वा । प्रह्नुते प्रह्न्नुते, लेह्मि लेह्म्मि, सूर्यः सूर्य्यः, शूर्पः शूर्प्पः इत्यादि । अच. किं-संह्नुते । यपः किं-वर्षा । अरग्रहणमुत्तरार्थम् ।

स्यादनचि । स्यात् परोऽरो यपो द्विर्वा स्यात् अनचि । सँय्यन्ता सँय्यन्ता, क्षुप्यते क्षुप्प्यते । स्यात् किं-वाय्वोः । अरः किं-धर्म्मः । अनचीति किं-दधि । विरामेऽपि-नक् नक्क, अज्भिन्नत्वात् (१) । वाँदयोति केचित्-वाक् वाक्क् वाग्ग् इत्यादि ।

रात् यस् । रेफात् परः यस् वा द्विः स्यात् अनचि । मर्ष्यते मर्ष्ष्यते । अनचि किं मर्षणम् ।

यल यप खप शसेभ्यो थप यल-शस खपाः । एभ्यः एते क्रमात् द्वयाः स्युर्वा । उल्का उल्ल्का, शुक्लः शुक्क्लः, क्ष्वीरं ख्क्षीर, स्कन्धः स्कन्ध इत्यादि ।

पुत्रादि-पुत्रपुत्रादिनोस्तोऽनाक्रोशे । पुत्रादिन् इति शब्दस्य पुत्रपुत्रादिन् इति शब्दस्य च तकारस्य द्वि र्वा स्यान्नत्वाक्रोशे । पुत्रान् पुत्रपुत्रान् वा अत्तु शीलमस्या. सा पुत्रादिनो पुत्रादिनी पुत्त्रपुत्त्रादिनी पुत्रपुत्त्रादिनी, व्याघ्री मत्सी वा । केचित्

---

अत्र गोयीचन्द्रेण 'स्वरे परे इति इत्तो प्रमादपाठ, यतो नैतत् पाणिनि सर्ववर्म्मचन्द्रादिसम्मतम । एव सति ह्नीष्यते इत्यादौ द्वित्व न स्यात्' इत्युक्त्वा स्वरे परे इति निराकृतम । ह्राष्यते इति ह्नीङ लज्जे इत्यस्माङ्गावे ते ।

कातन्त्रेऽपि 'द्विर्भाव स्वरपरश्छकार इति सूत्रे टीकाकारेण "स्वरात् पर इति तत्पुरुष न पुन स्वर परो यस्मादिति बहुब्रीहि, तेन उच्छ्तीति न द्विर्भाव, विच्छ्यते इति द्विर्भाव एवे त्युक्तम ।

(१) अजभिन्नत्वात विरामस्येति शेष ।

६५। झप्झसोः खस्झवो चप्जवावन्ते च।

(झप्झसोः ६॥, खस्झवोः ७॥, चप्जवौ १॥, अन्ते ७।, च ।१।)।

झप-झसयोः स्थाने खस-झवयोः परयोः क्रमात् चप-जवौ स्तः, विरामेच। शिवच्छाया, अच्छा।

---

पुत्रहती पुत्रजग्धी इत्यपि आहुः। अनाक्रोशे किं-पुत्रादिनी पुत्रपुत्रादिनी हपलि भूयाः।

मू-नी-श्रयः। एते द्वयाः स्युर्व्वा। उर+ +केण उरmmपेण उरः: केण पक्षे उर+केणेत्यादि। परस्वरानपेक्षायामित्यादि शाकटायनमते, ग्रन्थकृता तु उपेक्षितं, श्रुतिं प्रति भेदाभावात्।

लोपो वा य-समझसे हसाद्य झसस्य। हसात् परस्य यस्य ये झसस्य समझसे लोपः स्यात् वा। आस्ये भवं आस्यं आस्त्यं, हर्य्यते (१) हर्य्यते जर्गायति जग्गायति पिण्ढि पिण्ड्ढीत्यादि। हसात् किं, भव्यते भेत्ता। झसस्येति किं, शार्ङ्गम्। समेति किं तर्स्रा।

अभ्र-वभ्र-मभ्रां रो ये। एषां रस्य लोपो वा स्यात् ये। अभ्यते वभ्यते मभ्यते, पक्षे अभ्रते इत्यादि।

६५। झप्। झपादयः प्रत्याहाराः। क्रमादिति—

झपः खसे चपादेशो जवादेशो झसो झवे।

विरामे तौ तयोः स्यातामित्यस्यार्थः प्रकीर्त्तितः॥

शिवच्छाया इति शिवस्य छाया इति वाक्यं, छस्य छोऽच

---

(१) हर्य्य क्लमे गतौ इत्यस्य भावे रूपम्।

## वि-सन्धिः ।

६६ । वेः सोऽशसन्ते छते ।

(वेः ६।, सः १।, अ-शसन्ते ७।, छते ७।) ।

वेः सकारः स्यात् अ-शसन्ते छते परे । कृष्णश्चिन्त्यः, हरिष्टीकते, विष्णुस्त्राता । शसन्ते तु—कः त्सरुः ।

६७ । से तु क-ख-प-फे वा ।

( से ७।, तु ।१।, क-ख प-फे ७', वा ।१।) ।

---

इति द्विलेऽनेन पूर्वस्य चः । न च्छतीति अच्छा (१) निर्म्मला । चपः खध् वा शसि । चपस्यं खप् स्याद्वा शसि । हख्श्यामा हक्श्यामा अफ्सराः अप्सराः पठ्सन्तः पट्सन्तः तथ् षष्ठः तत्षष्ठः । शसि किं वाग्हरिः ।

इति हस्-सन्धिपादः ।

---

६६ । वेः । शस् अन्ते यस्य सः, न शसन्तः अशसन्तस्तस्मिन् । छत् प्रत्याहारः तस्य विशेषणं तेन शसन्तभिन्ने छते इत्यर्थः । कृष्णश्चिन्त्यः इति, अनेन से छते चवर्गयोगात् शः । एवं हरिष्टीकते इत्यत्र टवर्गयोगात् षः ।

६७ । सेतु । सः समासस्तस्मिन् । भास्कर इत्यादि, भासं करोति, भासा खरस्तीक्ष्णः, भासां पतिः, भासा फेदरिति वाक्यम् । परे तु भाःकर इति नेच्छन्ति । अत्राहुः—

---

(१) नञ्पूर्व्वात् छो ध्नूनी इत्यस्मात् धातो कर्मप्रत्यये स्त्रियां रूपम् ।

वेः सकारो वा स्यात् क-ख-प-फेषु परेषु, से सति । भास्करः भाःकरः, भास्खरः भाःखरः, भास्पतिः भाःपतिः, भास्फेरुः भाःफेरुः ।

---

सदा ऽयस्तमसोः काण्डे वास्तोर्वाचो दिवःपतौ ।
भ्रातुः पुत्रे शुनः कर्णे पिण्डे तु मेदसो मतः ।
नमः पुरः क्रियायोगे तिरोऽन्तर्द्धौ पराभवे ।
निर्दुराविर्बहिः-प्रादुश्चतुरान्तु कखे पफे ।
अव्यासो ऽपरदस्तस्य पात्र-कर्णी-कुशा-कणि ।
कामि-कंस-कुम्भ-पात्रे, पदे तु स्याच्छिरोऽधसोः ।
इसुसः क-ख-प-फेऽथा सेपि वा स्यात् क्रियाश्रये ।
द्वित्रिचतुर्ष्विचक्त्वोर्थेऽथाव्ययस्य सथ वेरपि ।
क-काम्य-कल्प पाशेषु, रस्वकाम्येषु वेः सदा ।
इकः सः षः क ख प फे वाशब्दस्य व्यवस्थया ।

अय आदे वेः सः स्यात् काण्डादौ से सति । अयस्काण्डः तमस्काण्डः वास्तोष्पतिः, वर्हिष्ठादित्वात् षः, वाचस्पतिः दिवस्पतिः भ्रातुष्पुत्रः, इकः सः षः क ख प फ इति षः, शुनस्कर्णः, पञ्चभ्यः ष्या अलुक् । मेदस्पिण्डः । क्रियया सह से नमःपुरसो वेः सः । नमस्कृत्य नमस्कारः, नमःशब्दस्य साक्षादादित्वात् वा सविधानात् नमः कृत्वेति च ।

अन्तर्धानपराभवयोस्तिरसो वेः सः । तिरस्करोति तिरस्कारः तिरस्कृत्य, वा स-विधानात् तिरःकृत्वेति च ।

निरादीनां क ख प फे परे वेः सः । निष्कर्षः दुष्करः आवि-

स्कारः वहिष्कृतं प्रादुष्कृत्य चतुष्कपालमित्यादि। सर्व्वत्र इवः सः षः क ख प फ इति सः।

पाशादौ से अनुत्तरदस्यस्य व्यवर्ज्जस्याऽसन्तस्य वेः सः। अयो लौहः पाशो रज्जुः अयस्पाशः, अय इव कर्णावस्या-अयस्कर्णी, स्त्रीलिङ्गनिर्द्देशात् अयःकर्णः अयस्कुशा, आवन्त-निर्द्देशात् अयः-कुशीति। अयः-करोतीति अयस्कारो जाति-विशेषः। तेजः कामयते तेजस्कामः अयस्कामः। अन्नन्तस्यैव कामो ग्रहणात् अन्नन्ते माभूत्, तेजः कामः। अयस्कंसः (१) चतुःषष्टिपलात्मकपरिमाणार्थग्रहणात्, अन्यत्र अयःकंसः। अय-स्कुम्भः, प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं इत्युक्तेः अयस्कुम्भीति। एवं अयस्पात्रं अयस्पात्रीति। अव्येति किं स्वः कामः। अपरदस्येति किं, धर्म्मास्तु कामार्थयशःकरीषु इति भट्टिः।

पदशब्दे परे शिरोऽधसो वेंः सः वे। शिरस्पदं अधस्पदं। से किं शिरःपदे करोति, अधःपदे करोति। अपरदस्यस्यानुवृत्तेः परम-शिरः-पदं परमाधः-पदम्।

इसन्तोसन्तयोः से सति क ख प फे परे वेः सः। सर्पिष्कुण्डं यजुष्पाठः। से किं तिष्ठतु सर्पिः पिबोदकम्। अपरदस्यस्यानु-वृत्तेः परमसर्पिः-कुण्डम्।

अथ क्रियया परस्परापेक्षायां इसन्तोसन्तयोरसेऽपि क ख पफेषु वेः सो वा। सर्पिष्कुरु यजुष्पठ, पक्षे सर्पिः कुरु यजुः-

(१) अयसः कंस इति षष्ठीसमासः।

६८। शसि शस्। ( शसि ७।, शस्।१। )।

वेः शस् वा स्यात् शसि परे। हरिश्शेते हरिःशेते, सन्तष्पट् सन्तःपट्, शिवस्सेव्यः शिवःसेव्यः।

---

पठ, षष्ठशब्दात् परदस्येति निष्टत्तं, तेन परमसर्पिष्कुरु परमयजुष्पठ इत्यपि। क्रियान्वये किं, परमसर्पिः कुण्डम्।

द्विस्त्रिचतुरित्येषां कखपफेषु वेः षो वा स्यात् वारेऽर्थे। द्विष्करोति त्रिष्खादति चतुष्पठति। पक्षे द्विः करोति इत्यादि। वक्तत्वोऽर्थे किं, चतुष्कपालमिति पूर्व्वेण नित्यम्।

अयानन्तरं व्यवर्जस्य सस्य वेः कादौ नित्यं सः स्यात्। कस्येदमयः अयस्कं, आत्मनः पयइच्छति पयस्काम्यति, पयस्कल्पं, धनुष्पाश इत्यादि। अव्ययस्येति किं, अधःकं, स्वःपाशः।

रेफस्य वेः काम्यभिन्ने कादौ सः स्यात्। गीष्कं, गीष्कल्पः, धूष्पाश इत्यादि। काम्येतु गीःकाम्यति। अव्येति किं स्वःकल्पं। अयस्काण्डादेराकृतिगणत्वात्—

आभीक्ष्ण्ये कः कः इत्यर्थे कस्कः, एवं कुतः कुत आगतः कौतस्कुतः। क्रिवन्तः सद्यःक्रीस्तत्र भवः क्रतुः साद्यस्क्रः, सदास्कारः, मुहुस्कार इत्यन्यः। अयस्काण्डो लौहभेद इत्यादि।

इकः परस्य वेः सस्य षः स्यात्। प्रयोगा यथास्थाने दर्शिताः। (१)

६८। शसि। शस् प्रत्याहारः। हरिश्शेते इति से कृते सिद्धे

---

(१) क्वचित् पुस्तके अत्र "चतुष्कपालमित्यादौ वेः से इान्तत्वात् षत्वाभावे इकः स' प इत्युक्त"मित्यधिक' पाठ।

६९ । कख-पफयो र्मून्यौ ।

( कख-पफयोः ७॥, मून्यौ १॥ ) ।

वेर्मून्यौ क्रमात् वा स्यातां कख-पफयोः परयोः ।

हरि+काम्यः हरिः काम्यः, मणि+खनिः मणिः खनिः, कृष्णपाता कृष्णः पाता, भक्तिफलति भक्तिः फलति ।

७० । अतोऽह्वयुः । (अतः ५।, अत्-ह्वि ७।, उः१।)।

अकारात् परस्य वेरुकारः स्यात् अकारे ह्वि च परे ।

शिवोऽर्च्यः, शिवोवन्द्यः ।

---

सन्तप्पट् इत्यादौ अपीतिवर्जनात् पत्वार्थं शस्विधानमिति, तेन श-ष से श-ष-साः स्युरित्यर्थः । खपान्ते शसि लुग्वा । खपान्ते शसि परे वे लुप् वा स्यात् । कपश्नीतति कष्टीवति कस्तौति । पक्षे कः श्नोतति इत्यादि ।

६९ । कख । कश्च खश्च तत्, पश्च फश्च तत्, पश्चात् कखश्च पफश्च ते तयोः । मण्डूकगत्या अशसन्त इत्यनुवर्त्तते, तेन वासः क्षौमं, कः प्साति इत्यादौ मून्यौ न स्यातां । वाशब्दस्य व्यवस्था-वाचित्वात् ख्याधौ न स्यात्, तेन शिवःख्यात इत्यादि ।

७० । अतः । ह्व् प्रत्याहारः परवकारेण। अपोऽक् समो णे ऋक्चेति ज्ञापकात् सूत्रनिर्देशाच्च (१) शिवोऽर्च्य इति वेरुत्वे अता सहादौ गुः, पश्चादकारलोपः ; अन्यथा उकारस्य वः स्यात् (२) ।

(१) सूत्रनिर्देशात् अतोऽह्वयुरिति सूत्रे अतोऽत् इति निर्देशात् ।

(२) अत्र अपदान्त इत्यस्यानुवृत्ति र्नास्ति, अनिष्टत्वात्, तेन रामोऽश्नातीति स्यादेवेति दुर्गादास- ।

७१ । अ-भो-भगोऽघोभ्योऽवे लुप् ।

( अ भो भगोऽघोभ्यः ५।।।, अवे ७।, लुप् ।१।) ।

अवर्णात् भो भगो अघोभ्यश्च परस्य वेर्लुप् स्यात् अवे परे। रुद्रा नमस्याः, भो हरे, भगो रघ, अघो यज ।

७२ । य वाचि । (य ।१।, वा ।१।, अचि ७।)।

अवर्णात् भो भगो अघोभ्यश्च परस्य वे र्यो वा स्यादचि परे। शिवयुग्रः शिवउग्रः भोयच्युत भो अच्युत ।

---

७१ । अभो । भो भगो अघो इति सम्बोधनस्यैकदेशानुकरणम् (१) । परसूत्रसापेक्षत्वात् इहापि नोदाहृतम् । अव-प्रत्याहारः परवकारेण इत्याह रुद्रा नमस्या इति । नमस्या इति नमःशब्दात् नमस्तपोवरिव इत्यादिना क्यः, नमस्यः, तस्य धुसंज्ञा, ततस्तव्यानीयया इति ठे यः, यथाहसालोप इत्यकार-लोपे, लोपो वा य-समभसे हसात् य समभसस्येति वा यलोपः, ततो लिङ्गसंज्ञाया स्याद्युत्पत्तिः ।

७२ । यवा । शिव उग्रइति वेर्लुपि न सन्धिः । यइत्यस्य ईषत्स्पृष्टता सिद्धैव, ईषत्पृष्टतरो योऽनेन विधीयते । वाशब्दस्य व्यवस्थावाचित्वात् अवर्णादचि य्वौ दान्तौ वा लघुप्रयत्नतरावपि स्यातां, तेन तयाय्याः तयाय्याः, लुप्पक्षे त आय्या. । पटवेहि पटवेहि पटएहि । लघुप्रयत्नता हि उच्चारणस्थानशैथिल्यम् (२) ।

---

(१) भो भगो अघोरित्येषा विसर्ग विहायेत्यर्थः ।

(२) शैथिल्य मन्दप्रयत्नता ।

७३। रिचो ऽवे। (र।१।, इचः ५।, अवे ७।)।

इचः परस्य वे रेफः स्यादवे परे। हरिरयं, चतुर्भुजः।

७४। रोऽचः। (रः ६।, अचः ५।)।

अचः परस्य रेफस्य वे रेफः स्यादवे परे। भ्रातरव, धातर्गच्छ।

७५। खपि वा। (खपि ७।, वा।१।)।

अचः परस्य रेफस्य वे रेफः स्याद्वा खपि परे। गीर्पतिः गीष्पतिः गीःपतिः।

---

एवं उञि आत् न यः (१) तेन देवदत्ता उ एकविंशतिः, देवदत्त उ एकः, अत्र नित्यं वेर्लुप्।

७३। रिचः। र इति लुप्तप्रथमं दं। स्वरूपभङ्गनिरासाय अनुकरणत्वाद्वा न विः, इच् प्रत्याहारस्तस्मात्। अत्रापि अव-प्रत्याहारः परत्वकारेण इत्याह चतुर्भुज इति, चत्वारो भुजा यस्य इति वाक्यम्। (२)

७४। रो। र इति षीकान्तं दं। आद्र इति कृते सिद्धे अज् ग्रहणं परार्थम्। (३)

७५। खपि। खप् प्रत्याहारः। मण्डूकगत्या वे तु कखपफे इत्यतः म इत्यनुवर्त्तते, तेन इयं गीः पतिरसावित्यादौ न स्यात्।

---

(१) उञि परे अवर्णात् परस्य वेर्लो न स्यात्।

(२) चतुर्भुज इति नानाव्यधिकरणबहुव्रीहिबाधेन परत्वमयोराहरणं भविष्यतिमिति मामहनीयं, वार्त्तिंकतद्विषयेषया तत्पूर्वनिमित्तकविषयस्मात्परत्वतया चत्वारीति केचित्।

(३) परत्वे अचोऽसहर्ष्नि विना आहर्पतिरित्याद्यसिद्धेरित्यर्थः।

गीर्पतिरिति गिरां पतिरिति वाक्यम्। गीष्पतिरिति अय-स्काण्डादेराकृतिगणत्वात् से तु कखपफे वेति वेः से, इकः सः षः इति षः। उभयत्वाप्राप्तपक्षे (१) गी:पतिः गीर्व्वाण इत्यादि। एवं अहर्पति अहस्पतिः अह$\asymp$पतिः अहःपतिः, धूर्पतिः धूष्पतिः धू$\asymp$पतिः धूःपति। यद्यपि सामान्येनोक्तं तथाप्यभिधानात् ज्ञेयम् (२)।

एकाधिकरणे प्रचेतसो राजसे। प्रचेतसो वेः रेफः स्यात् वा एकाधिकरणे राजन्निति शब्दे परे न तु से। हे प्रचेता राजन् हे प्रचेतो राजन्। एकाधिकरणे किं शुद्धधि प्रचेतो राजन् गच्छ। से तु प्रचेतोराजन् भोः (३)। नाम्नग्रहणात् शत्रन्ते (४) प्रचेतो राजन् गच्छ।

---

(१) खपि वेति से तु कखेष्वुभयोरप्राप्तिपक्षे इत्यर्थः।

(२) एतेन गिर् धुर् अहन् एषामेव विसर्गस्य पतिशब्दे परे एव स्यादिति ज्ञापितम्। अतएव आशीःपतिः गीःपाठ इत्यादौ न स्यादिति दुर्गादास। गीष्पतिरित्यत्र "इद निपात्यमित्यन्ये इत्यधिक पाठ। सन्धिप्रकारे तु सन्धिपादे १६५ सङ्ख्यक सूत्रे गीष्पतिरित्यसाधुरित्युक्तम्।

अमरटीकायां गीष्पतिशब्दे तु 'गिरः पतिः षत्वे च कस्कादित्वात् साधु' रिति रघुनाथ। भरतस्तु 'गिरः पतिः गीष्पति रौत कखपफेवेति स मनीषादित्वात् षत्वं, साभावपक्षे कखपफयोर्मून्याविति उपाध्मानीये गी$\asymp$पतिरिति, तदभाव-पक्षे खपि वेति रेफे गीर्पति, तदभावपक्षे विसर्गस्य स्थितिरेव गीःपतिरिति। एवं चातुरूप्य चन्द्र क्षीरस्वामि वोपदेव सुभूत्यादीना सम्मतमेव। अतएव गीष्पति-रित्यसाधुरिति कस्यचिद्वचनं न हृद्य मित्याह।

(३) प्रचेता राजा यस्येति विग्रह।

(४) शत्प्रत्ययान्ते राजधातौ परे न इत्यर्थः।

७६ । नाह्नो रकत्तौ । (न ।१।, अह्नः ६।, रकत्तौ ७।)

अह्नो रेफस्य वे रेफो न स्यात् रेफे के त्तौ च परे ।

अहोरात्रः अहस्करः, अहोभिः ।

७७ । हस्येतत्तदोऽनञकः से लोपः ।

( हसि ७।, एतत्तदः ५।, अनञकः ५।, सेः ६।, लोपः १। )।

नञक्वर्जादेतदस्तदश्च परस्य से वें लोपः स्यात् हसि परे ।

एष कृष्णः, स विष्णुः । अनञकः किम्—असः शिवः, एषकोरुद्रः ।

---

७६ । नाह्नः । रश्च कश्च त्तिश्च तत्तस्मिन्, सौत्रत्वान्नुण् । अत्र सामान्यशब्दस्य विशेषपरत्वात् रात्रिरूपरथन्तराणां (१) रेफेष्वेव, तेनाहारजमीत्यादौ निषेधो न स्यात् । अहोरात्र इति एकदेशविकृतमनन्यवद्भवतीति न्यायादिति परे । चन्द्रस्तु रेफमात्रे निषेधात् अहोरजनी अहोरमणीयमित्याह, अत उक्तं रेफ- इति (२) । ई सिल्लोपे च । अह्नः सिल्लोपे वेः रेफो न ई । दीर्घाह्नो घोषः हमाह्नो हेमन्त इत्यादि । ई किं अत्यह- र्हेमन्तः । सोपग्रहणात् लुकि माभूत्—दीर्घाहर्यमम् ।

७७ । एष च स च तत्तस्मात्, नञ् च अक् च तौ, तौ न विद्येते यस्य तत्तस्मात् । सेः किं एतैस्तै गम्यते ।

---

(१) रेफमात्रं ग्राह्य।

(२) [illegible] इति [illegible] मुग्ध- [illegible] इति ।

७८। ढ्रोढ्रि घँश्चानुः।

( ढ्रः ६।, ढ्रि ७।, घँः १।, च ।१।, (अन्-ऋट)= अनुः ६।)।
ढकारस्य ढकारे परे, रेफस्य रेफे परे, लोपः स्यात्, पूर्व्वस्य च ऋवर्जस्य घँः। रूढ़ः, हरीरम्यः। अनुः किं—तृढ़ः।

इति वि-सन्धिपादः।

इति सन्ध्यध्यायः।

---

एषे च पादपूरणे। आभ्यां सेर्वें लोपः स्यात् पादपूरणे कर्त्तव्ये, एष इति प्रोक्तान्ते परे। यथा—

सैष दाशरथी रामः सैष राजा युधिष्ठिरः।
एषैष (१) रथमारुह्य मथुरां याति माधवः॥

पादपूरण इति किं, स एष चिणोति, स एष पृथिवीपालः पालयामास मेदिनीमिति। एषेति किं, स एव श्रीहरिः पायाद्देवक्यानन्दवर्द्धनः।

७८। ढ्रो। ढश्च रश्च तत्तस्य, न ऋट अनृ तस्य। रूढ़ इति रुहौ जन्यां क्त, होढ़, ढभात्तस्य धः, ष्टुभिरिति धस्य ढः, अनेन लोपघौँ। तृढ़ इति तृहधू हिंसे, क्त, ऊदित्त्वादिमोऽभावे साधनं पूर्व्ववत्। वि-सन्धिपादः (२)। सन्ध्यध्याय इति—एकार्थावच्छिन्नः पादसमूहोऽध्यायः॥

---

(१) एषैष इति माधवविशेषणम्, सप्तमे द्वित्वम्।
(२) अत्र कुत्रचित् पुस्तके श्लोकोऽयं दृश्यते—

२यः । अजन्ताध्यायः ।

## संज्ञा ।

७९ । लिः—सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् । (लिः ५।, सि—सुप् ।१।।। ) ।

स्यादीन्येकविंशतिर्लिः पराणि प्रयुज्यन्ते । ज श ट ङ पाः सि-ङस्योरिकारश्चेतः ।

८० । त्रिशः प्री ह्री ची घी पी धी म्राः ।

( त्रिशः ।१।।।, प्री—म्राः १।।। ) ।

स्यादीनि त्रीणि त्रीणि क्रमात् प्री ह्री वी ची पी धी मी-संज्ञानि स्युः ।

---

७९ । लिः । स्यादीनामेकविंशतिः प्रत्येकं दं, सीमत्वात् चेर्लुक् । ज श ट ङ पानां सि-ङस्योरिकारस्य चेत्त्वं चिह्नार्थम् । अनिर्द्दिष्टार्थत्वात् स्वार्थे भवन्ति स्यादय इति । स्यर्थसम्मुग्धार्थे प्रीत्यादिना अर्थनियमः कार्य्यः, अनेन तु स्यादीन्येव विधीयन्ते, अतो नायं व्यर्थः ।

८० । त्रिशः । त्रीणि त्रीणि त्रिशः वीप्सार्थे शसम् । प्रत्रा-

---

श्रीमहोपदेशकया सम्यर्थसम्पादिना
मध्यमाय एव निहितसम्पादका टिप्पणी ।
संज्ञाग्रीवमाश्रुदयानध्यानसमापिनी
श्रीरामेण पाणिनिमते दाशाय समर्प्यते ॥

## ८१। सम्बुद्धौ सि धिः ।

( सम्बुद्धौ ७, सिः १, धिः १। ) ।

सम्बोधने विहितः सि धिसंज्ञः स्यात् ।

## ८२। स्यमौजस् घिः ।

( सि अम् औ जस् ।१॥, घिः १। )

सि अम् औ जस् एते घिसंज्ञाः स्युः ।

---

दीनां च–सः प्रीचेत्यादि। परे तु प्रथमा, द्वितीया, तृतीया, चतुर्थी, पञ्चमी, षष्ठी, सप्तमीत्याहुः। ग्रन्थकृन्मते प्रथादेर्नदादि-पाठादीप्। अतएवाग्रे सदाऽनूक्तेऽसादिप्रथाः, क्रियान्तःकालाध्वनीय पीच इति स्त्रीलिङ्गनिर्देशः कृतः।

८१। सम्बुद्धौ। सम्बुद्धिः सम्बोधनं, चेतनाचेतनयोः स्थितयोराभिमुख्येऽभिधानं, तत्र विहितस्य सेरेव धिसंज्ञेत्यर्थः। एके तु वेकल्यादिना अचेतनस्यापीत्याहुः। सम्बुद्धिरिति परे।

८२। स्यमौ। सिश्च अम् च औश्च जश् च तत्। प्रथमौघि-रितिकृते सिद्धे स्यमौजस् इति कृतं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इति परिभाषाज्ञापनार्थम्, तेन सख्यावित्यत्र घौत्रिरिति न त्रिः स्यात् (१)। अम्जसोर्मध्ये पाठात् औकार-द्वयस्य ग्रहणम्, अन्यथा व्युत्क्रमनिर्देशो व्यर्थः स्यात्। सर्व्व-नामस्थानमिति परे।

---

(१) स्यादिपठितस्यैव औकारस्य घिसंज्ञा, तस्य मुख्यत्वात्, न तु यस्य कस्य-चित् स्थाने जातस्य, तस्य लाक्षणिकत्वात् इत्याशयः ।

८३ । शिः क्लीवे । (शिः १।, क्लीवे ७। ) ।

नपुंसके शिरेव घि-संज्ञः स्यात् ।

८४ । दान्तवत् सभि । (दान्तवत् ।१।, सभि ७। ) ।

सभयोः परयो दान्तवत् कार्य्यं स्यात् ।

८५ । भौ लिध्वो र्हसभसोरन्ते च ।

( भौ ७।, लिध्वोः ६॥, हसभसोः ७॥, अन्ते ७।, च ।१। ) ।

भौ परे यत् कार्य्यं वक्ष्यते त-लोर्हसे धोर्भसे स्यात्, अन्ते चतयोः ।

---

८३ । शिः क्ली । शिर्व्वेति एवकारेण शिभिन्ना व्यवच्छिद्यन्ते, तेन वारिणी इत्यादौ नमम्महम इति न घं: ।

८४ । दान्तवत् । अधिकारात् स्यादेरेव सभयोर्दान्तत्वातिदेशः, तेन पुम्भ्यां पुंभ्यामित्यादौ वा यम्, न तु रंस्यते मंस्यते इत्यादौ मनो र्नुनिषेधः ।

८५ । भौन्लिध्वोः । लेर्हसन्तं धोर्भसन्तं भिरित्यर्थः । लिधुभ्यां भसन्तं भिरिति क्वते सिद्धे एतत्करणं, लेर्दान्ते धोर्दान्तादान्तयोर्भिकार्य्यज्ञापनार्थं, तेन कम्राता शकस्याता इत्यादौ न स्यादेरिति सकयोर्लोपः । अभ्राक्षीत्, आक्षीत्, अषोढ़ अघट्, अघक्, अधोक् इत्यादौ सकलोप-ढ-षड्-कड्-घाः स्युः । (१)

---

(१) कम्राता इत्यत्र म न र इति लिभि र्भैः संयोगः, तेषु रेफो भिः, तस्मिन् परे म्न् इति संयोगस्य दान्तत्वाभावात् स्यादेः सोलोप इति न सलोपः । एवं शक् स्याता इत्यत्रापि न सलोपः । अभ्राक्षीत्, आक्षीत् अषोढ़ एषु भदान्तत्वे ऽपि

८६। हसोऽन्तः फः। (हसः ११, अन्तः ११, फः ११)।

हसो विरामश्च फसंज्ञः स्यात्।

८७। सर्व्व विश्व उभ उभय भवत् त्वत् त्वैक सम सिम नेमाः, अन्यान्यतरेतर डतर डतमाः, त्यद् तद् यद् एतदिदमदः किम् इस्माद् युष्मदः, पूर्व्वपरावर दक्षिणोत्तरापराधरान्तरस्वाः स्विः।
(सर्व्व—नेमाः १।।।, अन्य—डतमाः १।।।, त्यद्—युष्मदः १।।।, पूर्व्व—स्वाः १।।।, स्विः ११)।

---

८६। हसो। अन्तः परे वर्णाभावः। स च त्रिविधः—प्रागभावः प्रध्वंसोऽत्यन्ताभावश्च। इह तु प्रध्वंसात्यन्ताभावयोर्ग्रहणम्। तेन अरुणः पयः रामः इत्यादौ स्नोर्विः। हस इति दभेदः स्यादिहस-ज्ञापनार्थः, तेन असीत्यादौ न विः, वष्टि इत्यादौ न डः (१)। नोऽन्तः फः इति कृते दान्तातिदेशात् (२) पयोभ्यां राजभ्यां पुंभ्यां यज्ञानां इति सिद्धे हस्ग्रहणं, मुख्यलाक्षणिकयोर्मध्ये मुख्ये कार्य्यसंप्रत्यय इत्यस्यानित्यत्व-ज्ञापनार्थं, तेन राजसः।

---

यथाक्रमं सकलोपः हय दय। अवट्, अवक्, अधोक् एषु दान्तत्वेऽपि भो परे षड् कड धा. भवन्तीति।

(१) "हस इह स्यादेरेव, धोर्मो मः फश्चेत्यत्र फग्रहणेनैवेष्टसिद्धौ भयोः पृथग्ग्रहणा' दिति दुर्गादास।

(२) भभयो परयोरिति शेषः।

। दमेदो गणभेदार्थः। एते पञ्चविंशत् शब्दाः त्रिसंज्ञाः स्युः।

समो ऽतुल्ये, व्यवस्थायां पूर्व्वाद्यो ऽवान्तरो ऽपुरि।
वहिर्योगोपसंव्याने, स्वस्वज्ञातिधनाभिधः॥

---

८७। सर्व्वे। सर्व्वेय विश्वयेति च-सः (१)। त्वत्-त्वौ अन्यार्थवाचकौ। परे तु त्वच्छब्दं नाहुः (२)। डतर-डतमौ त्यौ, येन विधिस्तदन्तस्येति न्यायात् तदन्तानां ग्रहणम्। पृथगन्यतरस्य ग्रहणात् अन्यतमस्य न त्रिसंज्ञा, तेन अन्यतमाः अन्यतमायेत्यादि। भाष्ये तु अन्यतमस्यापि त्रिसंज्ञाविधानात् अन्यतमे अन्यतमस्मिन्निति। उभ-भवत्वतां त्रिसंज्ञाफलं(३)—उभयोः स्त्रियोर्धनं उभधनं, भवत्या धनं भवद्धनं, त्वत्तेत्यादि।

समोऽतुल्ये इत्यादि। समं सर्व्वसमानयोरित्यमरः। सम-

---

(१) सिद्धान्तकौमुद्यां "जसि सर्व्वनाम्न इट" (७।१।१७) इति सूत्रस्य वृत्तौ उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्त इत्युक्तम्। गोयीचन्द्रोऽपि सुवन्तपादे १९२ संख्यक-सूत्रटीकायाम् "एकवचनबहुवचनविषयस्तु उभयशब्द" इत्याह। क्रमदीश्वरेण सुबन्तपादे "पूर्व्वादुभयो जसि वा" (१९७) इति सूत्रयित्वा उभयशब्दस्य जसि वा त्रिसंज्ञेत्युक्तम्। 'उभया उभये इति तु छान्दसत्वाद्बोध्य'मिति तत्त्वबोधिन्यां। शिष्ट प्रयोगे च, नैव दृश्यते।

(२) तत्त्वबोधिन्यान्तु "अपदेशोऽपि प्रयुक्त—त्वदधरमधुरमधूनि पिबन्ति, इत्योऽन्यत्त्वा अधर इति विग्रहो न तु त्वदधर इति . . . पूर्व्वपाठेन अन्यथापक्षे"रित्युक्तम्।

(३) येनतु सखी इत्यनेन उभशब्दात् स्त्रियां विभक्ति व्युत्पत्तिः फलम्। तथाच "उभौ हेतू उभाभ्यां हेतुभ्याम् उभयोर्हेत्वोरिति अन्यथा सर्व्वे हेतवः इति पक्षेऽपि स्यात्" इति कालनो चतुर्थ्यन्त २८ संख्यकसूत्रे वक्ष्यते।

शब्दस्य सकलार्थे वर्त्तमानस्य स्विसंज्ञा न तु समानार्थे। अग्रे प्रयोगं वक्ष्यति नमः समस्मादिति।

व्यवस्थायां पूर्व्वाद्य इति। दिग्देशकालवाचिता व्यवस्था, तस्यां पूर्व्वादयो नव स्विसंज्ञकाः, यदुक्तं—

पूर्व्वादयो व्यवस्थायां स्युः सर्व्वनामसंज्ञकाः।
व्यवस्था कथिता लोके दिग्देशकालवाचिता॥ इति।

अन्यत्र दक्षिणाः प्रगायकाः प्रवीणा इत्यर्थः। उत्तराः कुरवः, पराः लोकाः श्रेष्ठा इत्यर्थः, अवराः कनिष्ठा इत्यादौ न गौणाख्या चेति न निषेधः (१)। एके तु स्वाभिधेयापेक्ष्यावधिनियमो व्यवस्था; अवधिर्मर्य्यादा सीमेति यावत्; तथाच स्वाभिधेयानां दिग्देशकालानां अपेक्ष्यः कारणत्वेनापेक्षणीयो योऽवधिनियमः स एव इत्याहुः।

अन्तरान्तर इति। अत्र पूर्व्वादौ, न पूरपूस्तस्यां, वहिर्योगो वहिःसम्बन्धः वाह्य इति यावत्, उपसंवीयते अपिधीयते यत् तत् उपसंव्यानम्. ठेऽनट्, वहिर्योगिभिन्नं वस्तु केनचिदाच्छादितमेवोच्यते (२)। तथाच वहिर्योगोपसंव्यानयोर्वर्त्तमानोऽन्तरशब्दः पूर्भिन्नविषयः स्विसंज्ञ इत्यर्थः। अन्यत्र ब्रह्मशिवयोरन्तरे विष्णुः मध्ये इत्यर्थः।

---

(१) किन्तु व्यवस्थावाचित्वाभावादित्येव इत्यर्थः।

(२) केनचित्—वस्त्रान्तरेणेत्यर्थः। वस्त्रान्तरेणाच्छादितमधोवास उपसंव्यानमिति यावत्। एतच्च संक्षिप्तसारे सुबन्तपादे २८६ संख्यकसूत्रे "अन्तरे शाटका गुप्तपरिधानीया इत्यर्थः" इति।

८८। न गौण्याख्याचत्वीसासे ।

( न ।१।, गौण्याख्याचत्वीसासे ७।, ) ।

गौणत्वे, संज्ञायां, चे, त्वा: से असे च, ते स्निसंज्ञा न स्युः ।

८९। चे जसि वा । ( चे ७।, जसि ७।, वा ।१। ) ।

चे ते स्निसंज्ञा वा स्यु र्जसि परे ।

---

स्वस्वित्यादि—ज्ञातिश्च धनञ्च ते, ते अभिधे यस्य सः, न सः अज्ञातिधनाभिधः, तथाच ज्ञातिधनवाचिस्वशब्दस्य न स्निसंज्ञा इत्यर्थः । यथा—स्वाय धनं ददाति, स्वाय यतते दरिद्रः । स्वस्मै ज्ञातये, स्वस्मा‌ऽऽदनादित्यत्र ज्ञातिधनयोः सामानाधिकरण्ये वर्त्तमानः स्वशब्दस्ते (१) नाभिधत्ते इति (२) ।

८८। नगौ। सश्च असश्च तत् सासं, त्वाः मासं त्वीसासं, गुणस्य भावो गौण्यं, गौण्यञ्च आख्या च चश्च त्वीसासश्च तत् तस्मिन् । गौण्यमप्राधान्यं, त्वासः तृतीयासमासयोग्यपार्थं, ते पञ्चत्रिंशच्छब्दाः । प्रयोगा अग्रे वक्ष्यन्ते—अतिसर्व्वायेत्यादयः ।

८९। चे। पूर्व्वेण नित्यनिषेधे प्राप्ते विकल्पार्थमिदम् ।

---

(१) ते ज्ञातिधने इत्यर्थः ।

(२) "तथा परेषां युधि चेति पार्थिव" इति प्रयोगदर्शनात् "तथा मध्यादपरे परे स्वा' इति दर्शनाच्च अनुपात्तधनज्ञातिवाचकस्यापि सर्वशब्दवत् सर्वनामत्वम् । "इया इवेषामपि चेदिनोऽन्तराम्' इति भारवेदर्शनात् इवशब्दोऽप्यत्र गणे पठनीयः । तथाच श्रीपति —हतिना इवमध्यम गणे पठति, व्यवस्थितात् प्रथमचरमादिवत् । [illegible]—सर्वस्मिन्विभाषया [illegible] स्वाभ्य इति । [illegible] पठन्त्यन्ये, तेन परिमन्तौ [illegible], प्रथमस्मात् इति च प्रयोगा—[illegible] [illegible] संक्षेपसारे [illegible] ।

९०। पूर्व्वाद्यल्प प्रथम चरम तयायार्द्धकतिपयनेमाः (१॥)।

एते समदश शब्दाः स्त्रिसंज्ञा वा सु जसि परे।

९१। तीयो ङिति। (तीयः १, ङिति ७)।

तीयान्तः शब्दः स्त्रिसंज्ञः स्याद्वा ङिति परे।

९२। पूर्व्वोऽन्त्यादुङ्।

(पूर्व्वः १, अन्त्यात्, ५।, उङ् ।१।)

अन्त्यात् वर्णात् पूर्व्वो वर्णं उङ्संज्ञः स्यात्।

९३। अन्त्याजादिष्टिः।

(अन्त्याजादिः १।, टिः १।)

अन्त्यो योऽच् तदादिवर्णष्टि संज्ञः स्यात्।

---

वा दिग्घे। दिग्वाचकानां हे स्थितानां स्त्रिसंज्ञा स्याद्वा। उत्तरपूर्व्वयोर्दिशोरन्तरालं या दिक् सा तस्यै उत्तरपूर्व्वस्यै, उत्तरपूर्व्वायै दिशे इत्यादौ दिग्वाचकाना वा स्त्रिसंज्ञेति।

९०। पूर्व्वा। समदशेति पूर्व्वादयो नव, तयायौ त्यौ द्वौ, अन्ये षट्।

९१। तीयः। त्यस्य त्यसरूपेनानवस्थानादाह तीयान्त इति।

९२। पूर्व्व। अन्ते भवोऽन्त्यस्तस्मात्, दिगादित्वाद्यः। उङ्, उपधा इति परे।

९३। अन्त्या। अन्त्योऽच् आदिर्यस्य सः। अचां सन्निविष्टानां अन्त्यो योऽच् तदादिरित्यर्थः। यत्र तु अचः परो नास्ति

८४ । लुकि न तत्र । ( लुकि ७, न ।१।, तत्र ७ ) ।

लुगिति लोपे कृते यो लुप्तस्तस्मिन् परे यत् कार्य्यं तन्न स्यात् ।

८५ । स्वरादि-नि-चित्त्यं व्यम् ।

स्वरादि-नि-चित्त्यं १।, व्यं १। ) ।

स्वरादिर्गणो नियकारेतस्त्याच व्यसंज्ञाः स्युः ।

---

तत्रैकस्यैवान्याचो व्यपदेशिवदेकस्मिन् इति न्यायात् (१) व्यपदेशिवद्भावेन टित्व, तेन हरी शम्भौ इत्यादौ इकारादेर्लोपः ।

८४ । लुकि । लुचधोः क्विप्, ण्यद्वादित्वात् (२) कङ्, लुक् पुंलिङ्गः । तत्रेति निमित्तसप्तमी, तथाच—लुक् शब्देन यस्य लोपः क्रियते तन्निमित्तकपूर्व्वकार्य्यं न स्यादित्यर्थः ।

८५ । स्वरादि । स्वरादिर्यस्य सः, च इत् यस्य चित्, चिच्चासौ त्यश्चेति चित्त्यः परात् चमः । स्वरादिर्यथा—

स्वर्नान्तं समया हथा व निकषा सामि स्वयं निःपमं
स्वस्ति प्रादुरतीव भोरिव मना प्रायः शनैर्दुःपमम् ।
कं कामं ननु शं दिवा किम तिरोमिथ्या मिथः श्वः पुनः,
सायं नाम चिरं चिरेण सहसा दोषा विनोषा वहि. ॥

---

(१) अस्य व्याख्या ८८ म पत्रे (३) संख्यक टिप्पण्यां द्रष्टव्या ।

(२) ण्वद्वादित्वम् निपूर्व्वादुधातोरप्रत्यये यथा चक्र च तथात्राप्यूह्यं । तथाच पाणिनीये "ण्वद्वाकारोऽपदे" (७ । १ । ९१ ) कुत्वं क्वादिसूत्रम् । तत्वं [illegible] चक्रोः [illegible] 'ण्वद्वाकारोऽपदे' । एवं चक्रो. चक्री च" इति पाणिनिसूत्रं मतम् । [illegible] "[illegible] नाम न तु [illegible]" [illegible] सूत्रम् ।

अस्त्याहो अट् वंचिराय अकटोम् जोषं चिरं कु प्रगे,
साचि द्राक् परमं मृषा खलु वरं ह्यः सुष्ठु दिष्ट्या चिरात्।
नीचैरीषदये विहा यदि मनागर्वाग्भीक्ष्णं पृथक्
तूष्णीमा सपदि प्रसह्य झटिति प्याडङ्ग सद्यः ऋते॥
अञ्जसा ननु च प्राध्वं युगपद्वत सम्प्रति।
उच्चैरस्तं सनात्प्रातः समन्तात् बलवन्मुहुः॥
प्रागन्तः साम्प्रतं स्थाने विष्वक् प्रभृति किञ्चिल।
चिररात्राय धिङ्मङ्क्षु चिरस्य हो ऋते शुभम्॥
अद्धा ऋधुगमाज्ञाय हिरुक् स्युः कुत-आदयः।
तसन्ताद्यास्तथा प्रोक्ताः ज्ञेयं ज्ञेयं प्रयोगतः॥ (१)

कुत-आदयः कुतः-क्व-कुहेत्यादि सूत्रे ये निपातितास्ते। तसन्ताद्याः तस् त्र दा र्हि दानीं एद्युस् स्तात् एन आ आहि आत् अस् एतदन्ताः। स्वरादिपठितानां वाचकत्वं,

(१) कारिकोक्ता अव्ययशब्दा —

स्वर्, नक्तम्, समया, वृथा, व, निकषा, सामि, स्वयम्, निशमम, स्वस्ति, प्रादुस्, अतीव, भोस्, इव, सना, प्रायस्, शनैस्, दुःषमम्, कम्, कामम्, महु, यम्, दिवा, किल, तिरस्, मिथ्या, मिथस्, अस्, पुनर्, सायम्, नाम, चिरम्, चिरेण, सहसा, दोषा, विना, उषा, बहिस्, अपि, आहो, अट् च, अत्, चिराय, अकट्, ओम्, जोषम्, चिरम्, कु, प्रगे, साचि द्राक्, परमम्, मृषा, खलु वरम्, ह्यस्, सुष्ठु, दिष्ट्या, चिरात्, नीचैस्, ईषत्, अये, विहा, यदि, मनाक् अर्वाक्, अभीक्ष्णम्, पृथक्, तूष्णीम्, आ, सपदि, प्रसह्य, झटिति, प्याट्, अङ्ग, सद्यस्, ऋते अञ्जसा, ननु, च, प्राध्वम्, युगपत्, वत, सम्प्रति, उच्चैस्, अस्तम्, सनात्, प्रातर्, समन्तात्, बलवत्, मुहुस्, प्राक्, अन्तर्, साम्प्रतम्, स्थाने, विष्वक्, प्रभृति, किञ्चिल, चिर-रात्राय, धिक्, मङ्क्षु, चिरस्य, हो, ऋते, शुभम्, अद्धा, ऋधुक्, अमा, अज्ञाय, हिरुक्, कुत-आदयः, तसन्ताद्याः।

९६ । ह्रसोऽनन्तरः स्यः ।

( ह्रसः १।, अनन्तरः १।,स्यः १। )।

अचानन्तरितो ह्रसः स्य संज्ञः स्यात् ।

९७ । यूत् स्त्र्येव दी ।

( यूत् ।१।, स्त्री ।१।, एव ।१।, दी ।१। ) ।

ईदूदन्तौ नित्यस्त्रीलिङ्गौ दीसंज्ञः स्यात् ।

---

चादीनां द्योतकत्वम्, अतएव चादि-स्वरादयोः पृथगुक्तिः । स्वरादिराकृतिगणः । व्यं अव्ययमिति परे ।

९६ । ह्रसः । नास्त्यन्तरं यस्य सः । अचानन्तरित इति-अर्थादचेति लभ्यते, अनन्तरितः अव्यवहित इत्यर्थः । स्यः, संयोग इति परे ।

९७ । यूत् । ईच ऊच ती, ताभ्यां तमित करोति, तेन ईदूच लभ्यते । येन विधिस्तदन्तस्येति न्यायादाह ईदूदन्त इति । एव शब्देनास्त्रीलिङ्गं व्यवच्छिद्यते (१) तेन (२) सेनान्ये स्त्रियै इत्यादौ न स्यात् । वहुप्रेयसै साम्नाय अतिलक्ष्म्यां राज्ञि इति अवयवस्त्रीत्वात् (३) सिद्धमिति भाष्यम् । ग्रन्थकृन्मते तु वहुप्रेयस्यै अतिलक्ष्म्यै इति । दी, नदीति परे ।

(१) अस्त्रीलिङ्गं नित्यस्त्रीलिङ्गभिन्नं व्यवच्छिद्यते निराक्रियते । नित्यस्त्रीलिङ्गशब्दस्तु "यां स्वार्थं यद्रूपेण स्त्रीलिङ्गशब्दस्तद्विशेषार्थे तद्रूपेणैव यदि लिङ्गान्तरं न भजति तदा नित्यस्त्रीलिङ्गः। तेन गौरशब्दस्य पुंस्यपि गौरीशब्दस्य नित्यस्त्रीलिङ्गत्व'मिति दुर्गादासः ।

(२) तेन—सेनानीशब्दस्य नित्यस्त्रीलिङ्गभिन्नत्वेन ।

(३) अवयवस्त्रीत्वात् अवयवस्य प्रेयसीशब्दस्य लक्ष्मीशब्दस्य च नित्यस्त्रीलिङ्ग-

९८ । **नास्त्रीयुवः** । (न ।१।, अस्त्री ।१।, इयुवः ६।) ।

इयुव्स्थानावीदूतौ दीसंज्ञौ न स्तः, नतु स्त्री ।

९९ । **वामि** । (वा ।१।, आमि ७ ) ।

इयुव ईदूच दीसंज्ञो वा स्यादामि परे, नतु स्त्री ।

१०० । **स्त्री युञ्च ङिति** ।

( स्त्री ।१।, युत् ।१।, च ।१।, ङिति ७। ) ।

स्त्रीलिङ्ग इदुदन्तो नित्यस्त्रीलिङ्ग इयुव ईदूच दीसंज्ञः स्याद्वा ङिति परे, न तु स्त्री ।

---

९८ । नास्त्री । यूदित्यनुवर्त्तते । न स्त्री अस्त्री । इयुवस्थानाविति,—स्थानमस्ति ययोस्तौ, अर्श-आदित्वादः, स्थानौ ; इयुवोः स्थानौ इयुव्स्थानौ, ईदूतावित्यस्य विशेषणम् । एतेन दीसंज्ञानिषेधात् हे श्रीः श्रियम् श्रिय इत्यादौ ध्यमृशसादेर्लोपो न स्यात् । अस्त्रीति किं—हे स्त्रि स्त्रीम् स्त्रीरित्यादि ।

९९ । वामि । इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते । अस्त्रीत्युक्तेः स्त्रीणामिति नित्यम् ।

१०० । स्त्री । चकारान्नित्यस्त्रीलिङ्ग इयुव ईदूदन्तोऽस्त्री चेत्यनुवर्त्तते, इह पुनः स्त्रीग्रहणं पाचिकस्त्रीलिङ्गस्य इदुदन्तस्यापि प्राप्त्यर्थम् । तेन मत्यै मतये धेन्वै धेनवे सुमत्यै सुमतये

---

स्यात् । अत्र दुर्गादासः—'भाष्यकार-क्रमदीश्वरौ तु प्राक्‌दामा नदीसंज्ञा पश्चात् पुंस्त्वयोगेऽपि न निवर्त्तत इति मन्यमानौ हे अतिलक्ष्मि पिप, हे बहुश्रेयसि तथा, अतिलक्ष्म्यै विप्राय धनं देहि, अतिलक्ष्म्यै राज्ञे स्वस्तीत्युदाहरत' इति ।

१०१ । अध्यच्ताच्येप् पिः ।

( अध्यच्ताच्येप् ।१।, पिः १। ) ।

घिवर्जस्यादेरच् तसंज्ञावचयकारावीप् च एते पि-संज्ञाः स्युः ।

१०२ । संख्यावड्डत्यतु-बहु-गणा नेपि ।

( संख्यावत् ।१।, डति-अतु-बहु-गणाः १॥।, न ।१।, ईपि ७। ) ।

डत्यतु-बहु-गणानां सङ्ख्यावत् कार्य्यं स्यात् नत्वीपि ।

---

सुधेन्वै सुधेनवे इत्यादि । इयुवस्थानयोरीदूतोस्तु नित्यस्त्रीलिङ्गयोरेव, तेन सुश्रिये स्त्रियै इत्यादौ न स्यात् । इयुव ईदूतोरपि पुंभिन्नान्यदार्थे भूरिश्रियै भूरिश्रिये भूरिभ्रुवै भूरिभ्रुवे स्त्रियै, भूरिश्रीणां भूरिश्रियां भूरिभ्रूणां भूरिभ्रुवां स्त्रीणामित्यादौ दीसंज्ञेति केचित् । वाग्रहणस्य व्यवस्थया विगत इर्य्याभ्यस्ता वौः पश्य इत्यादौ अमि दीसंज्ञा, न तु ङिति, तेन विगत इर्य्यस्यास्तस्यै व्ये ।

१०१ । अध्यच् । नचि रविसस्याच् अध्यच्, अच्च यच तौ अचौ, तौ च तौ अचौ चेति ताचौ, अध्यच ताचौ च ईप् च तत् । नञ्युक्तवन्यायादाद (१) घिवर्जस्यादेरिति ।

१०२ । संख्या । संख्या इव संख्यावत्, डतीति त-त्यान्तस्य (२) ग्रहणं, तेन पतिरित्यस्य न ग्रहणम् (३) । अतुग्रहणेनात्वन्तस्य ग्रहणम् । बहुगणौ प्रचुरार्थौ । एतेषां संख्यातिदेशः कतिभः

---

(१) नञ्युक्तवन्यायात्—निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायादित्यर्थः ।

(२) तत्यान्तस्य तद्धित डतिप्रत्ययान्तस्य ।

(३) पतिशब्दस्य औणादिक डडतिप्रत्ययनिष्पन्नत्वात् ।

## अजन्तपुंलिङ्ग-शब्दः।

राम-स् इति स्थिते—

१०३। स्रोर्विः फे। (स्रोः ६॥, विः १।, फे ७।)।

सकाररेफयोर्विः स्यात् फे परे। रामः।

औजसोः सन्धिः। रामौ रामाः।

---

यतिशः यावच्छः तावच्छः बहुशः गणशः इत्यादिसिद्ध्यर्थः। ईपीति विपयस्तौ, तत्र निषेधात् यावतो बह्वीत्यादि।

इति श्रीरामतर्कवागीशकृता संज्ञापादटिप्पनी समाप्ता।

---

१०३। स्रोः। स च र च तत् स्र, सयुतोर स्र, स्रच स्रच तौ तयोः स्रोः; तथाच सकारस्य रेफस्य सकाररेफस्य च विरित्यर्थः। तेन रामः गीः चतुरो वारान् भुङ्क्ते चतुरित्यादि। अतएव ग्रन्थकृता रात्सस्येति सूत्रं न कृतम् (१)। औजसोः सन्धिरिति निर्वाविन्यर्थः।

---

(१) रात्सस्य—(८।२।२४) रेफात् संयोगान्तस्य सस्यैव लोपो नान्यस्येति पाणिनीये। सुचतुर्हिंसे रित्यस्य टीकायां "चतुरिति चतुर् शब्दात् सुच उत्पाविते चतुर्स् इति स्थिते स्रोर्विः फे इति द्विवचननिर्देशात् एकशेषाद्वा रेफसकारयोः स्थाने एकएव विरित्युक्तं तर्कवागीशेन।

अत्र दुर्गादासस्तु चतुरोवारान् इत्यर्थे चतुर्शब्दात् सुचि कृते रेफस्य विसर्गे प्राप्ते नसि गस् इत्यत्र शब्दद्वय व्यवस्थावाचित्वात् सुचि परे नित्यं विसर्गस्य सकारे प्राप्ते, शोलोप इति सस्य लोपे सुच- सस विसर्गे चतुरित्याह।

१०४ । स्वदीभ्यां ध्यमृशसादेर्लोपः ।

( स्वदीभ्यां ५॥, धि-अम्-शसादेः ६।, लोपः १। ) ।

स्वात् दीसंज्ञकाच्च परस्य धेरमृशसादेश्च लोपः स्यात् ।

हे राम रामं रामौ ।

---

१०४ । स्वदी । स्वश्च दी च तौ ताभ्यां, अम्‌च शस्‌च तौ, तयोरादिः अमृशसादिः, धिश्च अमृशसादिश्च तत्तस्य, पुंस्त्वं क्लीब-त्वात् । धातारं पितरमित्यादौ तु विप्रतिषेधे परं कार्य्यमिति(१) न्यायादादौ त्रिण् । ननु अम्‌च शस्‌च तौ, तयोरः अमृशसः, धिश्च अमृशसश्च तयोर्लोपः ध्यमृशसलोपः इति कृते सिद्धे आदिशब्दस्य ग्रहणं, क्वचिदन्यतोऽपि धिलोपार्थं, तेन गन्धर्व्ववाचि-ते शब्दस्य धौ हे ते, तथा महान् इः कामो यस्य स तस्य धौ हे महे, ऐजधोः क्विप् जः महानूर्यस्य स तस्य धौ हे महो इत्यादौ एङोऽपि धेर्लोपः । हे भोः हे भगोः हे अघोः इत्यत्र कथं न धिलोप इति, अभोभगोऽघोभ्य इत्यादिज्ञापकात् (२) ।

मातृकस्य मातः पुत्रे मातृस्तुतौ धौ ।

महाकुलसम्भूताया मातुस्तुत्यापत्यस्यापि स्तुतिर्मातृस्तुतिस्तस्यां गम्यमानायां मातृकस्य मातः स्यात्सौ परे पुत्रे वाच्ये । हे गार्गी-मात हे वात्सीमात पुत्र धन्योऽसि । पुत्रे किं—गार्गीमातृके कन्ये

---

(१) तुल्यबलविरोधे परं कार्य्यं स्यादित्येतत्पाणिनिसूत्रम् इति (१।४।२)

(२) अभोभगोऽघोभ्य इत्यत्र विसर्गलोपविधानात् ।

१०५। शस्नामि घः। ( शस्नामि ७, घः १। )।
शसि नामि च परे स्वस्य घः स्यात्।

---

धन्यामि। सुतौ किं—दासीमातृक पुत्र। माताशब्दद्वारैव सिद्धे गार्गीमातृक इत्यनिष्टनिवारणार्थमिदम्।

१०५। शस्। नुमो नयुक्त आम् नाम्, गमकत्वात्(१) सः। शस् च नाम् च तत्तस्मिन्। दीर्घस्य स्वभावघत्वे स्वमनुवर्त्तयन्नाह स्वस्येति। नुस्विकोऽप्यनामि इति ज्ञापकात् नुमसहितामो ग्रहणात् शार्ङ्गिणामित्यादौ न स्यात्। न चामि कृते सिध्यतीति वाच्यं, रामाणामित्यादौ घं स्वाभावान्नुमोऽभावप्रसङ्गात्। नापि नुमाम इति स्वग्रहणात् भविष्यतीति वाच्यं, तिसृणां नृणामित्यत्र चरितार्थत्वात्। न च स्वस्थानजत्वात् भविष्यतीति वाच्यं, सह एन वर्त्तमानाः, विगत इर्येषां ते, तेषां सां व्यां इत्यादौ नुम्प्रसङ्गात्(२)। वहुः लृर्यत्र तान् वह्लृन्। परे तु लृकारे घत्वाभात् सवर्णदीर्घे ऋकारस्तेन वहॄन् इत्याहुः। अन्ये तु लकारभागद्वययुक्त लृकारस्तेन वह्ल्ल्न् इत्याहुः।

लृत औजसङ्गां पुंसि घं। लृकारस्य औकारेण जसोऽकारेण च सह घं स्यात् पुंलिङ्गे। वहुर्लृर्ययोर्येषां वा तौ वह्लृ ते वह्लृः। परे तु वहॄ वहॄरित्यादि।

---

(१) तदर्थबोधकत्वात्। नाम् इत्युक्ते नुमो नयुक्त आम इत्यर्थप्रतीतेरित्यर्थः।

(२) अत्र दुर्गादास —किञ्च आम ग्रहणेनैवेष्टसिद्धौ नामीति कृतं आगमादेशयोरागमविधिर्बलवानिति न्यायस्वीकारार्थम्। तेन क्रोष्टूनामित्यत्र आदौ नुमि कृते आदेशो न स्यात्। एवं प्रकृते चकारदीर्घे दीर्घस्य स्थानिवत्त्वेन ह्रस्वपरत्वात् यथा

**१०६ । पुंसि तु शस् न ।**

( पुंसि ७।, तु ।१।, शस् ।१।, न । १। ) ।

स्वात् परः शस् न स्यात् पुंलिङ्गे । रामान् ।

**१०७ । टा-भिस्-ङे-ङसि-ङसोसा-मिनैसयात्-स्य-यीसोऽतः ।** (टा-ओसाम् ६।।।, इन-योसः १।।।, अतः ५।)

अकारात् परेषामेषां स्थाने एते क्रमात् स्युः ।

---

१०६ । पुंसि । पुंस्त्वमिह शब्दानां शिष्टकृतपरिभाषाविषयत्वं, न तु स्तनादिमत्त्वम्, दारकलत्रादौ तदभावात् । एवं स्त्रीत्वनपुंसकत्वे अपि । यदुक्तं—

शब्दसंस्कारसिद्ध्यर्थमुपायाः परिकल्पिताः ।
सर्व्ववस्तुगता धर्म्माः शास्त्रे पुंस्त्वादयस्त्रयः ॥
ये तु लिङ्गादिसम्बन्धाः प्राणिजातीयगोचराः ।
न तेऽभ्युपायाः संस्कारे दारादिषु तटादिषु ॥

रामान् इति—अनेन ने कृते पूर्व्वेण वँः (१) । कथं सान् वीन् इति ? उच्यते, भूतपूर्व्वस्तमाश्रित्य शसो नादेशः ।

१०७ । टा । व्यक्तत्वात् पुंसीति नानुवर्त्तते, अतः क्लीवेऽपि, तेन ज्ञानेनेत्यादि । ऐस् भात् करणं निर्ज्जरसैः निर्ज्जरसादिति

---

शसो नकारविधानं तथा आमो नुमागमो मा भूदिति ज्ञापनार्थञ्च नामीति कृतम् । अतएव यः विष्णुः, सह एन वर्त्तते यः स सः, विगत इर्य्यस्मात् स वीः तेषां, सां व्यामिति ।

(१) दुर्गादासस्तु बहिरङ्गविधेरन्तरङ्गस्य बलवत्त्वादादौ दीर्घे कृते णत्वम् इत्याह । वयन्तु एतद्वयस्य पौर्व्वापर्य्येणाचार्य्यस्यापि मतमेतदिति मन्यामहे ।

१०८। ष्ठुर्णोऽदान्ते नोऽवकुप्वन्तरेऽप्यतद्वात्त्व-पक्वयुवाङ्गः ससेप्स्यादे नैकाच्कोस्तु वा।

( ष्ठुः ५।, णः १।, अदान्ते ७।, नः ६।, अवकुप्वन्तरे ७।, अपि ।१।, अतद्वात् ५।, तु ।१।, अपक्वयुवाङ्गः ६।, ससेप्स्यादेः ६।, नैकाच्कोः ६।, तु ।१।, वा ।१। )।

---

सिद्धार्थम्। त्वेस्येरित्यत्र व्यस्योस्ये रिति कृते सिद्धे यथोसग्रहणं, यदुग्रहणेन लाक्षणिकस्याप्यतो ग्रहणमिति ज्ञापनार्थम्। तेन, येन तेन यैः तैरित्यादि। एवमन्यत्रापि क्वचिदनतोऽपि ङसः स्य-विधानार्थमिति। तथाच—

नवं नवं परिक्षिप्य पुराणमपकर्षतः।
अतिजरस्य भिक्षुष्य कन्या वर्षशतं गता॥

इति हलतिङन्तः (१)।

उदधिस्योत्तरे तीरे सतः किमनुयुच्यते इति उदधिमिच्छति, क्ये सन्, पचाद्यचि उदधिस्या गङ्गा, तस्या उत्तरे उदधिस्योत्तरे इति (२)।

---

(१) कातन्त्रेऽपि ङसः स्य इति चतुर्थवृत्ति २२म सूत्रे नवं नवमिति श्लोक-दृष्टस्य ऋषिप्रयोगादिति चिन्त्यमित्याह कविराजः।

(२) अतःपरं बहुषु पुस्तकेषु 'भो भो सखे वदन्नस्य समीपेऽहं विजने वने दृष्टवान् वदचिति क्रिया असंहितत्वात् नरो न सन्' इत्यधिकः पाठः। अस्य तु सङ्गते कीदृशुपयोगित्वं तत् सुधीभिश्चिन्त्यम्।

कातन्त्रीय-व्याख्यागारे तु—"उदधिस्योत्तरे तीरे जम्भका नाम राक्षसी। तस्या अरण्यमात्रेण सुखा भवति गुर्विणी" इत्युक्त्वा अन अकारान्तादपि ङसःस्य स्मृतम्।

षकारात् रेफात् ऋवर्णाच्च परस्य अदान्ते स्थितस्य नस्य णः स्यात्, अव कवर्ग-पवर्ग-व्यवधानेऽपि।

यत्र दे न स्तौ ऽन्यत्र गतात्तु निमित्तात् परस्य, साद्विहितेनेपा स्यादिना च सहितस्य, पक्कादिवर्जितस्य, स्यात्, तस्यैवैकाचः सकवर्गाद्यान्यस्य, वा स्यात्। रामेण।

---

१०८। षृ। ष च र च ऋश्च, तत्तस्मात्, पुंस्त्वं सौत्रत्वात्। दस्यान्तो दान्तः, न दान्तः अदान्तस्तस्मिन्। अव् च कुश्च पुश्च ते अवकुपवः, तैरन्तरं व्यवधानम् अवकुप्वन्तरं तस्मिन्। तच्च तत् दश्चेति तद्दं, न तद्दम् अतद्दं तस्मात्। पक्कश्च युवा च अहश्च तत्, न तत् अतत् तस्य अपक्कयुवाह्नः। ईप् च स्यादिश्च तौ ईप्स्यादी, सादीप्स्यादी सेप्स्यादी, ताभ्यां सह वर्त्तमानः सवेप्स्यादिस्तस्य। एकोऽच् यस्य स एकाच्, एकाच्च कुश्च तत्, न तत् नेकाच्-कुः तस्य, पुंस्त्वं सौत्रत्वात्। परभागे अतद्दादित्युक्तेः पूर्व्वभागे समानदस्थनिमित्तादित्यर्थः। यद्यपि कुष्णाति पुष्णाति इत्यादौ ष्टुभिष्टु इत्यादिना सिध्यति, तथापि प्रेषेण इत्यादिसिद्ध्यर्थं षग्रहणम्। यत्रेत्यादि—यस्मिन् दे नकारः तद्भिन्नदस्थात् षकार-रेफ ऋवर्णात् परस्य नकारस्य सात् कृताभ्यामीप्स्यादिभ्यां युक्तस्य पक्कादिभिन्नस्य णः स्यादित्यर्थः। तस्यैव नकारस्य एकाच्-कवर्गयुक्त-द-भिन्नसम्बन्धिनो वा स्यादित्यर्थः। एतेन एकाच् कवर्गयुक्त-द-सम्बन्धिनो नकारस्य णो नित्यं स्यादित्यर्थः। पक्कादेरुभयत्रापि निषेधः। एकाच कोर्यथा—हतघ्णो वमत्युगाणीत्यादि। एकाचकु-भिन्नस्य—हरिभाविणी हरिभाविनी, व्रीहिवापिणी व्रीहिवापिनी। पक्कवर्ज-

नात् स्यादेर्नकारस्यापि णत्वं, तेन रम्यविणा, श्रीकामेण, श्रीभावेण श्रीभावेन इत्यादि। पकादेस्तु—रम्यपकेन रम्ययूना दीर्घाङ्गेत्यादि। अपदान्त इति किं—रामान्, व्रीहिवापिन्। अवकुप्वन्तर इत्येव, चु टु तु ल श स व्यवाये माभूत्। यथा—महाराजानां, वराटिकानाम्, ऋतूनाम्, अरालानां, राज्ञीना, रसानामित्यादि। सन्निहितेति किं-वीरस्य भगिनी वीरभगिनी इत्यादि (१)। वाशब्दस्य व्यवस्थावाचित्वात् क्वचिदन्यत्रापि। तथाहि—

सदर्गयनभिन्नस्य सिध्रकादेर्वनस्य च।
नास्त्रनाम्नि तु कार्यादेः सिध्रकाद्यास्तु सिध्रका।

---

(१) अत्र सूत्रे एव तुदौ पूर्व्वेण सम्बद्धौ सूत्र्यौ तु परगामिणौ। णत्वादौऽयोगवाहाख्या णत्व-कर्म्मण्यणो मता इत्युक्तं दुर्गादासेन। तर्कवागीशेन तु क×पौ≈मूर्ध्या-विति सूत्रस्य टीकायां "एषां सामान्येनोपदेश अस्ता णत्वविधौ व्यञ्जनता परगम नार्थमित्युक्तत्वादत्र पुनरुक्तम्।

क्षुभ्नाति तृम्पति तृम्फति रञ्जयति रम्भयति इत्यादौ भवपरत्वाद् बलवता म्नोर्नुरित्यनेन आदौ नस्यानुस्वारे जपे अन्तोरित्यनेन पुनरनुस्वारस्य ङकारादि स्यात्। क्षणति धन्यत कन्दति स्यन्दन्ति इत्यादौ तु तवर्गेषु परेषु नस्यानुस्वारे पुनरनुस्वारस्य नकारे सकृद्गतौ विप्रतिषेधे यद्बाधित तद्बाधितमेवेति न्यायात् णत्वं न स्यात् इति। किन्तु छिद्रा क्लिश, अधो स्तुद स्तुम, अर्ह समर्पं इत्यादौ नकारे परेऽनुस्वाराभावात् पूर्व्वनकारस्य णत्वे ष्टुभिरित्यादिना परनकारस्यापि णत्वमिति। किन्तु भिदिर निर्भिद्य भिदा प्रभिद्य इत्यादौ पूर्व्वपदस्य निमित्तात्तु व्यस्य न्यनुकारेति समासे रेफषाद्योरेकतरेण नकारस्य सम्बन्धाभावात् णत्वं न स्यादेव। अत्रापि णत्वमित्येके। इत्यपि दुर्गादास। तर्कवागीशमते क्षुभ्नात्यादौऽपि क्षुभ्नादौ द्रष्टव्यानि। उक्तञ्च काशिकायां 'अविहितलक्षणो णत्वप्रतिषेध क्षुभ्नादिषु द्रष्टव्य इति (८।४।३९)।

मिश्रका शारिकाद्ये च पुरगा कोटरा द्रुमे ।
कार्ष्ये तु प्लक्ष-पीयूक्षाः खदिरान्तः-प्र-निः-शराः ।
आम्रश्चाथ नसः प्रादेर्वाह्यात्तु वाहनस्य च ।
त्रिचतुर्भ्यां वयस्येव हायनस्याथ चान्तरः ।
हनोऽदेशेऽयनस्याथ देशे पानस्य च स्मृतः ।
वा नद्यादेश गिर्य्यादेः पानस्य तु घ-भावयोः ।
द्वित्र्यच्व्यक्षरां वनसत्योपधिभ्यां हि वनस्य च ।
क्षुभ्नादीना न णो नित्यं तिमिरादेर्वनस्य च ।
अनाङ्-ट-ल व्यवाये च दान्तपादपि मन्यते ।
क्षुभ्नादौ अथ नायान्ता रींस्तथा परिवर्त्तनम् । (१)
दुर्णामा परमानन्दः पर्य्यग्निर्नरवाहनः ।
नरनारायणो वारिनिधि र्वार्द्धिधिरित्यपि ।
त्रप्नोत्याचार्य्यभोगीन(२)स्त्रिनेत्रः सर्व्वनाम च ।
हरिनन्दी सुरानन्दः स्वर्भानुः परनन्दनः ।
श्रीधनः शास्त्रवाक्यानि चित्रभानुः पुनर्नवा ।
दुर्नदो नृनमनः सुवनड् दुन्दुभिपेवनम् ।
आचार्य्यानी-विनयनौ दुर्नदि-हरिनन्दनौ ।
परिगहनं परिनगरं परिनदनं शरनिवेश-शरनिवासाः ।
हरिनगर-सुमन्त्रनैव दर्भानूपास्तु इत्यादि ॥

---

(१) परिवर्त्तनं रीभस्यानञातौ रिनु रमावपीत्यर्थः ।

(२) आहभोगीण इत्यत्र तु आहगोणाय हित इत्यर्थे ईने कृते एकपदत्वात् णत्वं स्यादेव ।

अतद्धादित्यनुवर्त्तते। संज्ञायाम् ऋगयनभिन्नस्य उत्तरदस्यस्य नस्य नित्यं णः स्यात्, सिध्रकादेः परस्य वनस्य नस्य च। शूर्पा इव नखा यस्याः सा शूर्पणखा रावणभगिनी; शूर्पनख्या इत्यार्पः। नारा आपोऽयनमस्य नारायणः। तथाह—

आपो नारा इति प्रोक्ता आपो वै नरसूनवः।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः॥

वर्द्ध चर्म्म, तस्य विकारे ष्णः, संज्ञापूर्व्वको विधिरनित्य इति न्यायात् व्रआभावः, वर्द्ध्री चर्म्मरज्जुः, वर्द्ध्रय वार्द्ध्री, वार्द्ध्रीव नासिका यस्य स वार्द्ध्रीणसः, द्रुरिव नासिका यस्य द्रुणसः, एवं खरणाः खरणसः (१) ग्रामणीः अग्रहायणी अचौहिणीत्यादि।

सिध्रकादेर्वनस्य चेति। सिध्रकावणं मिश्रकावणं शारिकावणं वनस्याग्रे अग्रेवणं, राजदन्तादित्वात् परनिपातः। पुरगावणं कोटरावणम्(१)। संज्ञायामिति किं—चर्म्मनासिकः। सिध्रकादेरिति किम्—इन्द्रवनमित्यादि।

असंज्ञायां कार्य्यादेर्वनस्य नो णः। कार्य्यस्य वनं कार्य्यवणम् इक्षुवणं प्लक्षवणं पीयूक्षावणं खदिरवणम् अम्रवणं प्रवणं निर्वणं प्ररवणम् आम्रवणम्।

अथ प्रादेः परस्य नसस्य नो णः। प्रगता नासिका यस्य प्रणसं मुखम्, एवं दुर्णसं परिणसमित्यादि।

---

(१) भासेरुरिति सूत्रे वास्तलाशाम्नीत्यादिवार्त्तिकसूत्रं द्रष्टव्यम्।

(२) रूपनाम गोमेति सूत्रस्य तत्त्ववाणीयटीकाया "कोटर किंशुकादीनेन गिर्य्योनाम्नो"ति सं०।

वाह्यात्तु वाहनस्य नो णः। उह्यते यत् तद्वाह्यं, ढे घ्यण्, उह्यते येन तद्वाहनं घेऽनट्। यथा—दर्भस्य वाहनं दर्भवाहणम् इक्षुवाहणं शकटम्, एवं शरवाहणं धनुः। वाह्यात् किं—दाक्षि-वाहनो गार्ग्यवाहनो रथः, (१) यदा तु दाक्षिर्गार्ग्यश्च वोढव्यस्तदा दाक्षिवाहणः गार्ग्यवाहणश्च भवत्येव।

वयसि गम्ये त्रिचतुर्शब्दाभ्यां परस्य हायनस्य नो णः। त्रीणि हायनानि यस्य त्रिहायणो वत्सः, एवं चतुर्हायणः। वयसि किं—त्रिहायना चतुर्हायना शाला।

अथ चेति चकारस्य व्यवहितेनान्वयः। अदेशे गम्ये अन्तरः परस्य हनो अयनस्य च नो णः। अन्तर्हन्यते अन्तर्हणनम्, एवम् अन्तरयणम्। अदेशे किम्—अन्तर्हननो देशः, अन्तर-यनो देशः।

अथ देशे प्राच्येऽतद्धस्यात् पुः पानस्य नो णः। पीयते यत् तत् पानं, ढेऽनट्, सुरा पानं येषां ते सुरापाणाः प्राच्याः, क्षीरपाणाः उशीनराः, सौवीरपाणाः (२) वाह्लीकाः, कषायपाणाः गान्धारा इत्यादि। यद्यपि प्राच्यादिशब्दा देशविशेषभूता न, मनुष्ये वर्त्तन्ते, तथापि देशसम्बन्धद्वारेणैव मनुष्ये प्रवृत्ता, अतो देशपदेनाभिधीयन्ते। यद्वा सुरा पानं यस्मिन् देशे इति हेन देशो वाच्यः। देशे किं सुरापानाः शूद्रा इत्यादि।

वेत्यादि। गिर्य्यादेः परस्य नद्यादेर्नो वा णः। गिरिणदी

(१) रथोऽत्र तदुभयस्वामिक इत्यर्थः।

(२) सौवीरं काञ्जिकं काँजि इति भाषा।

गिरिनदी, गिरिणदं गिरिनदं, वक्रणदी वक्रनदी, वक्रणितम्बा वक्रनितम्बा। स्त्रीलिङ्गगणे पाठात् पुंसि न स्यात्, तेन वक्रनितम्बः गिरिनद इत्यादि। आकृतिगणोऽयम्। वेति सर्व्वत्रान्वयः।

पूर्व्वपदस्थात् पुं-धभावविहितस्य पानस्य नो वा णः। क्षीरं पीयते अनया क्षीरपाणी क्षीरपानी, क्षीरस्य पानं क्षीरपाणं क्षीर-पानं। ध-भावयोः किम्—उष्ट्रेण पीयते अस्याम् उष्ट्रपानी पात्री।

द्वौ च त्रयश्च, द्वित्रयोऽचः सन्ति ययोः तौ ताभ्यां, वनस्पतिश्च ओषधिश्च तौ ताभ्याम्। वनस्पत्योषध्योर्द्वित्र्यज्वतोः पुंवनस्य नो वा णः। व्रीहिवणं व्रीहिवनं, शिग्रुवणं शिग्रुवनं (१), नीवारवणं नीवारवनं, शिरीषवणं शिरीषवनम्। द्वित्र्यज्वतो रिति किं—राजमाषवनं पारिभद्रवनम्। वनस्पत्योषध्योरिति किं—विदारीवनम् (२)।

फली वनस्पतिर्ज्ञेयो वृक्षाश्च फलपुष्पगाः (३)।

ओषध्यः फलपाकान्ता लता गुल्माश्च वीरुधः॥ इति कस्य-चिन्मतम्। त्रिकाण्डे तु—

महीरुहः कुजो वृक्षो वनस्पतिर्वनेरुहः।

अगो नगाऽगमश्चैव शाखी द्रुमस्तरुः स्मृतः॥

पुष्पं विना फलवान् फली वनस्पतिरुडुम्बरादिः। फलपुष्पे उपगच्छन्ति ये ते वृक्षशब्देनोच्यन्ते। पाणिनीयस्वरसाधकार सम-

(१) शिग्रु शोभाञ्जन' सजिना इति भाषा।

(२) विदारी शालपर्णिभूम्याण्ड'।

(३) वृक्षा' पुष्पफलोद्गमा इत्यन्यत्र पाठ।

घयनीयः (१)। केचित्तु दूर्व्वावनमिति प्रत्युदाहरन्ति, तन्नादृत- मस्माभिः, दूर्व्वाशब्दस्यौषधिपर्य्यायत्वात् ।

क्षुभ्नादीनां नस्य णो नित्यं न स्यात्। क्षुभ्नाति क्षुभ्नीतः क्षुभ्नन्ती- त्यादि। एवं विष्कभ्नाति हरिनाथः रमानाथ इत्यादि। रीन्- नरीनरीति नरीनर्त्ति इत्यादि। रीनृत्यामित्वात् रिग्नोर्ग्रहणं, तेन नरिनर्त्ति नर्नर्त्तीत्यादि। आदिशब्दादत्यन्त्वोरपि ग्रहणं, तेन कुर्वन्ति कुर्व्वन्तु इत्यादि। आकृतिगणोऽयम् ॥

तथा तिमिरादेः परस्य वनस्य नो णो नित्यं न स्यात्। तिमिरवनम् इरिकावनं अद्रिकावनम् ।

अनाडित्यादि। न आङ् अनाङ्, अनाङ्च तत् दश्चेति अनाङदम्, अनाङदश्च लश्च, तेन व्यवायस्तस्मिन्। अनाङ्-दल- व्यवाये उत्तरदस्यस्य नस्य णो नित्यं न स्यात्। दान्तपादपि। यथा—मापकुम्भवापिनौ चतुरङ्गयोगिन पर्य्यवनद्धं प्रकुप्यमानं दुष्पानमित्यादि। अनाङ् किं-पर्य्याणद्धम् ।

---

(१) चकारेण वनस्पतेः समुच्चयः, वनस्पतयोऽपि वृक्षा इत्यर्थः। अतोऽत्र चकारात् वनस्पतिमन्तरेण वृक्षा अप्युच्यन्ते इति निष्कर्षः। अतएव "सत्यपि भेदे वृक्षवनस्पत्यो- रिहाभेदेन ग्रहणं द्रष्टव्य"मिति वाचिका। फलवान् दृश्यन्ते न तु पुष्पं न फलं वनस्पतिरेव, [redacted] उडुम्बरादयः। वृक्षा इत्यादि—ये पुष्पाद्युपगच्छन्ति फलत्व- गच्छन्ति उभयमुपगच्छन्तीति ते पुष्पफलोपगाः। एवं यो वनस्पतिः सोऽपि वृक्षो भवति, न तु यो वृक्षः सोऽवश्यं वनस्पतिरिति विशेषः। ओषध्य इत्यादि—ओषधि- शब्दादिदन्तादप्यौदिति ङीः। फलपाकैः अन्तो विनाशो यासां ताः, फलपाकान्ता ओषध्यः शाल्यादयः। लता इत्यादि—लता वितानयुक्ता आतानवत्यादय। गुल्माश्च स्तम्बरूपाः बहुपत्राः वाणोटादयः (वाणोटः झिण्टा इति भाषा) इति गोयीचन्द्रः ।

१०९। आ क्ति-भम्वि (१)।

( आ।१।, क्ति-भम्वि ७।)।

अकार आकारः स्यात् क्तौ भं-म-वेषु परेषु।

रामाभ्यां रामैः, रामाय रामाभ्याम्।

११०। व्वे सभ्येः। ( व्वे ७, स्भि ७।, एः १।)।

अकार एकारः स्यात् क्तौ व्वें सभयोः परयोः।

रामेभ्यः, रामात् रामाभ्यां रामेभ्यः, रामस्य रामयोः।

---

१०९। आक्ति। भच वच म्व भय म्वच भम्व क्तेर्भम्व तस्मिन्। मण्डूकगत्या क्तिविपरिणामेन अत इत्यनुवर्त्तयन्नाह अकार इति। क्तेर्भमवेष्विति स्यादेर्भे त्यादेर्मवयोरित्यर्थः, तेन रामं ग्रामभित्यादौ न घः (२)।

११०। व्वे। सच भच तत्तस्मिन्। अदित्यनुवर्त्तते, तेन उमाभ्य इत्यादौ न स्यात्। त्यादेः सकार-भकारयोरभावात् स्यादावस्य विषयः। व्युत्क्रमनिर्द्देशात् क्वचिद्बाधक ऐस् बाध्यते, तेन मान्यवरेभिः गन्धर्व्ववरेभिः (३) इति बौद्धप्रयोगः।

---

(१) आक्तिमभवीति बहुषु पुस्तकेषु पाठः। किन्तु तर्कवागीशटीकायां भ म व एषां न्यासवाक्यानुसारेणास्य मते भम्वीत्येव पाठः। त्यादौ स्यादिप्रकरणे भस्य परत्यादिप्रकरणे मवयोः सार्थकत्वात् समीचीनोऽप्ययं इति मन्यामहे।

(२) ननु रामभित्यादौ कथमाकारो न स्यात् अकारलोपस्य सार्थकत्वादिति चेन्न। इदं विष्णुमित्यादौ तस्य सार्थकत्वात्। वस्तुतस्तु भवयोः साहचर्य्यात् विभक्तेराद्यवयवमकारे परे इत्यर्थः। अतएव त्वां मामित्यादिसाधनाय टेघ्योर्मकारे कृतेऽपि सभमोत्वाङ् इत्याकारं विधास्यति।

(३) मान्यवरेभिः गन्धवरेभिरिति पाठान्तरम्।

### १११। नुमामः स्वद्याप्-सङ्ख्यार्णः।

( नुम् ।१।, आमः ६।, स्वद्याप्-सङ्ख्यार्णः ५। )।

स्वात् द्या आपो रषनान्त-सङ्ख्यायाश्च परस्याम आदौ नुम् स्यात्। र्ष-णत्वे। रामाणाम्, रामे रामयोः।

### ११२। क्विलात् क्ततो ऽसात् सः षो ऽदान्ते नुव्यन्तरेऽपि शास-वस-घस-साढाञ्च।

(क्विलात् ५।, क्ततः १।, असात् ।१।, सः १।, षः १।, अदान्ते ७।, नुव्यन्तरे ७।, अपि ।१।, शास-वस-घस-साढ़ां ६॥, च ।१। )

कवर्गादिलाच्च परः क्ततः सादन्यो टमध्यगः सकारः शासादेश्च षः स्यात्, नु-वि-व्यवधानेऽपि। षत्व-णत्वे। रामेषु।

एवं मुकुन्दानन्दगोविन्दादयः।

---

१११। नुमामः। रश षश न च तत् र्णं, संख्या च तत् र्णं चेति तत्, स्वश दी च आप् च संख्यार्णं च तस्मात्। येन विधिस्तदन्तस्येति न्यायादाह रषनान्तेति। मुख्यगौणयो-र्मुख्यस्यैव ग्रहणं न तु लाक्षणिकस्येति न्यायात् प्रियचतुरां प्रियपञ्चामित्यादौ न स्यात्। बहुश्रेयसीनामित्यत्र अप्रत्ययनी-त्वेन नुमिति भाष्यम्।

११२। क्विलात्। कुश इलश तत्तस्मात्। न सात् असात्, न दान्तोऽदान्तस्तस्मिन्, नुश विश तौ, ताभ्याम् अन्तरं नुव्यन्तरं तस्मिन्। शासश वसश घसश साढ़ च तं तेषाम्। अन्तगतः प्रासादं इत्याद टमध्यग इति, तेन दधि सिञ्चति हरिस्त्रियादौ न

स्यात्। अक्कतसत्वात् शासवसघसां ग्रहणम्। साढ़ः क्कतसत्वेऽपि किलभिन्नादपि षत्वार्थं नियमार्थञ्च ग्रहणं, तेन तुराषाट् ऋतीषाट् इत्यादौ स्यात्, न तु तुरासाहौ ऋतीसाहावित्यादौ। शासादेस्तु क्विलादेव, तेन अशिषत् उषितः जक्षतुरित्यादौ स्यात्, न तु शास्तीत्यादौ। कवर्गग्रहणात् वाक्षु प्राङ्षु इत्यादि। नुव्यन्तरेऽपीति-सर्पींषि धनूंःष्वित्यादि। नुणौ नु-ग्रहणात् पुंसु इत्यत्र न षः। सर्पिष्षु धनुष्षु इत्यादि शषि वा शर्विधानात्। क्कत इति किं—विसं (१) मृणालमित्यादि।

सेऽग्नेर्ष्टःसोमस्य॥ अग्निशब्दात् अवयवात् सोमस्य सः षः स्यात् से सति। अग्नीषोमौ, देवता-चे ङी। तस्मादिति किं-ज्योतिरग्निः सोमो लता तयोर्थे अग्निसोमौ, अग्निय इव सोमय ते अग्नीसोमाः।

मातापितृभ्यां स्वसुर्वा तु षन्ताभ्याम्। आभ्यां परस्य स्वसुः सः षः स्यात्, षन्ताभ्यान्तु वा से सति। मातृष्वसा पितृष्वसा मातुःष्वसा मातुःस्वसा पितुःष्वसा पितुःस्वसा इत्यत्र से ष्या लुग्वा।

निनदीभ्यां स्नः कौशले॥ नेर्नद्याश्च स्नः सः षः स्यात् कौशलेऽर्थे से सति। निष्णातः कुशलः, तथाचातिथ्यनिष्णा वनवासिमुख्या इति भट्टिः। नदीष्णः, तथाच ततो नदीष्णान् पथिकानिति भट्टि.।

(१) विस इत् क्षेपे इत्यस्यात् क।

दिवि द्युभ्यां सदो देवे। आभ्यां सदः सः षः स्यात् से सति देवे वाच्ये। दिविषदः द्युषदो देवाः, अन्यत्र द्युसत्।

कपिप्रतिभ्यां स्थलस्नातयोर्गोत्रसूत्रयोः। आभ्यामनयोः क्रमात् सः षः स्यादनयोरर्थयोः से सति। कपिष्ठलः ऋषिः, स्वभावात् पुंलिङ्गः। प्रतिष्णातं सूत्रं पाणिनेः, सुविशुद्धमित्यर्थः।

वेस्तरस्य वृचासनयोः। वेस्तरस्य सः षः स्यात् अनयोरर्थयोः से सति। विष्टरो वृचः कुशमुष्टिश्च, विष्टरो विटपी दर्भमुष्टिः पीठाद्यमासनमित्यमरः। अन्यत्र विस्तरः।

नृगोभ्यां सनो नाम्नि। आभ्यां सनोते र्नाम्नि सः षः स्यात् से सति। नरं सनोति नृषाः गां सनोति गोषाः।

अभिनिरः स्तानस्य शब्दनाम्नि। अस्मात् स्तानस्य सः षः स्यात् शब्दनाम्नि से सति। अभिनिष्टानो विसर्गः। तथाच—वचः स्पष्टाभिनिःष्टानमिति माघः। वैकल्पिकमिदमित्यन्ये। शब्दभिन्ने अभिनिस्तानो मृदङ्गः।

इलादेति नाम्नि वा तु भात्। इलात् परः स एकारे परे षः स्यात् नाम्नि से सति, भात्तु वा। सुषेणः, हरिषेणः। भात्तु-भरणिषेणः भरणिसेन इत्यादि। नाम्नि किं—पृथ्वीसेनः। एति किं—विस्रोता गङ्गा। इलादिति किं—विषुमञ्चतीति क्विप्, स्त्रियामीप्, अचोऽल्लोपोर्घः, विषूची सेना यस्य, पुंवद्भावः, विष्वक्सेनः शतभिषक्सेनः।

प्रात् स्थोऽयगे। प्रात् परस्य स्थस्य सः षः स्यात् से

सति अग्रगी वाच्ये । प्रष्ठोऽग्रगामी, एवं प्रष्ठा अग्रगामिणी । तथाच सर्व्वनारीगणप्रष्ठामिति भट्टिः । अन्यत्र प्रस्थः ।

अवात् स्तम्भेराश्रयनिकटयोः । अवादाश्रये निकटे च स्तम्भेः सः षः स्यात् से सति । ग्राममवष्टभ्यास्ते, अवाष्टभ्तसेना (१) मौर्ज्जित्येऽपि(२)—अहो मल्लस्याऽवष्टम्भ इति चन्द्रः । अन्यत्र मौतेनावस्तब्धो जड़ीकृत इत्यर्थः ।

निरस्तप्येकसेवने । (३) निष्टपतिवह्निं राजा, सकृत्सेवते इत्यर्थः ।

वर्हिष्ठादीनाञ्च ।

वर्हिष्ठः सुषमं विषूति-विषमं नैषेचिका कुष्ठलं
निःषूति निःषितः सुषाम-विषितं निःषाम-नैषेचनम् ।
दुःषामा निषयः सुषूति-विषयः दुःषेध-निःषन्धि च
द्विष्ठी दुन्दुभिषेवनं परिषित स्निष्ठः सुषेधो मतः ।
अग्निष्टोम-सुषन्धि-विष्ठलमपष्ठाग्निष्ठ-गोष्ठं तथा-
ऽस्वष्ठाम्बष्ठ-दिविष्ठ-कुष्ठ-परमेष्ठाङ्गुष्ठ-दुःषन्धयः ।
निःषेधोऽङ्गुरिषङ्ग-सुष्ठु-पृतनाषाहं जलाषाहम-
ग्निष्टुष्टुप्-प्रतिष्णिकाः परिषयः गवुष्ठ-मप्येष्टरौ
गौरिषक्थश्च निष्णातौ निष्णातिश्च परिष्ठलम् ।
भीरुष्ठानञ्च भूमिष्ठो ज्योतिष्टोम-शमिष्ठलं
रथस्थाच ऋतीषाहं निःषमं दुःषमं विषु ।

---

(१) निकटीभूतेत्यर्थः ।
(२) मौर्ज्जित्यं प्राबल्यं बलमिति गोयीचन्द्रः ।
(३) निरः सकारस्य तपतौ परे षः स्यात् बहुत् सेवनेऽर्थे षे सति ।

आयुष्टोमश्च विष्टारो गविष्ठिर-युधिष्ठिरौ
परमेष्ठी उपष्टम्भः शेकुष्ठ स्त्रिष्टुबित्यपि।
पुञ्जिष्ठोऽङ्गुलिषङ्गश्च निष्टुब्धोऽनुष्टुभा सह।
सव्येष्टोऽपष्ठु सव्येष्ठा दुःषूतिश्च मनीषिभिः।
षट्सप्ततिरिह प्रोक्ताः शेषं शिष्टप्रयोगतः।

वर्हिषि तिष्ठतीति वर्हिष्ठः। सुपूर्व्व षम वैक्लव्ये पचाद्यन् सुषमम्। विपूर्व्व षूधोः क्तिः विषूतिः। विषम पूर्व्ववत्। विष-धीर्णकः नीषेचिकीति चान्द्राः। स्थल ज स्थाने पचाद्यन्, पश्चात् कोर्भूमेः कुत्सितं वा स्थलं कुष्ठलम्। निषूतिः पूर्व्ववत्। निपूर्व्वात् षि ञ न ग बन्धे, षो य नाशे, आभ्यां क्तः, निषितः। सुपूर्व्व-षो य नाशे मन् सुषामा। विषित निषितवत्। निःषामा सुषामवत्। षिचधोरनट् नैषेचनमिति जयादित्यः। दुःषामा सुषामवत्। षि न् ग ञ बन्धे अल् निषयः। सुषूतिर्विषूतिवत्। विषयो निषय-वत्। षिध्यौ सिद्धौ घञ् दुःषेधः। डु धाञ्‌ धारणे पुष्टो क्तिः सन्धिः, ह मः, निःषन्धिः। द्वयो स्तिष्ठति द्विष्ठः। दुन्दुभेः सेवनं दुन्दुभिषेवनं क्षुभ्नादित्वान्न णः। परिषितो निषितवत्। विषु तिष्ठतीति विष्ठः। सुषेधो दुःषेधवत्। सुधोम्नः स्तोमः, अग्नेः स्तोमः अग्निष्टोमः। सुषन्धिर्निःषन्धिवत्। वेः पक्षिणः स्थनं विगतं स्थनं वा विष्टनम्। अपतिष्ठतीति अपष्ठ इति न्यासः। अग्नौ तिष्ठतीति अग्निष्ठः। गावस्तिष्ठन्त्यत्र गोष्ठः। अम्बायां तिष्ठति अम्बष्ठ. मनीषादित्वात् ष्वः। आम्बष्ठ इति क्वचिदन्यत्रा-पीति घः। दिवि तिष्ठतीति दिविष्ठः, स्था न लुक्। कौ भूमौ

कुत्सितं वा तिष्ठति कुष्ठः। परमे तिष्ठतीति परमेष्ठः, ष्या न लुक्। अङ्गौ तिष्ठतीति अङ्गुष्ठः। दुःषन्धिर्निःषन्धिवत्। निःषेधो दुःषेधवत्। अङ्गुरिपु सङ्गो यस्य सोऽङ्गुरिषङ्गः। शोभनं तिष्ठति सुष्ठु, बाहुल्यात् डुः, स्वरादित्वात् व्यम्। पृतनां सहते पृतनाषाट्, त पृतनाषाहम्, एवं जलाषाहं ; अषाढ़न्तत्वेऽपि षः। गणपाठसामर्थ्यात् पृतनासाढ्ही जलासाढ्ही इत्यादौ न स्यात्। ष्टु जल स्तुतौ अग्निष्टुत्। दुष्टु सुष्टुवत्। प्रतिपूर्व्वस्नातेरादन्ताड्डः, ततोऽल्पार्थे कः, कापि परे अकारस्य इकारः, प्रतिष्णिका। परिषयो निषयवत्। मद्गुष्ठोऽङ्गुष्ठवत्। सव्ये तिष्ठति स्था-धोः रौणादित्वात् ऋक्, कित् षालोपश्च, सव्येष्ठा सव्येष्ठरौ सव्येष्ठरः सव्येष्ठृभ्यामित्यादि। अन्ये तु ऋन्तदन्तस्थानादन्तस्य षत्वं नेच्छन्ति, तन्मते हे सव्येस्थ इत्यादि। गौरीव सक्थि यस्य गौरिषक्थः, गणपाठात् स्वः। निपूर्व्व स्ना धोः क्तः क्तिय निष्णातः निष्णातिश्च। परिष्ठल कुष्ठलवत। भीरोः स्थानं भीरुष्ठानम्। भूमिष्ठोऽग्निष्ठवत्। ज्योतिष्टोमोऽग्निष्टोमवत् ; खपान्तमपि लुप् वा। अम्या स्थलं शमिष्ठल गणपाठात् स्वः। यत्र स्वाभावस्तत्र न स्यात्तेन शमोस्थलमिति। रथेन याति रथ्या नदी, मनीषादित्वात् सुमि अत्र पाठात् षत्वम्। ऋतीषाहं पृतनाषाहमिव। निःषम-दुःषमौ सुषमवत्। विपूर्व्व सुधोः प्रादिसे विषु व्यम्। आयुष्टोमो ज्योतिष्टोमवत्। विपूर्व्वस्तृधोर्घञ् विष्टारः पङ्क्तिच्छन्दः, अन्यत्र विस्तारः पटस्य। गवि स्थिरः गविष्ठिरः, ष्या न लुक्। एवं युधिष्ठिरः। 'परमे उपपदे स्थाधोरिन्नोणादिकः

परमेष्ठी स्या न लुक् । उपपूर्व्वं स्तम्भधोर्घञ् उपष्टम्भः । मिकुष्ठोऽङ्गुष्ठवत् । त्रिपूर्व्वे ष्टुभधोः क्विप्, त्रिष्टुप् । पुञ्जिष्ठोऽग्निष्ठवत् । अङ्गुलिषङ्गोऽङ्गुरिषङ्गवत् । ईवन्तादपि—अङ्गुलीषङ्गः अङ्गुरीषङ्गः । ष्टुभधोःक्तः निष्टुब्धः । अनुष्टुप् त्रिष्टुप्वत् । सव्ये तिष्ठति सव्येष्ठः स्या न लुक् । अपष्ठु सुष्ठुवत् । सव्ये तिष्ठति इति क्विप् सव्येष्ठाः स्या न लुक् । दुःषूतिः निःषूतिवत् । आकृतिगणोऽयम् ।

न सुस्थादि-बहुप्रकृतेः । सुस्थादेर्व्वहुप्रकृतेश्च सः षो न स्यात् से सति ।

सुस्थः परिस्थितिर्दुस्थो दुस्थितश्च परिस्थितः ।
निस्तब्धश्च (१) प्रतिस्तब्धः कसरा-कसरौ तथा ।
धूसरो हरिसेतुश्च धूसरा गिरिसेतु च ।
कपिसेतुः परिस्कन्दोऽभिसस्च (२) प्रयोगतः ।

बहु-त्य-पूर्व्व-सकाराः सर्व्वे, यथा बहुसेतुरित्यादि । आकृतिगणोऽयम् ।

---

(१) "निस्तब्ध इति नि उपसर्गः । निरस्तु निष्टब्ध" इति गोयीचन्द्रः ।

(२) अभिपूर्व्वात् सुनोतेः सम्पदात् क्विप्, हस्वाल्लोप इत्यकारलोपः, सपेड्-सिति रड्, व्यैनपूतयीति र्घः अभिसुरः ।

"अभिसुस्हरिति सम्पदात् क्विप् सलुप्ते पदान्तत्वात् षत्वाभावे स्तौतेरेवेति नियमाभावे प्रकृतो प्राप्त षत्वं निषिध्यते" इति सन्धिपादे २८६ सूत्रे गोयीचन्द्रः । "सनि च अभिसुरः । सम्पदादत्वात् क्विपतो लोपे हलो दीर्घः"—इति तत्त्वबोधिनी । पाणिनि—८ । ३ । ११० काशिका द्रष्टव्या ।

१९३। ङे जस्-ङे-ङसि-ङीनामि-स्मै-स्मात्-स्मिनोऽतः।

(ङेः ५।, जस् ङे-ङसि-ङीनां६।।।, इ-स्मै-स्मात्-स्मिनः १।।।, अतः ५।)।

अकारान्तात् ङेः परेषामेषां स्थाने एते क्रमात् स्युः।

सर्व्वे सर्व्वस्मै सर्व्वस्मात् सर्व्वस्मिन्।

१९४। आत् सुमामः। (आत् ५।, सुम् ।१।, आमः ६।)।

अवर्णान्तात् ङेः परस्यामः आदौ सुम् स्यात्। एत्व-षत्वे। सर्व्वेषाम्। शेषं रामवत्। एवं विश्वादयोऽकारान्ताः।

उभशब्दो द्वान्तः। उभौ उभौ उभाभ्याम् उभाभ्याम् उभाभ्याम् उभयोः उभयोः। जसि—नेमे नेमाः। शेषं सर्व्ववत्।

---

१९३। ङेः। सर्व्वतो जयमिच्छन्ति पुत्रादेकात् पराजयमिति क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात्।

१९४। आत्। पुनराद्ग्रहणात् सर्व्वासामित्यादि। सर्व्वस्मिन्निति पूर्व्वेण स्मिन्। विश्वादय इति। उभशब्दो द्वान्त इति नित्यमिति शेषः। अस्य ङिसंज्ञाफलं त्यदादयोऽर्थायेति अर्थाधिप्रयोगे सर्व्वा ङिः स्यात्। यथा—उभौ हेतू उभाभ्यां हेतुभ्यां उभयोर्हेत्वोरित्यादि। उभय इति तु उभशब्दादवयवार्थेऽयट्-त्वेन साधितादुभयशब्दात् क्वचित् स्त्रौ, न तु द्वमित्यनभिधानात्। तेन उभयस्मात् उभयेषामित्यादि। एकशब्दात् एकत्वसंख्यावाचित्वात् क्वमेव। आ दशभ्यः (१) संख्या संख्येय-

---

(१) अष्टादशपर्य्यन्तम्, जनविंशतेः प्राणिवर्थः। संक्षिप्तसारे सुबन्तपादे १८२ संख्यकसूत्रस्य द्वे स्त्रियौ विंशतिः स्त्रियः स्त्रीणां वा इत्युदाहरणानि सन्ति।

१११। पूर्व्वादेः स्मात्-स्मिनौ वा।

( पूर्व्वादेः ५।, स्मात्-स्मिनौ १॥, वा ।१। )।

तौ। पूर्व्वस्मात् पूर्व्वात्, पूर्व्वस्मिन् पूर्व्वे। शेषं नेमवत्। एवं परादयः।

समोऽतुल्ये इत्याद्युक्तेः—

नमः समस्मात् पूर्व्वस्मा अन्तरस्मा अमेधमाम्।
सुमेधसामन्तरस्मै सतां स्वस्मै स्वयम्भुवे॥

---

वृत्तिरेव, नतु संख्यावृत्तिः, तेन घटस्यैकः ब्राह्मणानामष्टादश इत्यादि न स्यात्। मुख्यान्यार्थैकशब्दास्तु द्वव्ये स्त एव, तेन एकौ एकेषामित्यादि॥

१११। पूर्व्वा। ताविल्युक्तेरकारादेव, (१) तेन पूर्व्वस्याः पूर्व्वस्यामित्यत्र न स्यात्। अतएवात् सुमामः इत्यत्र भादित्यस्य नानुवृत्तिः। शेषं नेमवदिति। पूर्व्वे पूर्व्वा इत्यादि।

---

तत्रोक्तं गोयीचन्द्रेण 'द्वे स्त्रियौ विंशतिः स्त्रिय इति संख्येयार्थोऽत्र संख्याशब्दः, अतएव विशेषणविशेष्यभावः। स्त्रीणां वेति विंशतिरिति पदमत्रानुपपन्नमेवम् अत्र संख्यामात्रार्थता। अतएव गुणगुणिभोः सम्बन्धे षष्ठी। विंशतिशब्दस्य संख्येयार्थतां संख्यामात्रार्थताञ्च दर्शयितुमुदाहरणद्वयमुपन्यस्तम्। इतिकारेणैवं सूचितं विंशत्यादिशब्दाः सर्व्वे एव संख्येयार्थाः संख्यामात्रार्था वेति। एकपूर्व्वे द्वे संख्याशब्दाभ्यां संख्येयार्थौ, अतएव द्विशब्दस्य संख्येयार्थता दर्शिता। यत्र त्वा दशभ्यः संख्याशब्दाः संख्येये वर्त्तन्ते, ततःपरं विंशत्यादयः संख्याने संख्येये चेत्याहुः। एतदपि व्यभिचरतीति सूचितं वार्त्तीकृतेषा गुणवत्प्रयुक्तेऽनुरा-कुलामिति'।

(१) तौ ङसिङी, यौ षेर्व्वेत् इत्यनेन अकारात् परौ स्मात्-स्मिनौ भवत इत्यर्थः। अनेन पूर्व्वादेरिति सूत्रस्य पुंसि क्लीवे च विषयो न तु स्त्रियामिति ज्ञापितम्।

समायैषु परायैषां मुक्तयेऽर्थान्तराय च।
यदुस्वाय नमः स्वाय मल्लै र्जुष्टाय शार्ङ्गिणे॥
अतिसर्व्वाय सर्व्वाय साध्वन्यानां सखिद्विषे।
कालावराय कालेन पूर्व्वाय जगतो नमः॥

जसि—साध्वन्ये साध्वन्याः। जसि—अल्पे अल्पाः।

शेषं रामवत्। एवं प्रथमादयः। द्वितीयस्मै द्वितीयाय, द्वितीयस्मात् द्वितीयात्, द्वितीयस्मिन् द्वितीये। एवं तृतीयः। निर्जरः।

---

नमः समस्मात् इत्यादि—स्वयम्भुवे नम इत्यन्वयः। तस्मै कीदृशाय? समस्मात् पूर्व्वस्मै, सकलात् पूर्व्वकालवर्त्तिने। पुनः कीदृशाय? असिमेधसां अन्तरस्मै, मूढानां वाह्याय। पुनः कीदृशाय? सुमेधसां अन्तरस्मै, ज्ञानिनां हृदिस्थाय। पुनः कीदृशाय? सतां स्वस्मै, साधूनामात्मीयाय इत्यर्थः। क्रमेण प्रत्युदाहरति समायेत्यादि—शार्ङ्गिणे नम इत्यन्वयः। तस्मै कीदृशाय? एषां गोपालानां समाय तुल्याय। पुनः कीदृशाय? एषु जगत्सु पराय श्रेष्ठाय। (१) किमर्थं नमस्यते इत्यत आह-मुक्तये मुक्त्यर्थं, अर्थान्तराय प्रयोजनान्तराय धर्म्मार्थकामाय च इत्यर्थः। पुनः कीदृशाय? यदुस्वाय, यदूना स्वाय ज्ञातये। पुनः कीदृशाय? स्वाय धनस्वरूपाय (२)। पुनः कीदृशाय? मल्लैर्जुष्टाय सेविताय इत्यर्थः।

---

(१) "एषु जगत्सु समाय तुल्याय समन्यत्वादित्यर्थः। एषां जगतां मध्ये पराय श्रेष्ठाय नित्यत्वादित्यर्थः।" इति दुर्गादासः।

(२) यदूनामिति शेषः।

न गौणाख्येत्यस्योदाहरणमाह—अतिसर्व्वाय इत्यादि। सर्व्वाय सर्व्वनाम्ने शिवाय नम इत्यन्वयः। तस्मै कीदृशाय? अतिसर्व्वाय सर्व्वमतिक्रान्ताय। पुनः कीदृशाय? साध्वन्यानां सखिद्विषे, साधवश्च अन्ये च तेषां, यथाक्रमेण साधूनां सख्ये, अन्येषाम् असाधूनां द्विषे शत्रवे इत्यर्थः। अत्र सान्तविधेर्-नित्यत्वात् नाकारस्त्यः(१)। पुनः कीदृशाय? जगतः कालावराय, कालेन कनिष्ठाय। पुनः कीदृशाय? जगतः कालेन पूर्व्वाय, पूर्व्वकालवर्त्तिने ज्येष्ठाय इत्यर्थः।

चे जसि वेत्यस्योदाहरणमाह—जसि साध्वन्ये साध्वन्या इति।

पूर्व्वाद्यल्येत्यस्योदाहरणमाह—अल्पे अल्पा इति। एवं प्रथमे प्रथमाः, चरमे चरमाः, द्वितये द्वितयाः, उभये उभयाः, द्वये द्वयाः। माघे-द्वया द्वयेषामपि मेदिनीभृतामिति तु द्वयं द्वैतम् इच्छन्ति इष्य सर्पणे क्विप्, द्वयेषस्तेषां, वाशब्दस्य व्यवस्थयेति परे। अर्द्धे अर्द्धाः, कतिपये कतिपयाः इति।

तीयोङिति इत्यस्योदाहरणमाह—द्वितीयस्मै द्वितीयाय इत्यादि।

इतरेतरान्योन्यपरस्परेऽम्रां कर्म्मव्यतीहारे स्त्रियामादेराम् वा क्लोक्लीबयोः॥ मौवर्जित-क्लौ परे कर्म्मव्यतीहारे एते निपात्याः स्त्रिय, एभ्यः परस्या अमादिस्तेः क्लीनपुंसकविषये आम् वा स्यात्। इतरेतराम् इतरेतरं स्त्रियः कुलानि वा पश्यन्ति। इतरेतराम् इतरेतरेण स्त्रीभिः कुलैर्वा भोज्यन्ते। इतरेतराम् इतरेतरस्मै

(१) चेत्याद्युदाहरणेऽस्मिन्नेव एवमाकारो नेति।

११६। जरस् जराचि तु।

( जरस् ।१।, जरा ।१।, अचि ७।, तु ।१। )।

जराशब्दो जरस् वा स्यादचि परे।

निर्जरसौ निर्जरसः निर्जरसं निर्जरसौ निर्जरसः निर्जरसा। केचिदादाविनातामिच्छन्ति, निर्जरसिन निर्जरसैः निर्जरसे निर्जरसः निर्जरसादित्यादि। पक्षे हसे च रामवत्।

---

स्त्रियः कुलानि वा स्पृहयन्ति। इतरेतराम् इतरेतरस्मात् स्त्रियः कुलानि वा विरमन्ति। इतरेतराम् इतरेतरस्य स्त्रियः कुलानि वा स्मरन्ति। इतरेतराम् इतरेतरस्मिन् स्त्रियः कुलानि वा अनुरज्यन्ते। एवम् अन्योन्याम्, अन्योन्यम्। परस्पराम् परस्परम् इत्यादि। इतरेतरादीनां क्रियाविशेषणत्वेऽपि पुंस्त्वैकत्वे स्वभावात् स्तः। अन्यथा अन्यादित्वात् इतरेतरान्योन्याभ्यां परस्य मस्य तादेशः स्यात्। केचित्तु तादेशमपि, तेन इतरेतरत् इतरेतराम् इतरेतरं कुलानि। एवम् अन्योन्यत् अन्योन्याम् अन्योन्यमित्याहुः। स्त्रीक्लीबयोरिति किम्—इतरेतरं पुरुषाः पश्यन्ति। अन्योन्यमिमौ विघटयतः। क्रियाविशेषणत्वे तु इतरेतरं पुरुषाः पश्यन्ति।

११६। जरस्। पूर्व्वसूत्राद्वानुवर्त्तते। प्रकरणात् क्वेरचेव, तेन जरा अत्र इत्यादौ न स्यात्। परत्वादादौ क्वौ जरसादेशः न तु क्ति-कार्य्यं, तेन निर्ज्जरस निर्ज्जरसः निर्ज्जरसोः निर्ज्जरसामित्यादि। तु शब्दोऽनुक्तसमुच्चयार्थः, तेन अतिजरसस्य भिक्षुथ

११७। पाद दन्त यूष निशा पृतना मासासन सानु नासिकोदक हृदयासृक् यकृत् शकृत् शीर्ष दोष:-पद्दद् यूषन्निश् पृन्मासासन् स्नु नसुदन् हृदसन् यकन् शकन् शीर्षन् दोषण: शसादि-पौ।

(पाद—दोष: १॥, पद्—दोषण: १॥, शसादि-पौ ७।)।

एषां स्थाने एते क्रमात् स्यु र्वा शसादौ पौ च परे।

पद: पदा पद्भ्यामित्यादि। दत: दता दद्भ्यामित्यादि।

---

कन्या वर्षशतं गता इत्यत्रानन्यपि जरसादेश इति कश्चित्। निर्जरसिन निर्जरसादिति तु परमतमित्याह केचिदित्यादि। निर्जरैरिति ऐस्करणाच निमित्तापाये नैमित्तिकस्याप्यपाय:। भाष्ये तु अतिजरैरित्येव।

११७। पाद। पादश्च दन्तश्च यूषश्च निशा च पृतना च मासश्च आसनश्च सानु च नासिका च उदकश्च हृदयञ्च असृक् च यकृच्च शकृच्च शीर्षञ्च दोष् च ते, पर्यर्थे व्यत्ययात् प्रौ। पच्च दच्च यूषंश्च निट् च पृच्च मास् च आसंश्च स्नुश्च नश्च उदश्च हृच्च असंश्च यकंश्च शकंश्च शीर्षंश्च दोषंश्च ते। शस् आदिर्यस्य स:, शसादिश्च पिश्च तत् तस्मिन्, पुंस्त्वं सौत्रत्वात्। पौ शीर्षे भव: शीर्षण्य: केश:, यूषण्यं हृद्यमित्यादि। क्वौ शसादिष्वेवेति परे (१)। सुपदी, व्याघ्रपदी कुले इति तु ङ-से पादादेशे पात् पत्

---

(१) उक्तञ्च दुर्गादासेन "शसादिपदग्रहणेन तत्पूर्वविभक्तेर्निरासात् क्वौ नेकारस्य विधेयोऽपि तत्र न स्या" दिति।

पाविति पदादेशः। केचित्तु दीर्घपदी दीर्घदोषणी दीर्घदोष्णी इत्याहुः। विभिन्नस्यादेरचः पित्वात् (१)। वा शब्दस्य व्यवस्थया क्वचिन्न स्यात्, क्वचिदन्यत्रापि, तेन—

पादस्य पदतदर्थय-इति-काषि-हिमाज्यातिगे वा तु शब्द-घोषमिश्रनिष्के। पादस्य पत् स्यात् अतदर्थये इत्यादौ च, शब्दादौ तु वा। पादाय हितः पद्यः पद्याः, पद्धतिः, पत्काषी, पद्धिमं, पदाजिः, पदातिः, पद्गः। पच्छब्दः, पद्घोषः, पन्मिश्रं, पन्निष्कम्। पक्षे पादशब्द इत्यादि। अतदर्थय इति किं—पाद्यं पादाय वारिणि।

ऋचः शसि। ऋक् सम्बन्धिनः पादस्य पत् स्यात् शसि (२) परे। पच्छो गायत्रीं जपति। ऋचः किं—पादशः कार्षापणं ददाति।

गोपहतयोः पदः। पादस्य पदः स्याद् गोपहतयोः (३)। पदगः, पदोपहतः।

दन्तशीर्षयोर्दच्छीर्षणौ न तयाचोः। अनयोरेतौ भस्तः क्रमादनयोः। दन्ते भवो दन्त्यः, स्थूलशीर्ष्णोऽपत्यं स्थौलशीर्षिः, मृगशीर्ष्णा युक्ता मार्गशीर्षी तिथिः। अचि किं—शीर्षण्याः केशाः।

नाम्नि दादिश्वस्योदकस्योदन् धि वास-पेष-वाहने च वा तु

(१) अत्रायमाशयः—केचित् पण्डिता यशादिष्वेवेति नाङ्गीकुर्वन्ति, तेषां मते क्लीबे स्वौकारस्यापि पित्वात् तलादेशः स्यादिति।

(२) शसि प्रत्यये इत्यर्थः।

(३) गे उपहते च इत्यर्थः।

भारादौ । दादिस्थस्योदकस्य उदन् स्यात् नाम्नि, ध्यादौ च, भारादौ तु वा । उदकस्य मेघः उदमेघो नाम कश्चित्, तस्यापत्यम् औदमेघिः । उदवाहः, उदपानः कूपः, अनपेक्षितावयवार्था संज्ञेयम् । उदकं धीयते यत्र उदधिः समुद्रः, असंज्ञायामप्युदधिः कुम्भः, उदवासः, उदपेषं शुण्ठीं पिनष्टि चूमलः, उदवाहनः । उदभारः, उदकभारः । भारादिर्यथा—

भारहारी च वाहश्च विन्दु-वीवध-गाहवः ।
ओदनो वज्रविषयौ (१) गाहो मन्थः प्रकीर्त्तितः ।

अस्यहसादेः पूरयितव्ये वा । अस्यहसादेरुदकस्य उदन् स्याद्वा पूरयितव्ये । उदकस्य कुम्भः उदकुम्भः, उदककुम्भः । स्थहसादेस्तु उदकस्थाली । पूरयितव्ये किं—उदकगिरिः ।

परदस्योदो नाम्नि । परदस्योदकस्य उदः स्यान्नाम्नि । लोहितोदः क्षीरोदः लवणोदः । नाम्नि किं—लवणोदकः कुम्भः ।

नासिकाया नस् तस्-क्षुद्रावर्ण-नगरये । नासिकाया नस् स्यात् तसि क्षुद्रे वर्णनगरभिन्ने ये च । नस्तः, नःक्षुद्रः, नस्यः । वर्णनगरये तु-नासिक्यो वर्णः, नासिक्यं नगरम् ।

हृदयस्य हृल्लासलेखयोः ष्यण्-शोक-रोग-शल्ये तु वा । हृदयस्य हृत् स्यात् लासलेखयोः परयोः, वा तु ष्यणादौ । हृल्लासः हृल्लेखः । सौहृद्य हृच्छोकः हृद्रोगः हृच्छल्यम् । पक्षे सौहृदय्यमित्यादि ।

पादहन्तेति सूत्रं छान्दसमिति परे । अप्रशस्तं निन्दि स्थानम् । पक्षामुद्वर्त्तितस्य च । हृदि विनिहितरूपः । दोष्णां बलात्

---

(१) विषय इत्यत्र विरच इति पाठान्तरम् ।

## ११८। सदानोऽल्लोपोऽम्वस्यात् पौ वा त्वीङ्योः।

( सदा ।१।, अनः ६।, अत्-लोपः १।, अ-म्व-स्यात् ५।, पौ ७।, वा ।१।, तु ।१।, ईङ्योः ७। )।

अनोऽकारस्य नित्यं लोपः स्यात् पौ परे, ईङ्योस्तु वा, नतु मस्यात् वस्याच्च परस्य। यूष्णः यूष्णा।

## ११९। नो लुप् फेऽधौ।

( नः ६। लुप् ।१।, फे ७।, अधौ ७। )।

नस्य लुप् स्यात् अधौ फे परे। यूषभ्यामित्यादि।

ङौ—यूष्णि यूषणि यूषे। मासः मासा माभ्यामित्यादि।

पक्षे घौ च रामवत्। पदादयः पृथक्शब्दा इत्येके।

---

मन्त्रबलं गरीयः। निशुपस्यास्य सुष्टस्य पीते यूष्णि निरामय इत्यादिप्रयोगदर्शनात् भाषायां अन्यक्तता कृतम्।

११८। सदा। अतो लोपोऽल्लोपः, म च व च म्व, म्व च तत् स्यचेति म्वस्यः, न म्वस्यः अम्वस्यस्तस्मात्,ईश ङिश्च तौ तयोः। औक्ष्णः पौष्णः धार्त्तराज्ञ इत्याद्यनेनैव सिद्धे इनयनष्टतराज्ञामिति सूत्रमेवं ज्ञापयति, ताद्धे सर्व्वत्र अनो नाकारलोप इति, तेन राजन्यः मूर्द्धन्य इत्यादि सिध्यति। पूर्व्व वाधिकारनिवृत्त्यर्थं सदेति, (१) अन्यथा अरसादेशः पदाद्यादेशाश्च नित्य स्युरित्यर्थः।

११९। नो। न इति प्रकृतिनान्तस्य नः। लेरधिकारात् लेरेव। तथाच प्रकृतिनान्तस्य ले नस्य लुप् इत्यर्थः, तेन राजा

---

(१) "केचित्तु सदेति सुप्रत्वे गौणत्वे चेत्यर्थः, तेन पूजितपूष्णः पीतयूष्ण इत्यादि इत्याहुः"—का वि।

## १२० । सङ्ख्या-वि-सायाद्वाङ्गोऽह्न् ङौ ।

(सङ्ख्या-वि-सायात् ५।, वा, ।१।, अङ्गः १।, अह्न् ।१।, ङौ७।) ।

सङ्ख्या-वि-सायेभ्यः परस्याङ्ग इत्यस्य अह्न् वा स्यात् ङौ ।

द्व्यह्नि द्व्यहनि द्व्यङ्गे, व्यह्नि व्यहनि व्यङ्गे, सायाह्नि सायाहनि सायाङ्गे ।

विश्वपाः विश्वपौ विश्वपाः, विश्वपां विश्वपौ ।

## १२१ । धोरा लोपोऽच्यघौ ।

( धोः ६।, आ ।६।, लोपः १।, अचि ७।, अघौ ७। ) ।

धोराकारस्य लोपः स्यात् अघावचि परे । विश्वपः, विश्वपा विश्वपाभ्यामित्यादि । एवं शङ्खध्मादयः । धोः किं—हाहाः हाहा हाहाभ्यामित्यादि । शेषं विश्वपावत् । हरिः ।

---

आनौ यूषभ्यामित्यादौ स्यादेव । न तु प्रशान् भवान् भवन् अहन्नित्यादौ । कथं सुवनमाचक्षाणः सुवन्नित्यादौ लुप् न स्यादिति, उच्यते, अकारस्यानिवद्भावात् । परैकदेशिनः (१) पदादयोऽपशब्दा इत्याहुः । ये तु पदादयः पृथक् शब्दा इति वदन्ति तेषां मते पत् पदौ पद इति भवन्ति ।

१२० । संख्या । संख्या च विश्व सायश्च तत् तस्मात् । अङ्ग इति सर्व्वैकदेशसंख्यातसंख्याव्यादित्यादिष्टाङ्गः, पर्थे मौ । द्व्यङ्गीति ङौ अह्नादेशे वा अल्लोपः । पक्षे द्व्यहनि इति । उभयत्यागपक्षे द्व्यङ्गे । एवमन्यत्र ।

१२१ । धोरा । आ इति लुप्तषष्ठीकं दम् । न चिरधि-

---

(१) कैश्चित् पण्डितैः इत्यर्थः ।

१२२। युङ्रामौ यू।

( युङ्राम् ५॥, औ ।१।, यू २॥ )।

इकारोकाराभ्यां परं औ क्रमादिकारोकारौ प्राप्नोति। हरी।

१२३। णुर्धि-जस्-ङित्सु।

( णुः १।, धि-जस्-ङित्सु ७॥ )।

---

स्तस्मिन्, अज्-विशेषणम्। अर्थलाघवात् पाविति न कृतं, तथाहि पैरप्यचृताप्येप्रकृतिकत्वेन विलम्बप्रतिपत्तिकत्वादाह अघवाविति। "तद्धेतोरेव तदस्तु किं तेन" इति न्यायात् क्वचित् शब्दलाघवादर्थलाघवोऽपि न्याय्य इति। विश्वप इति विश्वं पातीति पाधोः क्विप्। एवं सोमपः। ततं तायते इति तातताः तान् तातनः। हाहा इत्यव्युत्पन्नपक्षमाश्रित्य इदमुक्तम्। हाशब्दं जहाति इति व्युत्पत्त्या हाह इति। केचित्तु ब्राह्मणवाचकस्य आशब्दस्यापि अः पश्य, ए देहि, इ विरमति (१)। अस्मन्मते तु आः पश्य, ऐ देहि, ए विरमति इत्यादि। कथं क्त्वो यप् वे इति? सौत्रत्वात्। (२)

१२२। युङ्राम्। इश्च उश्च तौ, ताभ्यां तमितं करोति। अवयवापेक्षया इम्। इह लाक्षणिकयुतोऽपि ग्रहणात् अतिस्त्री चित्रगू इत्यादि स्यात्। यू इति द्वीदम्।

१२३। णुर्धि। ङ इत् येषां ते ङितः। धिश्च जश्च ङितश्च

---

(१) विरमतीति यवन्त सम्यन्त पदम्।

(२) आबन्तभिधानामप्याकारलोप इति वार्त्तिकम्। अतएव आचार्येण तन्मतमवलम्ब्य आदनञ क्त्वो यप्से इत्यादौ क्त्वादिशब्दस्याप्याकारो लुप्त इति दुर्गादास।

इदुतो गुः स्यात् घौ जसि ङिति च परे। हरयः।

त्यलोपे त्यलक्षणम्। हे हरे। हरिं हरी हरीन्।

## १२४। टादसश्चास्त्रियान्तु ना।

(टा।१।, अदसः ५।, च।१।, अस्त्रियां ७, तु।१।, ना।१।)।

इदुद्भ्यामदसश्च परष्टा ना स्यात्, नतु स्त्रियाम्।

हरिणा हरिभ्यां हरिभिः, हरये हरिभ्यां हरिभ्यः।

---

ते तेषु। ङित इति जस् साहचर्य्यादव्यवहितस्यैव (१) ग्रहणं, तेन मत्यै सख्ये इत्यादौ न स्यात्। इदुद्भ्यां विहितेषु घिजस्ङित्सु गुरित्यर्थः। तेन हे अतिनदे हे चित्रगो इत्यादौ स्यात्। न तु हे नदि हे सुभ्रु इत्यादौ। वस्तुतः सम्भवदन्ति कुक्कुटाः। एतत् सत्यमलङ्करणाय ते इत्यादौ तु हे से पुनस्तन्वादित्वादूपि सुभ्रू हौत्यनेन ह्रः। (२)

१२४। टा। न स्त्री अस्त्री तस्याम्। अदोग्रहणं सर्व्वकार्य्यानन्तरं मात्वर्घ्यातु च इति ज्ञापनार्थं, तेन अमुमे अमुये इत्यादि स्यात्। द्विलिङ्गस्य तु यदा पुंस्येव वृत्तिस्तदा स्यादेव, तेन पटुना पुंसा इत्यत्र स्यात्, न तु पट्वा स्त्रिया इत्यादौ।

---

(१) साक्षात् ङित एवेत्यर्थः।

(२) त्यलोपे त्यलादि। येन केनापि शब्देन प्रत्ययलोपे प्रत्ययलक्षणं कार्यं स्यादिति। यथा राजा इत्यादौ सेर्लोपे दीर्घः। एवं वाचामीशो वागीश इत्यादौ सेर्लुक् ङे चेति सुबन्तेन विभक्तेर्लोपे कृते विभक्त्यन्तविहिता पदसंज्ञा सिद्धा इति दुर्गादासः।

त्यलक्षणमिति कार्य्यविशेषणं विशेषणम्। तथाच सू. प्रत्ययो लोपे प्रत्ययलक्षणमिति सूत्रम्, अर्थात् प्रत्ययस्य लोपे तन्निमित्तं यत् विहितं तत्कार्यं तद्भवतीति। का-वि।

## १२५। ङसेङो लोपः।

( ङस ६।, एङः ५।, लोपः १। )।

एङः परस्य ङसिङसो र्ङस्य लोपः स्यात्।

हरेः हरिभ्यां हरिभ्यः। हरेः हर्य्योः हरीणाम्।

## १२६। युङ्भ्यां ङे र्डौः।

( युङ्भ्यां ५॥, ङेः ६।, डोः १। )।

इदुङ्भ्यां परस्य ङेर्डौः स्यात्, ङ इत्।

---

१२५। ङसे। एङो ग्रहणं सामान्यस्यैङः प्राप्त्यर्थं, तेन ते. दे: गोः द्योः मह्योः ऋतोरित्याद्यपि स्यात्(१)।

१२६। युङ्भ्यां ङेः। युङ्भ्यामिति पूर्व्ववत्। युता ङेरौ इति कृते हरौ शम्भाविति सिद्धं भवति, एवं सति विश्वतेस्ते-स्त्वडावित्यडौ ग्रहणं विनापि विंशताविति च सिध्यति, तथापि डौ करणं, येन विधिस्तदन्तस्येति न्यायात् प्राप्तसमुदितादेश-निवृत्त्यर्थम् (२)। अथवा लोपस्वरादेशयोः स्वरादेशो विधि-र्बलवान् इति न्यायात् व्य-सख्शिब्दस्य सखावित्यनिष्टवार-णार्थम्। कामवाचिन इशब्दस्य तु आद्यन्तवदेकस्मिन्निति न्यायात् श्रौ इति।

---

(१) ते. दे. इति तेवृ देवने, देवृ ङ च देवने इत्यनयोः क्विपि रूपम्। मह्यामसौ उयेति मह्योः। ऋत उर्येन स ऋतोः।

(२) इकारोकाराभ्यां सहितस्य ङेरित्युक्तौ इकारोकारान्तशब्दसहित-स्यैव ङेरौकारप्रसक्तिनिवृत्त्यर्थमित्याशयः।

१२७ । टे र्लोपो ड़िति विंशतेस्तेस्त्वडौ ।

( टेः ६।, लोपः १।, ड़िति ७।, विंशतेः ६।, तेः ६।, तु ।१।, अडौ ७। ) ।

ड़िति परे पूर्व्वस्य टे र्लोपः स्यात्, विंशते स्तेस्त्वडौ ।

हरौ हर्य्योः हरिषु । एवं श्रीपत्यग्निरथ्यादयः ।

१२८ । सख्यृद्भ्यां सौ डा॑घेः ।

( सख्यृद्भ्यां ५॥, सेः ६।, डा ।१।, अघेः ६। ) ।

सखिशब्दात् ऋकारान्ताच्च परस्य से र्डा स्यान्न तु घेः ।

सखा । अघेः किं—हे सखे ।

१२९ । घौ त्रिः । ( घौ ७।, त्रिः १। ) ।

सख्यु र्ऋकारस्य च त्रिः स्यादघौ घौ परे ।

सखायौ सखायः, सखायं सखायौ सखीन् ।

---

१२७ । टेर्लोपः । न ड़िरड़िस्तस्मिन् । विंशतेस्तेस्त्वडा-विति, डौ विंशतौ पूर्व्वेण (१) टिल्लोपः । डिभिन्ने ड़िति तेर्लोपः । यथा—विंशः, विंशतिमाचष्टे विंशयति इत्यादि । (२)

१२८ । सख्यृत् । सखा च ऋच तौ ताभ्याम् । नघिरघि-स्तस्य । अघेरिति पृथक्-दकरणात् क्वचिन्न स्यात्, तेन अर्ज्जुनस्य सखा कृष्णः कृष्णस्य सखिरर्ज्जुन इति भारते । चार्यमित्यन्ये ।

१२९ । घौ । पूर्व्वसूत्रादघेरित्यनुवर्त्तते ऋत्साहचर्य्यात्, तेन हे सखे इत्यत्र न त्रिः ।

---

(१) पूर्व्वेण चास्य सूत्रस्य पूर्व्वांशेनेत्यर्थः ।

(२) डिवर्ज्जनात् ड़ितरेव ग्रहणं न त्वडित इत्यस्य, तेन विंशतिमाचष्टे

१३० । सख्युराङिताम-ए-उसुसौ ।

( सख्युः ५।, टा-ङितां ६॥।, आ ए उस् उस् औ ।१॥। ) ।

सख्युः परेषां टा-ङितां स्थाने आ ए उस् उस् औ एते क्रमात् स्युः । सख्या सख्ये सख्युः सख्युः सख्यौ । शेषं हरिवत् ।

१३१ । पत्युरसे । ( पत्युः ५।, असे ७। ) ।

पतिशब्दात् परेषां टाङितां स्थाने आ ए उस् उस् औ एतें

---

१३० । सख्युः । ङ इत्येषां ते ङितः, टाश्च ङितश्च ते तेषाम्, आश्च एश्च उश्च उश्च औश्च ते, सौत्रत्वाज्जसो लुक् यि-सन्ध्यभावौ च । सख्या सख्ये सख्युः सख्युः सख्यौ । सख्यौ इत्यत्र लाक्षणिकत्वात् न णुः । क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इत्युक्तेः सखिना वानरेन्द्रेणेति । भाष्ये तु गौणेऽपि अतिसखा अतिसखायौ अतिसख्या इत्याद्युक्तम् । न्यासे तु सख्यर्थप्राधान्य एव, तेनातिसखिः अतिसखी अतिसखिना इत्यादौ न स्यात् इत्युक्तमिति । (१)

१३१ । पत्युः । न सः असस्तस्मिन् । पतिना नीयमानायाः पुरः शुक्रो न दुष्यति । गते मृते प्रव्रजिते क्लीबे च

---

वियतयतीत्यादौ ङिभिन्नेऽपि अतिदिष्टत्वात् न तिलोपः, किन्तु सामान्यङिति टिलोप एव इति । का-वि ।

(१) "स्त्रियान्तु नित्यैव्नत्वात् सखी सख्यौ सख्य इत्यादि गौरीवत । क्लीबेऽस्य न प्रयोग तथाच—सखा मित्रे सहाये ना वयस्यायां सखी मता इति मेदिनी । यत्तु अहो पिपासुत्वं तव खण्डितं न अस्य सख्या वयसाप्यनेन इति नैषधे वयसा इत्यस्य विशेषण सख्या इति, तत्पुंस्येव अजहल्लिङ्गत्वात् । अतएव चेतस्तदुमब्रह्मवर्गं समिति रघुः"—इति दुर्गादास ।

क्रमात् स्यु र्नेतु से । पत्या पत्ये पत्युः पत्युः पत्यौ । अन्ये किं--श्रीपतिना इत्यादि । शेषं हरिवत् । कतिशब्दो त्वान्तः ।

### १३२ । डतिसङ्ख्याष्णो जस्शसो र्लुक् ।

( डति-संख्या-ष्-ण: ५।, जस् शसोः ६॥, लुक् ।१। ) ।

डत्यन्तात् षान्त-नान्त-संख्यायाश्च परयो र्जस्शसो र्लुक् स्यात् । कति कति कतिभिः कतिभ्यः कतिभ्यः कतीनां कतिषु । एवं यति तति ।

डति-त्र्य-ष्णान्तसंख्यास्मद्-युष्मदः सदृशास्त्रिषु ।

त्र्यादयः संख्याशब्दा त्वान्ताः ।

---

पतिरिति पत्नी । पत्नी जीवति या नारी उपोष्य व्रतचारिणी । आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत् ॥ दुहितुः पत्नौ । सीतायाः पतये नम इति पूर्व्ववत् (१) । छान्दसमिति परे ।

कतिशब्दो त्वान्त इति । अनियितबहुत्वविशेषार्थकत्वात् इति भावः ।

१३२ । डति । ष च न च ष्णौ, संख्या चासौ ष्ण् चेति संख्याष्ण्, डतिश्च संख्याष्ण् च तत्तस्मात् । डतिर्डत्यन्तः, संख्याष्ण षान्त नान्त संख्या इत्याह डत्यन्तादित्यादि (२) ।

डतित्र्य । डतिश्च त्र्यश्च ष्णान्तसंख्या च युष्मच्च अस्मच्च ते ।

---

(१) पूर्व्ववत् सखिना वानरेन्द्रेणेतिवत् ।

(२) एभ्यः क्लीवेऽपि कति फलानि षट् फलानि पञ्च मूलानि इत्यादौ जस्-शसोः शिं बाधित्वा लुगेव । अतो षट् फलानि इत्यादौ शौ नुम् च स्यात् । न च निमित्तगतविशेषतो निमित्तगतविशेषस्य बलवत्त्वात् सर्व्वाणि इत्यादौ यथा निरंशा विहितमिकारादेशं बाधित्वा जस्शसोरिकारेण शिः स्यात् तथात्रापि निर्देशात्

१३३ । त्रेरयङ् नाम्नि ।

( त्रेः ६।, अयङ् ।१।, नाम्नि ७। ) ।

त्रिशब्दस्य अयङ् स्यात् नाम्नि परे, ङित्त्वादन्त्यस्य स्थाने । त्रयाणां त्रिषु । द्विशब्दो दान्तः ।

---

ष्णान्तः पूर्व्ववत् । त्रिषु लिङ्गेषु सदृशाः समानरूपाः, एषां लिङ्गकृतप्रयोगवैलक्षण्यं नास्तीत्यर्थः(१) । डति-त्र्य ष्णान्तसंख्यानां मुख्य एवायं नियमः, पूर्व्वसूत्रेण व्याप्लुक् स्नोरित्यनेन च मुख्य एव लुग्विधानात् । तेन प्रियकतीनि सुखस्त्रीणि प्रियपंपि प्रियपञ्चानि कुलानीत्यादौ न स्यात् । य-से तु प्रियकति इत्यादौ स्यादेव । एषां घलिङ्गत्वात् प्रियाः पञ्च स्त्रियो यस्य प्रियपञ्चा युवा इत्यादौ पुंवद्भावः ।

त्र्यादय इति । त्र्यादीनामेकत्वद्वित्वाबोधकत्वात् बह्वेव । अयं नियमस्त्वष्टादशशब्दपर्य्यन्तो, विंशत्यादेः क्वविधानात् ।

१३३ । त्रेः । आमीत्यकरणात् क्वचिन्न स्यात् । तथाच त्रीणामपि समुद्राणां युगान्ते तु समागम इति हृद्दतिङन्तः । मुख्यस्यैवायं विधिस्तेन अतित्रीणाम् । अन्ये तु गौणेऽपि अतित्रयाणामित्याहुः ।

---

(१) एषां पुस्त्रीनपुंसकलिङ्गविहितकार्य्यं नास्तीत्यर्थः । अतएव युष्मदस्मद्भ्यां शसो नकारं विधास्यति । एवं कति स्त्रिय इत्यत्र षाञ्चोषादीत्यादिना ईप् न स्यात्, पञ्च स्त्रिय इत्यत्र च नान्तत्वादीप् न स्यादिति । न च निमित्तगतविशेषतो लिङ्गगतविशेषस्य बलवत्त्वात् सर्व्वाणि इत्यादौ यथा स्त्रित्वादिविहितमिकारादेश बाधित्वा जस्शसोरित्यनेन शि- स्यात् तथात्रापि शिरेवास्तु इति वाच्यं,

## १३४। त्यदां टेरः क्वौ।

( त्यदां ६।।।, टेः ६।, अः १।, क्वौ ७। )।

त्यदादीनां टेरकारः स्यात् क्वौ परे।

द्वौ द्वौ, द्वाभ्यां द्वाभ्यां, द्वयोः द्वयोः।

वातप्रमीः वातप्रम्यौ वातप्रम्यः।

---

१३४। त्यदाम्। त्वन्निर्देशो हि गणार्थः, त्रिसंज्ञस्यैव ग्रहणात्। अतितत् विप्रः, अतितत् स्त्री, अतितदी कुले इत्यादौ न स्यात्। सूत्रे टेरत्वाभावः सौत्रत्वात्। दमो यो इत्यत्र भाव्यमानः(१) अक् यँ न गृह्णाति इति ज्ञापकात् अकारस्यानित्त्वेऽपि न यँग्राहकत्वम्। प्रकरणात् क्वाविति प्राप्ते क्विग्रहणात् युष्मदस्मदोर-तसि गौणेऽपि स्यात्, (२) द्विशब्दस्य तसि न स्यात्, तेन अतित्वान् अतिमान् इत्यादौ स्यात्, न तु त्वत्तः मत्तः द्वित इत्यादौ।

---

अतिव्याप्त्यान्त इत्यादिना त्यदादीनां लिङ्गत्रये साम्यनियमेन लिङ्गविशिष्टकार्य-निषेधादिति दुर्गादासः।

(१) भाष्यमाण उत्पाद्यमान आदेशः प्रत्ययश्चेति यावत्।

(२) युष्मदस्मदोर्गौणेऽपि टेर स्यात्, मुख्ये तु तसि प्रत्यये परे न स्यादित्यर्थः।

अत्र कार्त्तिकेयसिद्धान्तः 'न च त्यदो टः क्वाविति वाच्यं, न इत्यादौ तद्-शब्दस्य अकारव्यवधाने सप्ताभावादनिष्टापत्तेः। टेर्विहिताकारस्य प्रकृतिभक्तत्वात् सर्वं स्यादेव। ननु त्यदां टङ् क्वाविति कृते प्रकृतिभक्तत्वात् सर्वादिकार्यं भवितुमर्हति कथमेतद्गौरवमिति..... तदुक्तमन्यः समधिकफलमावहेदिति न्यायात् त्यदादीनां मध्ये युष्मदस्मदोर्गौणे विभक्त्यभावेऽप्यत्वविधानार्थमित्याह। अत्र प्रकरणादेव क्वाविति प्राप्तौ क्विग्रहणं, विद्यमानविभक्तेरानुपूर्व्याभक्तत्वस्य च प्रदर्शनम्। तेन न तौ ते इमे इत्यादि। अतएव द्विग्रहणाद्वो न तसीति व्याख्यात् निषेधः सङ्गच्छते'..... इत्याह। त्यदां टङ् क्वौ इति पाठ कृतं तत्क्रियालाघवार्थमिति कश्चित्।

## १३५ । यूतोऽम्शसो र्म्नावदीधोः ।

( यूतः ५।, अम्शसोः ६॥, म्नौ १॥, अदीधोः ५। ) ।

दी-धुवर्जादीदूदन्तात् परयोरम्शसोः स्थाने क्रमात् म-नौ स्तः। वातप्रमीं वातप्रम्यौ वातप्रमीन् वातप्रम्या वातप्रमीभ्यामित्यादि । एवमतिलक्ष्म्यादयः (१) । सुधीः ।

## १३६ । धोरियुवचि ।

( धोः ६।, इय्-उव् ।१।, अचि ७। ) ।

धोरीदूतोः स्थाने क्रमादियुवौ स्तो ऽचि परे ।

सुधियौ(२) सुधियः इत्यादि । एवं सुश्री यवक्रादयः । प्रधीः ।

---

१३५ । यूतः । ईश्च ऊश्च तौ, ताभ्या तमित करोति, यूत् तस्मात्, अम्च शश्च तौ तयोः, मश्च नश्च तौ, दीश्च धुश्च तत्, न तत् अदीधु तस्मात्, पुस्त्वं सौत्रत्वात् । वातप्रमीमिति वातशब्दात् प्रपूर्व्व मा-धोः कीः । एवं कर्कन्ध्वं कर्कन्धून्, जरयमीणादिकः । केचित् स्त्रियामीपि दीसम्रत्वात् वातप्रमीं वातप्रमीः, अपि कर्कन्ध्वं कर्कन्धुः इत्याहुः ।

१३६ । धो । इय च उव् च तत् । पूर्व्वतो यूत इति स्निं

---

(१) एवमतिलक्ष्म्यादय इति । यूत स्त्रेव रौत्वल एवकारेण नित्यस्त्रीलिङ्ग शब्दस्य नदीसञ्ज्ञा विहिता अल त पुयोगात पाक्षिकत्वेन नदीसञ्ज्ञाभावात् धातुत्वा भावाच्च वातप्रमीशब्दवदेषा रूपमिति । भाष्यकारक्रमदीश्वरौ [illegible] प्रयोगे-ऽप्येषा नदीत्वमङ्गीकृत्य सर्व्वविभक्तिषु स्त्रीलिङ्गनद्वदाजहतु रिति । का श्रि ।

आदिशब्दात् अतितन्त्री बहुश्रेयसीत्यादय । ऊकारान्तेषु हूहू अतिचमू, अतिवधूप्रभृतय ।

(२) शोभना धीर्य्यस्य स सुधी , क्विबन्तत्वादस्य धातुत्वं वर्त्तते । विचक्विबन्तो हि धातुत्व जहाति न जहाति वेति वचनात इति । का ।श ।

१३७। कव्याद्यनेकाचोऽस्याद्दृन्पुनर्वर्षाकाराद्यन्यभूसुधियोर्य्वौ।

(कव्याद्यनेकाच: ६।, अस्यात् ५।, अद्दन्—सुधियो: ६॥, य्वौ१॥)।
। कादे र्व्यादेरनेकाचश्च धो रीदूतोरस्यात् परयो: क्रमात् यवौ स्त: अचि परे, नतु दृन्भू-पुनर्भू-वर्षाभू-काराभूभ्योऽन्यस्य भूशब्दस्य सुधियश्च। प्रध्यौ प्रध्य: इत्यादि। एवं दीध्यादय:।

कव्याद्यनेकाच: किं—शुद्धधियौ। अस्यात् किं—यवक्रियौ। नी: नियौ।

---

विपरिणम्यानुवर्त्तयन्नाह ईदूतोरिति। एवं सुश्री-यवक्रयादय इति। आदिशब्दात् इमिच्छति इति क्विप्. ई: इयौ इय:, एवं उमिच्छति इति ऊ: उवौ उव: इत्यादि। प्रकरणात् क्विस्थेव, तेन सुध्यर्थं इत्यादौ न स्यात् (१)।

क्रीश्वीरादिङसोर्य्वौ। क्रिय आदौ श्रुवोङसि इयुवौ वा स्त:। क्रियादि: क्रादि: श्रुव. ध्यो:। अनुकरणादित्यन्य:।

१३७। कंच व्यंच कव्यं, कव्यमादिर्यस्य स:, कव्यादिश्च अनेकाच तत्तस्य, न स्य: अस्य: तस्मात्, दृंश्च पुनश्च वर्षाच काराच ता आदयौ यस्य स:, तस्मादन्य: दृन्पुनर्वर्षाकाराद्यन्य:, स चासौ

---

(१) सुध्यादय: पुंवदित्यादौ इयादेशाभावं दर्शितवताचार्य्येण यत्नाथीति स्यादे रेवेति ज्ञापितं, सामान्यशब्दोऽपि क्वचिद्विशेषपरो भवतीति न्यायात्।..... किन्तु ज्ञापकसिद्धमनित्यमिति न्यायात क्वचिदन्यत्रापि भवति, तेन तुराषाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कालिदास:। विशेषविधित्वाद्दीर्घस्यापि बाधकोऽयं, तेन ङौ सुधियि इत्येव इति दुर्गादास।

भूयेति, पश्चात् स च सुधीश्च तौ, दृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ, न तौ अदृन्पुनर्वर्षाकाराद्यन्यभूसुधियौ तयोः । यच वच तौ । धोरिति धोरवयवभूतयोरित्यर्थः । नलित्यादि, दृन्निति हिंसार्थध्वं तस्माद्भूधोः क्विप्, दृन्भूः स्त्री सर्पचक्रयोरिति दकारादौ मेदिनी । दृन्भूः स्त्री कुलिशे चक्रे दृन्भूः स्त्रीपुंसयोरहाविति दकारादौ विश्वः । दन्भेरूप्रत्ययेन निपातितमिति भाष्यम् । कारास्थाने करं पठित्वा करभूः करभ्वौ करभ्व इत्यादि । एकदेशविकृतमनन्यवद्भवतीति न्यायात् काराभ्वौ इति केचिदाहुः । एयामियुवोदूङ्गित्वात् स्त्रियां दीसंज्ञायां दृन्भ्वै दृन्भूनां काराभ्वै काराभूणामिति ।

यदा स्याद्युत्पत्तेः प्राक् समस्तवैवायं विधिरिति भाष्य, तेन ईषद्भिय. कुधियः अभियः धर्मधियः नानाधियः दात्रलुवा, वृश्चिकभिया पलायमानस्याशीविषमुखे निपात इत्यादौ स्याद्यन्तेन से न स्यात् । वृश्चिकभियेति सम्बन्धे षो-विवचयेति चान्द्राः । व्यानां मध्ये गेरेव विधानादीषद्भिय इत्यादौ न स्यादित्यन्ये । वस्तुतस्तु दृन्पुनर्वर्षाकाराभ्वसुधीकव्याद्यनेकाचोऽस्याद् य्वौ इत्य-करणात्, उत्सर्गत्वाद्वा ईषद्भिय इत्यादौ न स्यात् (१) । दीर्घ्यादय

(१) दृन् हिंसा तदर्थं भवतीत्यर्थः । एषा लिङ्गार्थनिर्णयस्तु, दृनुभ् स्त्री कुलिशे चक्रे दृन्भू स्त्रीपुंसयोरहाविति विश्वप्रकाशात् । पुनर्भूः स्यात् द्विरूढाया दृन्भू पन्नग-वज्रयोः । पुनर्भवाया वर्षाभू स्त्रिया किञ्जुलुके भवे । काराभूर्निगडस्थाने क्रियाया मपि चेष्यते इति कोषाश्च । केचित्तु कारास्थाने कार पठित्वा कारभ्वौ कारभ्व इत्युदाहरन्ति । तथाच काराश्चेष्यते इति वामन. । वर्षादृनुपुन काराद्भुव इति चान्द्रा । कारशब्दो घजन्तो दृत्तौ भाष्ये च दृश्यते इति रचितश्च । कारस्थाने

### १३८। न्याप्दीभ्यो ङेराम्।

(नी-श्राप्-दीभ्यः ५।।।, ङेः ६।, आम्।१।)।

नीशब्दादापो दाश्च परस्य ङे-राम् स्यात्। नियाम्। शेषं सुधीवत्। अग्रणीः अग्रण्यौ। ङौ-अग्रण्याम्। शेषं प्रधीवत्।

---

इति। दीधीधोः क्विप्। दिधिष्वादय इति लिपिकरप्रमादः। यतो दधिपूर्व्व-स्यतेरूत्वे निपातनमिति (१)। आदिना नारी-वाचरतो नार्य्यौ विप्रस्य, मानमिच्छति मान्यः, सखेवाचरति सख्यौ इत्यादिसंग्रहः। अवयवस्त्रीत्वान्नार्य्यौ इति भाष्यम्। शुद्ध-धियाविति शुद्धा धीर्ययोरिति वाक्यम्।

१३८। न्याप्। नीश्च आप् च दीश्च ताः ताभ्यः। नीत्यस्य गौणागौणग्रहणं, तेनातिनिया प्रियनियामित्यादि। अग्रण्यामिति अग्रे नयतीति क्विप्, णत्वेऽपि एकदेशविकृतमनन्यवद्भवतीति

---

कत्वं पठित्वा करभ्वौ करभ्व इत्यपि केचित्। हन्वादीनां इदुवस्यानभिधानां नित्यस्त्रीत्वाद्दीर्घच्छायामादौ तुमागमे हनूभूनामित्यादि। किन्तु हनूभूशब्दस्य सर्व-नामत्वे पाक्षिकस्त्रीत्वाद्दीर्घत्वाभावे हनूभूनामिति। यत्रापि यवोति श्यादेरेव तेन प्रधीश्वर इत्यादौ न प्रवृत्त इति दुर्गादासः। कारापूर्व्वस्यापीति काशिका। ६।४।८४।

प्रकृष्टा धार्य्यतेति व्युत्पादितस्य पुंलिङ्गप्रधीशब्दस्यात्र यकारविधानेन "प्रध्यौ' प्रध्यः धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ स्त्रीनदीव 'दिति बहुव्याख्यवचनेन च यदा स्त्र्यादृतस्तेः प्राक् प्रकृतेवार्थं विधिरिति भवमनाद्यनधावस्येति। ईयङ्किय इत्यादौ तु कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायाच्च यवो च इति केचित्।

(१) दध धारणे इः। दधिं धैर्य्यं स्यति, अल्पाद्दित्वाद्ह्रस्वपदे गुर्व्वन्ता निपातिता इत्यमरटीका।

१३८ । त-तज-ख्यादीयो ङोवोः ।

( त-तज-ख्यात् ५।, ईयः ५।, ङः १।, वा ।१।, उः १।) ।

तात् तस्थानजाद्वर्णात् ख्याच्च परादीकारजात् यकारात् परो ङसिङसो र्ङं उः स्याद्वा । सुत्युः सुत्यः । लून्युः लून्यः । सुख्युः सुख्यः ।

शम्भु र्हरिवत् साध्यः ।

शम्भुः शम्भू शम्भवः, शम्भुं शम्भू शम्भून्, शम्भुना शम्भुभ्यां शम्भुभिः, शम्भवे शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भुभ्यां शम्भुभ्यः, शम्भोः शम्भ्वोः शम्भूनां, शम्भौ शम्भ्वोः शम्भुषु । हे शम्भो ।

एवं विष्णु-वायु-भान्वादयः ।

---

न्यायादाम् । एवं ग्रामण्यामित्यादि । बहुग्रामणिनि कुले इत्यादौ परत्वान्नुण्, पुंवद्भावपक्षे तु स्यादेव (१) ।

१३८ । ततज । ताज्जायते तजः, तश्च तजश्च खश्च तत्तस्मात्, ईयो यः (२) ईयस्तस्मात् । प्रकरणात् कव्याटीत्यनेन क्ततयस्यैव ग्रहणात् सख्याः इत्यादौ न स्यात् । सुत्युरिति सुतमिच्छति सुतीयतीति क्विप् य्वोर्लोपोऽहसीत्यनेन यलोपः, अनेकाच्त्वात् पूर्व्वेण यः अनेन उः । लून्युरिति लूधो.क्तस्य नः, शेषं पूर्व्ववत् । एवं क्षाम्युः प्रस्तीम्युरित्यादि(३) । पक्षे सुत्य इत्यादि । वेति नेच्छन्ति परे ।

---

(१) आमितिशेषः ।

(२) भोरीकारस्थानजातो य इत्यर्थः । अत्र मण्डूकप्लुताधिकारात् भोरित्यनुवर्त्तते इति दुर्गादासः ।

(३) चै क्षस्य म क्षाम, प्रपूर्व्वस्यै-भो क्तस्य म प्रस्तीम, तमिच्छतीति क्विप्, पश्चात् क्षामी प्रस्तीमी शब्दयो र्ङसि रूपम ।

## १४० । क्रोष्टोस्तुनस्तृन्नधौ घौ स्त्रियाञ्च ।

(क्रोष्टोः ६।, तुनः ६।, तृन् ।१।, अधौ ७।, घौ ७।, स्त्रिया ७।, च।१।) ।

क्रोष्टुशब्दस्य तुनः स्थाने तृन् स्यात् अधौ घौ परे स्त्रियाञ्च, न इत् ।

(१२८) सखृदृङ्ग्रामिति । क्रोष्टा, हे क्रोष्टो । (१२८) घौ त्रिरिति । क्रोष्टारौ क्रोष्टारः क्रोष्टारं क्रोष्टारौ ।

---

१४० । क्रोष्टोस्तुनः । न धिरधिस्तस्मिन् । गौणेऽपि बहुक्रोष्टूणि वनानि, अत्र हेऽपि धृतः क इति क्लीन स्यात् पूर्व्वावस्थाया-मृदन्तत्वाभावात् । बहवः क्रोष्टारो यस्यामित्यादौ त्वपि ऋदन्तात् गर्भवद्दीपि बहुक्रोष्ट्री पुरी इत्यादि (१) । स्त्रियामित्युक्तेः क्रोष्ट्रीः क्रोष्ट्रा क्रोष्ट्रीभ्यामित्यादि । एवं पञ्चभिः क्रोष्ट्रीभिः क्रीतमित्यत्र तार्थे गे स्त्रीत्यस्य लुकि पञ्चक्रोष्टु वनं पञ्चक्रोष्ट्रा भृत्येनेत्यादि (२) । पूर्व्वस्य निरवात् समुदितस्यैवादेशः (३) अन्यस्य निरव घावस्तस्त्वण इति णनिषेधार्थम् ।

---

(१) गौणेऽपि बहुक्रोष्ट्री पुरित्यादौ अवयवस्य पुंस्त्वेऽपि समुदायस्य स्त्रीत्वात् त्वनादेशे दर्शित —का-भि ।

(२) “एवं पञ्चभिः क्रोष्टुभिः क्रीतमिति वाक्ये तार्थविषये द्विगौ कृते तयोर्लोप इति ईपोलोपे गर्भयस्य इत्यादिना अविहितसमोपे समुदायस्य स्त्रीत्वात् त्वना निवृत्तौ अवयवस्त्रीत्वात् त्वत्र पञ्चक्रोष्टु इति —का-भि ।

(३) क्रोष्टोस्तोस्तन् इत्युक्ता तुनस्तृन् इति अवयवनिर्देशः पूर्व्वस्तीति । पूर्व्वस्य तुन । समुदितस्यैव तृणाने एव त्वनादेश, अन्यथा त्वनो निरवादन्ते एव स्यादिति ।

१४१ । **वाच्यघौ ।** (वा ।१।, अचि ७।, अघौ ७।)।
क्रोष्टोस्तुन स्तृन् वा स्यात् अघाद्यचि परे । क्रोष्टृन्(१) क्रोष्टा ।

१४२ । **ऋतो डोडुः ।** (ऋतः ५।, डः १।, डुः १।)।
ऋकारात् परो ङसिङसो र्डो डुः स्यात्, ड इत् ।
क्रोष्टुः क्रोष्टुः क्रोष्टोः क्रोष्टूणाम् ।

---

१४१ । वाच्य । न घिरघिस्तस्मिन् । अस्योपादान स्यमौजसो निषेधार्थं, न तु घिसामान्यस्य,(२) तेन बहुक्रोष्टुनी वने इत्यत्र न स्यात् । वा पाविति सूत्रिते क्रोष्टौ साधुरित्यत्र ऋट्रो ये इति क्रोष्ट्रा इत्यनिष्ट स्यात् । अत्रापि गौणे बहुक्रोष्ट्रा बहुक्रोष्ट्रा पूर्य्यां इत्यादि । क्रोष्टृन् क्रोष्टृणां इति चान्द्रास्तन्मतमवलम्ब्य क्रोष्टृन् क्रोष्टृणा इति । इदं नेच्छन्ति परे । कृताकृतप्रसङ्गी यो विधिः स एव नित्य इति न्यायात् (३) आदौ नकारनुमौ, तयोर्नादेशस्तेन क्रोष्टून् क्रोष्टूनामित्यप्याहुः ।

१४२ । ऋत । ड इति पौव्यत्यये मौ । डुरिति डित्वात् टिलोपः ।

---

(१) साम्प्रत प्रचरत्सु बङ्गेषु मुद्रितेषु सुग्धबोधपुस्तकेषु शसि क्रोष्टून् आमि च क्रोष्टूनामित्येकैकमेव पद दृश्यते । तर्कवागीशमते तु शसि क्रोष्टृन् क्रोष्टून् आमि च क्रोष्टृणाम क्रोष्टूनामित्येवाचार्य्यसम्मतमिति प्रतीयते । तदस्माभिरपि तथैव सन्निवेशितम । दुर्गादासोऽपि शसि क्रोष्टृन् क्रोष्टून् इति पदद्वयमाचार्य्य सम्मतमित्याह ।

(२) न तु घि क्लीवे इत्यनेन विशेषविहितस्येत्यर्थ ।

(३) यस्मिन् विधौ कृते अकृतेऽपि वा, यस्माद्विधे परं पूर्व्वस्येत्यर्थ, प्रसक्तिर्विद्यते यस्य तादृक यो विधि स एव नित्य, स एव विधि पूर्व्वोक्तविधे

१४३ । णुर्ङिध्योः । (णुः १।, ङिध्योः ७॥) ।

ऋकारस्य णुः स्यात् ङौ धौ च परे । क्रोष्टरि क्रोष्ट्रोः ।

पचे इसे च शम्भुवत् ।

हूहूः हूह्वौ हूह्वः इत्यादि, वातप्रमीवत् । एवमतिचम्वादयः ।

सुभूः सुभुवौ सुभुवः इत्यादि सुधीवत् । एवं कटप्रू-स्वयम्भ्वादयः ।

सुलूः सुल्वौ सुल्वः इत्यादि प्रधीवत् । एवं दृन्भू-खलप्वादयः ।

धाता, तृनन्तक्रोष्टुवत् । धौ हे धातः । एवं नप्तृ-होतृ पोत्रादयः ।

पिता, हे पितः ।

पिता माता ननान्दा ना सव्येष्टृ-भ्रातृ यातरः ।

जामाता दुहिता देवा न तृनन्ता इमे दश ॥

---

१४३ । णुः । ङिश्च धिश्च तौ तयोः । व्युत्क्रमनिर्देशात् (१) ऋतः सेस्त्वेऽपि र्णग्राहकत्व, तेन हे पठितगमल् इत्यादौ धौ लृतोऽपि णुः । अनुकरणात् (२) सिद्धमित्यन्यः । एव जसि पठितगमलः इति । पचे इसे च इति—स्त्रमौजस्भिन्नेऽचि इसे चेत्यर्थः । वातप्रमीवदिति अमि हूहूं शसि हूहून्, ङौतु वातप्रमीशब्दस्य वातप्रमी, हूहूशब्दस्य हूह्वि इति शेषः । अतिचमूशब्दस्य शसि

---

प्रागभवतीत्यर्थं । इति न्यायात् प्रलते शसो नकार चामो नुम च तनः स्थाने हणि लते चकृत च भवितु मर्हति । अतस्तावेव त्वणादेशात् पूर्वं स्यातामिति । एतेन यसि क्रोष्टून् चामि च क्रोष्टूनामित्येव न तु क्रोष्टृन् क्रोष्टृणामिति केषाञ्चिन्मतम् ।

(१) धिङ्योरित्यनुक्तेति शेषः ।

(२) ऋकार-लृकारयो समत्वादित्यर्थः ।

१४४ । घावस्वसृदृणः । (घौ ७, अ-स्वसृदृणः ६।)।

घौ परे ऋकारस्य णुः स्यात् नतु स्वसृदृणः। पितरौ पितरः, पितरं पितरौ । शेषं धातृवत् । एवं जामातृ भ्रात्रादयः ।

१४५ । नुर्वा नामि घं: ।

(नुः ६।, वा ।१।, नामि ७, घं: १।) ।

नृशब्दस्य नामि परतो घं: स्यात् वा । नॄणां नृणाम् । शेषं पितृवत् ।

---

अतिचमूरिति अवयवस्त्रीत्वादिति भाष्यम् (१) । सुभुवाविति दृम्भ्वादिभूभिन्नत्वादुव् । दृनन्त क्रोष्टुवदिति—ये तु शसामि दृन् नेच्छन्ति तन्मते शसाम्भिन्ने इति शेषः । धौ हे धातरिति णुदर्शनार्थमुक्तम् । पितेत्यादि—इमे दश दृनन्ता अपि न दृनन्ता इत्यर्थः । एतदन्ये अदृनन्ता अपि दृनन्ता इत्यर्थः, तेन नीधो रौणादिक-दृत्वे सन्, नेष्टा नेष्टारौ नेष्टारः इत्यादौ न णुः ।

१४४ । घाव । स्वसाच दृंश तत्, न तत्, अस्वसृदृन् तस्य । स्वसृशब्दस्य दृनन्तत्वातिदेशात् णुनिषेधे सिद्धे स्वसृग्रहणं, क्वचिदतिदेशकार्य्यमनित्यमित्यस्य ज्ञापनार्थम् । तेन शंस्तारौ शंस्तरः शास्तरौ शास्तरः इत्यादौ णुः । कल्पटस्तु शंस्तारौ शंस्तार इत्याह ।

१४५ । नुर्व्वा । अयं नियमो गौणेऽपि, तेनातिनॄणां अतिनृणामिति ।

---

(१) सम्मते अतिचमूर्नित।

१४६। ओरौ घौ।

(ओः ६।, औ ।१।, घौ ७।)।

ओकारस्य औकारः स्यात् घौ परे। गौः गावौ गावः।

१४७। आम्शसोः।

(आ ।१।, अम्-शसोः ७॥)।

ओकारस्य आकारः स्यात् अमि शसि च परे। गां गावौ गाः, गवा गोभ्यां इत्यादि। (१२५) ङस्येङो लोप इति, गोः गोः।

---

१४६। ओरौ। ओरित्यत्र सामान्यशब्दस्य विशेषपरत्वात् डिदोत्यान्तस्यैव ग्रहणम्। तेन स्मृत उर्येन स्मृतोः मह्नोः हे चित्रगो इत्यादौ न स्यात्। गौः द्यौ रित्यादौ स्यात्। लोपस्वरादेशयोः स्वरादेशविधिर्बलवान् इति न्यायात् हे गौः हे द्यौः इत्यादौ एङो न धिलोपः (१)।

१४७। आम्। अम्च शस्च तयोः। ओरित्यत्र सामान्यस्यैव ग्रहणात् गां द्यां, उना सह वर्त्तते सोः तं सां, स्मृतां मह्नामित्यादि स्यात्। कश्चित् पूर्व्ववापि सामान्यस्य ग्रहणात् स्मृतौः मह्नौः सौरित्याह (२)।

---

(१) १०३ सूत्रस्य टीका द्रष्टव्या।

(२) सह उना वर्त्तते सो तस्मात् घौ इत्ये सौरिति।

१४८ । रै रा स्भि । (रै ।१।, रा ।१।, स्भि ७।)।
रै शब्दो रा स्यात् से भे च परे। राः रायौ रायः, राभ्यामित्यादि।

ग्लौः ग्लावौ ग्लावः इत्यादि।

इति अजन्त पुंलिङ्ग-पादः।

---

## अजन्तस्त्रीलिङ्ग-शब्दः ।

१४९ । आवीप्हसात् से लोपः ।
(आप् ईप्-हसात् ५।, सेः ६।, लोपः १।)।
आप ईपो हसाच्च परस्य से लोपः स्यात्। उमा।

---

१४८। रै। सश्च भश्च तत्तस्मिन्। गोणेऽपि सुराभ्यां कुलाभ्यामिति स्यात्। नानामोरपि (१) रादेश इत्यन्ये, तन्मते सुराणा कुलेन सुराणां कुलानामिति। अस्मन्मते तु सुरिणा सुराया सुरीणां सुरायामिति।

इत्यजन्तपुंलिङ्गपादः।

---

१४९। आवी। आप् च ईप् च हसश्च तत्तस्मात्। आविव्यनेन डापोग्रहणं, पिद्ग्रहणात्। उमेति अव रक्षादौ मस्यः कित् उडा सह ऊट् बाहुल्यात् स्त्रः स्त्रियामत आप्। कश्चिद्-मागध्दोऽभिधायकत्वेनास्या अस्ति, पर्यायादित्वात् पथादाप्। तथाच

(१) टाविभक्तौ आमिचेत्यर्थः।

१५०। यौरापः। (ई।१।, औः १।, आपः ५।)।

आपः पर औरी स्यात्। उमे उमाः।

---

उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कुमारसम्भवे इत्याह (१)। ननु स्यास्स्यारासुप् फे इति सिलोपे वागित्यादि सिध्यति किमर्थं हसोग्रहणं, न च गोः धूरित्यादौ न सेर्लोपः अरादिति निषेधादिति वाच्यं, तर्हि आबीन्नात् सेर्लोप इति सूत्रं क्रियतामिति चेन्न, एवं श्वेतवाः अवया इत्यादौ लुपि अयुक्त डसङ्विधेः (२) प्राप्त्यर्थं हसोग्रहणं, लोपः स्वरादेशयोः स्वरादेशो विधिर्बलवान् इत्यस्य प्रापनार्थञ्च। एवं सति राजा वेधा इत्यादावपि घः (३)।

१५०। यौरापः। घंकरणात् जरसी इति।

---

(१) उमेति। संज्ञाशब्दानां यथाकथञ्चित् व्युत्पत्तिः कार्य्येति प्राञ्चः। उः शिवः तं मिमीते जानातीति माङ् मि शब्दे इत्यजनाद्यमादेरिति ड प्रत्यये उम इति शब्दात् स्त्रियामापि उमेति रूपम्। उमेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम इति कालिदासस्य भणितेरेति दुर्गादासः। (नत्र उमाशब्दस्य वस्तुतो व्युत्पत्त्याधायकं तद्विशेषकारार्थं)।

(२) अयुक्त डसङ्विधेरिति—अयुक्तस्य लुपि सति प्राप्तस्य आदिविधेर्निषेधात् प्राप्तस्य डसङ्विधेरित्यर्थः। डसङ्विधेरित्यस्योपलक्षणत्वात् भिट् भुगित्यादौ टधादीनाञ्च ग्रहणमिति।

(३) एवं सति—स्वरादेशस्य बलवत्त्वे हसोग्रहणे च सतीत्यर्थः। स्वरादेशस्य बलवत्त्वात् राजेत्यत्र आदौ दीर्घे पश्चाल्लोपः। हसो ग्रहणं विना वेधा इत्यत्र सकारद्वय संयोगे आदेः सोलोप इत्यादेर्बलवत्त्वादादौ सलोपे वेध इत्यनिष्टं स्यात्। अत्वसोर्धोरित्यत्र असन्तविद्धस्यैव दीर्घविधानात्।

१५१। **धिटौसे:**। (धि-टा-ओसि ७।, ए: १।)।

आप एः स्यात् धौ टौसोय परतः। हे उमे।

उमां उमे उमाः, उमया उमाभ्यां उमाभिः।

१५२। **ङितां यम्**। (ङितां ६॥।, यम् ।१।)।

आपः परेषां ङितां यम् स्यात्, म इत्। उमायै उमाभ्यां उमाभ्यः, उमायाः उमाभ्यां उमाभ्यः, उमायाः उमयोः उमानाम्।

(१३८) न्याप्दीभ्योङेरामिति। उमायां, उमयोः उमासु। एवं दुर्गामायाम्बिकादयः।

१५३। **स्रेः स्यम् स्रस्च**।

( स्रेः ५।, स्यम् ।१।, स्रः १।, च ।१।)।

स्रेरावन्तात् परेषां ङितां स्यम् स्यात्, पूर्व्वस्य च स्रः।

---

१५१। धिटौ। धिश्च टाश्च ओश्च तत्तस्मिन्। अर्थात् त्तिं विपरिणम्याह आप इति। सिलोपमाश्रित्य (१) एः।

१५२। ङितां। ङ इद्येषां ते तेषाम्। यमो म इत्, अदन्त आगम. (२)। उमायामिति आप् ग्रहणात् पादौ ङेराम् पश्चाद् यम्। सर्व्वस्यामित्यत्र स्यमागमत्वान्न यम्।

१५३। स्रेः। ङितामापश्चेत्यनुवर्त्तते। स्यम्स्राविव्य-

---

(१) त्यलोपे त्यलक्षणमिष्टुप्तौ।

(२) ङिति य इत्यनेनैवेष्टसिद्धौ ङितां यम विधानं, यकारस्य विभक्तिभाजित्वात् टाभिस् इत्यादिना ङेमभ्तीनामयादादेशनिवृत्त्यर्थमिति दुर्गादासः।

सर्व्वस्यै सर्व्वस्याः सर्व्वस्याः सर्व्वस्याम् । आमि सर्व्वासाम् । शेषं उमावत् । एवं विश्वादय आवन्ताः ।

अपुरीत्युक्तेः—अन्तरायै नगर्य्यै ।

द्वितीयस्यै द्वितीयायै, द्वितीयस्याः द्वितीयायाः, द्वितीयस्यां द्वितीयायाम् । शेषमुमावत् । एवं तृतीया ।

## १५४ । सुभ्रूदीद्व्यजम्बार्थानां धौ स्वः ।

(सुभ्रूदीद्व्यजम्बार्थानां ६।१, धौ ७।, स्वः १।) ।

सुभ्रुवो दीघ द्व्यजम्बार्थानाञ्च स्वः स्यात् धौ परे । हे अम्ब । शेषमुमावत् । एवमक्काक्षादयः । द्व्यचः किं—हे अम्बाले, हे अम्बिके ।

---

करणात् पूर्व्वस्यैव स्वो न तु ङिताम् । ङस्यम् इति न कृतम् अस्यै अस्या इत्यादिसिद्ध्यर्थम् (१) ।

१५४ । सुभ्रू । द्वावचौ येषां ते, अम्बा अर्थो येषां ते, द्व्यचश्च ते अम्बार्थाश्चेति ते, सुभ्रूश्च दीच द्व्यजम्बार्थाश्च ते तेषाम् । विमानना सुभ्रु कुतः पितुर्गृहे । हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स इत्यादि प्रयोगदर्शनात् सुभ्रूग्रहणम्, दीसंज्ञासाहचर्य्यात् स्त्रियामेव । तेन हे सुभ्रूः पुरुष इत्यत्र न स्यात् । तथाच गिरीश सुभ्रूस्तव पादपद्मं भजन्ति मुक्त्यै कवयोऽसुरारे इति । अक्काक्षादय इति, आदिना हे अत्त हे अथ्य इत्यादि । पाददन्तेति । पृतनायाम्दं परे नाड्वः ।

---

(१) ननु ङस्याप इत्विद्धौ स्येति वक्तव्यमिति चेत्, न, ङ्यै इत्यादिसाधने सकारपरत्वाभावे न स्य इत्यस्याप्रवृत्तेरिति दुर्गादासः ।

जरा । (११६) जरस् जराचि ॥ । जरसौ। केचिदादावेत्वमिच्छन्ति । जरसौ जरे । जरसः जराः इत्यादि । पाददन्तेति, नासिका-पृतना-निशानां नस्-पृत्-निशः । नसः नसा नोभ्यामित्यादि । पृतः पृता पृद्भ्यामित्यादि । निशः निशा ।

१५५ । शच्छ्राज भ्राज यज व्रज सृज मृज व्रश्च भ्रस्जां षड् भौ ।

(श—भ्रस्जां ६।।।, षड् ।१।, भौ ७।) ।

शान्तानां छान्तानां राजादेश्च षड् स्यात् भौ परे ।

१५६ । षो डः फे । (षः ६।, डः १।, फे ७।) ।

षस्य डः स्यात् फे परे । विड्भ्यां इत्यादि । पचे घौ च उभावत् ।

गोपा, विश्वपावत् ।

मति ईरिवत्, स्त्रीत्वात् न शस् न, न टा ना । मतीः मत्या ।

---

१५५ । शच्छा । श च छ च राजश्च भ्राजश्च यजश्च व्रजश्च सृजश्च मृजश्च व्रश्चश्च भ्रस्जश्च ते तेषाम् । षडो डित्वादन्त्यस्य । रक्षितस्तु राजादिसाहचर्य्यात् धात्ववयवस्यैव शस्य षड्, तेन भिज्भ्याम् निच्श्च निच्छु इत्याह (१) । इह सामान्य-शग्रहणात् गिरिवेश्मानमाचक्षाणः गिरिवेट्, एवमश्मानमाचक्षाणः अडित्यादि ।

१५६ । षो । इह सामान्यषग्रहणात् षट्, उष्माणमाचक्षाण उडित्यादि ।

---

(१) तन्मते निशाशब्दात भ्यामि सुपि च रूपाणि ।

१५७ । द्या ङितामम् ।

(द्याः ५।, ङितां ६।।, अम् ।१।) ।

द्याः परेषां ङितामम् स्यात्, म इत् । मत्यै मतये, मत्याः मतेः, मत्यां मतौ । एवं श्रुति-स्मृति-बुद्धादयः ।

१५८ । स्त्रियां त्रिचतुरो स्तिसृचतसृ ऋवत् तौ ।

( स्त्रियां ७।, त्रिचतुरोः ६।।, तिसृ-चतसृ ।१।, ऋवत् ।१।, तौ ७।) ।

त्रिचतुरोः स्त्रीलिङ्गे क्रमात् तिसृचतसृौ स्तः तौ परे । तौ च ऋवत्, तेन न गुणदीर्घौ । तिस्रः तिस्रः तिसृभिः तिसृभ्यः तिसृभ्यः तिसृणां तिसृषु ।

टेरत्वे सत्याप् । द्वे द्वे द्वाभ्यां द्वाभ्यां द्वाभ्यां द्वयोः द्वयोः ।

गौरी गौर्यौ गौर्यः, हे गौरि, गौरीं गौर्यौ गौरीः, गौर्या गौरीभ्यां गौरीभिः ( १५७ ) द्याङितामम् । गौर्यै गौरीभ्यां गौरीभ्यः, गौर्याः गौरीभ्यां गौरीभ्यः, गौर्याः गौर्योः गौरीणां, गौर्यां गौर्योः गौरीषु । एवं वाणी-काली नद्यादयः ।

---

१५७ । द्याः । ङ इदयेषां ते तेषाम् । मत्यै इत्यादौ लाचणिकत्वान्न गः । द्या ङित्य इति न कृतं, आगमो यद्गुणस्तद्ग्रहणेन गृह्यते इत्यस्यानित्यत्वज्ञापनार्थम्, तेन पट्स् सन्त इत्यादौ-ष्टुभिरित्यादिना न स्तोः ष्टुत्वम् ।

१५८ । स्त्रियाम् । त्रि च चतुर च तौ तयोः, त्रिचतुरो-रित्यनुकरणात् । त्रिचतुरोर्यदा स्त्रियां वृत्तिस्तदेयादेशस्तेन

लक्ष्मीः। अनीबन्तत्वात् न सिलोपः। शेषं गौरीवत्। एवम् अवी-तन्त्र्यादयः।

स्त्री, हे स्त्रि।

---

प्रियास्तिस्रो यस्य स प्रियतिसा, प्रियाश्चतस्रो यस्य स प्रियचतसा इत्यादौ स्यात्। ननु प्रिया त्रयो यस्याः सा प्रियत्रिः, प्रियाश्चत्वारो यस्याः सा प्रियचत्वारित्यादौ। स्त्राविति प्रकरणात् प्राप्ते स्त्रिग्रहणात् प्रियतिस्र प्रियचतस्र कुलमित्यत्र लोलुकि स्यादेव, न तु तिस्र इच्छति त्रिकाम्यति, चतस्र इच्छति चतुर्य्यति, तिसृणां प्रियः त्रिप्रियः, चतसृणां प्रियः चतुःप्रिय इत्यादौ। केचित्तु प्रियत्रि प्रियचतु: कुलमित्याहुः। कश्चिदाह साक्षात् स्त्रावेव विधानार्थं स्त्रिग्रहणमिति। न णुम्रिघौ इति—उक्ता णुम्रिघौ इति न स्युः, तेन प्रियतिसृणि कुलानि प्रियचतसृणि कुलानि, परत्वात् घैं:(१)। अत्रासकरणात् (२) प्रियतिस्रः आगतः प्रियतिस्रो धनमित्यादौ न डुः। अमी इति किं—प्रियतिसा प्रिय चतसा (३)। तिसृणां

---

(१) उक्ता णुम्रिघौ इत्युक्ते· नपुंसकस्य इति वक्ष्यमाणसूत्रेण दीर्घत्वं न निषिध्यते इत्यर्थः।

(२) अत्र—नणुम्रिघौ इत्यत्र, अडकरणात्—यत्र अकारेण सह च समासस्तत्करणात्, अपशब्दे नात्र अकारकार्यं लभ्यते। तथाच सुच म्रिच घंच अच ते णुम्रिघौ इत्येवं समास करणात् अकारस्थानजातकार्य्यमपि न स्यात्। तेन डसिडसो रकारस्य न डुरिति।

(३) अमी-णुम्रिघौ इति। एतेषां निषेधादेतदन्यत कार्य्यं भवतीति ज्ञापितम्। एतञ्च दुर्गादासेन "आतिदेशिकमनित्यमिति न्यायात् सौ नृवदिति बोध्यम्, तेन सख्यूक्रारमिति से डौ' इति।

चतसृणामित्यत्र आगमादेशयोरागमो विधिर्बलवान् इति न्यायात् नुमि तिसृचतसृादेशे ऋवत्त्वाच्च षः (४)।

लक्ष्मीरिति लक्षधोरीः ईकारस्य सुम् च। अवीतन्त्रादय इति—आदिना तरी श्री-ह्री संग्रहः। यदुक्तं—

अवी-तन्त्री-तरी-लक्ष्मी-श्री-ह्री भूणामुणादितः।

स्त्रीलिङ्गवर्त्तिनामेषा सेर्लोपो न कदाचन॥

( अनीवन्ततया लोपो न गौणे न च ह्रस्वता )।

---

(४) अत्र सूत्रे कार्त्तिकेयसिद्धान्त—प्रियतिसा—अत्र कथं "सख्याया ङौ यङोरिति सूत्रेण ङमाययो न स्यात्, तत्र सामान्यशब्दस्य विशेषपरत्वात् उदाहरण-ज्ञापकाच्च सख्यासख्याभ्यां परात् सख्याशब्दवदात् परविधानात् अत्र तदभावा-सम्भवः। अत्र पञ्चतन्त्रा ऋवत् इत्युक्ता न णुम्विधौ इति विशेषकथनात् गुणाद्य-तिरिक्तस्थले एतयोर्दीर्घवत्त्वं नास्तीति ज्ञापितम्। तेन ङौ प्रियतिसा इत्यत्र ङस्युङ्गामित्यनेन ऐर्डौ प्रियतिस्रामित्यत्र नुडागमः। नन्वेवन्तेन यदि प्रिय-तिस्र इत्यत्र गुणाद्यतिरिक्तकार्य्यस्य स्वदीभ्यामित्यनेन यशोऽकारलोपस्य सम्भवो ऽस्तु चेत्। तेन न णुम्विधौ इत्यत्र ऋस्थाने अकारो वर्त्तते। तेन अकारकार्य्य-मपि न स्यात्। * * * * अतएव कविकल्पे प्रियतिस्र इत्यत्र ऋतो ङोर्डुरित्यनेन अकारकार्य्यं डुर्न स्यादिति साधु सङ्गच्छते। एवमत्र कालापिकास्तु 'तौ र स्वरे" (तौ तिसृ चतसृ विभक्तिस्वरे परे रं रेफं प्राप्नुत। कातन्त्रे चतुष्टयवृत्तौ १६८) इति सूत्रं सर्व्वापवादकं मत्वा यशो नकाराभावं चक्रुः। वय तन्मतेकवाक्यतया अव्ययवल्लोलमङ्गोलत्य तस्य तदभावमकार्षं। अत्र प्रिरन्त्येव निषिद्धं, तत्र ऐर्डौ इति विशेषात्। तत्राश्चर्य्यात् णुरिति अन्त्येव निषिद्ध। तेन सम्बोधने हे प्रियतिस रित्यत्र णुरेव। यद्यपि पिता मातेत्यत्र न्ट देह ननन्दृ यामन्वनन्तस्येऽपि निषेधात् तद्भिन्न ऋदन्तानां ऋनन्तत्वातिदेशेन एतयोऋन्नन्तत्वसम्भवात धावसङ्घत्य इत्यत्र ऋनन्तवर्ज्जनात् एतयोर्गुणसम्भावना नास्ति, तथापि न णुम्विधौ इत्यनेन गुण निषेधकरण णुर्डिभ्योरित्यनेन गुणनिषेधार्थम्। तेन ङौ प्रियतिसि न तु प्रियतिसरीति। अथैवं प्रियास्तिस्रो यस्य कुले इति वाक्ये प्रत्ययमाश्रदायिक कार्य्यात् प्रकृतिमाश्रदायिककार्य्यस्य बलवत्त्वात् आदौ सर्व्वावयवादेश ततो

१५९। स्त्री भूर्धुः। (स्त्री ।१।, भूः १।, धुः १।)।

स्त्रीशब्दो भूशब्दश्च धुसंज्ञः स्यात्।

(१२६) धोरियुवचि। स्त्रियौ स्त्रियः।

१६०। स्त्री वामशसोः।

(स्त्री ।१।, वा ।१।, अम्-शसोः ७॥)।

स्त्री-शब्दो धुसंज्ञो वा स्यात् अमि शसि च परे।

स्त्रियं स्त्रीं स्त्रियौ स्त्रियः स्त्रीः, स्त्रिया स्त्रीभ्यां स्त्रीभिः, स्त्रियै स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रीभ्यां स्त्रीभ्यः, स्त्रियाः स्त्रियोः स्त्रीणां, स्त्रियां स्त्रियोः स्त्रीषु।

---

१५९। स्त्रीभूः। स्त्री च भूश्च तत्, पुंस्त्वं सौत्रत्वात्, भिन्नं वा। इयुवविधानार्थमिदम्।

१६०। स्त्री वा। अम् च शस् च तौ तयोः। पुनस्त्री-ग्रहणं भूनिवृत्त्यर्थम्। स्त्रियं स्त्रियः इत्यत्र आदावियादेशः नत्वम्शसादेर्लोपः, धुत्वातिदेशविधानात्। स्त्रियै इत्यादि—नास्त्रीयुव इत्यत्र स्त्रीवर्ज्जनादादौ दीकार्य्यं पश्चादियादेशः। एवं स्त्रीणामित्यादौ नुमि अजभावान्नेयादेशः। गौणे अति-

---

विभक्तिकार्य्यं नुगादि। तेन प्रियतिसृ प्रियतिसृणी प्रियतिसृणि इत्यादि। * * * * कातन्त्रे तु स्यमोर्लुकि तिसृचतसोर्विकल्पसंज्ञा प्रियतिसृ प्रियत्रि प्रियचतसृ प्रियचतुरित्युदाहृतम्। * * * * एवञ्चेत् प्रियतिसा प्रियचतसा इत्यादौ सदन्तत्वात् कथमीप् न स्यात् इति चेत् सत्यम्। पूर्व्वावस्थायां सदन्तत्वाभावात् इति केचिदाहुः। तदयुक्तम्। यतः क्रोष्टुशब्दस्य पूर्व्वावस्थायाम् सदन्तत्वाभावात् स्वयमपि क्रोष्ट्रीत्युदाहृतमेव। वस्तुतस्तु न भवत्येवेत्यनेन संज्ञा-बाधकादीपृनिषेधादित्यपेक्षम्।

श्रीः श्रियौ श्रियः, हे श्रीः, ङित्यामि च भेदः—श्रियै श्रिये, श्रियाः श्रियः, श्रियाः श्रियः, श्रीणां श्रियां, श्रियां श्रियि, श्रीषु।

सुध्यादयः पुंवत्। सुष्ठु धीः, प्रकृष्टा धीरिति नित्यस्त्रीत्वे सुधीप्रध्यौ श्रीलक्ष्मीवत्।

धेनु र्मतिवत् साध्यः। धेनुः धेनू धेनवः इत्यादि।

वधू र्गौरीवत्। वधूः वध्वौ वध्वः इत्यादि। एवं चमू-तन्वादयः।

भ्रूः श्रीवत्। भ्रूः भ्रुवौ भ्रुव इत्यादि। सुभ्रूः हे सुभ्रु।

पुनर्भूः सुलूवत्। सुभूः पुंवत्।

स्वसा धातृवत्। माता पितृवत्।

द्यौ र्गौवत्। सुराः पुंवत्। नौः ग्लौवत्।

इति अजन्त स्त्रीलिङ्गपादः।

---

स्त्रियां बहुस्त्रियामित्यत्र न नुम् दीसंज्ञाभावात्। श्रीशब्दस्य ङिति आमि च पाक्षिकदीसंज्ञाफलमाह—ङित्यामि च भेद इति। सुध्यादयः पुंवदिति-शोभना धीर्यस्याः सा सुधीरित्यस्या-नित्यस्त्रीत्वान्न दीसंज्ञा, एवं प्रकृष्टा धीर्यस्याः सा प्रधीरिति। शोभना चासौ धीश्चेति सुधीः, प्रकृष्टा चासौ धीश्चेति प्रधीरित्यत्र ये वे नित्यस्त्रीत्वात् दीसंज्ञा स्यादेव। एवं स्याद्युत्पत्तेः प्राक् सेऽपि दीसंज्ञेति विशेषः। शोभनं दधाति, क्विप्, सुधीः। चमू-तन्वादय इति – ऊवन्तपक्षे तनूशब्दस्य ग्रहणं, चनूयन्तनु धेनुशब्द-वत्। सुलूवदिति—क्व्यादीत्यनेन यथा सुलूकारस्य वादेश-

१६१। क्लीवात् स्यमो ऽधेर्मोऽतः।

( क्लीवात् ५।, सि अमः ६।, अधेः ६।, मः १।, अतः ५। )।

अकारान्तात् नपुंसकात् परस्याधेः सेरमश्च मः स्यात्। ज्ञानं हे ज्ञान।

---

स्तथास्यापि। किन्त्वस्य नित्यस्त्रीत्वात् दीसंज्ञायां पुनर्भू पुनर्भूः पुनर्भ्वै पुनर्भ्वाः पुनर्भ्वाः पुनर्भूणां पुनर्भ्वामिति विशेषः। एवं वर्षाभू-काराभू दृन्भूनामपि। एषां नित्यस्त्रीत्वन्तु—

पुनर्नवायां वर्षाभूः स्त्रियां किञ्चुलके प्लवे।

पुनर्भूः स्याद्विरूढ़ायां दृन्भूः पन्नगवज्रयोः।

काराभूर्निगड़स्थाने क्रियायामपि चेष्यते॥ इति कोषात्।

वर्षाभूशब्दस्य शोणादिपाठादीपि वर्षाभ्वीत्यपि परे। तथाच भागुरिः—भार्या भेकस्य वर्षाभ्वी भृङ्गी तु मधुरस्य चेति। वर्षाभ्वी कमठी दुलीत्यमरः। सुभूः पुंवदिति—उवः स्थानिवत्त्वेन दीसंज्ञाभावात्। धातुवदिति—अस्य स्त्रीत्वात् शसि स्वभूरिति विशेषः। सुराः पुंवदिति—शोभनो रा यस्याः सा इति वाक्यम्।

इत्यजन्त स्त्रीलिङ्गपादः।

---

१६१। क्लीवात्। सिश्च अम् च तत्तस्य, न धिरधि स्तस्य। ज्ञानमिति मविधानसामर्थ्यात् अतः स्यमोर्न लुक्। न च स्यमोरमि कृते जरातोऽमीति विनैवाजरसमिति सिध्यतीति वाच्यं, जरसादेशे अनदन्तत्वात् स्यमोर्लुक्प्रसक्तेः।

१६२ । क्लीवाद्‌ यौः ।

( क्लीवात् ५।, ई ।१।, औः १। ) ।

क्लीवात् पर औरी स्यात् । ज्ञाने ।

१६३ । जस्‌शसोः शिः ।

( जस्‌शसोः ६॥, शिः १। ) ।

क्लीवात् परस्य जसः शसश्च शिः स्यात्, श इत् ।

१६४ । नुणयमादौ झसन्तरलादौ तु वा ।

(नुण् ।१।, अयमादौ ७।, झसन्तरलादौ ७।, तु ।१।, वा ।१।) ।

क्लीवस्य शौ परे नुण् स्यात्, न तु यमादौ, झसन्तरलयोरादौ तु वा स्यात् ।

---

१६२ । क्लीवाद्यौः । ई इति सुप्तमीकं दम् । पुनः क्लीवग्रहणात् अनतोऽपि औरीस्तेन वारिणी पयसी इत्यादि ।

१६३ । जस् । शित् करणं शिः क्लीवे इति विशेषणार्थम् ।

१६४ । नुण् । यमस्यादिः यमादिर्न यमादिरयमादिस्तस्मिन् । झस् अन्ते ययोस्तौ, रश्च लश्च तौ, झसन्तौ च तौ रलौ चेति तौ, तयोरादिः झसन्तरलादिस्तस्मिन् । शिं विपरिणम्य क्लीव शौ इत्यनुवर्त्तयन्नाह क्लीवस्य शौ परे इति । अयमादौ किं--बहवो यो येषु तानि बहूयि पयांसि बहुयशांसि इत्यादि । झसन्तरलादौ तु ऊर्न्ज्जि ऊर्ज्जि सुवल्गि सुवल्गि इत्यपे वक्ष्यति ।

## १६५ । नसब्महन्नोऽधो घोंऽधौ घौ ।

(नस् अप्-महत् नः ६।, अधोः ६।, घं: १।, अधौ ७।, घौ ७।)।

नसन्तस्यापो महतो नान्तस्य च धुवर्जस्य घं: स्यात् अधौ घौ परे। ज्ञानानि। द्वौ ग्रीवत्। शेषं रामवत्। एवं वन-धन-फलादयः।

## १६६ । तोऽन्यादेर्मोऽनेकतरात् ।

( तः १।, अन्यादेः ५।, मः ६।, अनेकतरात् ५। ) ।

अन्यादेः परस्य स्मो र्मस्य तः स्यात्, न त्वेकतरात् परस्य। अन्यत् अन्ये अन्यानि। हे अन्य। पुनस्तद्वत्। शेषं पुंवत्। एवमन्यतरादयः। अनेकतरात् किम्—एकतरम्।

---

१६५। नस। नस् च आपश्च महांश्च न च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन्। धिवर्ज्जनादक्लीवेऽपि राजा सीमा इत्यादौ घं:। गौणेऽपि अयं विधिस्तेन सुविद्वांसि सुराजानि कुलानि इत्यादि।

१६६। तो। अन्य आदिर्यस्य स तस्मात्, न एकतरम् अनेकतरं तस्मात्। मण्डूकगत्या स्मोरित्यनुवर्त्तयन्नाह स्मोरिति। अन्यादेः किं—अन्यतमम्। अन्यतमदिति भाष्यम्(१)। हे अन्यदिति कश्चित्।

---

(१) सिद्धान्तकौमुद्यान्तु टेः। ६। ४। १०२। इति सूत्रे अन्यतम शब्दस्य त्वन्यतमदित्येवेति वृत्तिः।

१६७। जरातोऽम् वा।

( जरात: ५।, अम् ।१।, वा ।१। )।

जरा शब्दात् परस्य स्यमोर्मस्य अम् स्यात् वा। अजरसम् अजरम् अजरसौ अजरे, अजरांसि अजराणि। पुनस्तद्वत्। शेषं पुंवत्।

(११७) पाददन्तेति शीर्षहृदयोदकासनानां शीर्षन् हृदुदनासन:। शीर्षाणि शीर्ष्णा शीर्षभ्यामित्यादि। हृन्दि हृदा हृद्भ्यामित्यादि। उदानि उद्ना उदभ्यामित्यादि। आसानि आस्ना आसभ्यामित्यादि। पक्षे शेषे च ज्ञानवत्।

१६८। क्लीवे स्व:। ( क्लीवे ७।, स्व: १। )।

क्लीवे घंस्य स्व: स्यात्। श्रीपं, ज्ञानवत्।

---

१६७। जरा। म इत् मकारागम:। जरसादेशनिमित्तकाऽमो नित्यत्वाज्जरसादेशस्य नित्यत्वसन्देहनिरासार्थं वाग्रहणमिति कश्चित्। (१)

१६८। क्लीवे। स्वशब्दस्य सापेक्षत्वात् घंस्येति लभ्यते इत्याह क्लीवे घंस्येति। क्लीवे इति निर्देशात् येन विधिस्तदन्तस्येति न्यायात् अन्त्यस्यैव घंस्य स्व:, तेन श्रीपमित्यत्र श्रीकारस्य न स्व:, एवं सह एन वर्त्तमानं सं इत्यादि। प्रकरणात्सेरेव, तेन ग्रामे वपु-

---

(१) वाग्रहणं सन्निपातविधित्वोर्मुख्यस्य प्रवर्त्तमानस्यानित्यत्वप्रापणार्थं, तेन सर्वेषामित्यादौ चेनृभ्रेरित्यन्ये। अतएव जरसादेशाभावपक्षे अजरमित्यत्र अमादिलोप इत्यधिक: पाठ:।

१६९। **स्यमो र्लुक्।** ( सि-अमोः ६॥, लुक् ।१। )।

क्लीवात् परयोः स्यमोर्लुक् स्यात्। वारि।

१७०। **नुमिको ऽच्यनामि।**

( नुम् ।१।, इकः ६।, अचि ७, अनामि ७ )।

इगन्तस्य क्लीवस्य नुम् स्यात् अचि परे, नत्वामि। वारिणी वारीणि।

---

णी इत्यादौ न स्वः। वनाभ्यां वनेभ्यः इत्यादौ असिद्धं बहिरङ्गमन्तरङ्गे इति न्यायात् असिद्धः स्वो न स्यात् (१)।

१६९। स्यमोर्लुक्। सिश्च अम् च तौ तयोः। क्लिं विपरिणम्याह क्लीवादिति।

१७०। नुमिकः। इक् प्रत्याहारः, न आम् अनाम् तस्मिन्। नञ् युक्तवन्न्यायात्, स्याद्यच्येव (२) तेन वारीदम् इत्यादौ न स्यात्। वारिणी इति मित्त्वादन्ते, आदौ नुम् पश्चात् ई। वारीणीति जसः शिस्तस्मिन् नुसयमादाविति नुम् नसमहत इति दीर्घः (३)।

---

(१) अन्तरङ्गे प्रकृतिघटितकार्य्यस्थले बहिरङ्गं प्रत्ययघटितकार्य्यम् असिद्धम् अग्राह्यं भवतीत्यर्थः। अत्र क्लीवलिङ्गशब्दस्य योऽन्त्यदीर्घस्तस्य ह्रस्वविधानात् प्रत्ययघटितदीर्घस्य ह्रस्वत्वं न स्यात् तेन वनाभ्याम् इत्यादौ न ह्रस्व। अतएव रुचिप्रकारे सुबन्तपादे "नामहते दिति ६८ सूत्रस्य टीकायां प्रकृतेरन्त्योऽप्रति-प्रत्ययादि। प्रत्ययादे सम्बन्धे सति क्लीवे प्राप्तो ह्रस्वो न भवतीति गोयीचन्द्र।

(२) यादृग् जातीयस्य प्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादित्यर्थः।

(३) अनामीति किं वारीणामित्यादौ अन्तरङ्गत्वादादौ नुमि कृते ह्रस्वपरत्वाभावान्नुमम्भावे दधिदध्नामित्यादिवद्दीर्घो न स्यादिति दुर्गादास।

१७१। णुर्धौ वा। ( णः १।, धौ ७।, वा ।१।)।

इगन्तस्य क्लीवस्य णुर्व्वा स्यात् धौ परे। हे वारे हे वारि। वारिणी वारीणि वारिणा वारिणे वारिणः वारिणः वारिणोः वारीणां वारिणि वारिणोः। इसे हरिवत्।

१७२। पुंवद्वार्थोक्तपुंस्कं टाद्यचि।

( पुंवत् ।१।, वा ।१।, अर्थोक्तपुंस्कं १।, टाद्यचि ७। )।

इगन्तं क्लीवम् अर्थेन प्रोक्तपुंस्कं पुंवत् वा स्यात् टाद्यचि। अनादये अनादिने इत्यादि। शेषं वारिवत्। अर्थेन किं पीलुने फलाय।

---

१७१। णुर्धौ। विधानसामर्थ्यात् लुकि वा णुः। हे सुधे हे सुधि, हे सुनो हे सुनु, हे सुधातः हे सुधातृ, हे लिखितगमल् हे लिखितगमल्ल इत्यादि।

१७२। पुंवत्। पुमानिव पुंवत्। अर्थेन तुल्यप्रवृत्तिनिमित्तेन उक्तः पुमान् येन तदर्थोक्तपुंस्कम्। टा आदिर्यस्य स टादिः टादिश्च् टाद्यच् तस्मिन्। तथाच येनार्थेन क्लीवे वर्त्तते तेनैवार्थेन यदि पुंसि वर्त्तते तदा टाद्यचि पुंवदित्यर्थः। टाऽच्विशेषात् ङेऽचि उदाहरति अनादय इत्यादि। अनादिशब्दः प्रवृत्तिनिमित्तेन (१) पुंक्लीवयोर्वर्त्तते। अनादये अनादिने, एवं पटवे पटुने इत्यादि। टाऽजितु कर्त्रा कर्त्तृणा इत्यादि। पीलुने इति पीलुर्वृक्षभेदः, पीलोर्विकारः फलमित्यर्थे विहितस्याण्य "फले लुपि"ति

---

(१) आदिरहितत्वरूपेणार्थेनेत्यर्थः।

१७३। दध्यस्थिसक्थ्यक्ष्णो ऽनङ्।

( दधि-अस्थि-सक्थि-अक्ष्णः ६।, अनङ् ।१। )।

एषामनङ् स्यात् टायचि, अडावितौ। (११८) अनो ऽल्लोपः। दध्ना दध्ने दध्नः दध्नः दध्नोः दध्ना दध्नि दधनि दध्नोः। शेषं वारिवत्। एवम् अस्थि सक्थि अक्षि।

सुधि सुधिनी सुधीनि। हे सुधे हे सुधि। द्वौ प्रीवत्। सुधिया सुधिना इत्यादि। एव प्रध्यादयः।

मधु मधुनी मधूनि। हे मधो हे मधु। द्वौ प्रीवत्। मधुना मधुभ्यामित्यादि। एवमम्बु सान्वादयः। (११७) पादन्तेति स्नु वा। स्नूनि सानूनि इत्यादि भेदः।

धातृ धातृणी धातॄणि। धौ हे धातः हे धातृ। द्वौ प्रीवत्। धात्रा धातृणा इत्यादि। एवं ज्ञातृ–कर्त्रादयः।

---

लुप्, अतएव वृक्षत्वप्रवृत्तिनिमित्तेन पुंसि वर्त्तते, क्लीवे तु फलत्वप्रवृत्तिनिमित्तेन इति न उक्तपुंस्कम्।

१७३। दध्यस्थि। दधि च अस्थि च सक्थि च अक्षि च तत् तस्य। एषां गौणेऽपि अनङ्, तेन अतिदध्ने सुसक्थ्ने विप्राय इत्यादि। क्लीवानुवृत्तेः दधिर्नाम कश्चित् तेन, दधिना इत्यादौ न स्यात्। स्नूनीति—इद नेच्छन्ति परे (१)।

---

।१। सानुशब्दस्य स्नुर्वा इति सिद्धान्तकौमुद्यां ७।१।७४। सूत्रस्य वृत्तिः। तद्व्याख्यानं तत्त्वबोधिन्यां यथा—भाष्ये इतना सानूनामिति वार्त्तिककारोक्तेरिति-भाव। स्नु मस्य सानुरस्त्रियामित्युभयलिङ्ग सानुशब्दस्य मधुवत्करे रूपमाह स्नूनि सानूनीति। पुंसि तु स्नून् सानून् इत्यादि।

१०४ । एचो युत् स्वं ।

( एचः ६।, युत् ।१।, स्वं २। ) ।

प्रद्यु (१) प्रद्युनी प्रद्यूनि । हे प्रद्यो हे प्रद्यु । द्वौ प्रीवत् । प्रद्यवा प्रद्युना इत्यादि ।

सुरि (२) सुरिणी सुरीणि । हे सुरे हे सुरि । सुराया सुरिणा सुराभ्यामित्यादि ।

सुनु (३) सुनुनी सुनूनि । हे सुनो हे सुनु । सुनावा सुनुना इत्यादि ।

इति अजन्त क्लीवलिङ्गपादः ।

इति अजन्ताध्यायः ।

---

१०४ । एचो युत् । इय उय तत्, तस्मात् न युत् । एचः स्वं प्राप्नुवतो युत् स्यादित्यर्थः । एचः कण्ठ्यत्वात् एषां यो येन इति नियमात् अकारे प्राप्ते नियमोऽयम् । प्रद्यु इत्यादि—प्रकृष्टा द्यौर्यस्य कुलस्य इत्यादिक्रमेण वाक्यम् ।

इत्यजन्तनपुंसकपादः ।

इत्यजन्ताध्यायः ।

---

(१) प्रकृष्टा द्यौः स्वर्गो यस्मात् तत् प्रद्यु पुण्यं प्रदीप्तिमच्च ।

(२) शोभनो रा अर्थो यस्य तत् सुरि कुलं, सुरत कुलीनं ।

(३) शोभना नौर्यस्य तत् सुनु कुलं, सुनौकञ्च ।

## हसन्त-पुंलिङ्गशब्दः ।

१७५ । द्विरुक्त-जक्षादी द्विः ।

( द्विरुक्त-जक्षादी १॥, द्विः १। ) ।

कृतद्वित्वशब्दो जक्षादिश्च द्विसंज्ञः स्यात् ।

---

अमरगुरु-सम-श्रीवोपदेव-प्रणीते
प्रकरण-परिपाटी-जन्य-शोभा-विभाति ।
सुमति-जन-विनोदिन्यद्भुते मुग्धबोधे
प्रविलसतु कृताध्यायेऽत्र टीका द्वितीये ॥

---

१७५ । द्विरुक्त । द्विरुक्तं यस्य सः (१) । जक्ष आदिर्यस्य सः द्विरुक्तश्च जक्षादिश्च तौ । जक्षादिर्यथा—सप्त जक्षादयः प्रोक्ता जक्षि-जागर्त्ति-शास्तयः । दरिद्राति-चकास्तौ च दीधीवेव्यौ च वैदिकौ । पूर्व्ववत् प्रयोजनाभावादत्र संज्ञा क्रियते । संज्ञापादं परित्यज्य द्विसंज्ञाकरणात् क्वचिन्न स्यात्, तेन जक्षिवान् पेचिवान् ददृशिवान् इत्यादौ गुण् स्यादिति कश्चित् ।

---

(१) द्वौ वारौ उक्तं कथनं यस्य सः । अत्र दुर्गादासः—अत्र द्वैरुक्तेऽपि द्विरुक्तजक्षादौ इति द्विवचनं, प्रकृतिविकृतिभेदाच्च विरुद्धम् । अतएव द्वौ द्वौ माषादि-माषौ स्यादद्वयुरित्यमरः । एवं युग्मलौ अनुवेल्यमापिबोध्यम् । ........ दीधीवेवी इति द्वौ वैदिकावात्मनेपदिनौ विभक्तिव्यत्ययात् परस्मैपदे अनुस्विदे रिति अन-ज्ञपि पुरस्करिष्यामिति शुभे अदीधयुः अवेव्युरिति कामधेनौ वोपदेव इत्याह ।

१७६। हो ढो भौ। ( हः ६।, ढः १।, भौ ७। )।

हस्य ढः स्यात् भौ परे। (१४८) भ्वोर्ब्भसात् से लोपः। (६५) झय्झसोरिति चप्जबौ वा। लिट् लिड् लिहौ लिहः, लिहं लिहौ लिहः, लिहा लिड्भ्यामित्यादि।

१७७। दादे र्घः। ( दादेः ५।, घः १। )।

दकारादेर्हस्य घः स्यात् भौ परे।

---

१७६। होढ़ः। भावित्युक्तेर्ल्ले हंसे धोर्झसे तयोरन्ते च हस्य ढ़ः स्यात्।

१७७। दादेः। हो भौ इत्यनुवर्त्तते। द आदिर्यस्य स तस्मात्। तथाच दादिवर्णात् परस्य हस्य घ इत्यर्थः। तेन ध्रुक् धिक् धक् इत्यादावुकारादेरपि हस्य घः। ध्रुक् द्रोहमाचक्षाणः ध्रोक् इत्यादौ मुहादित्वात् घड्। दादेर्धोर्हस्य घ इति भाष्यं, तेन दाम-लिहमाचक्षाणः दामलिक् इत्यादौ स्यात्। भ्वादि गण-पठित-दादि-धोरिति परे। तन्मते दामलिट् दामलिड् दामलिड्भ्यामित्यादि। एके तु दादेरिति हस्य विशेषणम्, पञ्चव्यवधानेनाप्यभवात् एकाज् व्यवधाने स्यात्, न त्वनेकाज् व्यवधाने। तेन ध्रुक् ध्रोक् मित्रध्रुक् इत्याद्याहुः (१)।

---

(१) एकेषां मते अनेकाज्व्यवधाने दामलिहित्यादि प्रयुज्यते। तत्र दुर्गादास —[illegible]। तेन [illegible] [illegible]।

## १७८। झभान्तस्यादिजवां झभाः फे धोस्तु सध्वेऽन्ते च।

(झभान्तस्यादिजवां ६॥, झभाः १॥, फे ७।, धोः ६।, तु ।१।, सध्वे ७।, अन्ते ७।, च ।१।)।

झभान्तस्यादौ स्थितानां जवानां झभाः स्युः फे परे, धोस्तु सध्वे अन्ते च।

धुक् धुग् दुहौ दुहः, दुहं दुहौ दुहः, दुहा धुग्भ्यामित्यादि।

---

१७८। झभान्त। झभः अन्तो यस्य स तस्य, तद्गुणसंविज्ञानत्वेन झभसहितो जब् गृह्यते। आदौ जब् आदिजब् तेषां। तथाच झभान्तस्यादौ स्थितानां जवां झभा इत्यर्थः (१)। तेन गोदुहमाचक्षाणः गोधुक्, गर्दभमाचक्षाणः गर्धप्, डुण्डुभमाचक्षाणः डुण्ढुप्, इत्यादौ गडयोर्न घढौ। न्रदेहमाचक्षाणः न्रदेट्, देवदेहमाचक्षाणः देवदेट्, इत्यत्र धघौ नेच्छन्ति केचित्। देवदेक् देवदेग्भ्याम् इत्यादौ घत्वमिच्छन्त्यन्ये। सध स्ध्व तत् तस्मिन्, अनयोरकार उच्चारणार्थः, तेन धुचे, अधाक्षीत्, धक्ष्यति, धुग्ध्वे इत्यादौ स्यात्। अन्ते यथा—अधोक्, गुहधोर्यङ्लुकि अजोघोट् इत्यादि। पूर्व्वसूत्रात् भावित्यनुवृत्तौ फग्रहणम् एकवर्णाव्यवधानेऽपि, तेन भुक्, मित्रभुक्, इत्यादि। जवामिति किं—मृगावित्। व्यधधोः सनि विव्यत्सति, वस्यावर्गीयत्वात् न

---

(१) एकाज्-व्यवहितानां एकाच्-हस्-व्यवहितानाञ्च जवां झभा स्युः, न तु द्व्यजादिव्यवहितानामिति। गोयीचन्द्रेणाप्येवमुक्तम्।

१७८ । मुहां घङ् वा भौ ।

( मुहां ६।।।, घङ् ।१।, वा ।१।, भौ ७। । )

मुहादीनां घङ् वा स्यात् भौ परे ।

मुक् मुग् मुट् मुड् मुहौ मुहः, मुह मुहौ मुहः, मुहा मुग्भ्यां मुड्भ्यामित्यादि । एवं द्रुह स्नुह नश स्निहः ।

---

भत्वम् । केचित् विभ्यत्सति इत्याहुः । एके तु पूर्ववदित्याहुः (१) । अत्र जबा भभा इति लिपिकरप्रमादः । एकाचो बशो भष् झष-न्तस्य स्ध्वोरिति (८।२।३७) पाणिनिसूत्रात् । अतएव द्विजिह्व-मात्रवाणो द्विजिट् इत्यादौ न स्यात् । (२)

१७८ । मुहाम् । बहुनिर्देशो गणार्थः । दादेर्घ इत्यनेनास्य योगविभागो नक्-सिद्धार्थः, तत्र चानुवृत्तेः ।

---

(१) विभ्यत्सतीत्याहुरित्यर्थः ।

(२) अत्र जबा भभा इति लिपिकर प्रमाद इत्युक्तवता तर्कवागीशेन सटीका-करणात् प्रागपि तादृकपाठस्यासत्यमद्यापि करणमपि स्वीकृतम् । तेनैवाप्यभिप्रायो समासप्रकरणे च ट ठ ड ढ इति सूत्रे प्रत्याहारोपदेशे तर्कवागीशधृता इयमिति सभा न दर्शिता । तदत्र जबा भभा इति पूर्वतन एव पाठो निवेशित । अकारस्य वमक्रमुपितत्वेऽपि सङ्क्षेपकथनाय यथाचार्य्येण अभिधृक्त तथा बालत्वेऽपि चतु-र्थ्ययमो "इषद्वर्णान्तस्य धातोस्तृतीयादेरादिचतुर्थत्वमप्रत्ययम्" (१८२) इति सूत्रे तृतीयादेरिति सर्व्वसम्मतमपि । भविष्यत्वे तु 'तृथ्वीनान्तृतीयोऽस्य स्युर्यौ भादौ इति सूत्रपाठस्य ।१९८ सूत्रे चाज इत्युक्ता तत्रैव ।१९० सूत्रे चज इति किं अष् अप्राते इत्युदाहृतम् । अतः पाणिनिक्रमदोषयोरैकमत्यं दृश्यते । तन्मतैकवाक्यार्थे एतस्मिन् सूत्रे एकमात्रवाच्यार्थमेवतत्प्राप्याकरणा-मेवत्वा अत्र सूत्रे जकारस्य भकारो नेति बक्तव्यम् । द्विजिह्वमात्रवाणो द्विजिट् इत्युदाहरणं मुपि न बस्यादिविधौ इत्यत्र मत्वा निर्दिष्टमित्यपि

## १८० । वाहो वौ पौ श्वेतात्तु वा ।

( वाहः ६।, वा ।१।, औ ।१।, पौ ७।, श्वेतात् ५।, तु ।१।, वा ।१। ) ।

वाहो वा शब्दस्य औः स्यात् पौ परे, श्वेतवाहस्तु वा ।
विश्वौहः विश्वौहा इत्यादि । शेषं लिड्वत् ।

## १८१ । अनादूः । ( अनात् ५।, ऊः १। ) ।

अनवर्णात् परो वाहो वा ऊः स्यात् पौ परे । भूहः भूहा इत्यादि ।

---

१८० । वाहो । परसूत्रे अनादित्युक्तेः अवर्णादस्य विषयः ।

१८१ । अना । न अः अनस्तस्मात् अवर्णभिन्नादित्यर्थः, तेन शाल्यूहः, मरुदूहः इत्यादि (१) । ननु पूर्व्वसूत्रे औकारं विनापि ऊटि आद्वृटो श्रिरिति श्रौ विश्वौहः विश्वौहा इति चेत् सत्यं, वैचित्र्यार्थमिदमिति । यद्वा पूर्व्वसूत्रे पौ विधानात् दा ल लूनौ क्ति दातिस्तां वहति दातिवाट्, तस्यापत्यं दात्यौहः इत्यनवर्णादपि औरिति स्वामी । दात्यूह इति रायः । इदं छान्दसमिति परे ।

---

न्यायानङ्गीकारे कथं सङ्गच्छते तत् सुधीभिश्चिन्त्यमिति । प्रयोगरत्नमालायां तृतीयविन्यासे "तृतीयाद्यास्तुर्य्यहान्ता गणोक्ता धातवो यदो' ति [illegible]४ सूत्रेण जकारस्य झकारो विहितः । तुर्य्याद्याः स्युरिति हृत्ति । संजभते सझम् संझप् इत्युदाहरणम् ।

(१) "यादृग्जातीयस्य विप्रतिषेधो विधिरपि तादृग्जातीयस्येति न्यायादनवर्णपदेन अवर्णसजातीयोऽजेव ग्राह्यो न तु हसः । ततश्च पूर्ब्वसूत्रमवर्णविषयं हसविषयञ्च एतत् सूत्रमिवर्णाद्यज्विषयमिति बोध्य"मिति दुर्गादासः ।

१८२ । अनडुच्चतुरोऽणाणौ धिघ्योः ।

( अनडुह् चतुरः ६।, अण्-आणौ १॥, धिघ्योः ७॥ ) ।

अनडुहश्चतुरश्च धौ परे अण् घौ परे आण् स्यात्, ण इत् ।

१८३ । हो नः सौ । ( हः ६।, नः १।, सौ ७। ) ।

अनडुहो हस्य नः स्यात् सौ परे । अनड्वान् । हे अनड्वन् । अनड्वाहौ अनड्वाहः । अनडुहः अनडुहा ।

१८४ । स्रस्-ध्वस्-वस्वनडुहां दड् फे ।

( स्रस्-ध्वस्-वस्-अनडुहां ६॥, दड् ।१।, फे ७। ) ।

एषां दड् स्यात् फे परे, डावितौ । अनडुद्भ्यामित्यादि ।

---

१८२ । अन । अनडुच्च चतुश्च तत् तस्य, अण् च आण् च तौ, धिश्च घिश्च तौ तयोः, अनडुचतुर इति द्वयोरनुकरणात् क्रम् । समाहारात् न यथासंख्यं, निमित्तविधेययोस्तु समसंख्यत्वात् स्यादेव ।

१८३ । हो नः । चतुरो हकाराभावादाह अनडुह इति । नकारेऽकार उच्चारणार्थः । अनड्वानिति । सूत्रद्वयं गौणेऽपि, तेन अत्यनड्वान्, प्रियानड्वान् इत्यादौ स्यात् । प्रियानड्वाही इति तु पद्धतीत्यादिना वा निपातनात् ।

१८४ । स्रस् । स्रश्च ध्वश्च वस्श्च अनड्वांश्च ते तेषाम् ।

---

वार्त्तिकेषु "अवर्णनिषेधात् अवर्णजातीयोऽन्येव ग्राह्यो न तु कः ।" ... किन्तु अनवर्णोपधादपि, तेन मद्गुक इत्यादौ इत्याह । प्रयोगरत्नमालायां प्रत्यय-विधावपि च 'अनवर्णोप क' (१८१) इति सूत्रमनुदाहरणे च... किम् अर-

१८५ । श्वेतवाहऽवयाजुक्थशास्पुरोडाशां डस्ङ् ।

( श्वेतवाह—पुरोडाशां ६।॥, डस्ङ् ।१। ) ।

एषामन्तस्य डस्ङ् स्यात् फे परे, ङडावितौ ।

१८६ । अत्वसोऽधोः सौ घोंऽधौ ।

( अतु-अस: ६।, अधोः ६।, सौ ७।, घंः १।, अधौ ७। )

अत्वन्तस्यासन्तस्य च घंः स्यात् अधौ सौ परे, न तु धोः । श्वेतवाः ।

---

वस्त्वित्युदित्निर्देशात् चर्म्म वस्ते (१) क्विपि चर्म्मवः, सुवः, इत्यादौ न स्यात् । विढोरपवादोऽयम् (२) ।

१८५ । श्वेतवा । श्वेतवाश्च अवयाश्च उक्थशाश्च पुरोडाश्च ते तेषाम् । अत्वसोऽधोरित्यत्राधिकाराद्वैवात्वन्तस्याऽसन्तस्य च घंविधानादेभ्यो डसिति न कृतम् । इदं छान्दसमिति परे ।

१८६ । अत्व । अतुश्च अस् च तत् तस्य, न धुरधुस्तस्य, न धिरधिस्तस्मिन् । अत्वित्युदित्निर्देशात् गच्छत्वित्यादौ न स्यात् । गोमन्तमिच्छन् गोमान् (३) इत्यादौ । अरादित्वात् धुत्वेऽपि अधुपूर्व्वस्य धुत्वाङ्गीकारात् घंः ।

---

धौतः धौतमेव । तरवरिदोहो भवेयस्य विद्यतीह इत्युदाहृतं पुरुषोत्तमेन । उरसोह इत्यत्र संज्ञापूर्व्वकत्वात् विसर्ग इति तट्टीका ।

(१) परिदधातीत्यर्थः ।

(२) यथासम्भवविसर्गटकाराद्यपेक्षया विशेषविधिरयमित्यर्थः ।

(३) अत्र कर्त्तोऽभ्यासादिति कर्त्ते प्रत्यये क्विपि यवलोप इति क्यप्रत्ययस्य अकारयकारयोर्लोपे गोमत् इति स्थिते सौ रूपम् ।

१८७। ङसङो घौ वा।

( ङसङः ६।, घौ ७।, वा ।१। )।

ङसङो घौ परे घौं वा स्यात्। हे श्वेतवाः हे श्वेतवः।

श्वेतवाहौ श्वेतवाहः, श्वेतवाहं श्वेतवाहौ श्वेतौहः श्वेतवाहः, श्वेतौहा श्वेतवाहा श्वेतवोभ्यामित्यादि।

(११२) क्विलादिति षः। तुराषाट् तुराषाड् तुरासाहौ तुरासाहः, तुरासाहं तुरासाहौ तुरासाहः, तुरासाहा तुराषाड्भ्यामित्यादि।

चत्वारः चतुरः, चतुर्भिः चतुर्भ्यः। (१११) नुमाम इति चतुर्णाम्।

१८८। रङो विः सुपि।

( रङः ६।, विः १।, सुपि ७। )।

रङो विः स्यात् सुपि परे, न त्वन्य-रेफस्य। चतुर्षु।

*प्रियचत्वाः, हे प्रियचत्वः, प्रियचत्वारौ प्रियचत्वारः प्रियचत्वारं प्रियचत्वारौ प्रियचतुरः, प्रियचतुरा प्रियचतुर्भ्यामित्यादि।*

---

१८७। ङसङः। इदं नित्यमिति परे।

१८८। रङः। अनियमे प्राप्ते (१) नियमोऽयम्। चिकीर्षु इत्यत्र तु खरादिति विधानात् न विः (२)। कचिदरादिति नाह

---

(१) फे परे रेफमात्रस्य विसर्गे प्राप्ते इत्यर्थः। अतएवोक्तं विद्वे मन्यारण्यौ नियमार्थेति।

(२) सान्तरारादिस्थस्य खरादिति विसर्गादर्शनाभावात्। अतएवोक्तं दुर्गादासेन "सान्तरारादिस्थस्य सान्तरेति विसर्गादर्शनाभावात् रात् रको लोप" इति।

(१६५) नसवृमहत्व इति घंले, (११८) नो लुप् । राजा, हे राजन्, राजानौ राजानः, राजानं राजानौ । (११८) घनोऽल्लोपः । राज्ञः, राज्ञा राजभ्यामित्यादि । ङौ—राज्ञि राजनि ।

(११८) अम्वस्यादित्युक्तेः ब्रह्मणः यज्वनः इत्यादि । शेषं राजवत् ।

१८८ । हन्पूषार्य्यमेनोऽधौ सौ घौ घः ।

( हन्—हनः ६।, अधौ ७, सौ ७, घौ ७, घः १। ) ।

एषां घः स्यात् अधौ सौ परे, घौ च ।

वृत्रहा हे वृत्रहन् वृत्रहणौ वृत्रहणः, वृत्रहणं वृत्रहणौ ।

१९० । हनो ङ्गो घ्नो न णः ।

( हनः ६।, ङ्गः ६।, घ्नः १।, न ।१।, णः १। ) ।

हनस्थाने जातस्य ङ्गस्य घ्नः स्यात्, तस्य च नस्य णो न स्यात् ।

---

तन्मते स्वान्तस्यारादिति नञा निर्दिष्टस्यानित्यत्वात् यलोपे रङ्भिन्नरेफस्य न विः ।

१८८ । हन् । हन्न पूषा च अर्य्यमा च इन्न तत् तस्य, न धिरधिस्तस्मिन् । सिघौरेव नियमात् वृत्रहणौ इत्यादौ नसवृमहत्व इति न घः । हन इति क्विबन्तस्य ग्रहणं, तेन प्लुहा इत्यादि । वृत्रहणाविति एकाचकोरिति नस्य णो नित्यम् । इनो ग्रहणं अतु-मन् अन्-इन्-नसुग्रहणे अर्थवद्ग्रहणाभाव इति ज्ञापनार्थं (१) तेन यशस्वी इत्यादावपि स्यात् ।

---

(१) येन केनचित् प्रकारेण यत्नभागान्नादीनां ग्रहणमिति ज्ञापनार्थमित्यर्थः ।

हलघ्नः हलघ्ना हलहभ्यामित्यादि ।

एवं पूषन् अर्य्यमन् शार्ङ्गिन् यशस्विन् प्रभृतयः ।

१९१ । पूष्णो ङि ङिर्व्वा ।

( पूष्णः ५।, ङिः १।, ङिः १।, वा ।१। ) ।

पूषि पूष्णि पूषणि ।

१९२ । मघोनस्तुङ् वा ञिप्योः ।

( मघोनः ६।, तुङ् ।१।, वा ।१।, ञिप्योः ७। ) ।

मघवन् शब्दस्य तुङ् वा स्यात् ञौ पौ च परे, उङावितौ ।

१९३ । त्रिदचोऽहे नुंण् घौ ।

( त्रिदचः ६।, अहेः ६।, नुण् ।१।, घौ ७। ।)

उकारेत ऋकारेतोऽचश्च नुण् स्यात् घौ परे, न तु हेः ।

---

१९० । हनो । हन्निति क्विबन्तस्य ग्रहणात् भ्रूणघ्नीत्यादौ न स्यात् । हलघ्न इति एकाच्-कुत्वात् नित्यं णत्वनिषेधः ।

१९१ । पूष्णः । इदं नेच्छन्ति परे ।

१९२ । मघोनः । ञिश्च पिश्च तौ तयोः । वाशब्दस्य व्यवस्थावाचित्वात् मघवद्व्यलक्ष्मानिदानमित्यत्र षे ञोर्लुक्यपि स्यात् (१) ।

१९३ । त्रिद । उश्च ऋश्च त्रि, स इत् यस्य स त्रित्, त्रिश्च

---

(१) अत्र दुर्गादासोऽपि ञौ परे विहितत्वात् समासे ञेर्लुकि अनोपे ग्रसत्त्वमिति न्यायेन प्राप्तव्यकार्य्यस्य लुकि न तमेति निषेधेऽपि सत्त्वा निर्द्दिष्टमनित्यमिति न्यायात् मघवतो भक्तिः मघवद्भक्तिरित्यादि स्यादिति केचित् । अतएव मघवद्व्यलक्ष्मानिदानमिति दुर्गसिंहधृतमित्याह ।

१८४ । स्यान्तस्यारालुप् फे ।

( स्यान्तस्य ६।, अरात्, ५।, लुप् ।१।, फे ७। )

सस्यान्तस्य लुप् स्यात् फे परे, न तु रात् परस्य ।

मघवान् मघवा, हे मघवन्, मघवन्तौ मघवानौ मघवन्तः मघवानः, मघवन्तं मघवानं मघवन्तौ मघवानौ ।

---

अत्र तत् तस्य । अजिति क्विबन्ताद्ग्रहणात् तिर्य्यङ् उदङ् इत्यादि (१) । तु चासौ ह्रियेति ह्रिः, न ह्रिरह्रिस्तस्य ; तथाच तान्तह्रेर्नुण् न स्यात् इत्यर्थः, (२) तेन ददत् जागरिष्यत् इत्यादौ न स्यात्, जगन्वान् जजागृवान् इत्यादौ तु स्यादेव । गोमन्तमिच्छन् गोमान् इत्यादौ पूर्व्वादित्वमाश्रित्य स्यात् ॥

१८४ । स्यान्त । सस्यान्तः स्यान्तस्तस्य, न रः अरस्तस्मात् । कथं चिकीर्षुं इति ? अस्य रङि ह्रोढ़ि इति रे रलोपे

---

(१) "अञ्च् इति अञ्चुगतिपूजनयोरित्यस्य गत्यर्थे क्विपि लुप्तनकारस्य ग्रहणं, तेन प्राङ् प्राञ्चौ इत्यादि, अन्यत्र अञ्चन् इत्यादि । * * * अञ् इह अल्पार्थ एव । तेनायमर्थः—ह्रेः परस्य मन्तस्यैव नुण् न स्यात्, अन्यस्य तु स्यादेवेति । यथा ददत् दधत् पापचत् बोभुवत् जक्षत् जाग्रदित्यादि । बुभूषन् चिकीर्षन्नित्यादौ तु लोपोऽतोऽह्रेचोरित्यनेन कृतस्य अपो लोपस्य स्थानिवत्त्वात् ह्रे परत्वाभावे नुण् स्यादेव । न च ददिदित्यादावपि लुगह्नोऽप इत्यनेन कृतस्याकारलोपस्य स्थानिवत्त्वात् नुणापत्तिरिति वाच्यम् । लोपोऽस्योमाङोरिति लोपोऽतोऽह्रेचोरिति ह्रसाञ्लोपोऽधितोर्य्येतेभ्योऽन्यस्त्रलेष कृतस्य अकारलोपस्य स्थानिवत्त्वानङ्गीकारात् । अस्य बीजं सकोऽञ्लोपोऽन्यत्र इत्यत्र द्रष्टव्यम् । ह्रेः परात् मन्तादन्यस्य तु ददिवान् जजागृवान् जघ्निवान् जगन्वान् वावदिष्यन् इत्यादौ नुण् स्यादेवे'ति दुर्गादास ।

(२) येन विधिस्तदन्तस्येति न्यायादाह तान्तह्रेरिति ।

१८५ । श्व-युव-मघोनामुर्व्वोऽते पौ ।

( श्व-युव-मघोनां ६।।।, उः १।, वः ६।, अते ७।, पौ ७। ) ।

एषां वशब्दस्य उः स्यात् पौ परे, न तु ते ।

मघवतः मघोनः, मघवता मघोना, मघवद्भ्यां मघवभ्यामित्यादि । ।

शुनः शुना । यूनः यूना इत्यादि ।

---

अरादिति न विः । चतुरित्यत्र फे रेफसकारयोर्विसर्गः (१) । नञा निर्द्दिष्टस्यानित्यत्वात् रेफात् असो लोप इति कश्चित् ।

मघवानिति(२)—नस्य चादेशे मघवानिति परे । छान्दसमिति चान्द्राः । यदुक्तं भाष्ये—"सर्व्वेषास्तु मघोनश्च न शिष्यं छान्दसं हि त"दिति (३) भाषायां प्रयोगदर्शनादेवानेन तुडिति ज्ञातम् । तथाच—हविर्जक्षिति निःशङ्को मखेषु मघवानसौ इति भट्टिः । पौ मघवतीत्यादि वक्ष्यति ।

१८५ । श्वयुव । श्वा च युवा च मघवा च ते तेषाम् । मघोनामिति नान्तनिर्द्देशात् नान्तानामेव, तेन मघवत इत्यादौ तुङि माभूत् । न तः अतस्तस्मिन् । गौणेऽप्ययं विधिः, तेन प्रासशुनः दृढयूनः अतिमघोनः बहुयून इत्यादौ स्यात् । ते तु शौवनम् इत्यादि वक्ष्यति ।

---

(१) १०१ सूत्रस्य टीका द्रष्टव्या ।

(२) मह्यते पूज्यते इत्यवन्तो निपातः । भाष्यकारमते तु मघो धनवत् योगात्सदृशिवचनटीकायां रघुनाथ ।

(३) एवं चार्थम् मघवन् शब्दस्य भाषायां नास्ति प्रयोग इत्युक्तं भवति"—इति भाष्यटीकायां कैयट ।

१८६। अर्व्वणोऽनञस्तुङ् त्येऽसौ तु।

(अर्व्वणः ६।, अनञः ६।, तुङ् ।१।, त्ये ७।, असौ ७।, तु ।१।)।

नञ् वर्जस्यार्व्वणो नस्य तुङ् स्यात् असौ त्ये परे।

अर्व्वन्तौ अर्व्वन्तः, अर्व्वन्तम् अर्व्वन्तौ अर्व्वतः, अर्व्वता अर्व्वद्भ्याम् इत्यादि। अनञः किम्—अनर्व्वा हे अनर्व्वन्, अनर्व्वाणौ अनर्व्वाणः, इत्यादि। शेषं यज्ववत्।

१८७। पथिमथ्यृभुचां थितोर्नमौ घौ।

(पथि-मथि-ऋभुचां ६।।।, थ-इतोः ६।।, नमौ १।।, घौ ७।)।

पथिन् मथिन् ऋभुचिन् एषां थस्य नम् स्यात्, इकारस्य चाकारः, घौ परे।

---

१८६। अर्व्वे। न विद्यते नञ् यस्य स तस्य, न सिरसिस्तस्मिन्। त्यसामान्यग्रहणात् अर्व्वती, अर्व्वत इदम् आर्व्वतम्, अर्व्वन्तमिच्छति अर्वंत्यति इत्यादौ स्यात्। सहस्रदृगर्व्वगर्व्व (१) इति तु से लोलुंकि लुकि न तत्वेति निषेधः। केचित्तु अर्व्वन्त गतः अर्व्वद्गत इत्यादौ से लोलुंक्यपि स्यादित्याहुः (२)।

१८७। पथि। पन्थाश्च मन्थाश्च ऋभुक्षाश्च ते तेषाम्। थश्च इश्च तौ तयोः, नम् च अश्च तौ। गौणेऽपि अयं विधिः, तेन अपन्थाः अतिपन्थाः इत्यादौ स्यात्।

---

(१) सहस्रदृक् इन्द्रस्तस्य अर्व्वा घोटकस्तस्य गर्व्व इत्यर्थः।

(२) स्वमते तु लोलुंकि लुकि न तत्वेति निषेधेऽपि नञा निर्द्दिष्टमनित्यमिति न्यायात् समाधानीयमिति दुर्गादास।

१९८ । टेरासौ । ( टेः ६।, आ ।१।, सौ ७। ) ।

पथ्यादीनां टेरा स्यात् सौ परे । पन्थाः पन्थानौ पन्थानः, पन्थानं पन्थानौ ।

१९९ । लोपोऽच्यघौ ।

( लोपः १।, अचि ७।, अघौ ७। । )

पथ्यादीनां टे र्लोपः स्यात् अघावचि परे ।

पथः पथा पथिभ्यामित्यादि । एवं मन्थाः, ऋभुक्षाः ।

(१३२) डतिसङ्ख्याया इति । पञ्च पञ्च पञ्चभिः पञ्चभ्यः पञ्चभ्यः ।

---

१९८ । टे । नान्तत्वात् घेँ सिद्धे टेराविधानात् (१) पन्था. इत्यादौ न घेर्लोप. । ड. साविति कृते सिद्धे (२) टिग्रहणं परसूत्रार्थम् ।

१९९ । लोपः । न घिरघिस्तस्मिन् । अघिग्रहणेन नञ्-युक्तन्यायेन स्याद्यचेव, तेन पथ्यश्वौ ऋभुक्षिणौ स्त्रीत्यादौ न स्यादिति कश्चित् । उत्सर्गापवादयोः क्वचित् उत्सर्गोऽपि निविशते इति न्यायात् क्वचित् घावचि प्राप्तटिलोपनिवारणार्थमित्यन्य. । पूर्ववत् गौणेऽपि, तेन सुपथी कूले इत्यादौ स्यात् ।

---

(१) लोपस्वरादेशयो स्वरादेशो विधिर्बलवानिति न्यायादिति शेष ।

(२) सौ परे पथ्यादीनां टे इकारस्य आकारे यद्यपि पन्था इत्यादय सिध्यन्ति तथापीत्यर्थं ।

२०० । नो नामि घः ।

( नः ६।, नामि ७।, घः १। ) ।

नान्तस्य नामि परे घः स्यात् । पञ्चानां, पञ्चसु ।

२०१ । वाष्टनो जस्शसो डौः ।

( वा ।१।, अष्टनः ५।, जस्शसोः ६॥, डौः १। ) ।

अष्टनः परयो जस्शसो र्डौः स्यात् वा, ड इत् ।

अष्टौ अष्ट, अष्टौ अष्ट ।

२०२ । डा तौ वा । (डा ।१।, तौ ७।, वा ।१।)।

अष्टनो डा स्यात् वा तौ परे, ड इत् । अष्टाभिः अष्टभिः, अष्टाभ्यः अष्टभ्यः, अष्टाभ्यः अष्टभ्यः, अष्टानाम, अष्टासु अष्टसु ।

---

२०० । नोना । लुपि नाप्यविधिरिति निषेधे प्राप्ते विधिरयम् । गौणे नुमभावात् घाभावस्तेन प्रियपञ्चामित्येव स्यात् ।

२०१ । वाष्टनः । जस् शस् तौ तयोः । विधानसामर्थ्यात् लुक् बाध्यते, डावभावपक्षे जस्शसोर्लुक् । एवं परमाष्टौ परमाष्ट । मुख्य एवायं विधिस्तेन प्रियाष्टानो विप्रा इत्यादौ न स्यात् ।

२०२ । डा । त्रि इति तौ सिद्धे तिग्रहणात् गौणेऽपि डा वा, तेन सौ प्रियाष्टाः पक्षे प्रियाष्टा, औकारे प्रियाष्टौ प्रियाष्टानौ, जसि प्रियाष्टाः प्रियाष्टानः, अमि प्रियाष्टां प्रियाष्टानं, शसि प्रियाष्टाः प्रियाष्ट्न , टादितौ प्रियाष्टा प्रियाष्ट्ना, प्रियाष्टाभ्या प्रियाष्टभ्याम् इत्यादि । ङौ प्रियाष्टे प्रियाष्ट्नि, प्रियाष्टनि । तथाच-साष्टे शते सुवर्णानामित्यमर. ।

## २०३ । धोर्मो नः फम्वि ।

( धोः ६।, मः ६।, नः, १।, फम्वि ७। ) ।

धो मस्य नः स्यात् फे मे वे च परे । प्रशान् प्रशामौ प्रशामः, प्रशामं प्रशामौ, प्रशान्भ्यामित्यादि ।

## २०४ । इदमोऽयमियं पुंस्त्रियोः सौ ।

( इदमः ६।, अयम्–इयम् ।१।, पुंस्त्रियोः ७।।, सौ ७। ) ।

इदमः पुंलिङ्गस्त्रीलिङ्गयोः क्रमेणायमियमौ स्तः सौ परे । अयम् ।

## २०५ । टोमोऽदसश्च त्यौ ।

( टः ६।, मः १।, अदसः ६।, च ।१।, त्यौ ७। ) ।

इदमोऽदसश्च दस्य मः स्यात् त्यौ परे ।

इमौ इमे, इमम् इमौ इमान् ।

---

२०३ । धोः । फश्च, म च, व च, तत् तस्मिन् । मवयोर्यथा- जंगम्मि, जंगम्वः जंगम्मः जगम्वान् इत्यादि ।

२०४ । इदमः । अयश्च इयञ्च तौ । सुसमीदम् (१) । आन्त- निर्दिंगात् न टेरः । पुमांश्च स्त्री च ते तयोः । परसूत्रेऽनकग्रहणात् अनेन साकोऽप्यादेशौ । इदंविधः इदंस्त्रीति मे सोर्लुकि लुपि न तन्निमित्तमिति निषेधः । स्त्रिमंप्रत्ययेव विधानात् अतीदम् इत्यादौ न स्यात् । एवं परत्रापि ।

२०५ । टो । अमादित्वस्य परत्वात् मः (२) ।

---

(१) पुंस्त्रियोरित्यनेन अनार्थं स्यार्थम् ।

(२) विभक्तिभेदे वर्णं बाधकमिति न्यायादित्यर्थः । इमौ इत्यादावप्यत्र वर्ण- विभक्तिविधायकत्वात् टोमोऽदसश्चेत्यस्य बाधकेन अदसो मदोरित्यनेन इत्वं न इत्याह ।

२०६। टौसीदमोऽनकोऽनः।

( टा ओसि ७, इदमः ६।, अनकः ६।, अनः १। )।

अनक इदमः टौसोः परयोरनः स्यात्। अनेन।

२०७। सुभ्यः। ( सुभि ७।, अः १। )।

अनक इदमः अः स्यात् से भे च परे।

(१०९) आत्विभम्वि। आभ्यां।

२०८। भिस् भिसोऽदसश्च।

( भिस् ।१।, भिसः ६।, अदसः ५।, च ।१। )।

अनक इदमोऽदसश्च परस्य भिसो भिसेव स्यात्, मलैस्।

(११०) व्वे सुभ्येः। एभिः। (१३४) टेरले, (२०५) दस्य मले, (११३) ङे स्मै, ययात् (२०७) अः। अस्मै आभ्याम् एभ्यः, अस्मात् आभ्याम् एभ्यः, अस्य अनयोः एषाम्, अस्मिन् अनयोः एषु।

अनकः किम्—

---

२०६। टौसी। टाश ओश तत् तस्मिन्, नास्ति अक् यस्य सः तस्य। इदमो ग्रहणम् अदसो निवृत्त्यर्थम्।

२०७। सुभ्यः। स च भश्च तत् तस्मिन्। व्युत्क्रमनिर्देशात् लाक्षणिकस्यापि, तेन अस्मै एषामित्यादौ स्यात् (१)।

२०८। भिस्। अनक इत्यस्यादस इत्यत्रान्वयः, तेन अमुकै-

---

(१) 'अत्र अनक इति नञोऽल्पार्थत्वात् अनुक्तौ अभयो परयोरिमकस्यापि च आदेश'। यथा—इमकस्मै धनं देहि अथ अकस्मै भूमिं देहि, इमकाभ्यां भेदो-

२०६। त्यादिव्यासभोस्क्तिस्सि वाक् प्राक् टे व्यंक दश्च।

( त्यादि—स्से: ६।, वा ।१।, अक् ।१।, प्राक् ।१।, टे: ५।, व्यक ।१।, द: १।, च ।१। )।

त्याद्यन्तस्य व्यस्य स-भ-ओसवर्जत्यन्तस्से: स्सेय टे: पूर्व्वोऽक् स्याद्वा, व्यकस्य दश्च।

इमकेन इमकाभ्याम् इमकैरित्यादि।

---

रित्यत्र न स्यात्। नैस् अदसयेत्यकरणात् क्वचिन्नस्यात्, तेन इमै गुणै: सप्तर्षय: स्वर्गं गता इति। इदमर्थे इदशब्दस्य इत्यन्ये।

२०६। त्यादि। ति आदिर्यस्य स:, स च भ च ओश्च तत्, न तत्, असभोस्, असभोस् क्तिर्यस्मात् स:, स चासौ स्सियेति असभोसक्तिस्सि:, त्यादिश्च व्यश्च असभोस्क्तिस्सिश्च स्सिश्च तत् तस्य। पुंस्त्वं सौत्रत्वात्। व्यस्य क: व्यक:। अनयोर उच्चारणार्थ:। अन्त्यस्य कस्य द इति शेष:। अत्र सामान्यशब्दस्य विशेषपरत्वात् सभओसवर्जत्यन्तानां युष्मदस्मद्भवतामेव टे: प्रागक् स्यादित्यर्थ:, तेन त्वयका मयका त्वयकि मयकि भवतका भवतकि इत्यादौ स्यात्। न तु सर्व्वकेण इमकेन इत्यादौ (१)। स-भ-ओसि तु युष्मकासु, युवकाभ्यां युवकयो:, अस्मकासु आवकाभ्यां आवकयो:, भवकत्सु भवकद्भ्यां भवकतोरित्यादि। कश्चित् तु त्वकत्सु त्वकद्भ्यां

---

ऽधीत अथ आभ्यां तर्कोऽधीत:। अकोऽप्राप्तिपक्ष एवेदमिष्टी इदं वचनम्, अमुकौ अभयो: पदयोरिमकप्रयोगनिषेधार्थ'मिति दुर्गादास:।

(१) अत्र केचनपेटे. पूर्व्वोऽक् स्यात् न तु त्यन्तस्येति।

त्वक्तोरित्याह (१)। त्यादिव्ययोस्तावत् भवतकि पचतकि उच्चकैः धकित्, हिरकुत्, ग्रतकि, वकि, द्रवक इत्यादि। अभिधानात् अल्पादौ ज्ञेयम्।

यथा—अल्पाज्ञात-दया-ह्रस्व-कुत्साखक् स्यात् प्रयोगतः।

अनुकम्पायुतान्नीतौ बहूनां जातिमन्नकि॥

अल्पमुच्चैः उच्चकैः, अज्ञातोऽसौ कस्य कीदृशो वा असकौ, दयायां—पचति पचतकि, ह्रस्वः असौ असकौ, कुत्सिताः सर्व्वे सर्व्वके, नीतौ—(२) हन्त ते सर्व्वके, हन्तशब्दोऽनुकम्पार्थः, भोः शोकार्त्ताः सर्व्वं तद्इत्यर्थः। भवतां कतमः कठः कतमक इत्यादि। मगित्यकरणात्(३) किं-सामिशब्दयोष्टेः प्रागक् न स्यात्। तेन कः, सामि (४) इत्यादौ न स्यात्। युष्मकाभ्य अस्मकाभ्यं इत्यत्र स्टेः प्रागक्। डभ्यम् इति कृतेपि भकारस्थानजत्वात् भोपलक्षितत्वात् वा (५)।

तूष्णीमः काण् शीले तु कड्। तूष्णीम्शब्दस्य काण् स्यात्, शीले तु कड्, णडावितौ। तूष्णीकामास्ते विज्ञाः, तूष्णीकः तूष्णींशीलः। अग्बाधनार्थमिदमिति।

---

(१) सर्व्वविश्वेति सूत्रे "परे त्वकृद्रं नाङ्ग"रित्युक्तमत आह कश्चिदिति।

(२) नीति सदाचारव्यवस्थितार्थेन प्रवर्त्तिनिवृत्ती इति संक्षिप्तसारे सुबन्तपादे २८८ सूत्रस्य टीकायां गोयीचन्द्रः।

(३) टेमक् इत्युक्ते मित्त्वात् पूर्व्वमकि सिद्धेऽपि तदकरणादित्यर्थः।

(४) सामि इत्यव्ययम्।

(५) विभक्त्यन्तस्टेः पूर्व्वोऽक् माभूदिति शेषः।

## २१० । द्वीटौसीदैतयोरेनोऽनूक्तौ ।

( द्वी-टा-ओसि ७, इद-एतयोः ६॥, एनः १।, अनूक्तौ ७। )। द्वां टौसोश्च परत इदमेतदोरिदैतयोरेनः स्यात् उक्तस्य पश्चादुक्तौ ।

इमं विद्धि हरेर्भक्तं विद्ध्यथैनं शिवार्च्चकम् ।
इमाविमान् वित्त शैवान् एनावेनांस्तु वैष्णवान् ॥
अनेन पूजितः कृष्णोऽथैनेन गिरिशोऽर्चितः ।
अनयोः केशवः स्वामी शिवः स्वामी अथैनयोः ॥

(१३४) त्यदा टेरः क्तौ । कः कौ के इत्यादि ।

(१७८) झभान्तस्येति बस्य भः । मुत् मुद् बुधौ बुधः मुधा भुद्भ्यामित्यादि ।

---

२१० । द्वीटौ । द्वीच टाच ओश्च तत् तस्मिन् । इदच एतच तौ तयोः । अदन्तनिर्देशात् क्लीवे एनत् । अनु पश्चात् उक्तिरनूक्ति-स्तस्याम् । कश्चित् वे क्लीर्लुक्यपि एनं श्रितः एनच्छ्रितः, एनेन कृतं एनत्कृतं, एनयोः पुत्रः एनत्पुत्र इत्याह । त्रिसंज्ञस्यैवायं विधिः, तेन अतीदं अत्येतदित्यादौ न स्यात् । कश्चिदत्येनदित्याह । इमं विद्धीत्यादि—इमं इमौ इमानित्यत्र क्रमेण एनं एनौ एनान् इति । एवं स्त्रीक्लीबयोः एनां एनया, एनत् एनेन इत्यादि । त्वमेव तदिमं राधे ग्रहं प्रापय इति तु इमप्रकृत्यसारस्येत्यन्ये (१) ।

---

(१) अत्र पक्षे दुर्गादासेन एन इति प्रकृत्यन्तरमप्यस्ति इत्युक्ता विद्यामधैर्म विनयां नयाह इत्यादुदाहृतम् ।

२११। युजिरोऽसे नुण् घौ।

( युजिरः ६।, असे ७।, नुण् ।१।, घौ ७। )।

युजिरो युज्शब्दस्य नुण् स्यात् घौ परे, न तु से।

२१२। चुङ् क्रुङ् युङ् सग् दिगमृगृत्विक् दधृक् हक् स्पृक् मृगुष्णिहां कङ् भौ।

( चुङ्—उष्णिहां ६।।।, कङ् ।१।, भौ ७। )।

चवर्गान्तानामश्वादीनाञ्च कङ् स्यात् भौ परे।

(५१) स्नोर्नुर्भसदान्ते। (५२) जपे अम् नोः। (१८४) स्यान्तस्याराल्लुप् फे। युङ् युञ्जौ युञ्जः, युञ्ज युञ्जौ युजः, युजा युग्भ्यामित्यादि।

असे किं—सुयुक् सुयुजौ सुयुजः इत्यादि। युजिरः किं—युक् समाधिमान्। अनृच-क्रुनृच-युजामेव प्राक् कङ् पृथग्ग्रहणात्, तेन—खन् खञ्जौ खञ्जः इत्यादि।

(१५५) भ्रष्ठाजेति षड्। (१५६) षोड़ः फे। राट् राड् राजौ राजः। एवं विभ्राट् देवेट् परिव्राट् विश्वसृट् परिमृट।

---

२११। युजिरः। न सः असस्तस्मिन्। इरिन्निर्देशात् युजिर्धौ ञ युतावित्यस्य ग्रहणं, न तु युज्यौज समाधावित्यस्येति वक्ष्यति युक् समाधिमान्।

२१२। चुङ्। अडित्यनेन पूजार्थस्याञ्चतेः, नुणि गत्यर्थस्यापि ग्रहणं। पृथग्ग्रहणादिति—चवर्गान्तत्वेन सिद्धे अश्वादीनां पृथग्ग्रहण नियमार्थं, तेन खन् इत्यादौ आदौ स्यान्तलुप्, न

२१३। विश्वराजोऽदा।

( विश्वराजः ६।, अत् ।१।, आ ।१। )।

विश्वराजोऽकारस्य आ स्यात् भौ परे।

विश्वाराट् विश्वाराड् विश्वराजौ विश्वराजः।

---

काङ् (१)। स्रगिति सृजधोः क्विपि निपातितस्यैव ग्रहणात् स्रष्टेत्यादौ न स्यात्। एवं दिशधोरपि, तेन दिष्टमित्यादि। असृगिति नञ् पूर्व्व-सृजधोः क्विबन्तस्य ग्रहणात् रज्जुसृडिति स्यात्। विश्वसृग्विधिरिति तु उत्सर्गत्वात् अपवादविषयेऽपि काङ्। ऋतौ यजति ऋत्विग्, अन्यत्र देवेट्। दधृगिति धृषधोः क्विपि निपातितस्य ग्रहणात् अधाक्षीट् धृष्टमित्यादौ न स्यात्। दृगिति दृशधोः क्विबन्तस्य ग्रहणात् दृक् सदृक् कीदृक् इत्यादौ स्यात्, न तु दृष्टमित्यादौ। एवं स्पृशधोः क्विपि स्पृक् घृतस्पृक्। अन्यत्र स्पृष्टमित्यादि। एवं मृशधोः क्विपि मृक्, अन्यत्र मृष्टमित्यादि। देवान् यजतीति क्विप्, ग्रहस्तपाद्योरिति जिः। परिव्रजतीति क्विपि निपातनात् घैः।

२१३। विश्व। भावित्यनुवर्त्तते।

---

(१) कङ् इत्यत्र दुर्गादासेन कुङ् इत्युक्त्वा "रामानन्दकाशीश्वरौ तु कडित्युकारशून्यं मत्वा रुग्णभुग्नादिसाधनाय "क्तक्तवतोस्तस्य नत्वे जस्य ग" इति सूत्रं कल्पयतः। वस्तुतस्तु रुग्णःभुग्न इत्यादौ निरवकाशत्वादनादृत्यास्य थादौ घुट् इत्यादिना जकारस्य गकारे पश्चात्तकारस्य नकार" इत्युक्तम्। तर्कवागीशेन तु रुग्णःभुग्न इत्यादौ ओदूदित्वात् जस्य ग इति धनोः कगाविति सूत्रे वक्ष्यते इति।

२१४। स्यादेः सो लोपः कोऽषढ़न्यरचः।

( स्यादेः ६।, सः ६।, लोपः १।, कः ६।, अषढ़न्यरचः ६। )।

स्यादौ स्थितस्य सस्य लोपः स्यात् भौ परे, कस्य च—न तु षढ़ाभ्यामन्यस्य स्थाने जातस्य रचस्य।

भट् भड्। (६५) झपभसोरिति सस्य दः, (४७) सुयुभिस्युगादिति—भज्जौ भज्जः इत्यादि। जर्क् जर्ग् जर्ज्जौ जर्ज्जः इत्यादि, ऋत्विक् ऋत्विग् ऋत्विजौ ऋत्विजः इत्यादि। अवयाः, हे अवयाः हे अवयः, अवयाजौ अवयाजः, अवयोभ्यामित्यादि।

२१५। त्यदां तदोः सः सौ।

( त्यदां ६।॥, तदोः ६॥, सः १।, सौ ७। )।

---

२१४। स्यादेः। भावित्यनुवर्त्तते। स्यस्यादिः स्यादिस्तस्य। यश्च ढ्च तौ षढ़ौ, ताभ्यामन्यः षढ़न्यः, षढ़न्यश्च रचश्च तत्, न तत् अषढ़न्यरच तस्य। तथाच षढ़स्थानजातस्य रचभिन्नजातस्य च कस्य लोप इत्यर्थः, तेन विविट् लिलिट्, अचषोः प्राचीत् इत्यादौ स्यात्। न तु पिपक् गोरक इत्यादौ। अन्ये तु गोरट् इत्याहुः। अमाङ्चीत् इत्यादौ तु सर्व्वविधिभ्यो लोपविधिर्बलवान् इति न्यायात् आदौ स्यादिलुपि लुपि अम्। कस्याता शक्स्याता इत्यादौ तु सकारयोर्दान्तत्वान्न लुप् स्यात् (१)। जर्क इति रेफान्न स्यान्तलुप्। एवं झर्झ माचचाणः झर्क् इत्यादि।

---

(१) एतद्बीजं ८६ सूत्रस्य टीकायां द्रष्टव्यम्।

त्यदादीनां तदयोः सः स्यात् सौ परे। स्यः त्यौ त्ये इत्यादि सर्व्ववत्। एवं तद्। एषः एतौ एते इत्यादि।

(२१०) द्वीटौसोदैतयोरेनोऽनूक्ताविति प्रयोगस्तु इदंवत्।

२१६। युष्मदस्मदो स्त्वाह्वौ युवावौ यूयवयौ त्वन्मदौ तुभ्यमह्यौ तवममौ सि इ-जस्-ङ-ङे-ङस्सु।

( युष्मद्-अस्मदोः ६॥, त्व-अह्वौ १॥, युव-आवौ १॥, यूय-वयौ १॥, त्वद्-मदौ १॥, तुभ्य मह्यौ १॥, तव ममौ १॥, सि इ-जस्-ङ-ङे-ङस्सु ७॥ )।

अनयोः क्रमादेते आदेशाः एषु परेषु क्रमात् स्युः।

---

२१५। त्यदां। व्यनिर्द्देशो गणार्थः। स्त्रिसंज्ञस्यैव विधानात् अतितदित्यादौ न स्यात्। *मण्डूकगत्या वा अनुवर्त्त्य तस्य* व्यवस्थाधायित्वात् सेरौत्वाभावे साकोऽदसः सो वा, तेन असुकः असुक इति। इदंवदिति—इमं विद्धीत्यादिक्रमेण ज्ञेय*मित्यर्थः।*

२१६। युष्मद। स्वद्वयोरर्थस्यापि ग्रहणात् इति वक्ष्यति। तत्र त्वन्मदौ युवावौ च ज्ञावेव, ज्ञेर्लुक्यपि त्वन्मदादेशः त्वन्मदामिति निर्द्देशज्ञापकात् (१)। तेन तव समीपं उपत्वत् त्वय्यधि अधित्वत्, अत्वं त्वं भवति त्वद्भवति त्वत्काम्यति त्वद्यति त्वद्यते त्वदतीत्यादि स्यात्। न तु युवाभ्यां कृतं युष्मत्कृतं युवयोरधि अधियुष्मत्,

---

(१) तद्धितप्रकरणे युष्मदस्मदोरन्यतरस्यामिति सूत्रे युवावेत्यनुक्त्वा त्वन्मदादिति निर्द्देशेन विभक्तेर्लुकि युष्मदस्मदोर्हिते युवावादेशो न स्यादिति ज्ञापकादित्यर्थः।

२१७। ङेप्योर्मः। (ङेप्योः ६॥, मः १।)।

युष्मदस्मद्भ्यां परस्य ङे इत्यस्य पेश्च मः स्यात्। त्वम् अहम्।

२१८। सभमौष्वाङ्।

(स-भ अम् औषु ७॥, आङ् ।१।)।

युष्मदस्मदोराङ् स्यात् से भे अमि औकारे च परे।

युवाम् आवाम् यूयं वयं, त्वां मां युवाम् आवाम्।

२१९। शस्-भ्यस् ङसि-भ्यस्-ङस्-सामां न-डभ्यम्-त-त-डाकमः।

(शस् —सामां ६॥, न—आकमः १॥)।

युष्मदस्मद्भ्यां परेषामेषां स्थाने न डभ्यम् त त ड आकम् एते क्रमात् स्युः, ड इत्। युष्मान् अस्मान्।

---

युष्मत्काम्यतीत्यादौ। एवं अस्मदोऽपि। द्वार्थैकार्थयोरप्युदाहरणानि ज्ञेयानि।

२१७। ङे। मेऽकार उच्चारणार्थः।

२१८। सभ। सश्च भश्च अम्च औश्च ते तेषु। व्युत्क्रमनिर्देशात् त्वं अहं युष्मत् अस्मत् इत्यादौ सभयोर्म-तौ, नाङ्।

२१९। शस्। शश्च भ्यश्चेति चः। एवं नश्च डभ्यश्चेति। न-तयोरकार उच्चारणार्थः। साम्ग्रहणात् न गौणे आकम्, तेन अतित्वयामित्यादौ न स्यात्। शस्ग्रहणं स्त्रीक्लीवयोर्विधानार्थं(१), तेन स्त्रीः कुलानि वा युष्मान् पश्यति इत्यादौ स्यात्।

---

(१) 'इति-व्य-प्योत्यादिना लिङ्गविहितकार्य्यनिषेधात् पुंसि तु शस् न इत्यस्य प्राप्तौ लिषु लिङ्गेषु शसो नविधान'मिति दुर्गादासः।

२२०। एङ् टाङ्याम्मि।

( एङ् ।१।, टा-ङि-आम्मि ७। )।

युष्मदस्मदोरेङ् स्यात् टाङ्योः परयोराम्मि च, ङ इत्।

त्वया मया युवाभ्याम् आवाभ्यां युष्माभिः अस्माभिः, तुभ्यं मह्यं युवाभ्याम् आवाभ्यां युष्मभ्यम् अस्मभ्यं, त्वत् मत् युवाभ्याम् आवाभ्यां युष्मत् अस्मत्, तव मम युवयोः आवयोः युष्माकम् अस्माकम्।

अतित्वयाम् अतिमयाम् अतियुवयाम् अत्यावयाम् अतियुष्मयाम् अत्यस्मयाम्।

(२१६) क्त-द्वयोरर्थस्यापि ग्रहणात्। एवं सर्व्वत्र।

त्वयि मयि युवयोः आवयोः युष्मासु अस्मासु।

---

२२०। एङ्। मुख्ये सुमि आकम्विधानात् गौणेऽस्य विषयः। क्तद्वयोरर्थस्यापि ग्रहणादिति—अपिशब्दोऽत्रावधारणार्थस्तथाच—क्तार्थयोर्युष्मदस्मदोस्त्वमदौ, द्वार्थयोर्युष्मदस्मदोर्युवावौ त्वायेव स्यातां, न तु सि जस् ङे-ङस्सु, विशेषविधानात् (१), तेन त्वामतिक्रान्तः अतित्व, त्वामतिक्रान्तौ अतित्वां, त्वामति-

---

(१) अत्र दुर्गादास — 'अतु बहुवचने परे त्वदाद्यादेश कथमित्याशङ्कयाह क्तद्वयोरर्थस्यापि ग्रहणादिति। तत्रायमर्थः — युष्मदस्मदोर्मुख्यत्वे गौणत्वे च सि जस् ङे-ङसां सम्बन्धकत्वात् तेषु परेषु त्वाह-यूय-वय-तुभ्य मह्य-तव ममा स्युरेव। मि-अमादि-रन्यत्र युष्मदस्मदोर्मुख्यत्वे एकवचने परे त्वमदौ द्विवचने परे युवावौ बहुवचने परे युष्मदस्मदावित्याख्यानम्। गौणत्वे तु परविभक्तिवचनाश्रय युष्मदस्मदोरेकत्वे त्वमदौ द्वित्वे युवावौ बहुत्वे युष्मदस्मदावित्याख्यानं' मिति।

क्रान्ता अतियूयम्, तम् अतित्वाम्, तौ अतित्वाम्, तान् अतित्वान्, तेन अतित्वया, ताभ्याम् अतित्वाभ्याम्, तैरतित्वाभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतित्वाभ्याम्, तेभ्यः अतित्वभ्यम्, तस्मात् अतित्वत्, ताभ्याम् अतित्वाभ्याम्, तेभ्यः अतित्वत्, तस्य अतितव, तयोरतित्वयोः, तेषामतित्वयाम्, अतित्वाकमिति परे, तस्मिन् अतित्वयि, तयोरतित्वयोः, तेषु अतित्वासु।

मामतिक्रान्तः अत्यहम्, मामतिक्रान्तौ अतिमाम्, मामतिक्रान्ताः अतिवयम्, तम् अतिमाम्, तौ अतिमाम्, तान् अतिमान्, तेन अतिमया, ताभ्याम् अतिमाभ्याम्, तैरतिमाभिः, तस्मै अतिमह्यम्, ताभ्याम् अतिमाभ्याम्, तेभ्यः अतिमभ्यम्, तस्मात् अतिमत्, ताभ्याम् अतिमाभ्याम्, तेभ्यः अतिमत्, तस्य अतिमम, तयोः अतिमयोः, तेषाम् अतिमयाम्, अतिमाकमितिपरे, तस्मिन् अतिमयि, तयोरतिमयोः, तेषु अतिमासु।

युवामतिक्रान्तः अतित्वम्, तौ अतियुवाम्, ते अतियूयम्, तम् अतियुवाम्, तौ अतियुवाम्, तान् अतियुवान्, तेन अतियुवया, ताभ्याम् अतियुवाभ्याम्, तैः अतियुवाभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतियुवाभ्याम्, तेभ्यः अतियुवभ्यम्, तस्मात् अतियुवत्, ताभ्याम् अतियुवाभ्याम्, तेभ्यः अतियुवत्, तस्य अतितव, तयोः अतियुवयोः, तेषाम् अतियुवयाम्, अतियुवाकमिति परे, तस्मिन् अतियुवयि, तयोरतियुवयोः, तेषु अतियुवासु।

आवाम् अतिक्रान्तः अत्यहम्, तौ अत्यावाम्, ते अति-

वयम्, तम् अत्यावाम्, तौ अत्यावाम्, तान् अत्यावान्, तेन अत्यावया, ताभ्याम् अत्यावाभ्याम्, तैः अत्यावाभिः, तस्मै अतिमह्यम्, ताभ्याम् अत्यावाभ्याम्, तेभ्यः अत्यावभ्यम्, तस्मात् अत्यावत्, ताभ्याम् अत्यावाभ्याम्, तेभ्यः अत्यावत्, तस्य अतिमम, तयोरत्यावयोः, तेषाम् अत्यावयाम्, अत्यावाकमिति परे, तस्मिन् अत्यावयि, तयोरत्यावयोः, तेषु अत्यावासु ।

युष्मान् अतिक्रान्तः अतित्वम्, युष्मान् अतिक्रान्तौ, अतियुष्माम्, युष्मान् अतिक्रान्ताः अतियूयम्, तम् अतियुष्माम्, तौ अतियुष्माम्, तान् अतियुष्मान्, तेन अतियुष्मया, ताभ्याम् अतियुष्माभ्याम्, तैः अतियुष्माभिः, तस्मै अतितुभ्यम्, ताभ्याम् अतियुष्माभ्याम्, तेभ्यः अतियुष्मभ्यम्, तस्मात् अतियुष्मत्, ताभ्याम् अतियुष्माभ्याम्, तेभ्यः अतियुष्मत्, तस्य अतितव, तयोः अतियुष्मयोः, तेषाम् अतियुष्मयाम्, अतियुष्माकमिति परे, तस्मिन् अतियुष्मयि, तयोः अतियुष्मयोः, तेषु अतियुष्मासु ।

अस्मान् अतिक्रान्तः अत्यहम्, तौ अत्यस्माम्, ते अतिवयम्, तम् अत्यस्माम्, तौ अत्यस्माम्, तान् अत्यस्मान्, तेन अत्यस्मया, ताभ्याम् अत्यस्माभ्याम्, तैः अत्यस्माभिः, तस्मै अतिमह्यम्, ताभ्याम् अत्यस्माभ्याम्, तेभ्यः अत्यस्मभ्यम्, तस्मात् अत्यस्मत्, ताभ्याम् अत्यस्माभ्याम्, तेभ्यः अत्यस्मत्, तस्य अतिमम, तयोः अत्यस्मयोः, तेषाम् अत्यस्मयाम्, अत्यस्माकमिति परे, तस्मिन् अत्यस्मयि, तयोः अत्यस्मयोः, तेषु अत्यस्मासु । एवं स्त्रीनपुंसकयोरपि ।

त्वामाचष्टे त्वदयति, अतित्वदत्, त्वदयिष्यति। मामाचष्टे मदयति, अमीमदत्, मदयिष्यति। युवामाचष्टे युष्मानाचष्टे वा युष्मयति, अयुयुष्मत्, युष्मयिष्यति। आवामाचष्टे अस्मानाचष्टे वा अस्मयति असिस्मत्, अस्मयिष्यति।

द्व्यर्थयोर्ङ्क्षिविभक्त्योः त्मौ त्वमदौ। द्व्यर्थयोर्ङ्क्षिविह्निहित-योर्युष्मदस्मदोस्त्वमदौ स्यातां त्मौ परे। त्वामाचक्षाणः त्वम्, तौ त्वाम्, ते त्वम्, तं त्वाम्, तौ त्वाम्, तान् त्वान्, तेन त्वया, त्वेनेति केचित्, ताभ्या त्वाभ्याम्, तैः त्वाभिः, तस्मै त्वम्, ताभ्यां त्वाभ्याम्, तेभ्यः त्वभ्यम, तस्मात् त्वत्, ताभ्या त्वाभ्याम्, तेभ्यः त्वत्, तस्य त्व, तयोः त्वयोः, तेषां त्वयाम्, त्वाकमिति परे, तस्मिन् त्वयि, तयोः त्वयोः, तेषु त्वासु।

एव मामाचक्षाणः मम्, अहमिति केचित्, माम् मम्। माम् माम् मान्। मया, मेन इति केचित्, माभ्याम् माभिः। मम् माभ्याम् मभ्यम्। मत् माभ्याम् मत्। म मयोः मयाम्, माक-मिति परे। मयि मयोः मासु (१)।

द्व्यर्थयोरतिक्रान्तवत्। द्व्यर्थयोस्तयोरतिक्रान्तवत् सि-जस्-ङे-ङस्-वर्ज्जं युवावौ स्यातां त्मौ। युवामाचक्षाणः त्वम् युवाम् यूयम्। युवाम् युवाम् युवान्। युवया, युवेनेति केचित्, युवाभ्याम् युवाभिः।

---

(१) तथाच—त्वं ददाति धन किञ्चिद्दत्त देहि धनं कियत्।
त्वं गच्छन्ति हरे स्थान म गच्छन्ति शिवालयम्॥
त्वामाचक्षाणाय इत्यर्थं। एवमन्यदित्युक्त मधुसूदनेन।

तुभ्यम् युवाभ्याम् युवभ्यम् । युवत् युवाभ्याम् युवत् । तव युवयोः युवयाम्, युवाकमिति परे । युवयि युवयोः युवासु ।

एवम् आवामाचक्षाणः अहम् आवाम् वयम्। आवाम् आवाम् आवान्। आवया, आवेनेति केचित्, आवाभ्याम् आवाभिः। मह्यम् आवाभ्याम् आवभ्यम् । आवत् आवाभ्याम् आवत् । मम आवयोः आवयाम् आवाकमिति परे। आवयि आवयोः आवासु ।

त्वार्थयोस्त्वाद्वाद्याः अस्-भिस्-सुप्सु तु डा। त्वार्थयोस्तयोस्त्वाद्वाद्यादेशाः स्युः औ, डा तु अस्-भिस्-सुप्सु परेषु, डइत् । युष्मान् आचक्षाणः त्वम्, तौ युवाम्, ते यूयम्, तं त्वाम्, तौ युवाम्, तान् युष्मान् ।

टाङ्योर्यङ् भ्यसामोस्त्वनङ् । त्वार्थयोस्तयोर्यङ् स्यात् टाङ्योः परयोः, अनङौ तु भ्यसि आमि च, नङाविती। तेन त्वया, ताभ्यां युवाभ्याम्, तैर्युष्माभिः। तस्मै तुभ्यम्, ताभ्यां युवाभ्याम्, तेभ्यः युष्मभ्यम्, युषभ्यम्, युड्भ्यमिति केचित्। तस्मात् त्वत्, ताभ्यां युवाभ्याम्, तेभ्यः युष्मत् युषत् । तस्य तव, तयोः युवयोः, तेषां युष्मयाम् युषयाम्, युष्माकम् युषाकमिति परे। तस्मिन् त्वयि, तयोः युवयोः, तेषु युष्मासु ।

एवमस्मानाचक्षाणः अहम् आवाम् वयम्। मम् आवाम् अस्मान् । म्या आवाभ्याम् अस्माभिः। मह्यम् आवाभ्याम् अस्मभ्यम् असभ्यम्, अम्भ्यमिति केचित्। मत् आवाभ्याम् अस्मत् असत्। मम आवयोः अस्मयाम् असयाम्, अस्माकम् असाकमिति परे। म्यि आवयोः अस्मासु ।

ये तु मपर्य्यन्तस्येति (१) पाणिनीयसूत्रे मान्तस्येति कृते सिद्धे परिपदोपादानं अधिकभागव्यवच्छेदार्थं, तेनाधिकभागव्यवच्छेदाभावे नैते त्वाह्राद्यादेशा भवन्ति इत्याहुः, तेषां मते तु—

युष्मऽस्मोरनङ् ङा-यङौ तु अमसमौ-भ-सुपि टाङ्योसि। ङि-क्विबन्तयोर्युष्मदस्मदोर्युष्मऽस्मोरन् अङ् च स्यात्, ङा तु शसि अमि औकारे भकारे सुपि च परे, यङ् तु टाङ्योरोसि च, ङडाविती।

युवामाचक्षाणौ युष्मानाचक्षाणौ वा—युष्मं युषं, तौ युषां, ते युष्मां युषं, तं युषां, तौ युषां, तान् युष्मान्, तेन युष्या, युष्मेति केचित्, ताभ्यां युषाभ्यां, तैः युष्माभिः, तस्मै युष्मं युषं, ताभ्यां युषाभ्यां, तेभ्यः युष्मभ्यं युषभ्यं, तस्मात् युष्मत् युषत्, ताभ्यां युषाभ्यां, तेभ्यः युष्मत् युषत्, तस्य युष्म युष, तयोः युष्योः, तेषां युष्मयां युषयां, युष्माकं युषाकमिति परे, तस्मिन् युष्यि, तयोः युष्योः, तेषु युषासु। एवम् आवामाचक्षाणः अस्मानाचक्षाणौ वा—अस्मम् असम्, तौ असाम्, ते अस्मम् असम्, तम् असाम्, तौ असाम्, तान् असान्, तेन अस्या, अस्मेति केचित्, ताभ्याम् असाभ्याम्, तैः असाभिः,

(१) ७।२।९१—इति पाणिनीयसूत्रम्। अस्यार्थः—अत्र मपर्य्यन्तस्य इत्यधिकारोऽस्ति, तेन सर्वे युष्मदस्मदोरादेशा मपर्य्यन्तस्यांशस्यैव भवन्ति; एतेन यदा मपर्य्यन्तादंशात् परतो युष्मदस्मदोरन्योऽपि भागः स्यात् तदैव तयोस्त्वाह्राद्या आदेशा स्युः। यदा तु युष्मदस्मदौ ङिक्विबन्तौ भवतस्तदा मकारात् परम् अंशान्तरस्याभावात् तयोर्मपर्य्यन्ता अन् अङ् ङा यङ् एते आदेशा भवन्ति, न तु त्वाह्राद्या इति फलितार्थः। अतएवात्र कैयट—"केचित्तु मान्तयोर्युष्मदस्मदोरादेशानिच्छन्ति, मपर्य्यन्तग्रहणं हि अत्र परिशिष्टग्रहणसम्भवार्थमिति। परिशिष्टाभावे न भाव्यमादेशैरिति मुञ्जीति।"

२२१। द्वीचीषीणां क्वैद्वैव्वैं स्ते-मे वां-नौ वस्-नसौ वाऽपादवाक्यादावचवाहाहैवाहृगृहश्यर्थैं स्वा-मा त्वमा।

(द्वी-ची-षीणां ६।।।, क्वैः ३।।।, द्वैः ३।।।, व्वैः ३।।।, ते मे ।१।।, वां-नौ ।१।।, वस्-नसौ १॥, वा ।१।, अपादवाक्यादौ ७।, अ-च-वा-ह-अह-एव अहृगृहश्यर्थैः ३।।।, त्वा-मा ।१॥, तु ।१।, अमा ३।)

---

तस्मै अस्मम् असम्, ताभ्याम् असाभ्याम्, तेभ्यः असभ्यम् असभ्यं, तस्मात् असत् असत्, ताभ्याम् असाभ्याम्, तेभ्यः असत् असत्, तस्य अस्म अस, तयोः अस्योः, तेषाम् असयाम् असयाम्, अस्माकम् असाकमिति परे, तस्मिन् अस्मि, तयोः अस्योः, तेषु असासु।

प्रकृतिप्रत्यययोरादेशावेच्छत्यन्यः (१)। तन्मते युट् युष्मौ युष्मः, मः अस्मौ अस्मः इत्यादि, तथाच युष्मौ इन्द्राहहसतौ अस्मो-वै वाजिबन्धव इत्यादि।

२२१। द्वी। द्वी च ची च षी च तासां, ते च मे च तौ, वां च नौश्च तौ, वस्च नस्च तौ। पादश्च वाक्यञ्च ते, तयोरादिः पाद-वाक्यादिः, न पादवाक्यादिःअपादवाक्यादिस्तस्मिन्। पादः श्लोक-चतुर्थो भागः। वाक्यं साकाङ्क्षपदसमुदायः, न तु निराकाङ्क्षपद-समुदायः, तेन ओदनं पच तव पुत्रस्तिष्ठति इत्यत्र न स्यात्।

---

(१) प्रकृतिर्भिक्किवन्तो युष्मद् अस्मद्, प्रत्ययः सिऔजसादिः, एतयोः स्थाने विहिता आदेशा न स्युरिति कस्यचिन्मतम्।

युष्मदस्मदो र्द्वितीयाचतुर्थीषष्ठीनां कैः सहितयो स्ते-मे, द्वे वां-नौ, त्वे वस्-नसौ, क्रमाद्वा स्याताम्, अमा युक्तयोस्तु त्वा-मा, नतु पादस्य वाक्यस्य चादौ स्थितयोः, न चवाद्यैरदर्शनार्थदृश्यर्थैश्चभिश्च योगे।

दामोदरस्त्वावतु मापि मित्र !,
ददातु ते मे ऽपि मुदं मुकुन्दः।
निहन्तु ते विष्णुरघानि मेऽपि,
रचलसौ वामपि नौ मुरारिः॥
ददातु वां नावपि शर्म्म कृष्णः,
करोतु वां श्रीदयितो दयां नौ।
पुष्णातु वो नोऽपि हरि र्धनं वो
ददातु नो, हन्त्वशुभानि वो नः॥

---

दृशिरर्थो येषां ते, न दृक् अदृक्, अदृशि दृश्यर्था अदृग्दृश्यर्थाः; पश्चात् चश्च वाश्च हश्च अहश्च एवश्च अदृग्दृश्यर्थाश्च ते, न ते चवाहाहैवाऽदृग्दृश्यर्थाः तैः। तथाच—चाद्यैर्योगे, ये धातवो दर्शनार्था अचाक्षुषज्ञानार्थतया प्रयुक्तास्तैश्च योगे एते आदेशा न स्युरित्यर्थः। न च दृश्यर्थानां चाक्षुषज्ञानमेवार्थ इति वाच्यं, यतः—पशुः पश्यति गन्धेन बुधाः पश्यन्ति पण्डिताः। राजा पश्यति कर्णाभ्यां भूते पश्यन्ति वर्व्वराः इत्याद्युक्तेः। त्वाच माच तौ।

दामोदर इत्यादि। हे मित्र दामोदरस्त्वा त्वाम् अवतु, मा मामपि। मित्रेति सर्व्वत्रान्वयः। हे मित्र मुकुन्दस्ते तुभ्य मुदं हर्षं

अपादवाक्यादौ किं—

युष्मानवतुविरतं कृष्णोऽस्मान् पातु शङ्करः।

च-चादियोगे किं—

तुभ्यं मह्यञ्च दद्यात् त्वं गोविन्दो मह्यमेव शम्।

श्रीकण्ठो मामपेक्ष्य त्वामालोकयति पूजकम्॥

---

ददातु, मे मह्यमपि। हे मित्र विष्णुस्ते तव अघानि पापानि निहन्तु, मे ममापि। हे मित्रे मुरारिर्वां युवां रक्षतु, नौ आवामपि। हे मित्रे कृष्णः शर्म्म कल्याणं वां युवाभ्यां ददातु, नौ आवाभ्यामपि। श्रीर्दयिता यस्य सः, हे मित्रे श्रीदयितः श्रीकृष्णो वां युवयोः सम्बन्धे दयां करोतु, नौ आवयोः सम्बन्धेऽपि। हे मित्राणि हरिर्वो युष्मान् पुष्णातु, नोऽस्मानपि। हे मित्राणि हरिर्वो युष्मभ्यं धनं ददातु, नोऽस्मभ्यमपि। हे मित्राणि हरिर्वो युष्माकं सम्बन्धे अशुभानि हन्तु, नोऽस्माकं सम्बन्धेऽपि।

युष्मान् अवतु गोविन्द इति तु पादादौ। अस्मान् पातु शङ्कर इति वाक्यादौ। तथाच—संसारसागरे मग्नान् युष्मानवतु केशवः। स हि साधुजनानन्दवर्द्धनः करुणानिधिरिति। एवं त्वामामनन्ति प्रकृतिमित्यादि कुमारसम्भवे च। तुभ्यं मह्यमित्यादौ च-शब्दयोगान्नादेशः। एवं तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुरित्यादौ एव-शब्दयोगान्नादेशः। एवं ग्रामो युवयोर्वा स्वं, ग्रामो युवयोर्ह स्वं, ग्रामो युवयोरह स्वम्। तथा अस्मदोऽपि। यदा तु युष्मदस्मदां न योगस्तदा स्यादेव, तेन हरो हरिस्त्वा पातु इत्यादौ स्यात्। श्रीकण्ठ इत्यादि—

२२२ । सदानूक्तेऽसादिप्राः ।

( सदा ।१।, अनूक्ते ७।, असादिप्राः ५। ) ।

अनयोरेते अन्वादेशे नित्यं स्युः, नतु सपूर्व्वात् प्रथमान्तात् परयोः ।

यूयं वयं विनीता स्तत् पातु वो नो महेश्वरः ।
यूयं वयं हितास्तेन सोऽस्मान् पातु स वः शिवः ॥

---

श्रीकण्ठः शिवः मामपेक्ष्य अपेक्षां कृत्वा त्वां पूजकं आलोकयति विचारयतीत्यर्थः । अत्र ईक्ष-लोकृङोरपेक्षा-विचारयोर्वर्त्तमानत्वात् नैते आदेशाः । एवं यदाऽहगृहस्थर्थेन युष्मदस्मदोर्योगस्तत्सम्बन्धिना तु योगस्तत्रापि निषेधः, तेन ग्रामस्तव स्वं समीक्ष्य गतः इत्यादावपि न स्यात् ।

२२२ । सदा । उक्तस्य पश्चादुक्तं अनूक्तं तस्मिन् । आदिना पूर्व्ववर्त्तिपदेन सह वर्त्तमानः सादिः, सादिश्चासौ प्रोचेति सादिप्री, न सादिप्री असादिप्री तस्याः ।

यूयमित्यादि । यूयं विनीता, वयमपि विनीताः, तत् तस्मात् कारणात् वो युष्मान् नोऽस्मानपि महेश्वरः पातु । असादिप्रीत्युदाहरति यूयमित्यादि । यूयं हिता, वयमपि हिताः, तेन कारणेन स शिवो नोऽस्मान् पातु, स शिवो वो युष्मान् पातु, सपूर्व्वात् प्रथमान्तात् पूर्व्वेनैव विकल्पः ।

छन्दान्तैकार्थात् सामान्यपूर्व्वादामन्त्रणात् । सामान्यपूर्व्वात् छन्दान्तैकार्थादामन्त्रणादेते आदेशाः नित्यं स्युः (१) । हे छात्र

(१) 'पृथग्योगादन्वादेश निवृत्ति । विशेष्यपूर्व्वत्वेन विकल्पे प्राप्ते नित्यविभा

## २२३। नाविशेष्यान्याद्यामन्त्र्यात्।

( न ।१।, अविशेष्यान्याद्यामन्त्र्यात् ५। )।

विशेष्यपूर्व्वमनामन्त्र्यपूर्व्वञ्च हित्वा अन्यस्मादामन्त्र्यादेते आदेशा न स्युः।

शम्भोऽस्मान् रक्ष लक्ष्मीश सेव्य नोऽवाश सर्व्वं नः।

सुपात् सुपादौ सुपादः, सुपादं सुपादौ।

---

*वैयाकरण ते स्वं, छात्रौ वैयाकरणौ वां स्वम्। अहान्तेति किं*—छात्राः कुमारा युष्माकं स्वं, छात्राः कुमारा वः स्वम्। एकार्थेति किं—देवदत्त यज्ञदत्त युवयोः स्वम्। सामान्यपूर्व्वादिति किं—देवदत्त जटिल तव स्वम्।

२२३। नावि। विशिष्यते यत् तद्विशेष्यं, विशेष्यञ्च अन्यञ्च ते, ते आदौ यस्य तद्विशेष्यान्यादि, न विशेष्यान्यादि अविशेष्यान्यादि, अविशेष्यान्यादि च तत् आमन्त्र्यञ्चेति तत् तस्मात्। आमन्त्र्यं सम्बोधनम्। तथाच—केवलामन्त्र्यपूर्व्वयोर्विशेषणामन्त्र्यपूर्व्वविशेष्यामन्त्र्यपूर्व्वयोश्च एते आदेशा न स्युः। विशेष्यामन्त्र्यपूर्व्वविशेषणामन्त्र्यपूर्व्वयो रामन्त्र्यभिन्नपदपूर्व्वामन्त्र्यपूर्व्वयोश्च पूर्व्ववैव विकल्प इत्यर्थः(१)। शम्भोऽस्मान् इति केवलामन्त्र्यपूर्व्वत्वान्निषेधः। लक्ष्मीश सेव्य न इति विशेष्यामन्त्र्यपूर्व्वविशेषणामन्त्र्यपूर्व्वत्वात्

---

मम्। अनेकेष्वेकमन्यभिप्रायेऽत्र सामान्यम्। अतच्छात्रादियन्दः सामान्यइत्ति· देवदत्तादियन्दस्तु *विशेषइत्ति"रिति इहन्मुग्धबोधे न्यायपञ्चाननपादैरुक्तम्।*

(१) *ततश्च पूर्व्वपदरहितात् विशेषणपूर्व्वाच्च आमन्त्र्यात् परयो र्न स्युरिति निष्कर्ष* इति दुर्गादास·।

## २२५। अचोऽल्लोपो घंश्च।

( अचः ६।, अत्।६।, लोपः १।, घंः १। च।१। )।

अचोऽकारस्य लोपः स्यात् पौ परे, पूर्व्वस्य च घंः। प्रतीचः प्रतीचा प्रत्यग्भ्यामित्यादि।

## २२६। तिर्य्यगमुमुयगदमुयगुदचां तिरश्चामुमुईचादमुईचोदीचः।

( तिर्य्यक्—उदचां ६।।।, तिरश्च—उदीचः १।।। )।

एषामेते क्रमात् स्युः पौ परे। तिरश्चः तिरश्चा तिर्य्यग्भ्यामित्यादि। अमुमुईचः अमुमुईचा अमुमुयग्भ्यामित्यादि। एवमदमुयङ्। उदीचः उदीचा उदग्भ्यामित्यादि। शेषं पूर्व्ववत्।

---

२२५। अचो। अदिति लुप्तषष्ठ्यन्तं पदम्। अच इत्यनकारनिर्द्देशात् गुर्व्वश्चः गुर्व्वश्चा, गवाश्चः गवाश्चा इत्यादौ न स्यात्। अवाभावपक्षे गोश्चः गोश्चा। गोरति वा, गो-अश्चः गो-अश्चा इति। लुप्तनकारस्य तु गोचः गोचा नौचः नौचा, नदीचः नदीचा इत्यादौ अल्लोपः स्यादेव (१)। प्रतीचः इति अचोऽकारल्लोपे तत्पूर्व्वाव्यवहितस्यैव घंः। तेन मरुतं अञ्चति तान् मरुचः इत्यादौ व्यवहिते न स्यात्, दधीचः दृचः समीचः इत्यादौ स्यादेव।

२२६। तिर्य्यक्। तिर्य्यङ् च अमुमुयङ् च अदमुयङ् च उदङ् च ते तेषाम्। तिरश्च च अमुमुईच अदमुईच उदीच ते।

---

(१) अत्र एवकारेण दीर्घस्याप्यन्न इति ज्ञापितम्। तदुक्तं गङ्गाधरेण—"र्घ इति सम्भवपरो विधि, तेन स्वभावदीर्घादप्यल्लोपः स्यादिति।

(१५५) शक्राजेति चस्य षत्वे, तन्निमित्तस्य शस्य सत्वे,

(२१४) स्यादेः सोलोपः। सुहृट् सुहृड् सुहृदौ सुहृदः इत्यादि।

(१६५) नसव्महत इति घैः। (१८४) स्यान्तस्य लोपः। महान् महान्तौ महान्तः, महान्तं महान्तौ महतः, महता महद्भ्यामित्यादि।

भवन् भवन्तौ भवन्तः, भवन्तं भवन्तौ भवतः, भवता भवद्भ्यामित्यादि। शेषं महद्वत्।

(१८६) अत्वसोऽधोरिति—श्रीमान्, शेषं भवद्वत्, एवं यशस्वदादयः।

२२७। भगवदघवद्भवतां भगोऽघो-भो वा धौ।

(भगवत्-अघवत्-भवतां ६।।।, भगो-अघो-भो ।१।।।, वा ।१।, धौ ७।)।

---

असन्धिनिर्देशात् प्रयोगेऽपि न सन्धिः। वा-सन्धिविधानात् भगुम्वीचः भदम्वीचः इत्याद्यपीति कश्चित्। एषां किम्—भगुद्रीचः भदद्रीचः सध्रीचः इत्यादि।

२२७। भग। भगवांश्च अघवांश्च भवांश्च ते तेषाम्। भगोश्च अघोश्च भोश्च ते, लुप्तप्रोक्तं दम्। एते सान्ता आदिश्यन्ते इत्यन्ये।(१) अत्र भगवदघवद्भवतां धौ वाऽतो डोरिति कृते सिद्धे

---

(१) अत्र केषु पुस्तकेषु 'भाष्ये त्वकचिरर्थकस्यैव मघवा' इति "भाष्ये निरर्थकस्यैव मघवा" इत्येवमधिक पाठभेदोऽस्ति। तत्रार्थः सुधीभिश्चिन्त्य इति।

एषामेते क्रमात् स्युर्वा धौ परे। हे भगोः हे भगवन्, हे अघोः हे अघवन्, हे भोः हे भवन्। शेषं श्रीमद्वत्।

(१८३) अद्देरित्युक्ते नं नुण्—ददत् ददती ददतः इत्यादि। एवं जक्षत्-जाग्रदादयः।

(१५५) भ्रस्त्राजेति षड्—विट् विड् विशौ विशः, विशं विशौ विशः, विशा विड्भ्यामित्यादि।

(१७८) मुहां घड् इति—नक् नग् नट् नड् नशौ नशः, नशं नशौ नशः, नशा नग्भ्यां नड्भ्यामित्यादि।

(१८५) श्वेतवाहेति डस्ड्—पुरोडाः, हे पुरोडाः हे पुरोडः, पुरोडाशौ पुरोडाशः, पुरोडोभ्यामित्यादि।

(२१२) वृडिति कड्—स्रक् स्रग् स्रजौ स्रजः स्रजा स्रग्भ्यामित्यादि।

दधृक् दधृग् दधृषौ दधृषः, दधृग्भ्यामित्यादि।

षट् षड् षड्भिः षड्भ्यः षण्णां षट्सु।

---

गुरुप्रयासः, अ भो भगोऽघोभ्य इत्यत्र भगोसाविध्येऽपि सामान्य-भो-ग्रहणार्थंस्तेन भो इचाः भो अमराः भोयमराः इत्यादौ स्यात्। अत्र भवद्ग्रहणं नेच्छन्ति परे। शेषं श्रीमद्वदिति—(२) एतेनात्र स्त्रिसंज्ञ-डवतुप्रत्ययान्त-भवत्-शब्दस्यैव ग्रहणमित्युक्तम्। अतएव शवन्तः पूर्व्वोदाहृतः।

---

(२) संक्षिप्तसारे सुबन्तपादे १४म सूत्रस्य वृत्तौ "अव्ययोऽपि भोः शब्दोऽस्ति, तेन भो मा?रपि भो देवदत्त यज्ञदत्त विष्णुमित्राः। तथाच भाष्यम्—अव्ययमेव भोः शब्दो, नैषा भवत प्रकृति रित्यु"क्तम्। 'भगो' शब्दस्य अघो- शब्दस्य चाव्ययत्वं परा

२२८। सषेसुस्-सजुषह्नां रङ् फेऽचः ।

(सष-इस् उस् सजुष्-अह्नां ६।।।, रङ् ।१।, फे ७।, अच ६।)।

सस्य स्थाने जातस्य षस्य इसुसः सजुषोऽह्नश्च रङ् स्यात् फे परे, नतु चान्तस्य ।

२२९। र्व्यनच्-तयीको धोर्घोऽकुर्छुरोऽखेः ।

( विं ७।, अनच्-तयि ७।, इकः ६।, धोः ६।, घंः १।, अकुर्-छुरः ६।, अखेः ६।) ।

धोरिको घंः स्यात् वि रेफे च, नतु कुरछुरोः, न च खेः, नाचि तये च ।

पिपठीः पिपठिषौ पिपठिषः, पिपठीर्भ्यां पिपठीःषु । एवं चिकीर्षादयः ।

---

२२८। सषे। सस्य षः सषः, सषश्च इश्च उश्च सजुश्च अह्नश्च तानि तेषाम् । न च अच तस्य । इस् उसौ स्वरूपौ, सजुष् प्रकृतिषान्तः, अहन इति नञ्पूर्व्व हाकोऽन्नन्तः ।

२२९। र्व्यं। रश्च वश्च तत् तस्मिन्, तयासौ यश्चेति तय, अच तयश्च तत् अच् तय, न अच्तय अनचतय तस्मिन् । कुर्च छुर्च तत्, न तत् अकुरछुर् तस्य । न खिरखि तस्य । (१) पिपठीरिति सषो रङि अनेन घंः। एके तु दान्तत्वात् षत्वस्यासिद्धौ हसन्तत्वा-

---

र्यन्यत्रा व्यवस्थितं, तन्मते अगो देवदत्त यज्ञदत्त विष्णुमित्रा इत्यादिर्भवती' ति तत्रैव गोयीचन्द्र ।

(१) "व्याख्यायां रेफे वकारे च इति वक्तव्ये यद्विरेफ इत्युक्त तत् र्वि इत्यस्य अनच्तयीत्यनेन क्रमसम्बन्धाभावार्थ मिति गङ्गाधर ।

दोः दोषौ दोषः। (११७) पाददन्तेति दोषन् वा। दोष्णः दोषः, दोष्णा दोषा, दोषभ्यां दोर्भ्यामित्यादि।

(२१४) स्यादेः सो लोपः। विविट् विविड् विविचौ विविचः, विविड्भ्यामित्यादि।

पिपक् पिपग् पिपचौ पिपचः पिपग्भ्यामित्यादि। एवं गोरक्-दिधक्षादयः।

सुपीः सुपिसौ सुपिसः, सुपीर्भ्यां, सुपीःषु। एवं सुतूः।

विद्वान्, हे विद्वन् विद्वांसौ विद्वांसः, विद्वांसं विद्वांसौ।

---

द्रङ् इत्याहुः। तन्मते चिकीर्षुं इत्यत्र रात् सस्येति सलोपे रङ्-भिन्नरेफस्य न विरिति। तदसत्। सपेंसुस् सजुषक्रामित्यत्र सषोऽन्त्य निरर्थकत्वापत्तेरिति। अस्मन्मते तु रङि द्रौ द्रौति पूर्व्वरेफ-लोपेऽपि राद्रङ्वर्ज्जनात् न विः(१)। दिवमिच्छति दिव्यति इत्यत्र भूतपूर्व्वत्वमाश्रित्य न वेः। अनच्-तयोरिति किं—गिरौ गिरः (२) धुरं वहति धुर्य्य इत्यादि। अकुर-छुर इति किं—कुर्य्यात् छुर्य्यात्। अच्छेरिति किं—चिव्यतुः। धोः किं—सर्पिः धनुरित्यादि।

---

(१) पूर्व्वं १८८ रङो वि सुपीति सूत्रस्य टीकायां "चिकीर्षुं इत्यत्र तु घरादिति विधाना"दिति सन्दर्भस्य दुर्गादासमतेनव्याख्याततयाऽत्र (२) चिह्नित टिप्पनी कृता। वस्तुतस्तु रङो वि सुपीति सूत्रे एव घरादिति वक्तव्यं, तेन रात् परस्य रङो न विरित्येव तर्कवागीशस्याशयः। अतएवात्र राद्रङ्वर्ज्जमात्रविरित्युक्तम्।

(२) तयकार-शाकपार्थिवादित्वात् मध्यपदलोपे, तेन गौरर्थे धूरन्त विपठौरोक्तः आभीरादेश्च इत्यादौ दीर्घं स्यादेवेति दुर्गादासः। अत्र 'आभीरक' इति पाठक्रमिति मधुसूदनः।

विविडिति चान्तवर्ज्जनात् न रङ्। एवं लिलिडित्यादि। (१) पिपगिति यढान्यस्थान-जत्वात् न कलोपः। गोरगिति रस्रवर्ज्जनात् न कलोपः। दिधगिति दादे र्हस्य घत्वे घस्थानजत्वात् न कलोपः। दन्त्यसान्तस्य उदाहरणमाह दोरिति। इदं मूर्द्धन्यान्तमिति केचित्(२); तन्न, दोषानित्यत्र डत्वापत्तेः, तान्तसान्त-

(१) अत्र "परे तु रङि वा रं प्रति षत्वस्यासिद्धत्वात् विवी विवोः व्हविवीः मधुलिवीरित्याहु"रित्यधिकः पाठः।

(२) तथाच दुर्गादासः—"दोरिति दसु दसनृचेष्टत्वे इत्यस्मात् क्विपि भुजे वाच्ये मनोषादित्वादकारस्य ओकारे अव्ययादित्वात् षत्वे सषेति रङ्" इत्याह। तर्कवागीशस्तु दमेर्डोस् इत्योणादिकसूत्रेण दमधोर्डोसि कृते सान्तोऽयमिति मत्वा सूत्रे एव गोरग् दिधगादय" इति सान्तशब्दोदाहरणानन्तरं दोषशब्दमुदाहृतवान्। अस्य च षान्तत्वे दोष्णानित्यादौ डत्वापत्तिश्च दर्शितवान्। अतोऽस्मिन् ग्रन्थे तर्कवागीशमतानुसारेणास्य सूत्रे तथैव सन्निवेशो युक्तः। किन्त्वत्र बहुना मतभेदमालोक्य माध्वाभिः प्रचरत्पद्धतिरुल्लङ्घिता। तत्र दुर्गादासमतं प्रागेव दर्शितम्।

सिद्धान्तकौमुद्यां "नुम्विसर्जनीयशर्व्यवायेऽपि" (८।३।५८) इति सूत्रस्य वृत्तौ "दमेर्डोस्, छिन्नत्वसामर्थ्याद्विलोपः, षत्वस्यासिद्धत्वाद्रुत्वविसर्गौ" इत्युक्तम्। एतेन षान्तत्वमस्य प्रतीयते।

कातन्त्रे चतुष्टयवृत्तौ "दस्तुम् दोषां घोषवति रः" इति २०१ सूत्रस्य "इषन्तस्य ऊषन्तस्य दोष शब्दस्य च रो भवति घोषवद्विभक्तौ' इति वृत्तौ षान्तोऽयमुक्तः (घोषवत् संज्ञा अस्मन्मते हशसंज्ञासमानार्था)। षत्वापत्तिवारणाय तस्य रो विहितः। तथाच—"घोषवति रो भवति अघोषे रो न भवतीति व्याहरित्वलादस्य प्रतियोगी विसृष्ट साधितो भवति। सर्पिःषु धनुःषु दोःष्विति। अन्यथा सर्पेषम् धनेषम् दमेर्डोस् इति प्रत्ययस्यत्वात् षत्वमेव स्यात्। विसर्गे च कृते पक्षे पररूपं भवतीति"—पञ्जी।

संक्षिप्तसारे सुबन्तपादे २६० सूत्रस्य वृत्तौ "दोष् दोषश्चे"ति निर्द्देशात् स्वामि-भूत शब्दं पाणिनो इच्छते।

## २३० । वसो वंः सेमप्युमंतुप्योः ।

(वसोः ६।, वः १।, सेम् ।१।, अपि।१।, उः १।,मतुप्योः ७॥) । वसो वं शब्द इम्सहितोऽपि उः स्यात् मतौ पौ च परे ।

विदुषः विदुषा । (१८४) स्रसध्वस्वस्विति दङ् । विद्वद्भ्या-मित्यादि । पेचिवान् पेचिवांसौ पेचिवांसः, पेचिवांसं पेचिवांसौ पेचुषः, पेचुषा पेचिवद्भ्यामित्यादि । जगन्वान् जगन्वांसौ जगन्वांसः, जगन्वांसं जगन्वांसौ । वसोर्वे तन्निमित्तस्य (१) नस्य मत्वे—

---

योरेव दत्वनिषेधात् । दोर्भ्यामित्यादौ तु सस्य वौ कृते रिचोऽवे इति रः । सुपीरिति सुपूर्व्वात् पिस् कि लिपि इत्यस्मात् क्विप्, इसन्तत्वात् रङि षः । एवं तुस स्थाने सुतूः इति ।

२३० । वसोः । इमा सह वर्त्तमानः सेम् । मतुश्च पिश्च तौ तयोः । अपिशब्दात् केवलवसोर्वस्यापि उः, तेन विदुषः विदुषान् इत्यादौ स्यात् । वसोर्वे इत्यादि–निमित्तापाये

---

भरतसेनेनापि स्वकृतद्रुतबोधव्याकरणस्य "झकभस्याश्च दधो सजुषश्चोच फे रुः" इति सूत्रटीकायां "दोरिति द्रुमधातोरौणादिकडोस, भभयोस्तु पदान्तवद्भावातिदेशिककार्यस्य कश्चिद्व्यभिचारात् षत्वं, तत सस्य स्थाने जः। तस्य षस्य रुः, ततः षिलोपः, दर्शितदृष्टैव न्यायस्वीकरणमिति प्रथमं न षिलोपः । षिं वा भभयो सस्यैव विसर्गः । दोषाविश्यादौ षत्वं भवत्येव" इत्युक्तवता यान्तमान्तपक्षद्वयमेवाश्रितम् । दोष्शब्दोदाहरणन्तु रुविधायकसूत्रस्य विविक्षुमन्दादिप्रत्युदाहरणानन्तरं प्रदर्श्य तर्कवागीशभट्टाचार्यमहाशयैरपि तथै रोचते इति भट्टान्तरेण दर्शितमिति दिक् ।

(१) स एव वकारो निमित्तं यस्य स तस्य । भो भोम इति वे परे मस्य म-विधानात् ।

२३१। हन-गम-जन-खन-घसामुङ्लोपोऽङेऽच्यणौ।

(हन—घसां ६।॥, उङ् ।६। लोपः १।, अङे ७।, अचि ७।, अणौ ७।)।

एषामुङ्लोपः स्यादणावचि, नतु ङे।

जग्मुषः, जग्मुषा जगन्वद्भ्यामित्यादि। एवं जग्मिवान्।

(१६५) अधोरित्युक्तेः, सुहिन् सुहिंसौ सुहिंसः, सुहिन्भ्याम्। ध्वत् ध्वसौ ध्वसः, ध्वद्भ्याम्। एवं स्रत्। उक्थशाः, हे उक्थशाः हे उक्थशः, उक्थशासौ उक्थशासः, उक्थशोभ्यामित्यादि।

---

नैमित्तिकस्याप्यपाय इति न्यायात् जगमुष् इति स्थिते अत्र सूत्रयति।

२३१। हन। हन् च गम् च इत्यादि च-सः। उङिति लुप्त षीर्क्तं दम् (१)। न ङः अङः तस्मिन्। न भवति णुर्यस्मिन् तस्मिन्। घस इत्यत्र सामान्य-घसग्रहणं, तेन घसधोः अद आदिष्टस्य घसश्च। सुहिन्निति सुपूर्व्वात् हिंसि ध कि हिंसे क्विप्, इदित्वान्नुण्, नसव्महन्न इत्यत्र ध्रुवर्ज्जनात् न षः, स्यान्तलुप्। ध्वदिति ध्वन्स-धोः क्विप्, स्रस्ध्वस् इति दङ्। एवं स्रन्स-धोः क्विप्, स्रत्।

---

(१) "अल्लोप इति सिद्धे उङ्लोपकरणं हिताद्युङ्लोपमिन इति सूत्रे एषां प्राप्त्यर्थमिति गङ्गाधरः।

२३२। पुंसोऽसुङ् घौ।

(पुंसः ६।, असुङ् ।१।, घौ ७।)।

पुंसोऽसुङ् स्यात् घौ परे, उङावितौ।

पुमान् पुमांसौ पुमांसः, पुम्भ्यां पुंभ्यामित्यादि।

२३३। सेर्डोशनस्-पुरुदंशोऽनेहसोऽधेः।

(सेः ६।, डा ।१।, उशनस्-पुरुदंशस्-अनेहसः ५।, अधेः ६।)।

एभ्यः परस्य सेर्डा स्यात् नतु घेः। उशना।

२३४। घे ङ-ङनौ वोशनसः।

(घेः ६।, ङ ङनौ १॥, वा ।१।, उशनसः ५।)।

उशनसः परस्य घे ङ-ङनौ वा स्तः, ङ इत्। हे उशन हे उशनन् हे उशनः, उशनसौ उशनोभ्याम्।

अनेहा, हे अनेहः, अनेहसौ अनेहसः। एवं पुरुदंशा।

वेधाः, हे वेधः, वेधसौ वेधसः इत्यादि।

(१८६) अधोरित्युक्तेः, सुवः सुवसौ।

---

२३२। पुंसः। ङिदन्त्यस्य विधानार्थः। उदित् नुमर्थः। पुम्भ्यामिति झभि दान्तत्वात् वा यम्, तेन पुंभ्यामित्यपि।

२३३। सेर्डा। उशना च पुरुदंशा च अनेहा च (१) तत् तस्मात्। ङित्वात् टिलोपः।

२३४। घेः। ङश्च ङंश्च तौ (२)। ङित्वात् टिलोपः।

---

(१) उशना दैत्यगुरुः। पुरुदंशा इन्द्रः। अनेहा कालः।

(२) यदुक्तं—'मुग्धबोधे तु पञ्चकारितादर्श्यं कार्यं तथा नामकरणामस्य' इति।

२३५। अदसः सेरौः।

(अदसः ५।, सेः ६।, औः १।)।

अदसः परस्य सेरौः स्यात्। असौ।

२३६। मात् स्वर्घावुज।

( मात् ५।, स्वर्घौ १॥, उ-ऊ ।१॥)।

अदसो मात् परौ स्वर्घावुदूतावाप्नुतः। अमू।

२३७। एरी व्वे। (एः १।, ई ।१।, व्वे ७।)।

अदसो मात् परो व्वे निष्पन्न एकार ई स्यात्। अमी। अमुम् अमू अमून्। (१२४) टादसयास्त्रियान्तु ना। अमुना

---

२३५। अदसः। पूर्व्वसूत्रात् वाऽनुवर्त्त्य तस्य व्यवस्थावाचित्वात् साकोऽदसः सेरौ वा स्यात्। तेन असकौ असुकः असुक इति। स्त्रियाम् असकौ असुका असुका इति। क्लीवे असुकम् असुकम् अद इति (१)।

२३६। मात्। स्व च घंच तौ, उच ऊच तौ। द्वयड्निर्देशात् न सन्धिः। अत्रापि वाऽनुवर्त्त्यं तस्य व्यवस्थावाचित्वात् असुक इत्यत्र सादपि उकारः।

२३७। एरी। एरिति किम्—अमूः स्त्रियः अमूनि कुलानि इत्यादौ न स्यात्॥ ॥

इति हसन्तपुंलिङ्गपादः॥ ॥

---

(१) "क्लीवे तु सेर्मुकि कृते मुकि न तमेति निषेधात् त्यदां सदोरित्यस्य दोषो-ऽदसपेत्यस च व्याप्तौ अदः अदकः कुल"मिति दुर्गादासः।

अमूभ्याम् अमीभिः, अमुष्मै अमूभ्याम् अमीभ्यः, अमुष्मात् अमूभ्याम् अमीभ्यः, अमुष्य अमुयोः अमीषाम्, अमुष्मिन् अमुयोः अमीषु ।

इति हसन्त-पुंलिङ्ग-पादः ।

---

## हसन्त-स्त्रीलिङ्ग-शब्दः ।

### २३८ । नहो धङ् भौ ।

( नहः ६।, धङ् ।१।, भौ ७ ) ।

नहो हस्य धङ् स्यात् भौ परे ।

उपानत् उपानद् उपानहौ उपानहः, उपानद्भ्याम् ।

(२१२) चुडिति कङ् । उष्णिक् उष्णिहौ, उष्णिग्भ्यामित्यादि ।

### २३९ । दिव औङ् सौ ।

(दिवः ६।, औङ् ।१।, सौ ७।) ।

दिव औङ् स्यात् सौ परे । द्यौः दिवौ दिवः ।

---

२३८ । नहो । धकारोऽकार उच्चारणार्थः, ह्रोढ इत्यस्य बाधकम् ।

२३९ । दिव । गौणेऽपि अयं विधिस्तेनातिद्यौरित्यादि । साविति विषयसौ, तेन विमलद्यु दिनमित्यादौ स्यात् (१) ।

---

(१) "अव्युत्पन्नोऽयं दिवशब्द स्वर्गवाची । क्विबन्तस्य त्वौ ऊठादित्यूटि द्यु द्युवावित्यादी' ति मधुसूदनः । 'द्यौ स्वर्गे । दीव्यतीति क्विप्, बलादनुरोधात् न यस्य जट्"—इति गङ्गाधर । विमलद्यु इत्यत्र विमला द्यौ यस्मिन्निति वाक्ये

२४०। **वाम्याङ्।** (वा ।१।, अमि ७।, आङ् ।१।)।

दिव आङ् स्यात् वा अमि परे। द्यां दिवं दिवौ दिवः, दिवा।

२४१। **उहस्युङ्।** (उ-हसि ७।, उङ् ।१।)।

दिव उङ् स्यात् उवर्णे हसि च परे। द्युभ्याम्।

गीः गिरौ गिरः। एवं पूः।

(१५८) स्त्रियां त्रिचतुर इति चतसृ। चतस्रः चतस्रः चतसृभिः चतसृभ्यः चतसृभ्यः चतसृणां चतसृषु।

(१३४, २५०) टेरत्वे सत्याप्। का के काः इत्यादि, सर्व्वावत्। एवं यद्।

(२०४) इदमोऽयमितीयम्। इयम् इमे इमाः, इमाम् इमे इमाः, अनया आभ्याम् आभिः, अस्यै आभ्याम् आभ्यः, अस्याः

---

२४०। वा। पूर्व्ववद्गौणेऽपि, तेन अतिद्याम् अतिदिवमित्यादि (१)।

२४१। उह। उश्च हश्च तत् तस्मिन्। वेति नानुवर्त्तते, क्लीवे नौ लुब्वा धौ इति वा-ग्रहणात् (२)। उवर्णे यथा दिव उर्ड्डं द्यूर्ड्डं

---

विमलदिव् शब्दस्य गौणत्वेऽपि भाविति विषयसप्तमीविधानात् सेलुक्यपि श्रौङादेशे विमलद्यौ इति स्थिते क्लीवे स इति ह्रस्वः।

(१) "समानार्थस्य द्योशब्दस्य द्यामिति सिद्धेऽपि अयमारम्भः पूर्व्वाचार्य्यानुरोधादिति केचित्। वस्तुतस्तु तत्र (आम्शसोरिति सूत्रे) मुख्यस्यैव ग्रहणम्, अत्र तु गौणमुख्ययोरिति भेदः। तेन अतिदिव इत्यस्य अमि अतिद्याम् अतिदिवम्, तत्र तु अतिद्यो इत्यस्य अतिद्यावमिति"—गङ्गाधरः।

(२) विभाषाद्वयमध्यवर्त्तित्वात् नित्यत्वमित्यर्थः।

आभ्याम् आभ्यः, अस्याः अनयोः आसाम्, अस्याम् अनयोः आसु ।

स्रक् स्रजौ स्रजः, स्रग्भ्याम् ।

( १३४, २५० ) टेरले आप् । त्या त्ये त्याः इत्यादि, सर्व्वा-वत् । एवं तद् एतद् ।

वाक् वाचौ वाचः, वाग्भ्याम् ।

अप् शब्दो व्यान्तः । (१६५) नसव्मह्न इति र्घः । आपः, अपः ।

२४२ । भ्यपो दङ् । (भि ७।, अपः ६।, दङ् ।१।) ।

अपो दङ् स्यात् भि परे । अद्भिः अद्भ्यः अद्भ्यः अपाम् अप्सु ।

दिक् दिशौ दिशः, दिग्भ्यामित्यादि । एवं दृक् ।

त्विट् त्विषौ त्विषः, त्विड्भ्यामित्यादि ।

सजूः सजुषौ सजुषः, सजूर्भ्यां सजूःषु । एवम् आशीः ।

---

युवतिरित्यादि । उ-साहचर्य्यात् इस्यपि दान्त एव तेन दिवि भवं दिव्यमित्यादौ न स्यात् (१) । सुयवमित्यादौ तु स्यादेव ।

२४२ । भ्यपः । देऽकार उच्चारणार्थः, ङ इत् । गौणेऽप्ययं विधिस्तेन स्वद्भ्यामित्यादौ स्यात् । अधिकारात् स्यादेर्भ्येव, तेन अपां भारः अब्भार इत्यादौ न स्यात् । सजूरिति जुषधोः क्विप्, जुषा सह वर्त्तमानः सजूः, रडि र्व्यनघ्रतयोरिति र्घः । आशी-रिति आङ्पूर्व्व शास-धोः क्विप् तस्मिन् डङ् इत्, दान्तत्वात्

---

(१) न इं तथापीति दान्तत्वनिषेधात् । उक्तञ्च गङ्गाधरेण—'उवर्णे परे दान्ते स्थितस्य वस्यैव सम्प्रसारणत्वात्- अर्थात् वकारेऽपि दान्तस्येत्यर्थः" इति ।

(२३५) अदसः सेरौः। असौ अमू अमूः, अमूम् अमू अमूः, अमुया अमूभ्याम् अमूभिः, अमुष्यै अमूभ्याम् अमूभ्यः, अमुष्याः अमूभ्याम् अमूभ्यः, अमुष्याः अमुयोः अमूषाम्, अमुष्याम् अमुयोः अमूषु।

इति हसन्त-स्त्रीलिङ्ग-पादः।

---

न षत्वं, हसन्तत्वाद्रुङ्, व्यञ्जनद्वयीति वः। अयं मूर्द्धन्यान्त इति केचित् (१) तन्न, स्त्रीत्वायोर्हितायसाहिदंष्ट्रयोरित्यमरकोषादौ दन्त्यसान्ते पाठात् ॥ * ॥

इति हसन्त स्त्रीलिङ्ग-पादः ॥ * ॥

---

(१) "आङ्पूर्वात् गाह च तुषाधने इत्यस्मात् क्विपि गाहविङ्गहूडे इत्यनेन णकारस्य डकारे पदसंज्ञाभावादेव पदान्तत्वाभावे षाढवससयेति सत्वम्। ततो विङ्संज्ञाया स्यादेरुत्पत्तौ सस्य जातस्य षस्य रड् स्यात्। अतएव सजुषूषन्दं साधयित्वा एतयोरित्याह। अन्यथा हसन्तत्वेनैव रडि सिद्धे पाणिनिकातन्त्रयोः पृथगायोर्ग्रहणमनर्थकं स्यात्। दुर्गसिंहोऽप्येवम्। श्रीपतिदत्तोऽपि सजुषाशिषोस्तु मूर्द्धन्यषस्यैव डकाराभावे रेफ इत्याह। ननु विभक्त्युत्पत्तेरादौ षत्वमस्त्वमप्यास्तामिति चेत् सत्य, आदौ षत्वे सुप्रष्णातीति सुषम्णो, ष्ठ्यातीति षाड्ढीत्यादौ दीर्घार्थं षकारलोपार्थस्य तत्तत्सूत्रेषु मूर्द्धन्यषकारस्य पृथग्ग्रहणं गौरवं स्यादिति विभक्त्युत्पत्तेरादौ षत्वं न क्रियते। केचित्तु विप्रुषौ च मेधा- स्त्रीत्वायोर्हितायसाहिदंष्ट्रयो"रित्यमरसिंहेन दन्त्यान्तमध्ये पठितमायो शब्दं मत्वा आयोरित्यादौ हसन्तत्वादेव रड् इत्याहु'रिति दुर्गादासः।

## हसन्त-क्लीवलिङ्ग-शब्दः।

(१६८) स्वमो र्लुगिति। (१८४) स्वसुध्वस्वस्विति दड्। स्वनडुत् स्वनडुही। (१८२) अनडुच्चतुरोऽणाणाविति। स्वनड्वांहि। पुनस्तद्वत्। शेषं पुंवत्। चत्वारि।

ब्रह्म।

२४३। क्लीवे नो लुब्वा धौ।

(क्लीवे ७।, नः ६।, लुप् ।१।, वा ।१।, धौ ७।)।

नपुंसके नस्य लुप् स्यात् वा धौ परे। हे ब्रह्म हे ब्रह्मन्, ब्रह्मणी ब्रह्माणि। अहः अह्नी अहनी अहानि, अहोभ्याम्।

किं के कानि। इदम् इमे इमानि।

असृक् असृजी असृञ्जि, असानि असृञ्जि, असा असृजा असभ्याम् असृग्भ्यामित्यादि।

ऊर्क् ऊर्जी ऊर्न्जि ऊर्जि। सुयम् सुयमी सुयन्मि सुयमि।

(१६४) नुणयमेत्यत्र भसन्तरलयोरादौ नु वा नुण्।

उकारेतो नु विन्दुमात्रस्य नाम्या।

त्यत् त्ये त्यानि। एवं यत् तत् एतत्। (२१०) अनूझो तु एनत्। गवाक् गोची गवाञ्चि। तिर्य्यक् तिरश्ची तिर्य्यञ्चि।

---

२४३। क्लीवे। अप्राप्ते विभाषेयम्।

लुबित्यादि—यथाप्राप्त इतिवत् विभागमसन्देहनिवारणार्थमि·

एवं परे। यकृत् यकृती यकृन्ति, यकानि यकृन्ति, यकभ्यां यकृद्भ्यामित्यादि। एवं शकृत्। ददत् ददती।

२४४। द्वेः शतु र्नुण् सौ।

(द्वेः ५।, शतुः ६।, नुण् ।१।, सौ ७।)।

द्वेः परस्य शतु र्नुण् स्यात् वा सौ परे। ददन्ति ददति। एवं जक्षत् जाग्रदादयः। तुदत्।

२४५। आदीपोः।

( आत् ५।, ई ईपो' ७॥ )।

अवर्णात् परस्य शतु र्नुण् स्याद्वा ईकारे ईपि च परे।

तुदन्ती तुदती तुदन्ति। भात् भान्ती भाती भान्ति। पचत्।

---

दसुक्तम्। गवागिति—एव गोऽक् गो अगित्यपि। एवं पर इति—अमुमुयक् अमुमुईची अमुमुयञ्चीत्यादि।

२४४। द्वे.। समासे विभाषेयम्।

२४५। आत्। ईश ईप् च तौ तयोः। वाशब्दस्य व्यवस्था-वाचित्वात् स्यन्तसामान्यस्यापि, तेन भविष्यन्ती भविष्यतीत्यादौ वा नुण्। तथा च—यासन्त्या प्रियभवनसमुत्सुकायाः, भव्याचेपो भविष्यन्त्या इति प्रयोगाः (१)।

---

(१) प्रकरणात् ई इति क्लीबस्यैव। अन्यथा वदन्त इद वदतीयं इत्यादावपि प्रवर्त्ति स्यादिति गदाधर। कारादेराकारलोपेऽपि स्यानिवत्त्वात् क्रोधन्ती क्रोधतीत्यादि इत्यप्ययमाह। कातन्त्रे तु चतुष्टयवृत्तौ १०८ सूत्रव्याख्याने क्रोध-तीति पञ्जी।

## २४६ । अप्यनो नित्यम् ।

( अप्-यनः ५।, नित्यम् १। ) ।

अपो यनश्च परस्य शतु र्नित्यं नुण् स्यात् ई-ईपोः परयोः ।

पचन्ती पचन्ति । दीव्यत् दीव्यन्ती दीव्यन्ति ।

स्वप् स्वपी । ( १६५) नसव्मह्लोऽधो र्घः । स्वाम्पि, स्वपा ।
( २४२ ) भ्यपी दङ् । स्वद्भिः ।

(२२८) सपेति रङ् । धनुः धनुषी धनूंषि । एवं हविः । पयः पयसी पयांसि, पयसा पयोभ्याम् । अदः अमू अमूनि । द्वौ ग्रीवत् ।

इति हसन्त-क्लीवलिङ्ग-पादः ।

---

२४६ । अप् । अप् च यन् च तत् तस्मात् । पूर्व्वसूत्रात् वाऽनुवर्त्त्यं तस्य व्यवस्थावाचित्वात् विच्छायन्ती विच्छायतीत्यत्र विकल्पः (१)। अनायस्तात्तु तुदादित्वात् शे विच्छती विच्छन्तीति पूर्व्वेणैव विकल्पः । स्वविति शोभना आपो यस्मिन् तत् । अर्थायां नाऽकारस्य: (२) ॥ ० ॥

इति हसन्त-नपुंसकलिङ्ग-पादः ॥ ० ॥

---

(१) दुर्गादासस्तु विच्छ च गतौ इत्यस्य विच्छायतिरिच्छो भाव इति व्याख्याने अपि विच्छायन्तीति निरूपितवान् ।

(२) माद्वीयां धातोरितिनिषेधात् इत्यणुए इत्यनेन च ग्रहणो न कारितार्थं ।

## अव्ययशब्दः ।

२४७। व्याल्लुक् क्तेः । (व्यात् ५।, लुक् ।१।, क्तेः ६।)।

व्यात् परस्याः क्तेः लुक् स्यात् । स्वः प्रातः च वा हा है उच्चैः उच्चकैः धिक् धकित् प्र परा हरिवत् कृत्वा ।

---

२४७। व्यात् । व्यमव्ययम् अव्यक्तलिङ्गमित्यर्थः । अव्यक्तलिङ्गत्वात् नपुंसकत्वं प्रतिपादितम्(१)। एतेन शास्त्रान्तरे अव्ययस्य क्लीवत्वविधानं व्यर्थमिति । न च व्यानां लिङ्गकृतप्रयोगवैलक्षण्याभावात् अलिङ्गत्वमिति वाच्यम् । युष्मदस्मदोस्तदभावेनालिङ्गत्वे तद्विशेषणानां त्रिलिङ्गत्वानुपपत्तेः । अतएवोक्तं ङतिव्यष्णान्त इत्यादि। तथा च "षट्संज्ञकास्त्रिषु समा युष्मदस्मत्तिङव्यय"मित्यमरः (२)। व्यविशेषणानां तु क्लीवत्वैकत्वे एव "क्रियाव्ययानां भेदकान्येकत्वेऽपि" (३) इति क्लीवलिङ्गसंग्रहे अमरकोषात्। तथा च सनातनं स्वरपि येन मनोहरमिति । लुक्करणात् स्वः द्य इत्यादौ अत्वसोऽधोरिति न घः ।

---

(१) सामान्यत्वान्नपुंसकमित्युक्तेरित्यर्थः । यदुक्तं "सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति । यन्न व्येति विशेषरूपं न प्राप्नोति तदव्ययमिति । विभक्तिस्त्वाद्य लुक्करणं पदत्वार्थमिति ।

(२) अमरकोषे लिङ्गादिसंग्रहवर्गस्थानिमा कारिकेयम् । अस्यार्थः —संख्यावाचकानां च नकारान्तानां कतिशब्दस्य च षडिति संज्ञा । तथा च 'ष्णान्ता' षट् कतिश्चेति परसूत्रम् । ते त्रिषु समा लिङ्गकृतविशेषरहिता इत्यर्थः । तथा युष्मदस्मत्तिङन्तमव्ययञ्च त्रिषु सममित्यर्थः ।

(३) क्रियाणामव्ययानाञ्च भेदकानि विशेषणानि एकत्वे, अपिकारात् क्लीवे स्युरित्यर्थः ।

२४८। उदः सः स्थास्तम्भोः।

(उदः ५।, सः ६।, स्थास्तम्भोः ६॥)।

उदः परयोरनयोः सस्य लुक् स्यात्। उत्थानम् उत्तम्भः।

२४९। वातोऽवाप्योः।

(वा ।१।, अतः ६।, अवाप्योः ६॥)।

अवाप्योरकारस्य लुक् स्यात् वा। वगाहः अवगाहः, पिधानम् अपिधानम्।

---

न गौणानुकरणयोः। व्यात्परस्याः स्रो लुक् न स्यात् गौणानुकरणयोः। प्राप्तं स्वर्येन प्राप्तस्वरः, अतिस्वरो नराः, प्रात्, प्रोपात्। अनयोः किं—परमश्च तत् स्वर्येति तस्मात् परमस्वः भ्रष्ट इति।

२४८। उदः। स्थाश्च स्तम्भश्च तौ तयोः। सिंहावलोकितन्यायेन वा-ग्रहणात् तस्य व्यवस्थावाचित्वात् स्कन्दते रोगेऽपि, (१) तेन उत्कन्दो नाम रोग इत्यत्र स्यात्।

२४९। वातः। अवश्च अपिश्च तौ तयोः। अभिधानात् अवस्य तृ-तंस गाहेष्वेव, अपेर्नह्य-धाञोरेव अकारलुक्, तेन वतरति अवतरति, वतंसः अवतंसः, वगाहः अवगाहः, पिनद्धम् अपिनद्धं, पिधानम् अपिधानम् इत्यादौ स्यात्। न तु अवगच्छति अपिजयति इत्यादौ। अवसाहचर्यात् गिसंज्ञस्यापेरेव, तेन विध-

---

(१) रोगेऽर्थे स्कन्दधातोरपि सलोप इत्यर्थः।

## स्त्रीत्यः ।

२५० । स्त्रियामत आप् ।

( स्त्रियाम् ७।, अतः ५।, आप् ।१। ) ।

स्त्रीलिङ्गे स्थितादकारान्तादाप् स्यात् । मेधा, सर्व्वा ।

---

मपि धास्यति, अपि नह्यति मलिनमित्यादौ न स्यात्, गर्ह्यायां णिलाभावात् । एतत्तु भागुरिमतेनोक्तं, तथाच—

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।

टापञ्चापि हलन्तानां क्षुधा वाचा दिशा गिरा ॥ इति ॥

इति व्यपादः ॥ ॥

इति हसन्ताध्यायः समाप्तः ॥ ॥

---

२५० । स्त्रिया । स्त्रियामित्यापादमधिकारः । अत इत्यनेन लाक्षणिकादपीति, तेन स्या सा इत्यादौ सर्व्वत्रदाप् स्यात् । तटादीनान्तु यदा स्त्रीत्वं विवक्ष्यते, तदैवाबादयः स्युः, न तु पुंस्त्वक्लीवत्वविवक्षायामिति । आबादयस्तु साधुत्वार्थमेव विधीयन्ते । मेधेति—मेधृ ञ मेधायाम्, अस्मात् सेमन्तात् सरोरित्यः, पश्चादाप् (१) ।

---

(१) लिङ्गानां स्त्रीत्वविवक्षायां स्याद्युत्पत्तेः प्रागेव यथासम्भवमाबादयः स्युः । त्यदादीनान्तु टेरत्वे सत्याबिति स्वयत्नम् ।

२५१। हसाद्वा। (हसात् ५।, वा ।१।)।

स्त्रियां हसन्तादाप् स्याद्वा। वाचा वाक्, दिशा दिक्।

२५२। मनो डाप्। (मनः ५।, डाप् ।१।)।

स्त्रियां मनन्तात् डाप् स्याद्वा। सीमे सीमानौ, पामे पामानौ।

२५३। हेऽनः। (हे ७।, अनः ५।)।

---

२५१। हसा। यद्यपि सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम्। तेन—

"क्षुधा वाचा दिशा क्रुधा विपाशा च स्रजा त्वजा।
गिरोष्णिहा देवविशा पथे क्षुदाद्युदिगादयः॥"

वाशब्दस्य व्यवस्थावाचित्वात् क्वचिन्न स्यात् क्वचिन्नित्यं तेन, द्विपात् त्रिपात् चतुष्पादित्यादौ न स्यात्। द्विपदा, त्रिपदा, चतुष्पदा (१) ऋगित्यादौ ऋग्विषये नित्यं स्यात् (२)।

२५२। मनो। मन्नित्यनर्थकस्यापि ग्रहणम्। तेन सुधर्मे सुधर्माणौ सभे, बहुपटिमे बहुपटिमानौ स्त्रियौ। तथाच रामायणे "स्वभाव एव नारीणामेषु लोकेषु दृश्यते। विरुद्धधर्मा ह्यचपला भ्रातृभेदकराः स्त्रियः"।

२५३। हे। वाशब्दस्य व्यवस्थावाचित्वात् डाबभावपक्षेऽपि

---

(१) २११ सूत्रस्य टीका द्रष्टव्या।

(२) "क्वचिदृक्त्वेनैतदिष्यति। द्विपदी द्विपदा द्विपादृक्" इति धातुप्रकारे तद्धितपादे १ सूत्रस्य टीकायां गोयीचन्द्रः।

स्त्रियां ङे स्थितादनन्तात् डाप् स्याद्दा। बहुयज्वे बहुयज्वानौ।

२५४। ङीप् चाम्वस्यात्।

( ङीप् ।१।, च ।१।, अम्वस्यात् ५। )।

मस्य-वस्यान्यपरादनन्तात् ङे स्थितात् स्त्रियामीप् डाप् च स्याद्दा। बहुराज्ञी बहुराजे बहुराजानौ।

२५५। काप्यनाशीरकेऽदिद्यत्तत्त्विपादेः।

( कापि ७।, अनाशीरके ७।, अत् ।१।, इत् ।१।, अयत्तत्त्विपादेः ६। )।

---

भावीपोर्निषेधः। तेन बहुयुवानौ सुमघवानौ पुर्य्यावित्यादौ न स्यात्। ङे किम्—अतियज्वानौ।

२५४। ङीप्। म च व च म्वं, म्वः तत् स्यति म्वस्यः, न म्वस्यः अम्वस्यस्तस्मात्। तुल्यविषयत्वादयत्वानः सदामोऽल्लोप इत्यल्लोपस्तत्रैवायं विधिस्तेन बहुयुवा पूः, सुमघवा द्यौरित्यादौ न स्यात्, श्वयुवमघोनेत्यादिना वात्वेऽल्लोपाभावात्। बहुसीम्नी पुर्य्यावित्यादौ न मन्संख्येति न ङीप्निषेधः, तस्याङ्विषये चरितार्थत्वात्। तथाच तनुमवजितलोकपालधाम्नीमिति। पवे बहुसीमानौ बहुसीमे इत्यादि। बहुराज्ञाविति बहवो राजानो ययोर्नगर्य्योस्ते इति वाक्यम्, एवं बहुतक्ष्णी बहुतक्षे बहुतक्षाणावित्यादि।

२५५। काप्य। कादाप् काप् तस्मिन्, आशिषि अकः

आशीरर्थाकवर्जे कापि परे अकारः इकारः स्यात्, नतु यत्-तत्-क्षिपादेः। सर्व्विका कारिका। आशीरके तु जीवका। यदादेस्तु यका सका, क्षिपका ध्रुवका चटका।

---

आशीरकः, नास्ति आशीरको यस्मिन् सः अनाशीरकस्तस्मिन्, कापीत्यस्य विशेषणम् (१)। क्षिप् आदिर्यस्य स क्षिपादिः, यच्च तच्च क्षिपादिश्च तत्, न तत् अयत्तत्क्षिपादिस्तस्य, पुंस्त्वं सौत्रत्वात्। जीवकेति आशिषीत्यनेनाकः। क्षिपकेति क्षिप-धातोरिगुड्त्वात् कः क्षिपस्ततः स्वार्थे कः पश्चादाप्।

क्षिपादिर्यथा—

> क्षिपका ध्रुवका चैव चटका धारकेष्टका।
> करकाधित्यका प्रोक्ता चरकोपत्यकेड़का।
> अलका यत्पुर्य्यान्तु पिटका यासकेत्यपि।
> अष्टका तु पितर्य्यर्थे तारका भहगंशयोः।
> वर्त्तका शकुनौ प्रोक्ता वर्णभेदे च वर्णका।
> अत्य-प्रकृतिकाः(२) सर्व्वे नरिकामामिके विना।

एषु किम्—अष्टिका तारिका वर्त्तिका वर्णिका। शकुनौ वर्त्तिकेत्यपि कश्चित्। आकृतिगणोऽयम्।

---

(१) अत्र मूले अनाशीरके इति बहुटीकाकार-सम्मतः पाठः। तर्कवागीशेन तु अनाशीरकके इति पाठं मत्वा आशीरकस्य क आशीरकक नास्ति आशीरकको यस्मिन्निति विग्रहः कृतः, किन्तु नास्ति आशीरको यस्मिन्निति अर्थे अनाशीरके इत्यनेनैवेष्टसिद्धेरकाभिसन्धेयितम्।

(२) अत्यप्रकृतिका —नास्ति स्वप्रकृतिः प्रत्ययस्वरूपः ककारो येषां तादृशाः शब्दाः प्रकृतिककारयुक्ता इत्यर्थः क्षिपादौ ज्ञेया इत्यर्थः। ध्रुवका—ध्रु स्थैर्ये

## २५६ । द्वेषसूतपुत्रवृन्दारस्वज्ञाजभस्त्राधुत्यक्योर्वा ।

( द्वेष—धुत्यक्योः ६॥, वा ११। )

धादेर्धुत्यवर्जयोः कययोश्चाकार इकारः स्याद्वा क्वापि ।

· द्विके द्वके, चटकिका चटकका, आर्यिका आर्यका ।

धुत्ययोस्तु नाविका कत्यिका ।

---

२५६ । द्वेष । धुश्च त्यश्च तौ, न तौ अधुत्यौ, कश्च यश्च तत्, अधुत्ययोः क्य, पश्चात् द्वय, एषय, सूतय, पुत्रय, वृन्दारय, स्वय, ज्ञय, अजय, भस्त्रा च तत्, तच्च अधुत्यक्य च तौ तयोः। द्विके इति

---

इत्यस्मात् पचादित्वादनि कुटादित्वाद्गुणाभावे धुव तस्मात् स्वार्थे कण् । चटका—चट भेदे पचादित्वादन्, स्वार्थे कण् । "चटकः कलविङ्कः स्यात् तस्य स्त्री चटका तयो । पुमपत्ये चाटकैरः स्त्र्यपत्ये चटकैव हो"त्यमरः। इष्टका—इषधोर्गाप्नोति तकः । करका—वर्षोपल । कज म मधे इत्यस्मात्प्नीत्यक । अधित्यका, उपत्यका—अध्यु-पाभ्यामूर्द्धाधस्योस्त्यकन्नित्यमरटीका। एडका—एडकोमेष, ईड्यते कास्वलिकैः ईड इ वस्तुतो मात्नोत्यक निपातनाद्गुण इत्यमरटीकायां भरतः। अस्य अजादि-पाठाभेप्। पिटका—विस्फोट· पिटकस्त्रिष्वित्यमरोक्त-पिटकशब्दस्य स्त्रियां रूपम । मासका—वासका सिंहपर्णीति जटाधरः । वाकस् इति भाषा । अमरे तु वाषिके-त्युक्ति। अष्टका—पितरि श्राद्धकालत्वात् पितृसम्बन्धित्वे, अर्थे वाच्ये इति । स च श्राद्धकालो गौणचान्द्र पौष माघ-फाल्गुनमासीय कृष्णाष्टमीरूप इति । अश्नन्ति पितरोऽस्यामिति अशधातो र्गाप्नोति तकप्रत्यय· । अन्यत्र अष्टिका-खारी परि-माणविशेष । तारका—भं नक्षत्रं, दृगंश· कनीनिका । अन्यत्र तारिका दासीति काशिका । वर्त्तका—शकुनिः पक्षी । अन्यत्र वर्त्तिकेति दीपाश्रयः । प्राचां मते वर्त्तका शकुनि, उदीचान्तु वर्त्तिकेति काशिका । ७।३।४९। अतएवात्र दुर्गा-दासेन शकुनौ वा तु वर्त्तकेत्युक्तम् । वर्णका—प्रावरणभेद इति काशिका । अन्यत्र वर्णिका नटादीनां वर्णविशेषकारिका रचना।"ग्रन्थविशेषस्य व्याख्या लोकवर्णिके' ति तत्त्वबोधिनी। नरिका—स्त्री। नरं कायति कै शब्दे, कामयते वा ड·। नविकेत्यपि पाठ । मामिका—मम इयमिति अणे ममकादेश ।

द्वि श्री टेरल्वे पश्चादाप् तत श्रौरी श्रक् पश्चादिः। एवम् एषका एषिका। एषेति निर्देशात् एतिके इति पूर्व्वेण नित्यम्। चटकिकेति चटकाशब्दात् स्वार्थे कः क्षुभिन्नत्वादिर्व्वा। आर्य्यिकेति क्षुभिन्नत्वादिर्व्वा। एवं भ्रातृव्यका भ्रातृव्यिका (१) इत्यादि। नायिकेति नीञधोर्णकः आप्,क्षुवर्ज्जनात् पूर्व्वेण नित्यम्। आङ्पूर्व्वध्यैधोर्म्मनीषादित्वात् धस्य ढः आढ्या ततः स्वार्थे कण् आढ्यिका। क्षुवर्ज्जनात् पूर्व्वेण नित्यम्। यथासंख्याभावज्ञापनार्थं नायिकेति धीर्यकारिणोदाहृतम्। कस्य यथा-शिचां कायति कै शब्दे शिचाका, शिचाका एव शिचाकिका इत्यादि। क्वत्यिकेति क्व भवा इत्यर्थे त्यदाद्यचिरेति त्यप्रत्ययः ततः स्वार्थे कण्। एवम् इहत्यिका अत्रत्यिका दाक्षिणात्यिका इत्यादि। त्य इति स्वरूपस्य निषेधात् दूरेत्यिका दूरेत्यका(२) इत्यादौ स्यादेव। अत्र स्वज्ञाजानां गौणेऽपि, तेन बहुस्विका बहुस्वका, बहुज्ञिका बहुज्ञका, बह्वजिका बह्वजकेत्यादि। द्वादीनां केवलानामेव (३) तेन परमद्विके(४) इति पूर्व्वेण नित्यम्। अन्ये तु न ये स्वेरिति सूत्रयित्वा नेच्छन्ति, परमद्वके परमैषका इत्यादीत्याहुः। भस्त्रका (५) भस्त्रिका इति परसूत्रेणैव सिद्धे भस्त्राग्रहणात् निर्भस्त्रिका, निर्भस्त्रका इति गौणेऽपि स्यात् इति परे।

---

(१) भ्रातृ शब्दात् पुत्रेऽर्थे व्य प्रत्ययस्तस्य स्त्रियां रूपम्।
(२) अत्र दूरादेत्यप्रत्यय इति कार्त्तिकेय।
(३) समासाघटकभिन्नानामित्यर्थः।
(४) परमे द्वे इति कर्म्मधारयः।
(५) भस्त्रा वायु यन्त्रविशेष, यौंता इति भाषा।

२५७। वाच्चापोऽनुक्तपुंस्कस्य।

( वा ।१।, आत् ।१।, च ।१।, आपः ६।, अनुक्तपुंस्कस्य ६ )

आपः स्थाने जातोऽकार इदाच्च स्याद्वा क्वापि, न तूक्तपुंस्कस्य। गङ्गिका गङ्गाका गङ्गका। उक्तपुंस्कस्य तु शुभ्रिका।

२५८। ष्टिन्नृश्वाहनदादेरीप्।

( ष् ट् ञ ऋ इत्, न ऋ श्वच् वाह नदादेः ५।, ईप् ।१। )।

षकारेत टकारेत ञकारेत ऋकारेतो नान्ता-ऋदन्ता-श्वच्चो वाह्ली नदादेश्च ईप् स्यात् स्त्रियाम्।

---

२५७। वाच। चकारात् इदित्यनुवर्त्तते। न उक्तपुंस्कं तस्य। गङ्गिकेत्यादि गङ्गाशब्दात् स्वार्थे कः केऽणः स्व इति स्वः। पूर्व्वसूत्रे भस्त्राग्रहणात्, भस्त्राका, निर्भस्त्राका इत्यप्यन्ये। शुभ्रिकेति उक्तपुंस्कत्वान्नित्यम्। एवमतिगङ्गिकेत्यादि।

२५८। ष्टि। ष च ट च ञश्च ऋश्च तत्, ष्टृ इत् यस्य सः, नद आदिर्यस्य सः नदादिः, षश्चात् ष्टिञ्च न च ऋश्च श्वच्च च वाह च नदादिश्च तत्तस्मात्, पुंस्त्वं सौत्रत्वात्। अत्र ष्टिन्नदादिभ्यः मुख्य एव, अन्यस्मात् गौणागौणयोरिति। तेन बहुगार्ग्यो अतिकुरुचरा बहुनदा सुमत्या इत्यादौ न स्यात्। विदुषी, सुविदुषी (१) पचन्ती, बहुपचन्ती इत्यादौ स्यात्। स्तनन्धयीति धेटष्टित्त्वात्।

---

(१) शोभना विद्वांसो यस्यां पुर्य्यामिति। एवं बहवः पचन्तो यस्यामिति।

## २५९ । ययोर्लोपोऽयुक्तौ यौ ।

( ययोः ६॥, लोपः १।, अयु-क्तौ ७।, यौ ७। ) ।

इवर्णावर्णयोर्लोपः स्यात् अयावक्तौ यौ परे ।

य (१)—वैष्णवी वराकी ।

## २६० । क्यङ्व्च्वौ चानात्यपत्यण्यस्य ।

(क्य-ङ्य-च्वौ ७।, च ।१।, अनाति ७।, अपत्यण्यस्य ६।) ।

अपत्यार्थ-ण्यस्य लोपः स्यात् अयावक्तौ यौ परे, क्य-ङ्य-च्वौ च, नत्वाकारे । गार्गी ।

---

२५९ । ययोः । इश्च अश्च तौ तयोः, युश्च क्तिश्च तत्, न तत् यस्मिन् अयुक्ति, तस्मिन् अयुक्तौ, याविल्यस्य विशेषणं, पृथगुद्-करणात् प्रेष्ठः प्रेयानित्यादौ न स्यात् । वैष्णवीति विष्णुर्देवता यस्या इत्यर्थे ण्णः । वराकीति हृञधोः षाकः । अयुक्तौ किम् ? जर्णायुः रामिणीत्यादि ।

२६० । क्यश्च ङ्यश्च च्विश्च तत्तस्मिन्, पुंस्त्वं सौत्रत्वात् । न आत् अनात् तस्मिन् । अयुक्तियाविल्यनुवृत्तस्यैव विशेषणम् । गार्गीति गर्गस्यापत्यमित्यर्थे ण्यः । क्ये गार्गीयति, ङ्ये गार्गीयते, च्वौ गार्गीकरोति इत्यादि । अपत्ये किम् ? मैत्रायते (२) । अनादिति किम् ? गार्ग्यायणः वात्स्यायनः ।

---

(१) यकारेण उदाहरणमाह । एवमन्यत्र ।

(२) मित्रस्य भावः मैत्रं तदिवाचरतीति अर्थः ।

२६१ । सूर्य्यागस्त्यस्य तिष्यपुष्यस्य ष्णामत्स्यस्येयेपो भंष्णी ईपि यः ।

( सूर्य्यागस्त्यस्य ६।, तिष्यपुष्यस्य ६।, ष्णामत्स्यस्य ६।, ईयेपोः ७॥, भष्णे ७।, ईपि ७।, यः ६। ) ।

एषां यस्य लोपः स्यात् ईयेपोः परयोः, नक्षत्रष्णे ईपिच ।

सौरी आगस्ती चातुरी ।

---

२६१ । सूर्य्यश्च अगस्त्यश्च तत्तस्य, तिष्यश्च पुष्यश्च तत्तस्य, ष्णारश्च मत्स्यश्च तत्तस्य, ईयश्च ईप् च तौ तयोः, भं नक्षत्रं, तत्र ष्णः तस्मिन् । सूर्य्यागस्त्यस्य ईयेपोः, तिष्यपुष्यस्य भष्णे, ष्णारमत्स्यस्य ईपि यलोप इत्यर्थः । सौरीति सूर्य्यो देवता अस्या इत्यर्थे ष्णः, ययोर्लोपः, पित्वादीपि अनेन यलोपः । एवमागस्ती(१) । चातुरी चतुरस्य भाव इत्यर्थे ब्राह्मणादित्वात् ष्णरः, सामान्यष्णारग्रहणात् अनेन यलोपः । एवं मैत्री औचितीत्यादि । त्रयीति-त्रयाणां पूरणीत्यर्थेऽयट् । भूषणीति-भूष्यतेऽनया घेऽनट् । विदुषीति-विदेः शतुः क्वसुः । श्रीमतीति-श्रीरस्ति अस्या इत्यर्थे मतुः । भवतीति-भाधोर्डवतुः । पच दिव तुद-भा एतेभ्यः शत्र । दण्डी-ऽस्या अस्तीत्यर्थे इन् । अर्व्वणस्तृङ् ईपि । राजन्शब्दस्य ईप्य-लोपः । श्वन् शब्दस्य ईपि वस्य उः । मघोनस्तृङ् वा ईपि, पक्षे वस्य उः । क्रुधोस्तृन् कर्त्तरि । क्रोष्टोः स्त्रियां त्वन् ईप् क्रोष्ट्री । प्रत्यच् शब्दात् ईपि अचोऽल्लोपः स्वस्य घंय । प्रत्यची पूजार्थे न न-

---

(१) अगस्त्यो देवता अधिष्ठाता अस्या इति ष्ण, दक्षिणा दिक् ।

ट—वयी भूषणी। उ—विदुषी श्रीमती भवती। (२४६) अप्यनोनित्यम्, ऋ—पचन्ती, दीव्यन्ती। (२४५) श्रादीपोः, तुदन्ती तुदती, भान्ती भाती। न—दण्डिनी अर्व्वती राज्ञी शुनी, मघवती मघोनी। ऋ—कर्त्री क्रोष्ट्री। अनृच—प्रतीची प्रत्यञ्ची, तिरश्ची तिर्य्यञ्ची, अमुमुईची अदमुईची उदीची। वाह—भारौही खेतौही खेतवाही प्राष्ठूही। नदी मत्सी गौरी।

---

लोपः। ईपि तिर्य्यच् अमुमुयच् अदमुयच् उदच्—एषां तिरश्चाद्यादेशाः। भारवाहशब्दादीपि वाहः वा श्रौ। खेतवाहीति खेतास्तु वा इत्युक्तेः। प्राष्ठूहीति अनादूः। नदीत्यादि। मत्स्यस्य ईपि व्यामत्स्यस्येति यलोपः। नदादिर्यथा—

नद-मह-देहं तर-दर-चोरं,
देव-गरी पुर-तट-नट चेलम्।
अनडुत्-कोल-महद्दृहद्वं
गवय-मुकय-मत्स्य-मनुष्यम्।
देहल-गडुजं-मण्डप-मर्ण्ड
निष्कल-विकलं पुष्कल-पिण्डम्।
गाह-पृथु-प्लव-शठ-भय-सूर्च
कैकय-पृथिवं भोट पिशङ्गम्।
पाण्डर-गौरं पुद्यानन्दं
शष्कुल कुवल-तृण-तर्कारम्।
कन्दर-कदरामलकं भूयः
वदरो धातक वल्लक-पूपम्।

नाट मठाढक मालत सुपं
पिप्पल वेतस-कन्दल विल्वम् ।
आरट मारट पट शुष्कण्ड
द्रोण पुणी काण-काकण पालम् ।
हय-श्रम-काकल कदल कवाट
कोपातक घुटमतस वराटम् ।
शल्लक मण्डल कूट मूलाट
सूर्द हरीतक गुर्द सपाटम् ।
सुपरोर्द-विभीतक माकन्द
वयसि किशोरस्तरुण चिरण्टम् (१) ।
वर्कर तलून कुमार वधूटं
नामनि केवल (२) भेषज पापम् ।
शारङ्गावर भोग-समान (३)
रेचक देवक भिक्षुकवर्गम् ।

---

(१) चिरण्ट वधूट शब्दौ यौवनवाचिनौ इति सिद्धान्तकौमुदी । चिरण्टी ऊढा अनूढा वा पित्रादिगृहोषिता । चिर पित्रादिगृहे अटति, पृषोदरादिरित्यमर टीका ।

(२) संक्षिप्तसारेऽपि नाम्नोल्लेखः । तद्धित पादे ५४ सूत्रम् । तत्र केरल इति । केरली ज्योतिर्विशेषस्य नाम । काशिकायान्तु संज्ञाच्छन्दसोरित्युक्तम् (४।१।२०) । केवलेति पाणिनि (४।१।२०) केवलो ग्रामभेद इति मेदिनी, पन्यविशेष इति हेमचन्द्र ।

(३) शारङ्गवन्द काशिकायां इन्द्रादिर्दृश्यते ४।१।४०) । भवर इति संक्षिप्तसारे । काशिकायान्तु भवर इति दृश्यते ४।१।२०) । भवानी छन्दोविशेषस्य नाम, इति गोयीचन्द्र ।

कौखीगौधीटीठीडीद्य-
स्तोथीप्रौढीव्रीचीपीप्य: ।
प्रौढी च दीर्घजिह्वश्च भागधेय-रजस्वली ।
मामकार्यकृती (१) शृङ्ग: मातङ्गश्च सुमङ्गल: ।
अथ भौलिङ्गिरालम्बिभौरिक्यौन्द्राहमालय: ।
अय:स्थूणीत्राहमालिभौलिकि:, श्रोणिरोगयो:—
कटाश्मरी, विषाद्यादि: पुच्छ: प्रोक्तोऽयहायण: ।
सूर्म-सौधर्म सोधाम-मातामह-पितामहा: ।
यूथाधिकार-लवणं कुण्डलाटव-माठनम् ।
उपमानात् पक्षपुच्छाद्दे रोहिणरेवती ॥

कट्यादिपक्षानां जातिवाचित्वेऽपि युङ्त्वात्, पिशङ्गादित्रयाणां वर्णवाचित्वेऽपि अन्तोदात्तत्वात्,शष्कुलाद्येकपक्षागतो जातिवाचित्वेऽपि नित्यस्त्रीत्वादप्राप्तौ पाठ: । द्रोणशब्दोऽम्बुवाहिन्यां (२) कूटशब्द: शालायां नित्यस्त्रीलिङ्ग: । अवयस्यपि तरुणी तलुनीत्यन्य: । पुत्रशब्दोऽत्र दुहित्रर्थ:, तथाच—सुता च दुहिता पुत्रीति त्रिकाण्डशेष: । स्वमते कौख्यादीनां पाठ: । औन्द्राहमालि भौलिङ्गि आलम्बि भौत्राहमालि इत्येषा ष्णेयङ्बाधनार्थ: पाठ: (३) । भौरिकि-भौलिक्यो: क्रौड्यादिपाठात् (४) भौरिक्या भौलिक्या

(१) मामकी देवताविशेषस्य नामेति गोयीचन्द्र ।

(२) अम्बुवाहिन्या—काष्ठादिकृत जिलाय- नौकाकृति—जलसेचन्यामित्यमरटीका । द्रोणी गजादन्यामिति गोयीचन्द्र: ।

(३) ४७७ सूत्रस्य टीका द्रष्टव्या ।

(४) ४९८ सूत्रस्य टीका द्रष्टव्या ।

## २६२। णचक्खसाद्वनो रङीप् वा तु हे।

(णच्खसात् ५।, वनः ५।, रङ् ।१।, ईप् ।१।, वा ।१।, तु ।१।, हे ७।)।

---

इत्यपि। कटी श्रोणिः। अश्मरी रोगभेदः। विपाद्यादिपुच्छो यथा—विषपुच्छी शरपुच्छी कबरपुच्छी मणिपुच्छी। अग्रे छायनमस्याः अग्रछायणी। अधिकारोऽस्त्यस्याः, अर्थ आदित्वादः अत्र पाठादीप् अधिकारी। उपमानात् पक्षपुच्छौ यथा—शुकपक्षी सिंहपुच्छी। रोहिणी रेवती च नक्षत्रम्। आकृतिगणोऽयम्।

नृजातेरितः। इदन्तान्मनुष्यजातेरीप् स्यात्। कुन्ती अवन्ती दाक्षी औदमेयी। विशेषविधेर्ड्यो न निषेधः। इतः किम्? दरत् (१)। नृजातेः किम्? तित्तिरिः वैड़ालिः।

ईपि ष्यास्य वा ष्यायनो लौहितादेस्तु नित्यम्। ष्यास्य ष्यायनः स्याद्वा ईपि लोहितादेस्तु नित्यम्, ष इत्। गार्ग्यायणी वात्स्यायनी, पक्षे गार्गी वात्सीत्यादि। लौहित्यायनी कात्यायनी। लौहितादिर्गर्गादौ ज्ञातव्यः।

आसुर माण्डूक्य कौरव्याणां डायनो वा। एषां डायनो वा स्यात् ईपि, ड इत्। आसुरायणी माण्डूकायनी कौरव्यायणी अतएव कौरव्यादीप्। पक्षे आसुरी माण्डूकी कौरव्या। इदं नेच्छन्त्यन्ये। कथं कौरवी सेनेति? इदमर्थे ष्णादीप्।

२६२। णच्। ण च अश्च खस्त्र तत्तस्मात्। वनो नान्तत्वादीपि सिद्धे अत्र विधानम्, ईप्येव रङ्विधानार्थं, तेन मधुधीवे

---

(१) दिरद् इति काशिका मैत्रेयोदयः।

पादचः खसाच विहितात् वन ईप् स्यात्, वनो रङ् च स्त्रियां हे तु वा। अवावरी धीवरी हरिदृश्वरी बहुधीवरी बहुधीवा।

२६३। स्वथोधः-संख्यादिदाम-वयोऽर्थहायनाड्डि।

(स्।६।, नः।१।, च।१।, ऊधस्-सङ्ख्यादिदाम-वयोऽर्थहायनात् ५।, ङे ७।)।

---

बहुधीवानौ इत्यादौ न रङ्। (१) पचखसाद्वनोरङीपौति क्षते अवावरी धीवरी बहुधीवरी(२) बहुधीवेत्यादि सिद्धावपि बहुगत्वरी बहुसत्वरीत्यादि सिद्धर्थं वा तु ङे इति क्षतम्, ईप्चाम्वस्यादित्यस्वस्यादित्युक्तेः। अवावरीति ओण् अपसारणे, अस्माद्वन्, विड्वनोर्डा, ओ अव्। धीवरीति धा-धोः क्वनिप्, दामागेहाक्पियेति ङी। हरिदृश्वरीति हरिं पश्यति स्नेति क्वनिप्।

२६३। स्वथोधः। स इति लुप्तयोक्तं, न इति प्रोक्तं, स्वः। वयोऽर्थे हायनः, अथवा वयोऽर्थो यस्य स चासौ हायनश्चेति सः। दाम च वयोऽर्थहायनश्च तौ, संख्या आदिर्ययोस्तौ, तौ च तौ तौ चेति संख्यादिदामवयोऽर्थहायनौ, ऊधश्च संख्यादिदामवयोऽर्थहायनौ च तत्तस्मात्। ऊधसः संख्यादिदाम्नः संख्यादिवयोऽर्थहायनाच्च स्त्रियामीप् स्यात्, ऊधसः सस्य नश्च।

---

(१) ईपि रङ् इत्युक्ते बहुव्रीहि स्यायं ईप्चाम्वस्येत्यनेन ईपो वैकल्पिकत्वेन रङपि वा भविष्यति, तत् कथं वा तु ङे इत्युक्तमित्याशङ्क्याह पचेति।

(२) बहुधीवरीति बहवो धीवानः कैवर्त्ताः यस्यामिति।

अधमः सङ्ख्यापूर्व्वात् दाम्नो वयोऽर्थे हायनाच्च ईप् स्यात् हे, तस्य च नः स्यात्। पीनोध्नी द्विदाम्नी द्विहायनी।

२६४। जातेरतोऽस्त्री-युङ्-सत्काण्डप्राक्प्रान्त-शतैकादिपुष्प-सम्भस्त्राजिनैकशणपिण्डादिफल- नादि-मूलात्।

(जातेः ५।, अतः ५।, अस्त्री—मूलात् ५।)।

---

पीनोध्नीत्यादि-पीनमूधो यस्याः सा, द्वे दामनी (रज्जू) यस्याः सा (१) द्वौ हायनौ वयो यस्याः सा इति वाक्यम्। हे किम्? अतिदामा (२)। संख्यादेः किम्? सुदामा। वयोऽर्थे किम्? चि-हायना शाला।(३)

२६४। जाते। य उङ् यस्य सः, सच काण्डञ्च प्राक् च प्रान्तञ्च शतञ्च एकञ्च तत्, तत् आदिर्यस्य तत्, तच्च तत् पुष्पञ्चेति तत्, सं च भस्त्रञ्च अजिनञ्च एकञ्च शणञ्च पिण्डञ्च तत्, तत् आदिर्यस्य तत्, तच्च तत् फलञ्चेति तत्, न आदिर्यस्य तन्नादि, नादि च तत् मूलञ्चेति तत्। पश्चात् स्त्री च युङ् च सदाद्यादि-पुष्पञ्च समाद्यादिफलञ्च नादिमूलञ्च तत्, न तत् अस्त्रीयुङ्-

---

(१) यां गां द्वाभ्यां रज्जुभ्यां बध्नाति सेत्यर्थः।

(२) दाम अतिक्रान्ता, या बद्धा सती रज्जुच्छिन्नत्तीत्यर्थः।

(३) कालकृता शरीरावस्था वयः। दुर्गादासस्तु प्राणिनो गतपरमायुर्वय इत्याह। वयांसि च चत्वारीतेत्रके, यदाह—आद्ये वयसि नाधीतं द्वितीये नार्ज्जितं धनं। तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसीति॥ नीण्यीत्यन्ये, यदाहुः पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वात न्त्र्यमर्हतीति।

जातिवाचिनोऽकारान्तात् स्त्रियामीप् स्यात् नतु स्त्री-युडादेः। मृगी हंसी शीतपाकी। स्त्री-युडादेस्तु — मक्षिका वेश्या सत्पुष्पा संफला अमूला। जातेः किं—मन्दा।

आकृतिग्रहणा जाति लिङ्गानाच्च न सर्व्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रञ्च चरणैः सह॥

गार्गी कठी कौथुमी।

---

सत्काण्डप्राक्प्रान्तशतैकादिपुष्पसम्भस्त्राजिनैकशणपिण्डादिफलनादिमूलं तस्मात्। मृगीति—मुख्य एवायं विधिः, तेन बहुमृगा भूः, बहुहंसा पूरित्यादौ न स्यात्। शीतपाकीति - शीतेन पाको यस्याः सा इत्यत्र ईन जातिरुच्यतेऽतो जातेरगौणत्वम्। एवमोदनपाकी गोवनी शङ्कुकर्णीत्यादि। मक्षिकेति—एवं पिपीलिका बलाका इत्यादि। वेश्येति—एवं क्षत्रिया इत्यादि। सत्पुष्पेति—एवं काण्डपुष्पा प्राक्पुष्पा प्रान्तपुष्पा शतपुष्पा एकपुष्पा। एभ्यः किम्? शङ्कपुष्पी चोरपुष्पीत्यादि। सम्फलेति—एवं भस्त्रफला अजिनफला एकफला शणफला पिण्डफला। एभ्यः किम्? पूतिफली तालफलीत्यादि। अमूलेति—न सन्ति मूलानि यस्या इति वाक्यम्। नञः किम्? बहुमूली शतमूली। जातेः किम्? घनपुष्पा स्थूलफला, निर्मूला श्रुतिः, समूला स्मृतिः।

अथ जातिवाचकशब्दज्ञापनार्थं जातिलक्षणमाह, आकृतीति। आक्रियते व्यज्यतेऽनया इत्याकृतिः अवयवसंस्थानादिः।

गृह्यतेऽनेनेति ग्रहणं, असामान्यच्छिन्नत्वेन स्त्रीत्वाभावान्नेप्। आकृतिः ग्रहणं यस्याः सा। यद्वा गृह्यते इति ग्रहणम्, आकृत्या ग्रहणं यस्याः सा आकृतिग्रहणा संस्थानव्यङ्ग्या इत्यर्थः। तथाच मृगसिंहव्याघ्रादिषु शृङ्गघटादिसंस्थानव्यङ्ग्या मृगत्वादिजातिः। एतेन गुणक्रिययोर्जातिर्निराकृतेति। ब्राह्मणत्वादिजातेर्न संस्थानव्यङ्ग्यत्वं, तत्संस्थानस्य जात्यन्तरसंस्थानसाम्यात्। अतो लक्षणान्तरमाह—लिङ्गानाञ्च न सर्व्वभागिति। या लिङ्गानां पुंस्त्रीक्लीवानां सर्व्वाणि रूपाणि न भजते सापि जातिः। तथाचात्रिलिङ्गशब्दवाच्यापि जातिरित्यर्थः। तेन ब्राह्मण-क्षत्रियवैश्य-शूद्रादीनां स्त्रीपुंसयोर्वर्त्तमानत्वादसर्व्वलिङ्गभाक्पदवाच्या ब्राह्मणत्वादिजातिः। तटत्वादेस्त्रिलिङ्गभाग्वाच्यत्वान्न जातित्वं, तटीत्यत्र नदादिपाठाद्‌ङीप् (१)।

ननु देवदत्तत्वादेरसर्व्वलिङ्गभाग्वाच्यत्वेन कथं न जातित्वमित्यत आह सकृदाख्यातनिर्ग्राह्येति। सकृदेकवारमाख्याता उपदिष्टा सती निर्ग्राह्या नियमेन ग्राह्या इत्यर्थः। तथाचासर्व्वलिङ्गभाक्षु ब्राह्मणादिषु उपदेशव्यङ्ग्या जातिरित्यर्थः। उपदेशो हि एकस्यां व्यक्तावेकदा कृतोऽनेकव्यक्तिषु तत्तत्प्रत्ययनिमित्तं

(१) अत्र "तटत्वादिजातेस्त्रिलिङ्गभाक्पदवाच्यत्वेऽपि संस्थानव्यङ्ग्यत्वात् पूर्व्वलक्षणेन जातित्वं व्यवस्थापितम्। अथवा नदादिपाठान्ङीबि"ति पाठान्तरम्। अत्र गङ्गाधरोऽपि "एवं तटादेरपि जातित्वं,संस्थानव्यङ्ग्यत्वादि"त्याह। सिद्धान्तकौमुद्यामपि "जातेरस्त्रीविषयादयोपधात्" (४।१।६३) इति सूत्रस्य वृत्तौ आकृतिग्रहणा जाति' अनुगतसंस्थानव्यङ्ग्येत्यर्थं इत्युक्ता तटीत्युदाहृतम्। तर्कवागीशेन तु नदादौ तटशब्दः पठित'। कातन्त्रटीकायां कविराजेऽप्येवमिति।

भवन् सकलव्यक्तिव्यापक इहाभ्युपगम्यते। यथा एकस्मिन् ब्राह्मणे सकृदुपदिष्टेनैकेन धर्म्मेणायं ब्राह्मणोऽयं ब्राह्मण इत्यनेकव्यक्तिषु प्रतीतिः, न तथा देवदत्तादौ, तस्य संज्ञाशब्दत्वेनैकमात्रवृत्तित्वात्। एतत्तु सर्व्वस्या जातेरुपयुक्तं(१) तथाहि शुक्ले कृष्णे वा गवादि-पिण्डे सकृदुपदिष्टा गोत्वादिजातिः पिण्डान्तरेऽपि गौरयमित्यादिज्ञान-निर्ग्राह्या भवति, उपदेशस्य तथाभूतसाधनत्वात्। एतेन जातिरेका निरवयवा नित्यानेकव्यक्तिसमवायिनीति।

पारिभाषिकीं जातिमाह, गोत्रञ्च चरणैः सह इति। पुत्र-पौत्राद्यपत्यमिह पारिभाषिकं गोत्रम्। यथा गार्ग्यः वात्स्य इत्यादिः। गार्ग्यत्वादेर्न संस्थानव्यङ्ग्यत्व, तत्संस्थानस्य जात्यन्तर-संस्थानसाम्यात्, न वा सर्व्वलिङ्गभाग्वाद्यत्वम्, गार्ग्यः गार्गी गार्ग्यं कुलम् इत्यादिप्रयोगात्। अतः पृथगुक्तम्। अस्य पारि-

(१) एतत् सकृदाख्यातनिर्ग्राह्येति द्वयोरपि जातिलक्षणयोर्योजनीयमित्यर्थः। या लक्षणद्वयेन लक्षितापि सकृदाख्यातनिर्ग्राह्या भवति सा जातिरिति निष्कर्षः। उक्तञ्च संक्षिप्तसारे तद्धितपादे १८ सूत्रस्य टीकायां गोयीचन्द्रेण—पूर्व्वोक्तलक्षण-द्वयेन व्यवस्थितायाः एव जातेः स्वरूपमाह सकृदाख्यातनिर्ग्राह्येति—एतेन जाते-रेकत्वं नित्यत्वं प्रत्येकं परिसमाप्तिञ्च स्वरूपं दर्शितवान्। तथाहि एकस्मिन् मयूरे सकृदाख्याता जातिर्देशान्तरकालान्तरेऽपि स्वल्पेऽपि महत्यपि मयूरान्तरे निश्च-येन ग्राह्या भवति। तस्मादेका नित्या प्रत्येकं परिसमाप्ता च। सा यदि ह्येका न स्यात्, सकृदाख्याता पिण्डान्तरेऽपि न गृह्येत। यदि च नित्या न स्यात्, पिण्डविनाशे जातेर्विनाशात् पिण्डान्तरे जातिर्नोपलभ्येत। यदि प्रत्येकं परि-समाप्ता न स्यात्, तदा यत्राख्याता तस्मिन्नपि पिण्डे सर्व्वात्मना न गृह्येत, किं पुनः पिण्डान्तरे। अयेन हि परिसमाप्तौ सत्यां अंश एव गृह्यते, न जाति। न हि जात्यंशो जातिर्भवति अनेकत्वप्रसङ्गादिति।

## २६५ । गुणाद्वोतोऽखरु-स्योङः ।

(गुणात् ५।, वा ।१।, उतः ५।, अ-खरु-स्योङः ५।) ।

भाषिकजातित्वात् गार्ग्यमानिनी वात्स्यायनमानिनीत्यादौ पुंवद्भावः, न तु वैयाघ्रपदीभार्य्य इत्यादौ, जातिस्वाङ्गेप्त्वमानिनीत्युक्तेः । चरणं शाखा, वेदैकदेशः कठादिशब्दः, स तु क्रियावचनः (१) ; कठादिरूपचरणस्याध्ययने क्रियासम्बन्धेन वर्त्तमानत्वात् । तथाच कठादिशब्दोऽध्ययनविशेषमाचक्षाणो यदा तदध्ययनसम्बन्धात् अध्येतृपुरुषेषु वर्त्तते, तदा क्रियैवास्य प्रवृत्तिनिमित्त, सैव पारिभाषिकी जातिः, अस्यापि पारिभाषिकजातित्वात् कठी चरकी कठमानिनी कठीभार्य्य इत्यादिः स्यात् ।

लक्षणचतुष्टयाव्याप्यत्वात् भस्त्रेति न जातिः । गार्गीति—गर्गस्यापत्यं स्त्री । गोत्रविहितयोः ष्णय्योर्यङादेशे युङ्त्वादीप्निषेधे सिद्धे पुनरजादौ यङन्तानां पाठात् नेह युङ्त्वादीप्निषेधः (२) । कठीति—कठो ब्राह्मणः वेदैकदेशस्तेन प्रोक्तम् अधीते यः सोऽपि कठस्तस्मात् स्त्रियामनेनेप् (३) । एवं कौथुमी ।

२६५ । गुणात् । स्य उङ यस्य सः । खरुः स्मितार्थः ।

---

(१) कठादिशब्दस्तदध्ययनशालीत्यर्थः । अतएव सिद्धान्तकौमुद्यां ४।१।६३। सूत्रस्य वृत्तौ 'अपत्यप्रत्ययान्त शाखाध्येतृवाची च शब्दो जातिकार्य्यं लभते इत्यर्थ' इत्युक्तम् ।

(२) एतद्विवरणं २७७ सूत्रस्य टीकायां द्रष्टव्यम् ।

(३) कठशाखाध्ययनविशिष्टा स्त्रीत्यर्थः । यद्यपि स्त्रीणामध्ययनं प्रतिषिद्धं तथापि पुराकल्पे ह्येतदासीत् । तदाह यम—पुराकल्पेषु नारीणां मौञ्जीबन्धनमिष्यते । अध्यापनञ्च वेदानां सावित्रीवचनं तथा ॥ इति तत्त्वबोधिनी ।

गुणवाचकादुकारान्तात् स्त्रियामीप् स्याद्वा, नतु खरोः स्योऽश्च। मृद्वी मृदुः। खरु-स्योऽस्तु—खरुः पाण्डुः। गुणात् किं—

सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥

धेनुः।

---

खरुश्च स्योङ् च तत्, न तत् अखरुस्योङ् तस्मात्। गुणवाचकादिति—गुणं वक्ति गुणवाचकः, घे णकः। वस्तुलोपादभेदोपचाराद्वा (१) तद्वति द्रव्ये वर्त्तमानादुकारान्तादित्यर्थः। मृद्वीति—मार्द्दवगुणविशिष्टा इत्यर्थः।

अथ गुणवाचिशब्दज्ञापनार्थं गुणलक्षणमाह, सत्त्व इत्यादि। सत्त्वं द्रव्यं, तत्र निविशते तदाश्रयति, अपैति ततः सत्त्वादपगच्छति। यथा श्यामो गुणः पूर्व्वमाम्रादिफलमाश्रयति, पश्चात् पक्वदशायां ततोऽपगच्छति। पृथग्जातिषु दृश्यते इति—पृथक् नाना जातयो येषां तेषु दृश्यते। यथा हंसादिषु यः शुक्लादि-गुणो दृष्टः, स शङ्खादिषु दृश्यते। एतेन सर्व्वेण जातिर्न गुणः। न हि द्रव्यसमवायिनी (२) जातिः सत्त्वादपगच्छति, अश्मनः

---

(१) वस्तुलोपादित्यस्यायमाशयः—शुक्ले गुणादिशब्द गुणवन्तमाचष्टे इति मात्वर्थे ञौ मतुब्लोपे ञेर्ह्रस्वत्वात् शुचि इति नामधातोः पचादित्वादचि गुणवाचकादित्यर्थः। अत्र "गुणवचनेभ्यो मतुपो लुगिष्ट" इति पाणिनीयवार्त्तिकञ्च।

(२) समवायः सम्बन्धविशेषस्तद्वतीत्यर्थः। स च सम्बन्धः—घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः। तेषु जातेश्च सम्बन्धः समवायः प्रकीर्त्तित इत्युक्तलक्षणः।

प्रभृत्याविनाशादाधारस्यापरित्यागात्। नापि जातिः पृथग्जातिषु दृश्यते, ब्राह्मणत्वादेर्गवादिष्वसमवेतत्वात्(१)। इदन्तु स्वरूपकथनम्(२)। नापि सत्ता(३) गुणः, द्रव्यगुणकर्म्मसु वर्त्तमानत्वात्, न च सा द्रव्यादपैति। नन्वेवं कर्म्मापि गुणः, सत्त्वं यदा सक्रियम्भवति तदा सत्त्वे निविशते, यदा निष्क्रियं भवति तदा सत्त्वादपैति, पृथग्जातिष्वपि दृश्यते, यथा गमनादिक्रिया मनुष्येषु दृश्यते तथा गवादिष्वपि दृश्यते, अतो निराकर्त्तुमाह आधेय इत्यादि। आधेय उत्पाद्यः, क्रिया व्यापारस्तस्माज्जातः क्रियाजः, न क्रियाजोऽक्रियाजः नित्य इत्यर्थः। तथाचोत्पाद्यं घटादिरूपम् अनुत्पाद्यं परमाण्वादिरूपम् (४)। कर्म्मणस्तूत्पाद्यत्वमेव नानुत्पाद्यत्वं, तस्य जन्यत्वात्। एवं (५) घटादेर्महत्त्वादिकमुत्पाद्यम्, आकाशादेर्महत्त्वादिकमनुत्पाद्यमिति। एवं सति द्रव्यमपि गुणः; द्रव्यं (६) हि

---

(१) समवायसम्बन्धेन वर्त्तमानत्वाभावात्।

(२) गुणस्येति शेषः।

(३) द्रव्यगुणकर्म्मवृत्तिजातिविशेषः। तथाचोक्तं भाषापरिच्छेदे—सामान्यं द्विविधं प्रोक्तं परञ्चापरमेव च। द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते इति। सामान्यं जातिः।

(४) परमाणु· पृथिव्यादिभूतचतुष्टयानां द्व्यणुकानामवयवः। स च नित्यः निरवयव·। तत स्सूक्ष्ममपि नास्ति। तथाचोक्तं—नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा। अनित्या तु तदन्या स्यात् सैवावयवयोगिनीति। परमाणुद्वयात्मकं द्व्यणुकं, त्रसरेणुस्त्रिगुण परमाणु-परिमाणम्। तथाच वैद्यक परिभाषा—जालान्तरगते सूर्य्यकरे ध्वंसी विलोक्यते। त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभिरिति।

(५) घटादे रूपवदित्यर्थ।

(६) घटपटादिकम्। तथाच—क्षित्यप्तेजोमरुद्व्योम-काल-दिग्देहिनो मन इति नव द्रव्याणि।

## २६६। पाच्छोणादि-स्वाङ्गेतोऽक्तेर्वा।

(पाद्—स्वाङ्गेत: ५।, अक्तेः ५।, वा।१।)।

द्रव्यारम्भकेऽवयवभूते (१) निविशते, तदवयवसंयोगविनाशादपैति, पृथग्जातिषु दृश्यते, अवयविद्रव्यस्योत्पाद्यत्वं निरवयवद्रव्यस्यानुत्पाद्यत्वम्। अत आह असत्त्वप्रकृतिरिति। सत्त्वं द्रव्यं प्रकृतिः स्वभावो यस्य सः सत्त्वप्रकृतिः, न सत्त्वप्रकृतिरसत्त्वप्रकृतिः, द्रव्यभिन्न इत्यर्थः। एवं सत्यपि व्यवच्छेदफलकत्वात् (२) सत्त्वे एवेत्यवधारणं द्रष्टव्यम्, अन्यथा अभावेऽतिव्याप्तिः स्यात्। घटाभावस्य घटे निवेशात्, घटसन्निधाने सति तदपगमात्, पृथग्जातिषु दर्शनात्, ध्वंसस्य उत्पाद्यत्वादत्यन्ताभावस्यानुत्पाद्यत्वात् (३)। तथाच द्रव्यभिन्नस्य यस्य क्वचिदधिकरणे द्रव्ये द्रव्यमात्रेऽभिनिवेशः, ततोऽपगम इति द्वयं, निवेशमात्रं क्वचिदधिकरणे (४) पृथग्जातिषु दर्शनं, क्वचिदुत्पादनीयत्वं, क्वचिन्नित्यत्वं, स गुण इत्यर्थः। यथोक्तधर्म्मानाक्रान्तत्वात् धेनुरित्यत्र नेप्।

२६६। पाच्छो। पादित्यनेन संख्यासुपमानादित्यादिना-

---

(१) द्रव्यसमवायिकारणे कपालादौ।

(२) व्यवच्छेद इतरव्यावृत्तिः। तथाच द्रव्यभिन्नत्वे सति द्रव्येतरावृत्तित्वादित्यर्थः।

(३) अतिव्याप्तिसंभवदोषं वारयति। [illegible]। इह हि अभावो न गुणकर्मादिः, तत्र [illegible] दोषः इत्यर्थः। पुनः [illegible] द्रव्यभिन्नत्वे सति द्रव्यमात्रवृत्तित्वस्य [illegible] अभावे [illegible] दोषं दर्शयति घटेति। [illegible] घटाभावो घटेऽस्ति।

(४) निरवयवे आकाशादौ।

पादः शोणादेः स्वाङ्गात् इकारान्ताच्च स्त्रियामीप् स्याद्वा, नतु क्तेः। त्रिपदी त्रिपात्, शोणी शोणा चण्डी चण्डा, बिम्बोष्ठी बिम्बोष्ठा। स्वाङ्गात् किं—

स्वाङ्गं स्यादद्रवं मूर्त्तं प्राणिस्थमविकारजम्।
दृष्टं तत्रातत्स्थमपि तद्वत्ताद्दृशि च स्थितम्॥

---

दिष्टस्य ग्रहणम्। शोण आदिर्यस्य सः, पाच्च शोणादिश्च स्वाङ्गञ्च इच्च तत्तस्मात्। न क्तिरक्तिस्तस्याः, अर्थवशादितो विशेषणम्(१)। त्रिपदी—त्रयः पादा यस्याः सा इति वाक्यम्, एवं द्विपदी द्विपात् चतुष्पदी चतुष्पादित्यादि। शोणीति अनुदात्तान्तवर्णादित्यनेन(२) नित्ये प्राप्तेऽनेन विकल्पः। चण्डीति अप्राप्ते विकल्पः।

शोणादिर्यथा—

शोण-साधारणाराल-विशाल-च्चय-शङ्कटाः (३)।
कृपाण-कृपणोदाराः कमलो विकटोऽञ्चतिः।
अङ्गत्वंहति-कल्याण यष्टि-वस्ति-विशङ्कटाः।
सह्राय भवजी चण्डः पुराणोऽङ्गादिपश्चिमाः।
नदीभेदे चन्द्रभागा वर्णाभूस्तु ध्रुवस्त्रियाम्।
अङ्गान्य-दन्त-कण्ठश्च शृङ्ग-कर्णौष्ठमित्यपि।
पुच्छ नेत्रं तथा गात्र जङ्घमङ्गादिरीरितः॥

---

(१) अर्थवशादीकारनया पादादिभि सह सम्बन्धासङ्गतेरित्यर्थः।

(२) भावो शकोति सूत्रस्य टीकायां वार्त्तिकं द्रष्टव्यम्।

(३) सर्व्वेषु पुस्तकेषु तामव्यादिरयम्। किन्तु काशिका कातन्त्र सिद्धान्तकौमुदी-प्रक्रियाप्रकाशेषु शोणादौ, अमरकोषे शब्दकल्पद्रुमे च तामव्यादि शङ्कट-शब्दोऽत्र दृश्यते। दन्त्यादिस्तु देशी-विशेष वाचक शब्द शङ्कटेति रूपमिति केचित्।

बहुस्वेदा द्रवत्वात्। सुज्ञाना अमूर्त्तत्वात्। सुमुखा शाला अप्राणिस्थितत्वात्। सुशोफा विकारजत्वात्।

सुकेशी सुकेशा रथ्या, अप्राणिस्थस्यापि प्राणिनि दृष्टत्वात्।

---

इयशब्दस्य जातिवाचित्वेऽपि युड्त्वात्, अश्वति अङ्कति अ- इति एषां त्याद्यन्तप्रतिरूपकत्वात्, यष्टिवस्त्योः क्त्यन्तत्वात्, अङ्गाद्यन्तानां स्वाङ्गवाचित्वेऽपि स्त्रोड: स्वाङ्गस्याजादौ पाठात्, शेषाणां सर्व्वथैवाप्राप्ते पाठः। परेतु गौरादौ हयमाहुस्तत्र, हयया शतयोजनगामिन्येति हरिवंशे दर्शनात्। अङ्गादिपश्चिमाः यथा— मृदङ्गी मृदङ्गा स्थूलाम्बी स्थूलाम्बा। छगलाम्बी ओषधिरिति नित्यं, नदादेराकृतिगणत्वात्। चारुदन्ती किन्नरकण्ठी तीक्ष्णशृङ्गी चारुकर्णी बिम्बोष्ठी कल्याणपुच्छी सुनेत्री(१) सुगात्री दीर्घजङ्घीति। पक्षे चारुदन्तेत्यादि। चन्द्रभागी चन्द्रभागा नदी। एकदेश-विकृतमनन्यवद्भवतीति न्यायात् चान्द्रभागी चान्द्रभागा च।

तथाच—

चन्द्रभागा चान्द्रभागी चान्द्रभागा च चन्द्रिका।
चन्द्रभागी च सैवोक्ता नदीश्रेष्ठा प्रकीर्त्तिता॥

इति शब्दचन्द्रः। वर्षाभ्वी वर्षाभूः भेकी। स्वाङ्गादुदाहरति,

---

(१) अङ्गादिगणे तर्कवागीशेन पठितो नेत्रशब्दः काशिका-वृत्तिप्रसार-सिद्धान्तकौमुदी कातन्त्रटीकासु न दृश्यते। प्रस्तुत इहमुग्धबोधे सुनेत्रा इत्येव न तु सुनेत्रीत्युक्तं न्यायपञ्चाननपादैः। प्रयोगरत्नमालायान्तु कवादिप्रकरणे "दन्तोष्ठ-कण्ठ-गात्राङ्ग-शृङ्ग-कर्णोदरादिकात्" इति ५१९ सूत्रस्य वृत्तौ "वादिना सह नासा नेत्राणां ग्रहण" मित्युक्तम्।

सुस्तनी सुस्तना प्रतिमा, प्राणिवत् प्राणिसदृशे स्थितत्वात् ।

राज्ञी राज्ञि: । क्तेस्तु-बुद्धि: मति: ।

---

सुमुखीति—शोभनं मुखं यस्या: सा इति वाक्यम् । स्वाङ्गाङ्गीय एवास्य विषय: । एवं दीर्घनखी दीर्घनखा तुङ्गनासिकी तुङ्ग-नासिका इत्यादि ।

अथ स्वाङ्गलक्षणमाह स्वाङ्गमित्यादि । द्रवो घर्म्मादिस्त-द्भिन्नं, मूर्त्तं काठिन्यादिस्पर्शविशेषवत्, प्राणिनि तिष्ठतीति प्राणि-स्थम्, विकारो दोषस्तस्माज्जातं विकारजं, न विकारजमविकार-जं यत् तत् स्वाङ्गं स्यात् । दृष्टमित्यादि—यतत्त्र्यं अप्राणिस्थमपि तत्र प्राणिनि दृष्टं चेत्तदा स्वाङ्गम् । तादृशि प्राणिसदृशे प्रतिमादौ स्थितं स्तनादिकञ्च तद्वत् प्राणिस्थवत् स्वाङ्गमित्यर्थ: । अद्रवादि-पदानां व्यावृत्तिमाह बहुलेदेत्यादि । राज्ञी राज्ञिरिति राज-धौरित्य: । एवं—

श्रोणी मसी चुची शारी वीची वेणी मणी कटी ।

श्रेणी च रजनी पद्धे योणिरित्यादय: क्रमात् ॥

अक्तेरित्यनेन क्त्यर्थस्योपलक्षणत्वात् अकरणि: अजीवनि: काङ्कारिमकार्यै: सर्व्वां कारिमकार्यमित्यादौ न स्यात् । क्त्यन्ता-दपि कश्चित् । मा गान्ग्लानीं मृणालीति व ग्लानशब्दात् भावे क्ते कृते पित्त्वादीप् । परे तु पंग्रहणादीकारान्तादपि, तेन श्री लक्ष्मीत्यादि, तथाच—तां श्रोमिव समायान्तोमित्यादिप्रयोग इत्याहु: । निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्येति न्यायात् क्तदिकारादेव, तेन सुगन्धि: युवजानिरित्यादौ न स्यात् ।

२६७। धात् क्रीतात्। (धात् ५।, क्रीतात् ५।)।

धनेन क्रीयते स्म—धनक्रीती।

२६८। क्तादल्पे। (क्तात् ५।, अल्पे ७।)।

धादित्येव। अभ्रलिप्ती, अभ्रेण लिप्यते स्म।

२६९। स्वाङ्गाद्वे। (स्वाङ्गात् ५।, द्वे ७।)।

स्वाङ्गात् परो द्वे स्थितो यः क्तस्तस्मादीप् स्यात्। शङ्खभिन्नी।

---

२६७। धात्। धनक्रीतीति—क्रीधोः क्तः, स्याद्युत्पत्तेः प्राक् कृदन्तेन सह वे धनेनेप्। सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति तु आबन्तेन सह सादिति परे। अन्ये तु धनक्रीतीत्याहुः। धादिति पौनिर्देशादव्यवहितक्रीत-शब्दादेवेत्यर्थः, तेन धनसुक्रीतेत्यादौ न स्यात्। क्रीतान्तादपि कश्चित्, तन्मते धनसुक्रीतीत्यादि। धात् किम्? रामक्रीता(१)।

२६८। क्तात्। धात् क्तान्तादीप् स्यात् अस्याल्पत्वे सति(२)। अभ्रलिप्तीति—अल्पेनाभ्रेण छन्नेत्यर्थः। एवं सूपलिप्ती पात्री, अक्षरलिप्ती लिपीत्यादि। अल्पे किम्? सुखपूर्णा भक्तिः।

२६९। स्वाङ्गात्। क्त इति क्तान्त इत्यर्थः। शङ्खभिन्नीति—शङ्खो ललाटास्थि, शङ्खौ भिन्नौ यया इति वाक्यम्। एवमूरुभिन्नी गलोत्कृत्ती केशविलूनीत्यादि। स्वाङ्गात् किम्? वहुकृता सु-कृता। द्वे किम्? पादपतिता। परं तु नञ् सु-वहु-सुष्ठ साम समर-

(१) रामेण क्रीता, रामेति धर्माद् क्रीता।

(२) अत्रापि स्याद्युत्पत्तेः प्राक् समास इति दुर्गादासः।

२७०। वाच्छन्नाज्जातेः।

(वा ।१।, अच्छन्नात् ५।, जातेः ५।)।

आच्छादनजातिवर्ज्जात् जातिवाचिनः परात् क्ते स्थितात् क्तादीप् स्याद्वा। इक्षुभक्षितो इक्षुभक्षिता। छन्नात्तु—वस्त्रच्छन्ना।

२७१। पत्न्यामपालकान्तात्।

(पत्न्याम् ७।, अपालकान्तात् ५।)।

पुंवाचकादपालकान्तादीप् स्यात् भार्य्यायाम्।

गोपी। पालकान्तात्तु—गोपालिका।

---

दुःखभिन्नात् क्तान्तस्वाङ्गवाचिनोऽदन्तात् क्तादीपमाहुः। तद्युपन्यस्तता स्वाङ्गादिति विशेषणात् अक्षता सुक्षता इत्यादि वारितम्।

२७०। वाच्छन्नात्। न छन्नोऽछन्नस्तस्मात्। इक्षुभक्षितीति—इक्षुर्भक्षितो यया सा इति वाक्यम्। एवं शुकहृष्टी शुकजग्धी सुरापीती, पक्षे शुकहृष्टेत्यादि। जातेः किम्? मासजाता घृतपीता। क्तादिति किम्? केशप्रिया।

२७१। पत्न्याम्। पालकोऽन्तो यस्य स पालकान्तः, न पालकान्तोऽपालकान्तस्तस्मात्। नञः सादृश्यद्योतकत्वात् (१) पुंवाचकादकारान्तादित्यर्थः। गोपीति—गोपस्य पत्नीति वाक्य, पुंवाचकगोपशब्दस्य स्वस्वामित्वे सम्बन्धे वाच्ये स्त्रियां

---

(१) सादृश्यन्तु पालकशब्दस्य पुंस्त्वेन अदन्तत्वेन च, तेन पालकभिन्नात् पुंवाचकादकारान्तादेवाय विधिः। अतएव पुंस पत्नी इत्यादौ न स्यात्, अदन्तत्वाभावादिति। 'पत्न्यामित्यनेन पुंवाचकादिति लभ्यते। तथा पालकान्तवर्जनादकारान्तादिति वक्तव्य'मिति हरेकृष्णबोधम्।

### २७२। ब्रह्मरुद्रभवसर्व्वमृड़ेन्द्रवरुणादानङ् च।

(ब्रह्म—वरुणात् ५।, आनङ् ।१।, च ।१।)।

एभ्यः पत्न्यामीप् स्यात्, तेषामानङ् च। ब्रह्माणी रुद्राणी।

### २७३। मातुलोपाध्यायक्षत्रियाचार्य्यसूर्य्यार्य्याद्वा।

(मातुल—अर्य्यात् ५।, वा ।१।)।

---

वृत्तिः। एवं वैश्यो वैश्यी शूद्रीत्यादि। गोपालिकेति—गोपालकस्य पत्नीति वाक्यम्। एवमश्वपालिकेत्यादि। पुंवाचकात् किम्? प्रजाता (१)।

२७२। ब्रह्म। ब्रह्मा च रुद्रश्च भवश्च सर्व्वश्च मृड़श्च इन्द्रश्च वरुणश्च तत्तस्मात्। ङित्वादन्त्यस्यान। ब्रह्माणीति—ब्रह्मणो भार्य्या इति वाक्यम्। एवं रुद्राणी भवानी सर्व्वाणी मृड़ानी इन्द्राणी वरुणानी। मण्डूकगत्या वानुवर्त्तं तस्य व्यवस्थावाचित्वात् महेन्द्राणी शक्राणी। तथाच—वाचधामा महेन्द्राणी शक्राणी गजवाहिनीति(२)। परे तु ब्रह्मशब्दं न स्मरन्ति। तन्मते ब्रह्माण-मानयतीति घनधोः ओ ढात् षण्णितिप्रणि णित्वादीपि ब्रह्माणी; एवं शक्राणी शिवानी ईश्वराणीत्याहुः। महेन्द्राणीति महती चासौ इन्द्राणी चेति व्युत्पत्तिः।

२७३। मातुलो। मातुलश्च उपाध्यायश्च क्षत्रियश्च आचार्य्यश्च सूर्य्यश्च अर्य्यश्च तत्तस्मात्। मातुलानीति-मातुलस्य पत्नीति वाक्यम्।

---

(१) "प्रजातेति-प्रजाता निर्गतगर्भाऽभिधीयते। नायं शब्दः पुंसो वाचकः"— इति संक्षिप्तसारे स्त्रीप्रत्ययपादे ८८ सूत्रस्य टीकायां गोयीचन्द्रः।

(२) संक्षिप्तसारे तु जनवाहिनीति।

मातुलानी मातुली। अन्ये लोपमपि विकल्पयन्ति, तदा मातुलेत्यादि। तद्वाशब्दो व्यवस्थाप्यः। आचार्य्यानी, अत्र न णत्वम्।

२७४। वृषाकप्यग्नि मनु पूतक्रतु कुसित कुसीदादैङ् च।

(वृषाकपि—कुसीदात् ५।, ऐङ् ।१।, च ।१।)।

एभ्यः पत्न्यामीप् स्यात्, तेषामैङ् च। वृषाकपायी अग्नायी मनायी।

---

अन्ये तु इत्यादि—ये तु ईप विकल्पयन्ति तन्मते मातुला इत्यपि। तदस्मन्मते वाशब्दस्य व्यवस्थया ज्ञेयम्। एवम् उपाध्यायानी उपाध्यायी, स्वयं व्याख्यात्री चेदुपाध्यायी उपाध्याया च। आचार्य्यस्य पत्नी आचार्य्यानी, स्वय व्याख्यात्री चेदाचार्य्या (१)। सूर्य्यस्य पत्नी सूरी, देवतायां ( सूर्य्याणी ? ) (२) सूर्य्या च। क्षत्रियार्य्ययोः पत्नी क्षत्रियी अर्य्यी, जातौ क्षत्रियाणी क्षत्रिया, अर्य्याणी अर्य्या चेति।

२७४। वृषा। वृषाकपिश्च अग्निश्च मनुश्च पूतक्रतुश्च कुसितश्च

---

(१) अर्य्याणी स्वयमर्य्या स्यात क्षत्रिया क्षत्रियाण्यपि। उपाध्यायाप्युपाध्यायी स्यादाचार्य्यापि च स्वत। आचार्य्यानी तु पुंयोगे स्यादर्य्यी क्षत्रियी तथा। उपाध्यायानुपाध्यायी —इत्यमरः। या च स्वय मन्त्रव्याख्यात्री सा आचार्य्या इति तट्टीका।

(२) सूरी कुन्ती, मानुषीयम इति सिद्धान्तकौमुदी। अत्र सूर्य्याणीति लिपिकरप्रमादपाठः। अतएव "सूर्य्याणीत्युदाहरणं पाणिनिसर्व्वस्वे क्रमदीश्वरानामसम्मतत्वाद्धेय मिति दुर्गादासः।

२७५। नारी सखी यवानी यवनानी हिमान्यरण्यानी मनावी पतिवत्न्यन्तर्वत्नी पत्नी भाजी गोणी

---

कुसीदश्च तत्तस्मात्। पद्धतीत्यादौ वायहणात् नित्यमिदम्। पत्रामेव नियमात् पूतक्रतुर्वाह्मणीत्यत्र न स्यात् (१)।

२७५। नारी। निपातो ह्यर्थविशेष इत्युक्तेः—नृ-नरयोर्जातौ नारी। सखी सुहृदि। दुष्टो यवो यवानी, यमानीति सुभूतिः(२)। *यवनानां लिपिर्यवनानी (३) अन्यत्र यावनी भाषा। हिमानी* हिमसंहतिः। महारण्यमरण्यानी। मनोः पत्नी मनावी, मनायी च पूर्व्वेण। पतिरस्त्यस्याः सा पतिवत्नी सभर्त्तृका, मतोर्मस्य वत्वं नश्च, अन्यत्र पतिमती सेना। अन्तरस्त्यस्याः अन्तर्वत्नी (४)

---

(१) वृद्धिविभू सुपाकशी इत्यमरः। पूतक्रतुरिन्द्रः। कुशिताः—जनपदविशेष तद्वासी च। कुसीदः—कुसीदम् वृद्धिजीविका तद्वान्, कुसीदिनो लिपु इति मेदिनी।

(२) योयान् इति भाषा।

(३) लिपिरक्षर-संस्थानम्।

(४) अन्तर्वत्-पतिवतोर्नुक् (४।१।३२) इति पाणिनीय-सूत्रस्य सिद्धान्तकौमुद्यां "अन्तरस्त्यस्यां गर्भ इति विग्रहे अन्त-शब्दस्याधिकरण-शक्ति-प्रधानतया अस्ति-सामानाधिकरण्याभावादप्राप्तो मतुप् निपात्यते। मतुबुदाहरणन्तु अन्तरस्त्यस्यां शालायां घटः" इत्युक्तम्। अतोऽत्र अन्तर्वतीति प्रत्युदाहरणं नैवं सम्मतम्। तथाच—"अन्तर्वतीति प्राचोक्तं प्रत्युदाहरणमयुक्तम्, अस्तिसामानाधिकरण्या-भावान्मतुपोऽप्रसक्तत्वात्" इति तत्त्वबोधिनी। तर्कवागीशमते तु अन्तर्वतीति प्रत्युदा-हरणं। गोयीचन्द्रोऽपि अन्तर्वती शालेति प्रत्युदाहृतवान्। अत्र अन्तर् शब्दो गर्भवचन इति मधुसूदनः।

## नागी स्थली कुण्डी काली कुशी कामुकी घटी कवरी नीलगशिखाः। ( नारी—अशिखाः १॥ )।

एते निपात्यन्ते।

---

गर्भिणी, अन्यत्र अन्तर्वती। पत्नी पाणिगृहीती (१), अन्यत्र पतिरियं स्त्री ग्रामस्य।

समानैक-पुत्र-सपिण्ड-वीर भ्रात्रभ्यश्च हे। एभ्यः पत्युः पत्नी निपात्यते हे। समानः पतिरस्याः सपत्नी, एवमेकपत्नी वीरपत्नीत्यादि। हे किम्? एकपतिः स्त्री ग्रामस्य।

अन्यस्माद्वा। वृद्धः पतिरस्याः वृद्धपत्नी वृद्धपतिः, स्थूलपत्नी स्थूलपतिः। हे किम्? अतिपतिः। ग्रामस्य पतिरित्यर्थे ग्रामपत्नीति केचित्।

भाजी पक्वायाम्, अन्यत्र भाजा। गोणी धान्यादिवहनपात्रभेदः, अन्यत्र गोणा। नागशब्दोऽत्र गुणवचनः, नागी स्थूला। जातिवचनात्तु पूर्वेणैव यथा—नागी करेणुः नागी काद्रवेयी, अन्यत्र नागा (२)। स्थली अकृत्रिमा भूः, अन्यत्र स्थला (३)।

---

(१) सिद्धान्तकौमुद्यां "पत्युर्नो यज्ञसंयोगे (४।१।३३) इति सूत्रस्य वृत्तौ "वशिष्ठस्य पत्नी, तत्कर्तृक-यज्ञस्य फलभोक्त्रीत्यर्थः, दम्पत्योः सहाधिकारात्" इत्युक्तम्।

(२) नागशब्दः स्वप्रकार्य-गजगत-स्थौल्यगुण योगात् स्वप्रकार्य-सर्पगत-दैर्घ्यगुणयोगाच्च स्थूले दीर्घे च वस्त्वन्तरे वर्त्तते। तत्र यदा स्थौल्यगुणवत्यां कस्यांश्चिद्वर्त्तते तदैव ङीषादीप् स्यात् दैर्घ्यगुणवत्यामित्याशय इति बृहन्मुग्धबोधम्।

(३) अकृत्रिमा भूमि।

कुण्डी पात्री, अन्यत्र कुण्डा जारजा। काली कृष्णवर्णा, अन्यत्र काला श्रोतुमशक्ता। कुशी लौहविकारः फाल इति, अन्यत्र कुशा रज्जुः। कामुकी मैथुनेच्छावती, अन्यत्र कामुका धनस्य। घटादल्पत्वे घटी पात्रभेदः। घटीत्युपलक्षणं, प्रायशोऽल्पत्वविवक्षायां लिङ्गसामान्याद्दीप्, तेन मठी पटी छत्री वंशी मृणालीत्यादि। प्रायश इत्युक्तेः अल्पो वृक्षः वृक्षक इत्यादौ न स्यात्। कवरी केशवेशः, अन्यत्र कवरा कर्व्वुरा।

नीलात् प्राण्योषध्योः। नीली गौः, नीली औषधिश्च (१)। कुवलय-दल नीला कोकिला बालचूते इति तु नील्या रक्तेत्यर्थे अण्यः तस्मादाप् नीला। ततश्च कुवलयदलवन्नीला कुवलयदल-नीला, एव वर्व्वणा मक्षिका नीला इत्यमरः। नीला कङ्गु-(२) रिति तु जात्यभिधाने संज्ञायां वेति केचित् (३)। नञ्पूर्व्वशिश्वोर्जायायाम् अशिश्वी, शिशुना विना जाया इत्यर्थः।

पाणिगृहीतीत्यूढ़ायाम्। पाणिर्गृहीतोऽस्याः सा पाणिगृहीती

---

(१) नील गाइ इति भाषा।

(२) कङ्गु पीततण्डुला, धान्यविशेषः, काङ्गनि इति भाषा।

(३) वर्व्वणा मक्षिका नीलेत्यमरस्य टीकायां—"नीलेति मक्षिकाविशेषणमिति शुभू। अन्ये तु नीलीति पाठं मन्यमाना नीलात् प्राण्योषध्योरिति ईप्रत्यये नामत्वमाहुः। भरत राय * * * * नीला कालवर्णा, नीलेति मक्षिकाविशेषणम्। अतएव नीलात् प्राण्योषध्योरिति नित्यं ङीप्प्राप्ते नीलेति टाबन्तपाठो लेखकप्रमादज इति शुभ्न्यादयः। नील्या रक्तेव "नील्या अणि" त्यण्, नीला। अतएव कुवलयदलनीला कोकिलेति प्रयोग, अतो न ङीप् इति समाधेयम्। कालवर्णमक्षिकायां एवम्। यदा तु नाम एव तत्र तदा "वा संज्ञाया" मिति ङीपभावपक्षे युक्त एव टाबिति तु पक्षम् इत्युक्तम्।

**२७६ । पद्वती शक्ती युवत्यनड्वाही श्वेन्येनी हरिणी भरिणी रोहिणी लोहिन्यसिक्नी पलिक्न्यो वा।**

(पद्वती—पलिक्न्यः १।।।, वा ।१।) ।

पक्षे—पद्वतिः शक्तिः यूनी अनडुही श्वेता एता हरिता भरिता रोहिता लोहिता असिता पलिता । असिक्नी अवृद्धा, पलिक्नी वृद्धा ।

---

जाया, यज्ञसंयोगेनोढ़ा इत्यर्थः, अन्यत्र तु उपचारात् पत्न्यादि-प्रयोगः (१) ।

अनुदात्तान्ताद्वर्णादीप् । अनुदात्तान्तवर्णवाचिनः स्त्रियामीप् स्यात् । कल्माषी शबली सारङ्गीत्यादि । अनुदात्तान्तादिति किम् ? कृष्णा कपिला धवला इत्यादि । इदं नदादित्वात् सिद्ध-मिति केचित् । अन्तोदात्तस्य छन्दोविषयत्वात् ।

२७६ । पद्वती । पादस्य हतिरिति वाच्य, हनधोः क्तिः, अक्तेरिति निषेधे प्राप्ते विधिः । शकधोः शक्ती शस्त्रभेदः, वले तु शक्ति । युवन्शब्दस्य नान्तत्वादीपि सिद्धे तङ् निपात्यते, अनान्त-त्वान्न वस्य उः । अनडुहशब्दस्य ईपि वा आण् निपात्यते । श्वेत-एत हरित-भरित-रोहित-लोहितानां वर्णवाचित्वात् अनुदात्ता-न्ताद्वर्णात् इत्यनेन नित्यमीपि प्राप्ते वा ईप्, तस्य नश्च निपात्यते । भरितो हरितो मत इति विश्वः । भरितशब्दं परे नाहुः । असित-

---

(१) उक्तञ्च काशिकायां—"कथं वृषलस्य पत्नी ? उपमानाद्भविष्यती"ति (४।१।३३) ।

२७७ । न मनुसंख्यास्वस्रजादेः ।

(न ।१।, मन्-संख्या-स्वस्र-अजादेः ५।) ।

एभ्य ईप् न स्यात् । सीमा, पञ्च, स्वसा माता, अजा बाला ।

(१०२) नेपोत्युक्तेः—यावती बह्वी ।

पलिताभ्यामीप्, तयोः क्नश्च निपात्यते । वाशब्दस्य व्यवस्थावाचित्वात् प्रियघ्नी प्रियचिः विंशती विंशतिः इति ।

२७७ । न मन् । स्वसा च अजश्च तौ, तावादी ययोः तौ । मन् च संख्या च स्वस्रजादी च तत्तस्मात्, पुंस्त्वं सौत्रत्वात् । सीमेति—नान्तत्वादीपि प्राप्ते निषेधः । पञ्चेति—नान्तसंख्याया एव ईप्निषेध इत्यन्ये । सामान्यतो निषेधात् एकस्य पत्नी एकेत्यादौ न स्यादित्येके । स्वसेति ऋदन्तत्वात् प्राप्ते निषेधः । स्वस्रादिर्यथा—

स्वसा माता चतस्रश्च तिस्रो याट-ननन्दरौ,
दुहिता च समाख्याता नप्ता केनचिदिष्यते ॥

नप्त्रीत्यन्ये । अजेति—जातिवाचित्वादीपि प्राप्ते निषेधः । अजादिर्यथा—

अजाश्वा मूषिका विप्रा कोकिला वड़वेड़का ।
परपुष्टा परभृता चटका वर्त्तका तथा ॥
शूद्रा जातौ टकारेत्सु बहुयत्तत्किमः करः ।
तथा हायनहानी च स्यातां पूर्व्वापरात् परौ ॥
पत्न्यां बालोत्तमा ज्येष्ठा कनिष्ठा मध्यमापि च ।
स्वाङ्गे तु क्रोड् गुद क्रोड़ शफ बाल भगोत्तराः ॥

कर घोणा शिखा नासा शिरो भुज गलान्तकाः ।
खुर-ग्रीवोत्तराश्चैव नख मुखान्ताश्च नाम्नि ।
स्वाङ्गात् क्तमितौ जातप्रतिपन्नौ च हे मतौ ॥

अजादिद्वादशभ्यो(१) जातिवाचकत्वात्, बहुकरादिभ्य(२)ष्टित्वात्, बालादिपञ्चभ्यः पञ्चां पुंवाचकत्वात्, क्रोड्गुदाद्यन्तेभ्यः स्वाङ्गत्वात्, स्वाङ्गात् क्ताद्यन्तेभ्यो हे क्तान्तत्वात्, ईपि प्राप्ते निषेधः । उदाहरणानि यथा—बहुकरा यत्करा तत्करा किङ्करा पूर्व्वहायणा अपरहायणा पूर्व्वहाणा अपरहाणा, इह पाठासत्वम् (३) । स्वाङ्गक्रोड् यथा—सुगुल्फा सुपार्श्वा । गुदादिषु—सुगुदा सुग्रीवा इत्यादि । संज्ञायां तु—शूर्पणखा कालमुखा गौरमुखा । अनाम्नि तु—शूर्पनखी शूर्पनखा । स्वाङ्गात् क्तादिर्यथा—केशजाता स्तनजाता (४) इत्यादि ।

अनासिकोदरा बह्वचः । नासिकोदरभिन्ना बह्वचः स्वाङ्गवाचिनोऽजादौ पठिताः (५) । पृथुजघना महाललाटा इत्यादि । नासिकोदरात्तु—तुङ्गनासिकी तुङ्गनासिका, महोदरी महोदरा इत्यादि ।

सह-नञ्-विद्यमानपूर्व्वाणि स्वाङ्गानि । सकेशा अकेशा विद्यमाननासिकेत्यादि ।

---

(१) शूद्रापर्य्यन्तेभ्यः ।    (२) हायनपर्य्यन्तेभ्य ।

(३) णत्वप्रकरणे त्रिचतुर्भ्यां वयस्येव हायनस्येत्युक्तेर्हान-शब्दस्य णत्वा प्राप्तिरयुक्तम् ।

(४) स्वाङ्गाद्दे इतीप प्राप्तौ निषेधः ।

(५) अजादौ पठिता इति परत्वाप्रवृत्तिः ।

स्वाङ्गसमुदायान्ताच्च (१)। कल्याणं पाणिपादं यस्याः सा कल्याणपाणिपादा। अस्वाङ्गसमुदायान्तात्तु—कल्याणं विद्यमानं मुखं यस्याः सा कल्याणविद्यमानमुखी। पूर्व्वसूत्रे (२) पूर्व्वद्वयग्रहणात् सह-नञ्-विद्यमानपूर्व्वावयवानि स्वाङ्गानीत्यर्थोऽतस्तेनापि न निषेध इति परे (३)।

य-कौशलाजादावटात् ण्यो यङ्च। यकारान्तात् कौशलात् अजादात् अवटाच्च ण्यः सर्व्वं आदिष्टा यङ्चाजादौ पठिताः। गोरक्षस्यस्त्र्यपत्यं गौरक्ष्या, एवं पौतिमाष्या शार्क्कराक्ष्या इत्यादि। कौशल्या आजाद्या आवट्या। यङे यथा—

ण्यष्णोरनार्षयोर्गोत्रे यङ् रूपोत्तमयोः स्त्रियाम्।
गोत्रस्यावयवेभ्यश्च क्रौड्यादिभ्यश्च वा क्वचित्॥
क्रौड़िरापिशलिर्लाडि(४)र्व्याडिरापक्षितिस्तथा।
भौरिकिर्भौलिकिः शालास्थलि-कापिष्ठलीत्यपि।
सौधातकिश्चौपयतस्तथा वैद्ययतो मतः।
चैकयतः शैकयतो भोजस्तु क्षत्रिये तथा।
सूतो युवत्यां, क्रौड्यादौ शेषं शिष्टप्रयोगतः॥

---

(१) स्वाङ्गसमुदायः स्वाङ्गशब्दसमासावयवीभूतपदसमूहः अन्तो येषां तादृशाः शब्दा अजादौ पठिता इत्यर्थः।

(२) अत्र विद्यमानशब्दपूर्व्वकत्वेऽपि ङ्यभावः इत्याग्रहात् पूर्व्वसूत्रे इति।

(३) तर्कवागीशोऽपि मतो ऽत्र तत्पूर्व्वे इत्यस्य टीकायां भि सर्व्वादिरमादिर सर्व्वान्तरस्तस्तदन्तानि पूर्व्वाचार्य्यैर्व्यवस्थापितानीति वक्ष्यति। तेनात्र विद्यमानशब्दस्य पूर्व्वपदस्याभावान्नैव निषेध।

(४) माड़िरिति क्वचित् पाठः।

(१) त्रिप्रभृतीनामन्त्यमुत्तमं, तस्य समीपम् उपोत्तमं, रु उपोत्तमं ययोस्तौ तयोः, न आर्षौ अनार्षौ तयोः। अण्च इञ्च तौ तयोः। तथाच गोत्रविहितयो रूपोत्तमयोरनार्षयोः अणिञो स्त्रियां यङ् स्यात्, ङ इत्। करीषगन्ध इव गन्धो यस्य स करीषगन्धिः करीषगन्धश्च (२) तस्य स्त्र्यपत्यं कारीषगन्ध्या। एवं बालाक्या वाराह्या इत्यादि। अनार्षयोः किम्? वासिष्ठी वैश्वामित्री। रूपोत्तमयोः किम्? औपगवी कापटवी। इह गोत्रशब्देनापत्यमात्रमुपलक्ष्यते। गोत्रे किम्? अहिच्छत्रे जाता आहिच्छत्री। अणिञोः किम्? ऋतभागस्यापत्यं स्त्रीति (टूप्रत्यये) आर्त्तभागी, ऋतभागस्यानन्तरापत्यमित्यर्थे ण्यविधानादार्त्तभाग्येति।

गोत्रस्येत्यादि। गोत्रस्यावयवा गोत्रस्याभिमताः कुलाख्याः पुणिक भुणिक मुखरास्तेभ्यः ष्यो यङ्। पुणिकस्य स्त्र्यपत्यं पौणिक्या भौणिक्या मौखर्य्या इति।

क्रौड्यादिदशानां ष्योयौपयतादिचतुर्णां ष्यस्य यङ्। क्रोड्यापत्यं स्त्री क्रौड्या। आपिशल्या लाड्या आपच्छित्या भौरिक्या भौलिक्या शालास्थल्या कापिष्ठल्या गौधातक्या चौपयत्या वैल्वयत्या चैकयत्या शैकयत्या इत्यादि। भोजस्यापत्यं स्त्री भोज्या क्षत्रिया, अन्यत्र भोजी। सूतस्यापत्यं स्त्री सूत्या युवती, अन्यत्र सूती।

---

(१) कारिका व्याघटे। त्रिप्रभृतीना—बहूना चिह्नानामित्यर्थः।

(२) करीष—शुष्कगोमयम्।

२७८। उतोऽयुङ्रज्ज्वादे र्नृप्राणिजातेरूप्।

(उतः ५।, अयुङ्रज्ज्वादेः ५।, नृप्राणिजातेः ५।, ऊप् ।१।)।

स्त्रियामुकारान्तात् नृजातेरप्राणिजातेश्च ऊप् स्यात्, न तु युङो रज्ज्वादेश्च। कुरूः कर्कन्धूः। प्राणिजातेस्तु—धेनुः। युङ्-रज्ज्वादेस्तु—अध्वर्युः रज्जुः हनुः।

---

वा क्वचिदिति दैवयज्ञि शौचवृक्षि सात्यमुग्रि (१) काण्ठे-विद्धि इत्येषां वा यङ्। दैवयज्ञ्या दैवयज्ञी शौचवृक्ष्या शौचवृक्षी सात्यमुग्र्या सात्यमुग्री काण्ठेविद्ध्या काण्ठेविद्धी। अन्ये तु पारिभाषिकगोत्रविहितयोः ष्यणोरेव यङ् विधानम्। अनन्तरापत्ये दैवदत्त्या याज्ञदत्त्या इति "क्वचिदन्यतोऽपि" इतिसूत्रं (२) विधायाहुः। एवं "वयस्यचरमे" इति सूत्र (३) विधाय किशोरी तरुणी चिरण्टीत्यादि उदाहरन्ति। कन्या बाला वत्सा होड़ा पाका मन्दा विनता इत्येषाम् अचरमवयोऽर्थत्वादीपि प्राप्ते अजादौ पाठ इत्याहुः (४)।

२७८। उतो। य उङ् यस्य सः, रज्जुः आदिर्यस्य सः,युङ् च रज्ज्वादिश्च तत्, न तत् अयुङ्रज्ज्वादि तस्मात्, पुंस्त्वं सौत्रत्वात्। न प्राणी अप्राणी, ना च अप्राणी च तत्, तस्य तत् जातिर्येति तस्याः। कुरूरिति—कुरुशब्दः कुरुदेशस्थमनुष्यजातिवाची। एवं

---

(१) कंसिप्रकारे गाद्धस्यचिरिति। (तद्धितपादे १६ सूत्रम्)।

(२) कंसिप्रकारे तद्धितपादे १८ सूत्रम्।

(३) कंसिप्रकारे तद्धितपादे ३० सूत्रम्।

(४) कंसिप्रकारे तद्धितपादे ७ सूत्रम्।

२७९ । वाम लक्षण शफ सह सहित संहितोपमानादूरोः ।

( वाम—उपमानात् ५।, ऊरोः ५। ) ।

वामोरूः रम्भोरूः ।

२८० । तन्वादेर्वा । ( तन्वादेः ५।, वा ।१। ) ।

तनूः तनुः चञ्चूः चञ्चुः ।

इति स्त्रीत्यपादः ।

---

ब्रह्मबन्धूः धीवन्धूः, एतौ कस्याश्चित् ब्राह्मणजातौ वर्त्तेते, तथा कारूरित्यादि । कर्कन्धूरिति—कर्कन्धुशब्दो बदरीजातिवाची,एवं अलाबूः इक्ष्वाकूरित्यादि । धेनुरिति नृभिन्नप्राणिजातिवाचकत्वात् न स्यात् । एवं कृकवाकुः आखुरित्यादि । तथा अध्वर्युरिति चरणवाचित्वात् पारिभाषिकजातिवाची (१) । रज्जुरिति अप्राणिजातिवाची, एवं हनुः तर्क्षुः (२) तरुः स्नायुः इत्यादि । आकृतिगणोऽयम् ।

२७९ । वाम । वामश्च लक्षणश्च शफश्च सहश्च सहितश्च संहितश्च उपमानञ्च तत्तस्मात् । वामोरूरिति वामौ मनोहरावूरू यस्याः सेति वाक्यम् । वामादीनामनौपम्यार्थं वचनम् । सफलसम्फलाभ्यामित्यन्ये । रम्भोरूरिति—रम्भे इव ऊरू यस्याः सा । एवं करिकरोरूरित्यादि ।

२८० । तन्वा । तनुः आदिर्यस्य सः तस्मात् । तनूरिति ।

---

(१) अध्वर्युः यजुर्वेदवित् ऋत्विक् । (२) पशुविशेषः टेको इति भाषा ।

गौणेऽपि, तेन वरतनु सम्प्रवदन्ति कुक्कुटाः, सुतनु सत्यमलङ्करणाय ते इत्यादौ स्यात् ।

तन्वादिर्यथा—

तनुश्चञ्चुरुरुर्भीरुः कङ्कु पङ्कु प्रियङ्गवः ।

गण्डुः कुहुरिति प्रोक्ता तन्वादौ सरयुस्तथा ॥

वाशब्दस्य व्यवस्थावाचित्वात् नाम्नि वाह्वन्त-कमण्डलु-कद्रुभ्यो नित्यमूप् स्यात् संज्ञायाम् । भद्रवाहूः, कमण्डलूर्नाम काचित्, कद्रूर्नागमाता । नाम्नि किम् ? वृत्तबाहुः ।

श्वश्रूः । इदं निपात्यम् । श्वशुरस्य पत्नी श्वश्रूः ।

आवादेर्लुक् त-लुकि । आप ईप् जपश्च लुक् स्यात् त-लुकि । बहुलाः कृत्तिकास्तासु जात इति ण्यस्य लुक्, लुकि न तद्वेति निषेधान्न ञिः, त-लुकि आपो लुक् बहुलः, आपो लुकि प्रसत्यवस्थितिः । एवम् अश्विन्यां जात इति ण्यलुकि ईपो लुक् अश्वो । त-लुकि किम् ? बहुलानाम् अश्विन्याश्च पतिः बहुलापतिः अश्विनीपतिरिति ।

इति स्त्रीत्वपादः ।

---

# कारकम् ।

## २८१ । स्यर्थसम्बुद्ध्युक्तार्थे प्री ।

( स्यर्थ-सम्बुद्धि-उक्तार्थे ७।, प्री ।१। )

सेरर्थे सम्बोधने स्वेरुक्तार्थे के सति च प्री स्यात् ।

यथा: श्रीः स्नानम् । हे विष्णो ।

सर्व्वोऽर्व्वो जीवनः पाता दानोयः प्रभवो लयः ।

---

२८१ । स्यर्थ । (१)सेरर्थो स्यर्थः, उक्तश्चासावर्थश्चेति सः, स्यर्थश्च सम्बुद्धिश्च उक्तार्थश्च तस्मिन् । स्यर्थो (१) हि स्वार्थादिपञ्चात्मकः, केषाञ्चिन्मते स्वार्थादित्रयात्मकः । यदुक्तम्—(२)

"स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्म्मादिरेव च ।

अमी पञ्चैव लिङ्गार्थास्त्रयः केषाञ्चिदग्रिमाः" ॥ इति ।

तत्र स्वार्थो विशेषणं (३), द्रव्यं विशेष्यम् (४), लिङ्गं पुंस्त्वादि, संख्या एकत्वादिः, कर्म्मादिर्डादिः । तथाहि गौर्नित्या (५) इत्यत्र

---

(१) स्यादिभिर्लिङ्गाना रूपाणि निरूप्य स्यादीनामर्थान् निरूपयति स्यर्थे-त्यादीति दुर्गादासः ।

(२) शब्देनोच्चार्य्यमाणेन यद्वस्तु प्रतिपाद्यते । तस्य शब्दस्य तद्वस्तु वाच्यतामर्थं संस्पृशेति भाष्ये ।

(३) भाष्ये इति शेषः । तत्र लिङ्गार्था इत्यत्र शब्दार्था इति विशेषः ।

(४) विशिष्यते सम्बध्यते येन तत् विशेषणम्, इतरव्यावर्त्तकमिति यावत् ।

(५) विशिष्यते विशेषणपदैः सम्बध्यते सम्यक् ज्ञायते यत् तद्विशेष्यम् ।

(६) गोत्वजातिर्नित्येत्यर्थः । तत्र नित्यत्वं ध्वंसप्रागभावरहितत्वमिति । जातिर्व्यक्तिवादिनो वैयाकरणा इत्येतत् स्वमतसिद्धमिदमुदाहृतम् । मीमांसक-मतञ्चैतत् ।

स्वरूपं (१) विशेषणत्वात् स्वार्थः । शब्दो ह्यर्थं (२) प्रतिपादयन् दीपवत् स्वरूपमपि प्रतिपादयति । जातिः शक्यत्वात् द्रव्यम् (३)। एवं(४) पटीयः शुक्लः, नीलो घटः, पाचको मैत्रः, दण्डी चैत्र इत्यादौ जातिगुणक्रियासम्बन्धाः स्वार्था विशेषणत्वात्, गुणघटमैत्रचैत्रादयो द्रव्याणि विशेष्यत्वात् । गौः सुन्दर (५) इत्यादौ तु शक्याश्रयतया

---

(१) गवादिशब्दस्वरूपम् तदपि लिङ्गार्थं । तथाहि "न चास्ति प्रत्ययो लोके शब्दो यत्र न भासते" इति संक्षिप्तसारस्य गोयीचन्द्रकृतटीकायां व्याख्यातम् अभिरामविद्यालङ्कारः ।

(२) शब्दस्वरूपस्य स्वार्थत्वे प्रतिपाद्यप्रतिपादकयोरभेदापत्तिं दृष्टान्तेन निरस्यति शब्दो ह्यर्थमिति—दीपो यथा अर्थं घटादिकं वस्तु प्रतिपादयन् ज्ञानविषयीकुर्वन् ज्ञानविषयीकरणसमकालमेवेत्यर्थं स्वरूपमात्मानमपि प्रतिपादयति बोधयति, तथा गवादिशब्दोऽपि अर्थमभिधेयं गोत्वादिकं प्रतिपादयन् स्वरूपमपि प्रतिपादयति । एतेन गवादिशब्दस्वरूपमपि लिङ्गार्थो भवतीति फलितार्थः ।

(३) जातिर्गोत्वम् । शक्यत्वात् शक्तिविषयत्वात् । शक्तिस्तु अस्मात्पदाद् अयमर्थो बोद्धव्य इतीश्वरेच्छारूपेति तार्किकाः । आधुनिकसङ्केतसंग्रहार्थम् इच्छामात्रमपीति केचित् । तज्ज्ञानन्तु व्याकरणादिभ्यो भवति । तदुक्तं 'शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धा' इति प्राहुः इति ।

(४) प्रयोगविशेषे विशेष्यविशेषणभावं दर्शयितुमाह एवमिति । पटीय इत्यादि—पटत्वसमानाधिकरणो गुणः, नीलगुणविशिष्टाभिन्नो घटः, पाकक्रियाश्रयाभिन्नो मैत्रः, दण्डसम्बन्धवदभिन्नश्चैत्र इत्येवं शाब्दबोधः ।

(५) जातिशक्तिवादिमते जातौ सौन्दर्यादिगुणानामसम्भवात् गौः सुन्दर इत्यादौ शाब्दबोधानुपपत्तिमाशङ्क्य समाधत्ते गौः सुन्दर इति । शक्याश्रयतया—शक्यं जातिस्तदाश्रयतया । व्यक्तिः—सास्नादिमद्गोपिण्डः । तदुक्तमभिरामेण "अन्येषां व्यक्तेः पदार्थत्वाभावे गौर्भवतीत्यादौ कथं व्यक्तिप्रतीतिः, जातेर्व्यक्तेरविनाभावात् व्यक्तिप्रतीतिरित्यदोष इति । (व्यक्तेरविनाभावात्—व्यक्तिं विना जातेरवस्थानादित्यर्थः ।)

व्यक्तिरेव द्रव्यं, जातिस्तु स्वार्थं इति। यद्यपि (१) प्रयोजननिर्व्वाहकारितया व्यक्तयो जातिभिन्ना एव, तथापि ता एव व्यक्तयस्तिरोहितभेदा जातिरुच्यते। यदुक्तम्—

"अर्थक्रियाकारितया भिन्ना व्यक्तय एव च।

ता एव व्यक्तयस्त्यक्तभेदा जातिरुदाहृता" ॥ इति।

धर्मधर्म्मिणोरभेदवादिमतेनेदम्। न च लिङ्गं त्यार्थः (२), यथा: श्रीः ज्ञानमित्यादौ एकयैव सिखया विशेषविधानानुपपत्तेः। नापि (३) संख्या त्यार्थः, एको द्वौ त्रय इत्यादौ व्यर्थताकल्पनात्,

---

(१) ये च जातौ शक्तिं वदन्तोऽपि धर्म्मधर्म्मिणोरभेदमङ्गीकुर्व्वन्ति, तन्मते गौः शुक्ल इत्यादौ न कश्चिद्विरोध इति दर्शयितुं तन्मतमुपन्यस्यति यद्यपीति। प्रयोजनं फलकार्य्यादि, तन्निर्व्वाहकारित्वं जातौ न सम्भवति तस्या निरवयवत्वात्। व्यक्तयः गवादयः। तिरोहितभेदा—तिरोहितः अनभिव्यक्तः भेदो यासां तथाभूताः। एतेन जातिव्यक्त्योरभेदभावः प्रतिपादितः। अतएव नैयायिका जात्याकृतिव्यक्तयः पदार्थ इत्याहुः। जात्यादयः सहिता एव पदस्याभिधेय इत्यर्थः। तत्र आकृतिः समवायः, तेन समवायसम्बन्धेन गोत्वाश्रयगोपिण्डे गोपदस्य शक्तिरिति तेषां मतम्। तथा च 'तत्तज्जात्याकृतिविशिष्टतत्तद्व्यक्तिबोधानुपपत्त्या कल्प्यमाना शक्तिर्जात्याकृतिविशिष्टव्यक्तौ विश्राम्यती'ति शब्दखण्डे सिद्धान्तमुक्तावली।

(२) लिङ्गार्थकथने उद्देश्यक्रमप्राप्तं लिङ्गं तु स्त्र्यादिकं प्रकृत्यर्थ एव न तु प्रत्ययार्थः। तस्य प्रत्ययार्थत्वे दोषमाह न चेत्यादि।

(३) संख्यायाः स्वार्थलिङ्गवाच्यत्वमित्याह नापीति। व्यर्थताकल्पनात् संख्याया इति शेषः। तथा च एकादिशब्दस्थले एकद्व्यादिसंख्यायाः शब्दवाच्यत्वस्य सुलभत्वादित्यर्थः। उक्तञ्चैतत् 'तानि च क्रमादेकद्विबहुष्वर्थेषु प्रयुज्यन्ते। द्विपदो द्वान्'। प्रभृतय संख्याशब्दा व्याख्याता इति ग्रन्थकारेण। किन्तु "लिङ्गसंख्याविनिर्मुक्तात् तु पदस्यार्थमध्ययादित अद्रव्यवाचिनामव्ययानामेव लिङ्गसंख्याविनिर्मुक्तत्वम् अन्येषान्तु लिङ्गसंख्ये विद्येते एव" इति सं-प्रकारे कारकपादे

स्वादिविधानन्तु साधुत्वार्थम्(१)। परे तु प्रकृतिप्रत्ययौ प्रकृत्यर्थविशिष्ट प्रत्ययार्थं (२) सह ब्रूत इत्युक्तेस्त्वार्थमप्याहुः। एव ढादिष्वपि। अस्य तु स्वार्थादिचतुर्ष्वर्थेषु विषय, ढादिषु विशेषविधानात्। यदुक्तम्—

"एके एकक इत्यन्ये द्वावित्यन्ये त्रयोऽपरे।
चतुष्क पञ्चक केचित् चतुष्के सूत्रमुच्यते॥"

त्रिकमते तु (३) दधि पश्यतीत्यादौ चम्पककुसुमसुवा-

---

४१ सूत्रस्य टीकायां गोयीचन्द्र। क्रमदीश्वरस्तु त्रिकवादी। तथाच तत्रैव सूत्रे वृत्तिकारेण एकवचनद्विवचनबहुवचनानां सत्त्वासत्त्वानाम एक वक्तीत्यादिक्रमेण व्युत्पत्त्या सख्याया अन्वर्थता प्रदर्श्य 'एको द्वावित्यादौ प्रकृत्यर्थं प्रत्ययेनाभूद्यति केवलाप्रयोगित्वादि सुष्ठ्वा च सख्या हि प्रत्ययार्थं इति प्रतिपादितम्। गोयीचन्द्रोऽपि 'अत्र त्रिक प्रातिपदिकार्थोऽङ्गीकृत इति प्रतिभाती त्याह।

(१) एको द्वावित्यादौ सख्यापि यदि लिङ्गार्थस्तदा उक्तार्थानामप्रयोग इति नियमात् स्वादिविधान कथमित्याशङ्क्याह स्वादीति। साधुत्वार्थं—पदसाधुत्वार्थं नापद शास्त्रे प्रयुञ्जीतेति भाष्यवचनात्।

(२) प्रत्ययार्थं सख्याकर्म्मादिकम्। सह युगपत्। उक्तञ्चान्यत्र 'प्रकृत्यर्थान्वितस्वार्थबोधकत्व प्रत्ययानामि ति। एतदनुकूल जुमरमत प्राक टीकाटिप्पन्या दर्शितम्। तत्र च टीकायां गोयीचन्द्रेण पञ्चकमध्ये तु सख्याकर्म्मादय प्रकृतिस्था एव विभक्तिभिर्द्योत्यन्ते यथा धातुस्थ एवार्थविशेषो ह्युपसर्गेण द्योत्यते * * * एवञ्च सति पञ्चक शब्दार्थ इति स्वीकृतम्। तस्मादुभयथापि व्यवस्था स्वीकरणीया अविरोधात्। कोऽस्माथेँ कातन्त्रपरीक्षायामिव निर्बन्धातिशयः, ग्रन्थानुरोधात् क्वचित् किञ्चिदान्वयणीयमि त्युक्तम्।

(३) त्रिकवादिन सख्याकर्म्मादिक प्रत्ययार्थमाहु। तन्मते दधि पश्यती त्यादौ विभक्तिलोपे कथ तत्प्रतीतिरित्याह त्रिकमते त्विति—दधि पश्यतीति दधि कर्म्मकदर्शनाश्रय इत्यन्वयबोध। उक्तञ्च—प्रकृतौ शक्तिमाश्रित्य प्रत्ययो याति सुप्रतामिति।

सितवसनादिवत् शक्ति-जनित-संस्कारविशेषादेव संख्याकर्म्माद्यवगमः। आढ़को व्रीहिः (१) प्रस्थो व्रीहिरित्यादौ लक्षणया परिमेयो व्रीहिर्द्रव्यम्, परिमाणन्तु स्वार्थ इति, तस्माच्छक्ति-लक्षणान्यतरसम्बन्धेन ग्रेयमात्रं वस्तु स्वार्थ इति।

सम्बोधन इति—स्थितस्याभिमुख्यविधानम् (२)। अत्र स्वार्थातिरिक्तत्वात् प्रथमा प्राप्तायां वचनं, यथा—हे विष्णो हे विष्णू हे विष्णवः, भो वृक्ष भो वृक्षौ भो वृक्षा इत्यादि। तैरिति—अस्योपलक्षणत्वात् (३) पीताम्बरः, ज्ञातरामः, "विषवृक्षोऽपि संवर्द्ध स्वयं छेत्तुमसाम्प्रतम्," "मनस्विगर्हितः पन्थाः समारोढुमसाम्प्रतमि"-

---

(१) यदा केवल आढकशब्द प्रयुज्यते तदा शब्दो हि स्वार्थं परिमाणं द्रव्यम्। यदा तु आढको व्रीहिरित्येव प्रयोगस्तदा लक्षणया परिमेयो द्रव्यं परिमाणञ्च स्वार्थः। तस्मात् शक्यार्थवत् लक्ष्यार्थोऽपि द्रव्यमिति। लक्षणा हि वृत्तिविशेषः, सा च—मुख्यार्थबाधे तद्युक्तो ययान्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वासौ लक्षणाशक्तिरर्पितेत्युक्तरूपा।

( २ ) स्थितस्य सिद्धस्य पदार्थस्य आभिमुख्यविधानं विज्ञापनीयविषयबोधनाय अभिमुखीकरणं सम्बोधनम्। उक्तञ्च हरिणा—सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः। प्राप्ताभिमुख्यस्य पुरुषः क्रियासु विनियुज्यते इति। अचेतनेषु तूपचारात्, यथा भो वृक्षेत्यादि। अत्र पूर्वोक्तलिङ्गार्थातिरिक्तमर्थान्तरम् उद्देश्यतारूपं प्रतीयते तेन उद्देश्यतासम्बन्धेन प्रथमाप्राप्तिवारणाय पृथग्विधानमिति।

(३) उपलक्षणत्वात् स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वात्। अव्याव्याप्तोऽपि समासाव्ययाभ्यासक्ते कारकेऽपि। ज्ञातराम इत्यत्र ज्ञातो रामो येन इति वाक्ये समासेन कर्त्ता उक्तः। साम्प्रतमव्ययम्, युक्ते द्वे साम्प्रतं स्थाने इत्यमरः। अनेनाव्ययेन विषवृक्ष, पन्था इत्युभयं कर्म्मोक्तम्।

त्यादौ सव्याभ्यामुक्तेऽपि प्रौ। के सतीति—कमिह क्रियानिमित्तभूतं ग्राह्यं, तेन मृदु भूयते इत्यत्र मृदुनो नोक्तार्थता(१)। इदमप्युपलक्षणं (२), शिवो देवता अस्य शैव इत्यादौ ष्यर्थस्योक्तत्वात्। को रामः, का सीता, इदं ज्ञानमित्यादौ उक्तत्वाभावेऽपि स्यर्थे प्रौ। ये तु सर्व्वं हि वाक्यं क्रियया परिसमाप्यते इति न्यायादस्तीत्याद्यध्याहरन्ति, तन्मते स्यर्थग्रहणं स्पष्टः श्रीः ज्ञानमित्यादौ स्यर्थमात्रप्रतीत्यां प्रौविधानार्थं, क्रियाध्याहारस्य वक्तृतात्पर्य्यानुरोधात्। अत्रोक्तार्थे पृथक् प्रौविधानात् इष्टादीनामनुक्त एव विषयः। स्येदक्तानां क्रमेण (३) उदाहरणं सर्व्वे इत्यादि। सर्व्वे इत्यस्य षट्स्वन्वयः। सर्व्वोऽर्च्चते अर्चधोर्द्वे घ्यण्, सर्व्वेण जीव्यते जीवधोर्घेऽनट्, सर्व्वं पाति पाधोर्घे ह्वन्, सर्व्वाय दीयते दाधोर्भेऽनीयः, अन्यत्रापि प्रयोगत इत्युक्तेः। सर्व्वात् प्रभवति प्रपूर्व्वभूधोर्ञेऽल्, सर्व्वे लीयते लीधोर्ङेऽल्।

---

(१) क्रियानिमित्तभूतं—क्रियायाः कारणस्वरूपं, येन विना यन्न भवति तत् तस्य निमित्तमित्युक्ते। क्रियाविशेषणस्य कर्म्मसंज्ञायामपि क्रियानिमित्तभूतकारकत्वाभावात् प्रत्ययेन तस्य नोक्तार्थत्वमिति। कर्म्मसंज्ञाफलन्त्वग्रे वक्ष्यति।

(२) इदं कारकमपि, क्वचित् कारकभिन्नस्याप्युक्तार्थत्वात्। ष्यर्थस्योक्तत्वात्—अत्र तद्धितेन षष्ठ्यर्थस्य सम्बन्धस्योक्तत्वात् शैव इत्यत्र प्रथमेति शेषः। एतच्च दुर्गादासेन "तथाच वार्त्तिके तिङ्कृत्तद्धितसमासैरभिहिते द्वितीयादयो न भवन्तीति"।

(३) स्येदक्तानां कारकाणामिति शेषः। क्रमेण—पञ्चकनिर्दिष्टकारकक्रमेण।

## २८२। कर्म्मक्रियाविशेषणाभिनिविशाधिशीङ्-स्थासन्वध्युपावस-ङं ढं ह्री।

( कर्म्म—ङं १।, ढं १।, ह्री।१। )।

कार्य्यं क्रियाविशेषणम् अभिनिविशादेर्ङंच ढसंज्ञं स्यात्, तत्र च ह्री।

---

२८२। कर्म्म। क्रियायाः विशेषणं क्रियाविशेषणं, नेर्विशः निविशः, अभेर्निविशः अभिनिविशः, शीङ् च स्था च आस् च तत्, अधेः शीङ्स्थास् अधिशीङ्स्थास्, अनुश्च अधिश्च उपश्च आश्च तेभ्यो वसः, अभिनिविशश्च अधिशीङ्स्थास् च अन्वध्युपावसश्च तत्, तस्य ङं तत्, कर्म्म च क्रियाविशेषणञ्च अभिनिविशाधिशीङ्-स्थासन्वध्युपावसङञ्च तत्। यत् क्रियते, कर्त्तुः क्रियया यद्व्याप्यते तत् कर्म्म(१)। तच्चिविधं, निर्व्वर्त्त्यं विकार्य्यं प्राप्यञ्चेति। तत्र कर्त्तुः

---

(१) हयोः कर्म्मणि मन्। इत्यो कार्य्यमित्युक्तम्, तदपि कर्म्मसमानार्थकम्, ह्यो कर्म्मणि घ्यण। "कार्य्यं क्रियाव्याप्यं, करोतेर्निखिलक्रियावाचकत्वात्। अत्र क्रियाव्याप्यत्वं न क्रियाजन्यफलाश्रयत्वं, गच्छतीत्यत्र गमनजन्यविभागाश्रयतया पूर्व्वदेशस्य, एवं त्यजतीत्यत्र त्यागजन्यसंयोगाश्रयतया उत्तरदेशस्य च कर्म्मत्वापत्तेः। किन्तु क्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वं धात्वर्थसन्निविष्टफलशालित्वमिति यावत् कर्म्मत्वम्। एतेन गमनजन्यविभागस्य गमधात्वर्थतानवच्छेदकतया गच्छतीत्यत्र न पूर्व्वदेशस्य कर्म्मत्वं, उत्तरदेशसंयोगावच्छिन्नक्रियाया एव गमधात्वर्थत्वात्। तथा उत्तरदेशसंयोगस्य त्यजधात्वर्थतानवच्छेदकतया नोत्तरदेशस्य कर्म्मत्वं, पूर्व्वदेशविभागावच्छिन्नक्रियाया एव त्यजधात्वर्थत्वात्। न च ग्रामं गच्छति वृक्षं त्यजतीत्यत्र क्रियाजन्यधात्वर्थतावच्छेदकीभूतसंयोगविभागाश्रयतया संयोगविभागयोश्च कर्त्तृकर्म्मोभयनिष्ठत्वात् कर्त्तुः कर्म्मत्वापत्ति-

रामं नमति सानन्दं धर्म्मानभिनिविश्य सन् ।
श्रीशोऽधिशेतेऽहिमधिष्ठितोऽब्धि-
मध्यास्य घोषं मथुरामनूष्य ।
यो द्वारकामध्युषितो विकुण्ठ-
मुपावसच्चावसतात् स कृष्णः ॥

क्रियया यस्योत्पादः प्रकाशो वा तन्निर्व्वर्त्त्यं, यथा कटं करोति, पुत्रं प्रसूयते इत्यादि । कर्त्तुः क्रियया यस्याः प्रकृतेरनुच्छेदेनो-च्छेदेन वा अवस्थान्तरापत्तिस्तद्विकार्य्यं, यथा वस्त्रं रजति, काष्ठं दहतीत्यादि । कर्त्तुः क्रियया कृता विशेषसिद्धिर्दर्शनेनानुमानेन वा यत्र न ज्ञायते तत् प्राप्यं, यथा वेदमधीते, सूर्य्यं पश्यति इत्यादि । काष्ठं भस्म करोति, सुवर्णं कुण्डलं करोति इत्यादौ काष्ठसुवर्णे विकार्य्ये, भस्मकुण्डले निर्व्वर्त्त्ये ।

यदुक्तं—

यदसज्जायते पूर्व्वं जन्मना यत् प्रकाशते (२) ।
तन्निर्व्वर्त्त्यं विकार्य्यञ्च कर्म्म द्वेधा व्यवस्थितम् ।

---

रिति प्राप्यं, क्रियायां परकीयत्वविशेषणस्य विवक्षितत्वात् । तथाहि परकीयक्रियाजन्यभात्वर्यतावच्छेदकीभूतफलशालित्वं कर्म्मत्वमिति । परन्तु तद्विषयकपदार्थाभिधायिनि जानाति इच्छति करोति द्वेष्टि यतते इत्यादौ तु विषयताख्यभाक्तकर्म्मत्वमि' ति गदाधरः ।

(२) यत् पूर्व्वं असत् पश्चात् जायते, यच्च पूर्व्वं सदिति शेषः पश्चात् जन्मना प्रकाशते तदुभयमपि निर्व्वर्त्त्यम् ।

प्रकृत्युच्छेदसम्भूतं (१) किञ्चित् काष्ठादि भस्मवत्।
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादि विकारवत् (२)।
क्रिया-कृत-विशेषाणां सिद्धिर्यत्र न विद्यते (३)।
दर्शनादनुमानाद्वा तत् प्राप्यमिह कथ्यते॥

परे त्वनीप्सितमपि कर्म्मान्तरं, तद्द्विविधं, प्रतिकूलमप्रतिकूलञ्च। यथा—ओदनं बुभुक्षुर्विषं भक्षयति, ग्रामं गच्छन् वृक्षमूलमुपसर्पति इत्याहुः। तदसम्मते निर्वर्त्यविकार्यभिन्नं प्राप्यमिति लक्षणेन प्राप्यान्तर्भूतमिति। चैत्रो ग्रामं गच्छतीत्यादौ उत्तरदेशसंयोगावच्छिन्नगतिक्रियाव्याप्यत्वात् ग्रामस्य ढत्वम्। विश्लेषं त्यजतीत्यादौ पूर्वदेशविभागावच्छिन्नत्यागक्रियाव्याप्यत्वात् वृक्षस्य ढत्वम्। अतएव गमित्यज्योर्नैकपर्य्यायता (४) इति। सुखं

(१) "प्रकृतेः स्वभावस्य उच्छेदो विनाशस्तं सम्भूतं प्राप्तं काष्ठादि, किम्भूतं? भस्मवद् भस्मयुक्तम्। इदं पुनः सांख्यमते, काष्ठावस्थायामपि शक्तिरूपेण भस्मनः सम्भवादित्युक्तमिति न दोषः। ते हि कारणेषु शक्तिरूपेण कार्य्यावस्थितिरित्याहुः"—इति कातन्त्रे २१८ सूत्रटीकायां कविराजः।

(२) गुणान्तरोत्पत्त्या अवस्थान्तरापादनेन केवलं विकारवत् कुण्डलादियुक्तं किञ्चित् सुवर्णादि। अत्रापि पूर्ववत् सांख्यमतमनुसरणीयम्।

(३) यत्र कर्म्मणि। विद्यते ज्ञायते। "असतायमस्तु घटं करोति कुण्डलं करोतीत्यादौ कृतिसाध्यव्यापारनिष्पन्नानां घटादीनां तत्तत्क्रियाभिरुद्देशेऽपि कालान्तरं प्राप्य यथा घटोऽयं क्रियाजन्यः कुण्डलमिदं क्रियाजन्यमिति विशेषसिद्धिर्ज्ञायते तथा कालान्तरे तत्र ग्रामादेः क्रियाजन्यत्वे प्रमाणाभावादि"ति कारिका।

(४) न समानार्थता। गच्छति त्यजतीत्युभयत्र धात्वर्थस्वरूपस्य परिस्पन्दनरूपव्यापारस्याभेदेऽपि धात्वर्थतावच्छेदकफलरूपयोरुत्तरदेशसंयोगपूर्वदेशविभागयोर्भेदात्।

गच्छति पापं त्यजतीत्यादौ गौणगतित्यागक्रियाव्याप्यत्वात् (१) सुखपापयोर्ढत्वम्। एवं पुष्पमाकर्षति भ्रमरान् इत्यादौ लक्षणया कर्त्तुः क्रियाव्याप्यत्वात् भ्रमराणां ढत्वम्। वलिबन्धमाचष्टे वलिं बन्धयति, कंसवधमाचष्टे कंसं घातयति इत्यादौ बन्धवधाख्यानकर्त्तुः क्रियाव्याप्यौ वलिकंसौ, कथानुबन्धस्य तन्निबन्धनत्वात् (२)।

क्रिया धर्थः, तद्विशेषणस्य एकत्वं नपुंसकत्वं च, क्रियाया

---

(१) उत्तरदेशसंयोगानुकूलपरिस्पन्दनादिरूपव्यापारो मुख्यगतिः, मुख्यत्यागश्च पूर्व्वदेशविभागानुकूलपरिस्पन्दनादिरूपव्यापारः। सुखं गच्छति पापं त्यजतीत्यादौ तु कर्म्मस्वरूपे सुखपापादिभिः कर्त्तुः सम्बन्धस्तदभावश्च एतावन्मात्रं प्रतीयते, लक्षणया फलमात्रस्यैव धात्वर्थत्वात्, न तु उत्तरदेशसंयोग-पूर्व्वदेशविभागानुकूल परिस्पन्दनादिकमिति गतित्यागयोरत्र गौणत्वम्। गौणत्वन्तु लाक्षणिकत्वमिति।

(२) बन्धवधशब्दौ भावे अलन्तौ। बलेर्बन्धः कंसस्य वध इति कर्म्मणि षष्ठ्या षष्ठीसमासः। पश्चादाख्यानेऽर्थे ञौ कृते लुङ्महद्दिवामिति बहुवचननिर्देशाद्बहोर्लुकि कश्चिन्निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् कृतः प्रकृतिवद्भाव उभयत्र तद्योगलक्षणा षष्ठी च निवर्त्तते। अतएवोक्तं,—"प्रत्ययोच्छेद-लोपे च प्रकृत्यापत्तिरिष्यते। तदन्तत्वनिवृत्तौ च समासोऽपि निवर्त्तते" इति। तेन बन्धनहननक्रिययोः कर्म्मणि द्वितीया तिष्ठति। ततो बलिं बन्धि कंसं घाति इत्येताभ्यां तिप्शपौ। एतेन यद्यपि बन्धनहननक्रियाव्याप्यौ बलिकंसौ, तथा ख्यानकर्त्तुः क्रियाव्याप्यौ बन्धवधावित्यायाति, तथापि बन्धवधाख्यानकर्त्तुः क्रियाव्याप्यौ बलिकंसावित्युक्तौ तत्र हेतुमाह कथानुबन्धस्येति—कथानुबन्धस्य कथायामाख्याने अनुबन्धः सम्बन्धो यस्य तादृशस्य बन्धवधस्य तन्निबन्धनत्वात् बलिकंसान्वितत्वात्। (तौ बलिकंसौ निबन्धने हेतू आश्रयाविति यावत् यस्य तस्य भावस्तत्त्वात्।) बलिकंसावाश्रित्य बन्धवधाख्यानस्य प्रवर्त्तितत्वादिति निष्कर्षः। अनया रीत्या बलिकंसयोर्बन्धवधाख्यानकर्त्तुः क्रियाव्याप्यत्वं दर्शितमिति।

लिङ्गसंख्याविनिर्मुक्तत्वात् (१)। साधुः पाकः, साधू पाकौ, साधवः पाकाः इत्यादौ क्तदभिहितो भावो द्रव्यवत् प्रकाशते इत्युक्तेः पुंस्त्वैकत्वादयः स्युरेव (२)। ढत्वातिदेशाच्च (३) मृदु नयतीति मृदुनीस्तौ मृदुन्यो इत्यादौ कात्यायनेकाच इति यः।

राममित्यादि। सन् धीरः धर्मानभिनिविश्य सानन्दं यथा स्यात्तथा राम नमतीत्यन्वयः। धर्माधेयातीताभिनिवेशोत्तरराम-विषयक-सानन्दाभिन्ननत्याश्रयः सन्नित्यर्थः। श्रीशो घोषमध्यास्य पयाम्बुराशिमनूष्य अब्धिमधिष्ठितः सन् अहिमधिशेते। यश्च द्वारकामध्युषितः सन् विकुण्ठमुपावसत्, स नोऽस्माकं हृत् (४) हृदयमावसतादित्यन्वयः।

कल्याणेऽभिनिवेशः, या या संज्ञा यस्मिन् यस्मिन्नभिनिविशते, त्वय्यभिनिविष्टमनसः, अत्राधिष्ठानं कुरु, गृहेऽधिष्ठानमित्यादौ तु

---

(१) क्रिया पुनरेकवचनैवेति वैयाकरणा इत्युक्तं गोयीचन्द्रेण। तस्मादेकत्वं, सामान्यत्वान्नपुंसकत्वञ्च।

(२) द्रव्यवदित्यनेन द्रव्यत्वातिदेशात् क्तदभिहितभावस्य पृथग्रूपत्वमुक्तं, तेन तस्मात् पुंस्त्वैकत्वादयो भवन्त्येव। अतएव "अपृथग्रूपक्रियाया विशेषणस्य कर्म्मत्वं क्लीबत्वञ्चे"ति अस्मिन्प्रसारे कारकपादे ९८ सूत्रम्। क्तदभिहितभावस्यापि कश्चिदपृथग्रूपत्वम्, आतिदेशिकमनित्यमिति न्यायात्। तत्र मञ्जीरो रति-मन्दिरावधि सखीकर्णावधि व्याहृतामथादिशतम्। अत्र मञ्जीर इत्यस्य अपृथग्-रूपत्वात् तद्विशेषणस्य रतिमन्दिरावधीत्यस्य एकत्व नपुंसकत्वञ्च।

(३) क्रियाविशेषणत्वेति शेष।

(४) हृदिति "पदादय पृथक्चन्द्रा इत्येकं" इत्यादेशेनोक्तम्।

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् (१) डमेव। तीर्थे उपवसति, ग्रामे उपवसति इत्यादौ तु अप्रयुक्तस्य वसतिव्यस्य डम्। तथाच तीर्थे ग्रामे वा वसन् सन् त्रिरात्रमेकरात्रं वा उपवसतीत्यर्थः। यदुक्तं—

वसतावप्रयुक्तेऽपि देशोऽधिकरणं मतम् (२)।

अप्रयुक्तं त्रिरात्रादि कर्म्म चोपवसे स्मृतम्॥ इति भाष्यम्।

एके तु अनशनार्थस्योपवसतेरिह न ग्रहणमित्याहु.। तन्मते एकादशीमुपवसन्ति निरम्बुभचाः, उपोष्य रजनीमेकामित्यादौ सदाध्वादिना ढम्। एतेषां ढत्वविधानात् धर्म्मा अभिनिविश्यन्ते, श्मशानाद्दिरधिशय्यते इत्यादौ ढे त्य (३)। रणे राजानमधितिष्ठतीत्यादौ न स्यात्, एषामढानामेव ग्रहणात्, रणे राजानमपेचते इत्यर्थः (४)।

---

(१) अपवादो विशेषविधिरुत्सर्गं सामान्यविधि। न्याये चास्मिन् अपवाद विषये अभिनिविशते इत्यभिकरणस्योक्ता तदेव दर्शितमिति।

(२) अत्र तीर्थरूपो देशो वसतित्यप्रयुक्तस्यापि पदस्याधिकरणं भात मित्यर्थं।

(३) तथाच "मण्डले मण्डलाकारो रेखा वाजिमयी अभे। मध्यास्यव्ये हि धृष्टो नकुलाधिष्ठितो हय इत्यत्र अधिष्ठित इति कर्म्मणि क्त। एव 'वलैरध्युषिता स्तस्य विजिगीषोर्गताध्वन। मारीचोद्भ्रान्तहारीता मलयाद्रेरुपत्यका इति रघु। अत्रापि अध्युषितेति कर्म्मणि क्त।

(४) अत्र अधिपूर्व्वस्थाधातोरपेक्षार्थत्वात् सकर्म्मकत्वम्, तेन रणे इत्यधिकरणस्य न कर्म्मत्वम्। अत्र गङ्गाधरः 'रणे इति गम्यमानस्य धातोरधिकरणं, तेन रणे स्थिता राजानमपेचते' इत्याह।

## २८३ । देशाध्वकालभावं वाढैः ।

( देश-अध्वन्-काल-भावं १।, वा ।१।, अढैः ३।।। ) ।

अढैर्धुभिर्योगे एते ढसञ्ज्ञा वा स्युः ।

नदीर्वनेषु चोषित्वा क्रोशाथस्तेष्वहर्निशि ।

चंक्रमित्वा प्रियानीतिं रामो रक्षोवधे स्थितः ॥

---

२८३ । देशाध्व । देशश्च अध्वा च कालश्च भावश्च तत् । नास्ति ढं येषां ते तैः ।

देशो नदीभूधरकन्दरादिः

अध्वाध्वमानं करयोजनादि ।

कालो मुहूर्त्तायनवत्सरादिः

भावस्तदर्थ-त्य परो वधादिः (१) ॥

करो हस्तमानम् । नदीरित्यादि । नदीर्वनेषु च उषित्वा वासं कृत्वा क्रोशांस्तेषु च अहर्निशि चंक्रमित्वा इतस्ततो भ्रमणं कृत्वा रामः प्रियानीतिं सीताया आनयनविषये रक्षोवधे रक्षसां वधविषये च स्थितोऽतिष्ठदित्यर्थः । एवं कुरून् स्वपिति, कियन्तमध्वानं तिष्ठति, मासं स्वपिति, गोदोहं वसति, पक्षे कुरुषु स्वपितीत्यादि । ढत्वविधानात् नद्य उष्यन्ते, क्रोशाश्चक्रम्यन्ते, मासः सुप्त इत्यादि स्यात् । विकल्पपक्षे तु नदीषु उष्यते जनैरित्यादि । अढा धवः सत्ताद्यर्थेषु वर्त्तमानाः ।

---

(१) तदर्थत्यपरः—स भाव अर्थो यस्य स तदर्थः, स चासौ त्यश्चेति तदर्थत्यः, स परो यस्मात् स । स कः ? वधादिः ।

तथाच—

सत्ता निवासासन सिद्धि वृद्धि
क्रीडा रुचि स्यन्दन जीवनेषु।
नृत्य स्थिति त्रास विशोष लज्जा
स्पर्द्धा स्मृति क्रन्दन भाषणेषु।
शुद्धौ जरे जागरणे प्रकम्पे
स्वप्न क्षयोद्वेग मदेषु दुर्गतौ।
यत्ने ह्रसे (१) नादरतौ भवोऽढा
इत्याविवक्षावशतः सदाच। (२)

तथाच भागुरिः—

"धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्म्मणोऽकर्म्मिका क्रिया (३)॥" इति।

केचित् सर्व्वैरपि, रात्रिमोदनं पचति रात्रिरोदनं पच्यते, पचे रात्रावोदनं पचतीत्यादिकमिष्यते इत्याहुः। इदं नित्यमित्यन्ये।

---

(१) अत्र ह्रदे इत्यपि पाठः। ह्रदो विश्रामः।

(२) अत्राभ्यदय्याह दुर्गादासः, यथा—दीर्घत्वादिषु चार्थेषु वर्त्तमानास्तु धातवः। सापेक्षा भावमात्रस्य वर्त्तनादकर्म्मकाः। कौटिल्यादिषु चार्थेषु प्रोक्ता ये ते च धातवः। तद्दुभावेऽकर्म्मका स्युस्तद् अन्यथा सकर्म्मका इति।

(३) धातोरर्थान्तरे वृत्ते यथा—प्रापणे सकर्म्मकस्य वहेः लपको धान्यं वहति, स्यन्दनेऽकर्म्मकता, नदी वहति। धात्वर्थेन सह कर्म्मण उपसंग्रहात्, यथा—प्राणान् धारयतीत्यर्थस्य जीवतीति धात्वर्थेनोपसंग्रहादकर्म्मकता। एवं तपस्यति मुनिः व्यय यति व्याध इत्यादावपि। प्रसिद्धेर्यथा—भवति, आस्ते शेते इत्यादय। कर्म्मणोऽविवक्षातो यथा—पाइते अन·।

## २८४। सदाध्वादि व्याप्तौ सर्व्वैः सिद्धे तु धम्।

(सदा ।१।, अध्वादि ।१।, व्याप्तौ ७।, सर्व्वैः ३।।।, सिद्धे ७।, तु ।१।, धम् १।)।

सर्व्वैर्धुभिर्योगे अत्यन्तसंयोगे अध्वादयो नित्यं ढसंज्ञाः स्युः, अर्थसिद्धौ तु धसंज्ञाः।

भत्यैः कृष्णोऽन्वितः क्रोशं मासौ गुरुगृहे स्थितः।
गुरूपदेशं निभृतो माभ्यामध्यैष्ट वाङ्मयम्॥

---

२८४। सदा। अध्वादिर्यस्य तत्। देशनिहत्यर्थमध्वादि इत्युक्तम्। व्याप्तिः साकल्येनाभिसम्बन्धोऽविच्छेद इति यावत् तत्र(१)। अर्थस्य सिद्धिरर्थसिद्धिः फलप्राप्तौ क्रियापरित्यागस्तत्र। सर्व्वैरिति अढसढैरित्यर्थः।

भत्यैरित्यादि—कृष्णः वाङ्मयं शास्त्रं माभ्यां मासाभ्याम् अध्यैष्ट ज्ञातवान् इत्यन्वयः। कृष्णः कीदृशः? भत्यैः क्रोशमन्वितः, क्रोशपरिमितमध्वानं व्याप्याविच्छेदेनानुगत इत्यर्थः। पुनः कीदृशः? मासौ गुरुगृहे स्थितः, मासद्वयं व्याप्याविच्छेदेन स्थित इत्यर्थः। पुनः कीदृशः? गुरूपदेशं निभृतः, गुरुवचनेऽत्यन्तासक्त इत्यर्थः। क्रोशमिति गौणढत्वेन नोक्तं, व्याप्तिजस्ताढगत्यर्था मुख्ये ढे ढत्यमाप्नुयुरित्युक्ते। माभ्यामिति धसंज्ञा फलसिद्धत्वात्(२)।

---

(१) वृत्तौ अत्यन्तसंयोग इत्युक्तं, तदर्थो हि अन्तं विरामं अतिक्रान्तः अत्यन्तः स चासौ संयोगश्चेति अत्यन्तसंयोगः निरन्तरसन्निकर्ष इत्यर्थः।

(२) अध्ययनप्रयोजनस्य ज्ञानरूपस्य सिद्धत्वादित्यर्थः। एवं क्रोशेनानु-

अन्तर्भूतक्रियान्तरेणैव ढत्वमिति भाष्ये। अन्तर्भूतक्रियान्तरेणैवेत्यनेन व्याप्त्यर्थमनुकर्षति। यदुक्तं—

कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः।
सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते॥ इति।

ढत्वविधानात् मासः सुप्यते, मासौ सुप्येते, मासाः सुप्यन्ते इत्यादौ मुख्यढाभावात् गौणे ढे त्यः। केचिद्दौं विदधति, तन्मते मासः सुप्त इत्यादावव्याप्तिः। मुख्यढाभावेऽढत्वाद्भावे त्य इति कश्चित्, तन्मते मासं सुप्यते, क्रोशं सुप्यतेऽनेनेति। एकादश्यां न भुञ्जीत इति तु वाशब्दस्य व्यवस्थया पूर्व्वेणैव विकल्पः (१)। जन्म जन्म यदभ्यस्तमित्यत्र कालावच्छेदिकायां क्रियायां कालोपचारात् (२)। क्रोशं कुटिला नदीति क्रियाध्याहारात् (३)। व्याप्तौ किम्? मासयोरध्यैष्ट, विच्छेदेनाधीतवानित्यर्थः। अपवादोऽयमिति परे (४)। कालाध्वनोरेवायं विधिरित्यन्ये।

---

मासोऽधीत इत्यादि। अनुवाको वेदांशविशेषः। अन्यत्र मासं वेदमध्यैष्ट किमपि न ज्ञातवानित्यर्थः।

(१) एकादश्यां न भुञ्जीतेत्यत्र व्याप्त्यर्थेऽपि न कथं कर्मत्वमित्याशङ्कां समाधत्ते। पूर्व्वतो वानुवर्त्त्यं तस्य व्यवस्थाविभाषाविकल्पः, पक्षे एकादशीमिति। अतएव एकादशीमुपवसन्ति निरम्बुभक्ता इत्यत्र सहाध्यायिना दर्शितमुक्तम्।

(२) जन्मपदार्थस्य क्रियारूपत्वात् अध्वकालादिभिन्नत्वेऽपि जन्म जन्मेत्यत्र कथं द्वितीयेत्याह। यादृशयत्सम्बन्धो जन्मपदार्थस्तादृशोत्पत्तिक्रिया कालावच्छेदिका, कालोऽवच्छेदको विशिष्टधीहेतुर्यस्यास्तादृशी। अतः क्रियायाम् उत्पत्तिक्रियायां कालोपचारात् क्रियैव काल इत्युक्तेः कालारोपात् जन्मेत्यत्र कर्म्मत्वम्। जन्म जन्मेति पदस्य पक्षे तदनुगच्छतीति वाक्यसमाप्त्युपपादनमपरम्।

(३) भवतेर्गम्यमानत्वात् नदी क्रोशं व्याप्य कुटिला भवतीत्यर्थः।

(४) अपवादो विशेषविधिः। व्याप्त्यभावे सप्तम्यादिरित्यर्थः।

**२८५। घोऽञौ ञेः शब्दाशन-गति-ज्ञार्थाढ-ग्रह-दृश-श्रो रखाद-नी-क्रन्दाय शब्दाय ह्वादासूतघवहाहिंसाभक्षो ह्व-कृ-माभिवादिदृशस्तु वा।**

(घ १।, अञौ ७।, ञे ६।, शब्द—श्रो ६।, अखाद—भक्षः, ६।, माभिवादिदृश ६।, तु ।१।, वा ।१।)।

अञन्तानां शब्दार्थादीनां यो घः स आन्तानां ढः स्यात्, न तु खादादेः, ह्रादेस्तु वा।

२८५। घोऽञौ। न ञिरञिस्तस्मिन्। शब्दश्च अशनश्च गतिश्च ज्ञाश्च, ते अर्था येषां ते। नास्ति ढः कर्म्म येषां ते। शब्दाशनगतिज्ञार्थाश्च अढाश्च ग्रहश्च दृशश्च श्रुश्च तत्तस्य, पुंस्त्वं सौत्रत्वात्। नास्ति सूतघो यस्य सः, स चासौ वहश्चेति सः। न हिंसा अहिंसा, तस्या भक्षः सः। खादश्च नीश्च क्रन्दश्च अयश्च शब्दायश्च ह्वाश्च अदश्च असूतघवहश्च अहिंसाभक्षश्च तत्, न तत् अखादनीक्रन्दायशब्दायह्वादासूतघवहाहिंसाभक्ष तस्य। अभेर्वादि सः, अभिवादिश्च दृक् च तौ, मे आत्मनेपदे तौ माभिवादिदृशौ। ह्वा च का च माभिवादिदृशौ च तत्तस्य। शब्दार्था उच्चारणार्था शब्दढा अव इति यावत्। यथा पुत्रं पाठयति, शिष्यं शास्त्रं वाचयतीत्यादि। अशनार्था भोजनार्था यथा (१)—आशयति विप्रमन्नं, पाययति पान्थं जलमित्यादि। प्रीतोऽहं भोजयिष्यामि भवतो भुवनत्रयम् इत्यादौ गौणभोजनार्थे

(१) अत्र अशनार्थानां गलाध:करणमात्रार्थत्वेन पानार्था अपि भोजनार्था।

गेयमध्यापयद् गोपान् याज्ञिकान्नमभोजयत्।
स्वधामागमयच्छत्रून् भक्तांस्तत्त्वमबोधयत्।
धर्म्ममस्थापयद् विष्णुर्वेदानग्राहयद् विधिम्।
दैत्यानदर्शयच्छक्तिं वेणुमश्रावयच्च गाः॥

खादादेस्तु—रक्षांस्यखादयदनाययदूर्द्ध्वलोक-
माक्रन्दयत् कपिभिरायययदाशु रामः।
श्रब्दाययन् रिपुमजूहवदादयच्च
शैलानवाहयदभक्षयदिष्टभक्ष्यम्॥

सारथिघ-हिंसार्थयोस्तु—
वाहानवाहयत् पार्थमरीनाभक्षयद्धरिः॥

---

त्वात् (१) ढत्वम्। गत्यर्था गमनार्थाः, यथा गां व्रजं गमयत्यज इत्यादि। प्रवेशारोहणतरणप्रापणार्था अपि गत्यर्थास्तेन प्रावेशयन्मन्दिरमध्यमेनं, तामङ्कमारोप्य सुतां प्रतस्थे, प्रियामुदन्वन्तमतीतरद्धरिः, ननु मां प्रापय पत्युरन्तिकं, रावणं गमय प्रीतिमित्यादौ(२) त्वेके (३)। तमते सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाय लम्भयन्। द्विजावलीव्याज(४)निशाकरांशुभिः शुचिस्मितां

---

(१) उपभोगार्थत्वात्। अत्र भोजनस्यानन्दजनकत्वधर्मेण मुख्यभोजनस्य भा-वप्रधानत्वाद्दोषत्वम्। तथाचोक्तं गोपीचन्द्रेण "यथा बुभुक्षितस्य भोजनं परमानन्दकरं तथा श्रवणस्यभोजनमपि परमानन्दकरि"ति।

(२) सिध्यतीतिशेषः।

(३) अत्र "एतत्पातालपङ्कप्लुतवपुषो न अयनं कमनमगमयदभुवि"। "यत्र वेदविदयं महत्तया शैलशायमनुनीय कल्पित" इत्यपुराणमत्वमदे।

(४) पात इत्यत्र व्यात इत्यपि पाठः।

हृादिषु-शैलानहारयत् कोशान् ऋचैर्वृचानजीहरत् ।

कपीनकारयत् सेतुं वानरैरपि राघवः ।

स्वाभिवादयते वृद्धान् जानकीं लक्ष्मणेन च ।

सीतां रामेण चात्मानमदर्शयत लक्ष्मणः ॥

---

वाचमवोचदच्युत इति तु अपवादविषयेऽप्युत्सर्गस्य निवेशात्(१) । अन्ये तु प्रावेशयदित्यादिषु उपसर्ज्जनीभूतधात्वर्था गतिः प्रतीयते(२) इत्याहुः । ज्ञार्था ज्ञानार्था यथा, बोधयति शिष्यं धर्मं, ज्ञापयति नृपं हिताहितं, ग्राहयति जायां पुण्यं,(३)स्मारयति गात्रं कामिनीमित्यादि । अदाः सत्तार्थाः, यथा आसयति सुतं, शाययति पतिमित्यादि । मृदु शाययति सुतं, मासमधिशाययति पतिमि-

---

(१) लितिम्नेति प्रयोज्यकर्त्तुर्न कर्मत्वमिति शेषः । अत्र अच्युत इति मुनेर्विष्णुः सुतरां लितिम्ना लम्भयन् वाचम् अवोचदित्युपपादितवाक्यार्थः ।

(२) उपसर्ज्जनीभूतो गुणीभूतः प्रवेशादिरूपधात्वर्थो यस्याः तादृशी गतिः प्रतीयते । तथा च प्रवेशस्याभ्यन्तरप्राप्तिः प्रावेशयदित्यत्र विशधातोरभ्यन्तरप्राप्तिफलिका गतिरर्थः । ततश्च प्रवेशाद्यर्थस्य गौणत्वे गत्यर्थस्यैव मुख्यत्वात् गत्यर्थत्वेनैव प्रावेशयदित्यादिषु अन्त्यगतकर्त्तुः कर्म्मत्वम् । एवम् आरोप्य—आरोहणाय गमयित्वेत्यर्थः । आरोहणफलिका गतिरर्थः । अतीतरत—तरणाय अगमयदित्यर्थः । तरणञ्चागाधजलपारप्राप्तिः । प्रापय—प्राप्तिं गमयेत्यर्थः । अत्र प्राप्तिफलिका गतिरर्थः । एवमेवाभिरामसतम् । लित लितिम्नेत्यत्र च 'लम्भयन्नित्यत्र लभिर्गत्यर्थोपसर्ज्जनीभूत प्रापणार्थमाह, अत लितिम्नेति न कर्म्मेति गोयीचन्द्रः ।

(३) गोयीचन्द्रेणाप्येतदुदाहृतम् । सिद्धान्तकौमुद्यान्तु १ । ४ । ५२ सूत्रे "सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणं, न च तद्विशेषार्थानामित्यनेन ज्ञाप्यते । तेन स्मरति जिघ्रतीत्यादीनां न । स्मारयति घ्रापयति देवदत्तेन" इत्युक्तम् । 'स्मरत्यर्थेनं वन-गुल्मं इत्यत्र तु अधेरार्थाविति सूत्रे भाष्यप्रयोगादेव कर्म्मत्वं बोध्यम्" इति तत्रैव तत्त्वबोधिनी ।

त्यादौ औपाधिकसढत्वेऽपि (१) स्वभावसिद्धाढत्वमादाय अत्रा-न्तघस्य ढत्वमिति। धूनां सढत्वव्यवहारो हि कर्त्तुः क्रिया-व्याप्यढेनैव, अन्यथा शीघ्रं भूयते इत्यादावपि ढे त्यः स्यात्। तथाच–"त्रिवर्गपारीणमसौ भवन्तमध्यासयन्नासनमेकमिन्द्रः। वि-वेकहृत्त्वमगात् सुराणां तं मैथिलो वाक्यमिदम्बभाषे"॥ एवं विप्रो मैत्रं चैत्रं संक्रोधयति इत्यादि (२)। अचेर्देवयते हरिर्हरेणे-त्यत्र तु न स्यात्, वाशब्दस्य व्यवस्थया धपक्षेऽपि सढत्वातिदे-शात्(३)। परे तु ग्रहधुं न इच्छन्ति। अयन्तु "अजिग्रहत्तं जनको धनुस्तत् येनाहिंदत् दैत्यपुरं पिनाकी। जिज्ञासमानो बलमस्य बाह्वोर्हंसभ्रमाड्चौद्रघुनन्दनस्तत्"॥ "अयाचितारं न हि देवदेव-मद्रिः सुतां ग्राहयितुं शशाक" इत्यादिप्रयोगात् इच्छन्तीतवाम्। अत्र ज्ञानार्थत्वेनैव दृशः सिद्धे, ग्रहणं अदर्शनार्थत्वेऽपि स्यात्, तेन प्रियं प्रीतिं दर्शयति प्रकाशयतीत्यर्थः। एवं ज्ञानार्थत्वे-ऽपि शीग्रहणं क्वचिदन्यत्रापीति ज्ञापनार्थं (४), तेन "पुरुहूतद्विषो धूर्षु युक्तान् यानस्य वाजिनः। आयूंषि लघु निर्भिद्य प्राभञ्ज-निरमोचय"दिति भट्टिः। शूरसेनं पौरुषं त्याजयति। "मुक्ता-जालं चिरपरिचितं त्याजितो दैवगत्या"। देवदत्तं शतं दाप-

(१) आतिदेशिकसकर्मकत्वेऽपीत्यर्थः।

(२) अत्र वक्ष्यमाणवार्त्तिकबलेनैव अण्यदानीभूतचैत्रस्य कर्मत्वम्।

(३) करणपक्षेऽपि कर्मत्वातिदेशकरणम् अकर्मकलक्षणकार्यनिषेधार्थमिति।

(४) उद्धृतोऽपि हि भग्नः समधिकफलमाधत्ते इति न्यायादित्यर्थः।

यतीत्यादि स्यात् (१)। अत्र खादादेर्हिंसार्थभक्षाशनार्थतया नयतिवहत्योर्गत्यर्थतया, क्रन्दशब्दाययोराह्वानार्थतया शब्दार्थतया च प्राप्ते निषेधः। हृञोऽभ्यवहारार्थतया (२), हृञो दृशिविवक्षया (३), दृशश्च नित्ये प्राप्ते, अभिवादयतेरप्राप्ते, विकल्पः। हृञः स्तेयादौ, कृञः सकर्मकत्वादप्राप्ते विभाषेति भाष्यम्।

गेयमध्यापयदित्यादि। गोपा गेयम् अध्यैयत, गोपान् गेयम् अध्यापयत्। गोपा याज्ञिकान्नम् अभुञ्जत, गोपान् याज्ञिकान्नम् अभोजयत्। अग्नयः स्वधामागच्छन्, अग्नीन् स्वधामागमयत्, अस्त्र-पूतान् कृत्वा स्वस्य धाम स्थानं गन्तुं प्रेरितवान् इत्यर्थः। भक्ता-स्तत्त्वम् अबुध्यन्त, भक्तान् तत्त्वम् अबोधयत्, परमात्मानं बोधित-वान् इत्यर्थः। धर्मोऽतिष्ठत्, धर्मम् अस्थापयत्, अनेन कर्म्मणा धर्मस्तिष्ठतीति लोकशिक्षादिना धर्मं स्थापितवान् इत्यर्थः। विधिर्वेदानगृह्णात्, विधिं वेदानग्राहयत्, ब्रह्माणं वेदबोधितं कर्म्म कर्त्तुं प्रेरितवान् इत्यर्थः। दैत्याः शक्तिमपश्यन्, दैत्यान् शक्तिम् अदर्शयत्, स्वां शक्तिं प्रकाशयितुं प्रेरितवान् इत्यर्थः। गावो वेणुमशृण्वन्, गा वेणुमश्रावयत्, वेणुशब्दश्रवणमकारय-

---

(१) यहल्पल्लजदाप्रभृतीनामण्यन्तकर्तुः कर्मत्वं न सर्वसम्मतम्। अतएव "इत्यादयोऽसाधव इति वाभट" इत्युक्तं जुमरेण कारकपादे १० सूत्रस्य वृत्तौ। तत्रैव टीकायां "अन्ये तु एवंविधान् बहून् महाकविप्रयोगान् दृष्ट्वा कुशकाशावलम्बनन्यायेन किमपि प्रकारान्तरमाहुरित्याह गोयीचन्द्र। कुशघटितविधिना काशोऽपि गृह्यते इति न्यायार्थः।

(२) भोजनार्थतया।

(३) चैत्रोमैत्रं मैत्रेण वा कारयतीत्यादौ कर्म्माविवक्षायामित्यर्थः।

दित्यर्थः। विष्णुरिति सर्व्वत्र प्रयोजकधः। खादादिष्विति— कपयो रचांस्यखादन्, कपिभी रचांस्यखादयत्, भोक्तुं प्रेरितवान् इत्यर्थः। कपय ऊर्द्धलोकमनयन्, कपिभिरूर्द्धलोकमनाययत्, लोकान्तरमगमयदित्यर्थः। कपय आक्रन्दन्, कपिभिराक्रन्दयत्, रोदनं कारितवान् इत्यर्थः। कपयो रचांसि आयन्त, कपिभी रचांस्याययत्, प्रापितवानित्यर्थः। कपयः शब्दायन्ते, कपिभिः शब्दाययन्, राम इत्यस्य विशेषणं, सिंहनादं कारितवान् इत्यर्थः। कपयोऽह्वन्, कपिभिरजूहवत्, रिपुभिः सार्द्धं स्पर्द्धां कारितवान् इत्यर्थः। कपयो रिपुमादन्, कपिभी रिपुमादयत्, भोक्तुं प्रेरितवान् इत्यर्थः। कपयः शैलानवहन्, कपिभिः शैलानवाहयत्, आनायितवान् इत्यर्थः। कपय इष्टभक्ष्यम् अभचन्, कपिभिरिष्टभक्ष्यमभचयत्, अभिलषितं वस्तु खादयामास इत्यर्थः। सर्व्वत्र रामः प्रयोजकधः। वाहाः पार्थमवहन्, वाहान् पार्थमवाहयत्,अर्ज्जुनं वोढुम् अश्वान् प्रेरितवान् इत्यर्थ.। हरेः सारथ्यकर्म्मकर्त्तृत्वात् ढत्वम्। वाहा यवीन् अभचयत्, खादयामास इत्यर्थः। अत्र भचधोर्हिंसार्थत्वात् घस्य ढत्वम्, उभयत्र हरिः प्रयोजकधः। कीशाः शैलान् अहरन्, कीशान् शैलान् अहारयत्, आनेतुं प्रेरितवान् इत्यर्थः। ऋचा हृचान् अहार्षुः, ऋचैर्वृचान् अजीहरत्। उदाहरणद्वयेन विकल्पो दर्शितः। कपयः सेतुम् अकुर्व्वन्, कपीन् सेतुमकारयत्। वानराः सेतुमकुर्व्वन्, वानरैः सेतुमकारयत्। उदाहरणद्वयेन विकल्पो दर्शितः। जानकी हृद्यानभियादयति स्म, जानकीं हृद्यानभि-

२८६। याच्ञार्थ दुह चि प्रच्छ
रुध् ब्रू शास जि नी वहः ।
हृ दण्डि ग्रह कृष् मन्थ
मुष् पचाद्या धवो द्विधा ॥

वादयते स्म, लक्ष्मणो वृद्धानभिवादयति स्म, लक्ष्मणेन वृद्धानभिवादयते स्म, नमस्कर्त्तुं प्रेरितवान् इत्यर्थः। अभिपूर्व्व वदश्च वाक्सन्देशयोर्नत्यर्थः, तस्मात् प्रेरणे णिः। दृश्येन विकल्पो दर्शितः। सर्व्वत्र राघवः प्रयोजकश्च। सीता रामश्च लक्ष्मणम् अपश्यत्, स लक्ष्मणः सीतां रामेण च आत्मानम् अदर्शयत, ओदैऽओ घे इति मम्। एषामिति किम्? पाचयत्योदनं सूदेन गृहीत्यादि। परे तु गौणक्रियापेक्षया घत्वे मुख्यक्रियाव्याप्यत्वेन टत्वे सिद्धे नियमार्थमिदमिति ब्रुवन्तः (१) पाचयत्योदनं सूदेन गृहीत्याहुः (२)। अन्ये तु उभयप्राप्तौ परत्वात् घत्वे प्राप्ते विधिरयमित्याहुः।

२८६। याच्ञार्थ। याच्ञा अर्थो येषां ते, पच आद्यो येषां

(१) सिद्धान्तकौमुद्याः। १।४।५२। सूत्रस्य टीकायां "नियमार्थमेतत् सूत्रमिति प्राहुः। णिजर्थेनाप्यमानस्य यदि भवति तर्हि गत्यर्थादीनामेव कर्म्मेति। तेन पाचयति देवदत्तो यज्ञदत्तेनेत्यत्र प्रयोज्ये कर्त्तरि***तृतीया सिध्यति। उक्तञ्च —गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्म्मतां गतः। नियमात् कर्म्मसंज्ञायाः स्वधर्म्मेणाभिधीयते इति। स्वधर्म्मेण कर्त्तृ स्वधर्म्मेण तृतीययेत्यर्थः' इति तत्त्वबोधिनी। काशिकायामपि "एषामिति किं? पचत्योदनं देवदत्तः, पाचयत्योदनं देवदत्तेने"त्युदाहृतम्।

(२) अत्र केषुचित् पुस्तकेषु "पाचयत्योदनं सूदं सूदेन गृहीति। तन्मते सूत्रस्यारम्भं नपश्चार्थमि'त्यपि पाठः। प्रयोगरत्नमालायामपि द्विकर्म्मकधातुप्रकरणे

तमर्थयेऽहं मोक्षं, यो गोपैर्दुग्धमदुग्ध गाः ।
फलान्यवाचिनोद्वृक्षान्, वार्त्ताः पप्रच्छ वल्लवान् ।
ररोध गोकुलं गोपीरब्रवीच्च मनोहरम् ।
गोपालानन्वशात् केलीस्तत्राजय्यं जिगाय तान् ।
वृन्दावनमनैषीद्गास्तच्छिशूनवहद्व्रजम् ।
जहारारण्यमाभीरीर्दैत्यान् प्राणानदण्डयत् ।
जग्राह यज्ञगो भोज्यमकर्षत् पूतनां बलम् ।
समन्थामृतमब्धिं सुमोष दितिजाय तत् ।
योऽसौ पचति लोकानां पुण्यपापं सुखासुखम् ॥

---

ते पचाद्याः, पचात् चसः, द्वे द्वे येषां ते । कर्त्तुः क्रियाव्याप्यत्वात् मोचादीनां ढत्वं सिद्धम्, अनेन तु मोचादिहेतूनां छच्यादीनां ढत्वं विधीयते (१) । तमर्थयेऽहमित्यादि । यः श्रीकृष्णः गोपैः सह गोदोहनादिकं कृतवान् तमहं मोक्षमर्थये इत्यन्वयः । शम्भुं वरं याचते, देवान् वरं वृणीते इत्यादौ तु याचिवृञोर्याच्ञार्थत्वात् । यो गोपैर्गा दुग्धमदुग्ध । यो वृक्षान् फलानि अवाचिनोत्, वृक्षान् संघट्टयन् फलान्यादत्ते इत्यर्थः । यो वल्लवान् वार्त्ताः पप्रच्छ, जिज्ञास्यमभिधातुं प्रेरितवान् इत्यर्थः । गोपीर्गोकुलं ररोध, गोपीरन्तः स्थापयन् गोकुलमावृणोदित्यर्थः ।

---

६२० सूत्रे "गत्यादेरभिव कर्त्तुर्मिव स्यादिति कर्म्मता । अन्यासां दानपाकादिक्रियाणान्तु विभाषया । * * * लुटितकर्मेभिमात्पिहतंसजां स्मियमर्थं न पाचयेदिति भाष्यकृते" इत्युक्तम् ।

(१) अत एव कर्म्म शेषदुहादेरिति कारकपादे ८ । क्रमदीश्वरसूत्रम् ।

यो गोपीर्मनोहरम् अब्रवीत्, प्रबोधवाक्यं कथितवान् इत्यर्थः। यो गोपालान् केलीन् अन्वशात्, केलिं देशयन् विनीतवानित्यर्थः। यस्मात् गोपालान् अजय्यं जेतुम् अशक्यं युद्धं तत्र केलिविषये जिगाय, अजय्यं युद्धं स्वीकृत्य जितवान् इत्यर्थः। यो गाः वृन्दावनम् अनैषीत्, प्रापयामास। यो व्रजं तच्छिशून् गोवत्सानवहत्, नीतवान् इत्यर्थः। य आभीरीररण्यं जहार, गोपीररण्यं प्रापयामास इत्यर्थः। यो दैत्यान् प्राणान् अदण्डयत्, प्राणान् गृहीत्वा शशास इत्यर्थः। यो यज्वनो भोज्यं जग्राह, स्वीकृतवानित्यर्थः। यः पूतनां बलम् अकर्षत्, पूतनां विकृष्य बलं निनाय इत्यर्थः। योऽम्भोधिममृतं समन्थ, समुद्रमुन्मथ्यामृतमुत्थापितवान् इत्यर्थः। यो दितिजान् दैत्यान् तदन्नं मुमोष खण्डितवानित्यर्थः। यो लोकानां पुण्यपापं सुखासुखं पचति, पुण्यं सुखं पचति, पापम् असुखं पचति, परिणमयतीत्यर्थः। तण्डुलानोदनं पचति इत्यादौ तु प्रकृतिविकारभावेनैकमेव ढं, तेन तण्डुला ओदनः पच्यन्ते इत्यत्र यथेष्टं द्विवधुष्वित्यनेन न गौणमुख्यव्यवहारः। एवं ढादिविहितत्वेन प्रकृतेरेव संख्या गृह्यते।

यदुक्तं,—

विकारभावे प्रकृतेरेकं कर्म यतस्ततः।
द्विकर्मकव्यवस्थातो न प्रत्यययथेष्टता॥
प्रकृतेविकृतेर्वापि यत्रोक्तत्वं द्वयोरपि।
वाचकः प्रकृतेः संख्यां गृह्णाति विकृतेर्न तु॥ इति।

२८७ । दिवो धं वा ।

( दिवः ६।, धं ११, वा ।१। ) ।

दिवो धं ढं स्याद्वा । अचै रचान् वा दीव्यतीशः ।

---

एवम् एको वृक्षः पञ्च नौका भवतीत्यादि । आद्यशब्देन शिष्यं धर्म्मं वदति, जायां प्रियमाचष्टे, सुतं वाचो जगाद, राजानं हितमुपदिशति, क्रुद्धमवस्थानं याचते अवस्थातुमनुनयतीत्यर्थः । केचित् वदत्यर्थे गृह्णन्ति । इह यद्यपि न्यादौ मन्थः पठितस्तथापि गौणढे त्यविधानाय याचादौ द्रष्टव्यः (१) । तथाच "देवासुरैरमृतमम्बुनिधिर्ममन्थे" इति भारविः । तत्र न्यादौ नीवहह्वामेव पाठ इति परे ।

२८७ । दिवो । दिवः क्रीड़ार्थस्यैव ग्रहणम् । दिवो धं ढं स्याद्वा । वाशब्दस्य व्यवस्थया धपक्षेऽपि सढत्वातिदेशात् अढलक्षणं कार्य्यं न स्यात्, तेन अक्षा दीव्यन्ते, अक्षैः देवयते छात्रेण गुरुः, अक्षाणां देवकः, अक्षाणां देविता इत्यादय एव स्युः ; न तु अक्षैर्देवयति छात्रं गुरुः, अक्षैर्देवकः, अक्षैर्देविता इत्यादयः स्युः, सदैव सढत्वात् । एवं मनसादेवीति ढात् षण् इत्याहुः परे । वस्तुतस्तु पचाद्यनि नदादित्वात् ईपि संज्ञायां त्वरा न लुक् इति । "तेनादुद्यूपयद्रामं मृगेण मृगलोचना" इत्यत्र तेनेति; दिवो धं न, किन्तु दुद्यूपेरिति । अन्ये तु अक्षैर्देवक इत्यत्र वा धीत्याहुः ।

---

(१) याचादिन्यादिपरिगणने बहुधा मतभेदोऽस्ति, तद्विहतिर्न्यादिप्रकरणान्ते छन्दे स्फुटीभविष्यतीति ।

इदं सूत्रं धिक्समयेत्यनन्तरम् इत्येके, तन्मते मण्डूकगत्या ढमनुवर्त्तते इत्येवं व्याख्या (१)।

गे: क्रुधद्रुहोर्भम्। गे: परयोरनयोर्भं ढसंज्ञं स्यात्। नृपोऽरीन् परिक्रुध्यति, खलः पतिं संद्रुह्यति, नृपेणारयः परिक्रुध्यन्ते, खलेन पतिः संद्रुह्यते इति (२)।

अनुजनो जम्। अनुपूर्व्वस्य जनो जं ढसंज्ञं स्यात्। लक्ष्मणो रामममनुजायते; पश्चात् प्रभवतीत्यर्थः। एवं पुत्रमनुजाता कन्या(३)। ढत्वविधानात् लक्ष्मणेन रामोऽनुजन्यते। अनुपूर्व्वस्य जनेस्तत्पूर्व्वीकरणपूर्व्वे जन्मनि वर्त्तमानत्वात् सढत्वमित्येके (४)। अनोः किम्? रामात् प्रजायते हरिः।

---

(१) अत्र कार्त्तिकोयोऽपि "इदं सूत्रं धिक्समयेत्यस्य प्रागिति केचित्, तन्मते कर्म्मणोऽनुवर्त्तने मण्डूकगतिन्यायाभ्युपगमाङ्गीकारः, कर्म्माधिकारविच्छेदत्वादतस्तत्सुसमीचीनमि"त्याह।

(२) उत्तरचरिते षष्ठाङ्के लवोक्तौ 'मया पुनरेभ्य एवाभिद्रुग्धमद्येन" इत्यादौ तु कश्चिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति न्यायात्। "सङ्क्रुध्यसि मया किन्त्वं दिदृक्षुं मा मृगेक्षणे' इति भट्टौ ८।७६ श्लोकस्य टीकायां 'स्वमते स्वभावादिमो सोपसर्गौ सकर्म्मकाविति दुर्गमतमाहृतं, क्रियाव्याप्यस्य कर्म्मत्वात्" इत्युक्तं भरतेन।

(३) असौ कुमारस्तमजोऽनुजात इति रघौ ६।७८।

(४) अत्र तत्पदेन जन्मोपस्थितिः, तेन कस्यचिज्जन्मनो यत् पूर्व्वीकरणं तस्य पूर्व्वं कारणं तस्मिन्। येन जन्मना अन्यत् किञ्चिज्जन्म पूर्व्वं क्रियते तादृश जन्म अनुपूर्व्वजनेरर्थः। ततश्च जननानन्तर जन्म अनुजननमिति फलितार्थः। एतेन जननपूर्व्वीकरणानुकूलजननस्य धात्वर्थत्वेन पूर्व्वीभूतं यज्जन्म तदेव धात्वर्थतावच्छेदक फलं, तदाश्रयत्वात् प्रकृते रामस्य कर्म्मत्वम्। अतएव गत्यर्थाढर्मीस्यादिति वक्ष्यमाणसूत्रस्य टीकायां राममनुजातोऽच्युत विश्वमनुजीर्णोऽनन्त इत्यत्र "अनु-

**२८८। धिक्समया निकषा हान्तरान्तरेणैनातियेनतेनाभ्युभयपरिसर्व्वतो विनर्त्तेऽभिपरिप्रत्यनूपद्युपर्य्यधोऽधिभिः।** (धिक्—ऽधिभिः ३॥)।

एभिर्योगे द्वी स्यात्।

वीप्सेत्थम्भावचिह्नेऽभिर्भागे परिप्रती।
अनुस्तेषु सहार्थे च हीनेऽनूपौ मताविह॥

---

यजो ढभे घटे। यजधोर्ढभे घटसंज्ञे क्रमात् स्याताम्। पशुना रुद्रं यजते, पशुं रुद्राय ददातीत्यर्थः।

२८८। धिक्। अभिश्च उभयश्च परिश्च सर्व्वश्च ते, तेभ्यस्तस्, उपरिश्च अधश्च अधिश्च ते, द्वयश्च ते उपर्य्यधोऽधयश्चेति ते। अयात् धिक् च समया चेत्यादि च सः। धिक् निर्भर्त्सननिन्दयोः। समया-निकषाशब्दौ समीपार्थौ। हा विषादशुगर्त्तिषु। अन्तरा मध्यार्थः। अन्तरेण ऋते विना व्यतिरेकार्थाः। एनेति येनो-ऽपीत्यनेन विहितेन-त्यान्तः। अतिरतिक्रमार्थः। येन-तेनौ या-दृक्-तादृगर्थौ। अभित इत्यादयस्तसन्ताः (१)। उपर्य्युपरीत्या-दयो द्विरुक्ताः। अन्येषामर्थविशेषमाह वीप्सेत्यादि। द्रव्यगुण-क्रियाभिर्युगपत् प्रयोक्तुर्व्याप्तुमिच्छा वीप्सा। कस्यचित् प्रकारस्या-

---

पूर्ववोरित्यर्थः। प्रधाने यत्र यत्राञ्जनम् यत्र यत्राम्बरश्च तत्र कर्त्तृत्वं स्यात्" इत्युक्तं दुर्गादासेन।

(१) अभित इति सामीप्ये। यथाह "सामीप्योभयतःशीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः। उभयत इति समासादुभयार्थकम्। परित सर्वत इति द्वयं सर्वार्थकम्, यथाह—"समन्ततस्तु परितः सर्वतो विष्वगित्यपि" इत्यमरः।

धिग् लोकमीश्वराभक्तं, समया माधवं रमा ।
निकषा गिरिशं गौरी, हा लोकं केशवद्विषम् ॥
कृष्णोऽन्तरा ब्रह्मशम्भू, नान्तरेणाच्युतं सुखम् ।
दक्षिणेन हरिं रुद्रो, गोविन्दमति नेश्वरः ॥
येनेशं हरिरीशस्तं तेनेशमभितोऽर्चकाः ।
रामकृष्णावुभयतो गोपेशं, परितः परे ॥
प्रमथाः सर्वतः सर्वं, शर्म नैगार्थेन विना ।
मुक्तिर्नर्तेऽच्युतोपास्तिं भूतं भूतमभि प्रभुः ॥
भक्तो विभुमभि, प्राज्ञो गोविन्दमभि तिष्ठति ।
हरिं पर्य्यभवल्लक्ष्मी हरं प्रति हलाहलम् ॥
विष्णुमन्ववसते भर्गः, शक्रादय उपाच्युतम् ।
लोकानुपर्य्युपर्य्यास्तेऽधोऽधोऽध्यधि च माधवः ॥

---

पत्ति (१) रित्थम्भावः । चिह्नं लक्षणम् । तेषु वीप्सादिषु भागे च परिप्रती । अनुस्तेषु वीप्सादि चतुर्ष्वर्थेषु सहार्थे च । चकारोऽनुक्तसमुच्चयार्थं (२) स्तेन हेतावपि, यथा कारीरी(३) मनु वर्षति, कन्यामनु शोक इत्यादि ।

धिगलोकमित्यादि । ईश्वराभक्तं लोकं धिक् (४), ईश्वराभक्तस्य सर्वत्र निन्दादिकं भवतीत्यर्थः । माधवस्य समीपे रमा

---

(१) प्रकारः सादृश्यं रीतिर्वा ।

(२) अनुक्तानाम कथितानां समुच्चयः सङ्ग्रहः अर्थो यस्य तादृशः ।

(३) कारीरी यज्ञविशेषः । कारीरीहेतुकं वर्षणं करोति देव इति भेदः ।

(४) धत्रप्रकारादिकेयं द्वितीयेति ।

लक्ष्मीः। गिरिशस्य समीपे गौरी दुर्गा। केशवद्विषं लोकं हा, केशवद्विषो लोकस्य विषादः शोकः पीड़ा च सर्व्वदैव इत्यर्थः। ब्रह्मशिवयोर्मध्ये कृष्णः। अच्युतमन्तरेण विष्णुपूजाव्यतिरेकेण सुखं न भवतीत्यर्थः। हरेरदूरदक्षिणे (१) रुद्रः। गोविन्दस्यातिक्रमिता न ईश्वरः। ईशं येन हरिः, ईशस्य यादृक् हरिरुपास्यः, तं हरिं तेन ईशः, हरेस्तादृगुपास्य ईशः; एतेनाभिन्नावित्यर्थः। ईशमभितोऽर्च्चकाः, शिवस्य सर्व्वत्र पूजका इत्यर्थः। रामकृष्णावुभयतः, रामकृष्णयोरुभये पार्श्वेऽर्च्चकाः। परि गोपेशं परितः, गोपेशस्य इतस्ततः परेऽर्च्चकाः। प्रमथाः सर्व्वं सर्व्वतः, सर्व्वस्य इतस्ततः प्रमथगणाः। ईशार्च्चनं विना न शर्म्म, ईशार्च्चनव्यतिरेकेण कल्याणं न भवतीत्यर्थः। अच्युतस्य उपास्तिं उपासनाम् ऋते विना मुक्तिर्न भवतीत्यर्थः। सोऽच्युतो भूत भूतम् अभि, सर्व्वभूतानां प्रभुरित्यर्थः। भक्तो विभुम् अभि, विभोः कश्चित् प्रकारमापन्नः (२)। प्राप्तो गोविन्दम् अभि, गोविन्दं लक्ष्यीकृत्य प्राप्तस्तिष्ठति। अभेरुदाहरणत्वेन परिप्रत्योरपि ज्ञेयम् (३)। भागे उदाहरति। हरेर्भागे लक्ष्मीरभवत्। हरस्य भागे हलाहलं विषम् अभवत्। एवं वोप्सादिषु अनोर्ज्ञेयम्। सहार्थे तु विष्णुमनु, विष्णुना सह भर्गोऽर्च्चते अर्थात् सङ्गिः। अच्युतमुप अच्यु-

---

(१) अत्र अदूरेति व्याख्यानेन वैकोऽपीति सूत्रे अदूरार्थे एनप्रत्यय इति पाणिनीयमतं सूचितम्।

(२) विष्णोरिपर्यां भक्तिभावापन्न इति दुर्गादासः।

(३) उदाहरणमिति शेषः। अभेरुदाहरणेषु अभिस्थाने परिप्रतियोगेऽपि न छन्दोभङ्ग इत्याशयः।

ताडीना: शक्रादयः। एवमच्युतमनु शक्रादय इति। लोकानुपर्य्युपरि लोकानामुपरि समीपे माधव आस्ते, अधोऽधः अधः-समीपे माधव आस्ते, अध्यधि इतस्ततः समीपे माधव आस्ते इत्यर्थः। इह समीपार्थे देर्ग्रहणात् नेह—"उपर्य्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः" अतिदूरे उपरि चरन्तीत्यर्थः। यद्वा उपरिबुद्धीनामुपरि ईश्वरबुद्धयश्चरन्तीत्यर्थः(१)।

पूर्व्वविप्रतिषेधेन प्रबाबाधितत्वात् सम्बोधनार्थमात्रद्योतकत्वाद्वा "हा तातेति क्रन्दितमाकर्ण्य विषसः"। "हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप स" इत्यादौ सम्बोधने मा भूत्(२)। "शाखिभिर्हा हता भूयो हृदयानामुदेजयैः" इति तु उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात् (३)।

---

(१) एवं व्याख्याने द्विरुक्तोपरियोगाभावाद्येति भावः।

(२) अयमाशयः—हा पितः क्वासि हे सुभ्रु इति भट्टौ ६।११ श्लोकस्य व्याख्याने भरतसेनः—"धिक समवेत्यादिसूत्रस्य पञ्चपादत्वात नात्र तद्विषयः। सामान्येन हाशब्दं प्रयुज्य पश्चात् पितृसम्बोधनम, अतो न द्वितीयेति दुर्गः। वस्तुतस्तु हाशब्दवाच्यं दुःखं स्वविषयमेव, पितृशब्देन तस्य सम्बन्धाभाव., तत्कथं द्वितीयया भवितव्यम्?"—इत्याह। दुर्गादासोऽपि 'यत्र तु आत्मन पीडायां हाशब्दः प्रयुज्यते तत्रान्यस्य पीडायोग्यत्वाभावात तेन योगे द्वितीया न स्यात, तेन हा तातेति क्रन्दितमाकर्ण्य विषस इति रघु। हा राम हा रमण हा जगदेकवीर हा नाथ हा रघुपते किमुपेक्षसे मामिति महानाटकमित्यादौ सम्बोधने प्रथमैवेत्याह।

(३) 'या पदान्तरसम्बन्धेन विभक्तिर्विधीयते सोपपदविभक्तिः। कर्म्मादिसंज्ञानिमित्ता विभक्ति कारकविभक्ति। उपपदविभक्तिविषये कारकविभक्तिप्राप्तौ किं स्यादिति पृच्छायामाह उपपदविभक्तेरिति। हा हतेत्यत्र हायोगेन प्राप्तां द्वितीयां बाधित्वा कर्म्मणि विहितेन क्तेन कर्म्मण उक्तत्वात् प्रथमैव भवति'। इति संक्षिप्तसारे कारकपादे ९८ सूत्रटीकायां गोयीचन्द्रः।

२८८। साधन-हेतु-विशेषण-भेदकं धं, कर्त्ता घस्त्री ।

(साधन—भेदकं १।, धं १।, कर्त्ता १।, घः १।, त्री ।१।) ।

नेत्रैः पुष्पेण भूषाभिर्नाम्ना दृष्टः शिवो जनैः ।

---

यावता मर्य्यादाभिविध्योः । मर्य्यादाभिविध्योर्वर्त्तमानेन यावता योगे ह्री स्यात् । नदीं यावदरण्यानी, "यो नमेत् शूद्र-संस्पृष्टं लिङ्गं वा हरिमेव वा । स सर्व्वयातनाभोगी यावदाहूत-संप्लवम्" ॥(१) रथ्यां यावत्(२) दृष्टो देव इत्यादि। अनयोः किम् ? "यावद्वर्त्तते हृदि प्राणास्तावदाशा विवर्द्धते" इति (३) ।

२८८। साधन। साध्यते अनेनेति साधन, घेऽनट् । यद्व्यापारानन्तर कर्त्ता क्रिया निष्पाद्यते तत् साधनमित्यर्थः। तज्जन्यत्वे सति तज्जन्यजनको हि व्यापारः। यथा परशुना काष्ठं छिनत्ति (४), मनसा जानाति, पाणिना भ्रमयतीत्यादौ छेद्यपर-शुसंयोगव्यापारेण आत्ममनःसंयोगव्यापारेण चेष्टादिव्यापारेण

---

(१) आहूतसंप्लवमित्यत्र अकारस्य हकारस्थानादेशः। भूतानां संप्लवः संचय, आ सम्यक भूतसंप्लव- आभूतसप्लव । आभूतसंप्लवं यावत्प्रलयकालपर्य्यन्त-मित्यर्थः ।

(२) रथ्या पन्थानमभिव्याप्येत्यर्थः ।

(३) सोमार्थेन यावता पञ्चमी चेति केचित्। आमाद्दु यावदहं बोद्धा इति दुर्गादास ।

(४) अत्र तच्छब्देन परशुर्गृह्यते, अतः परशुजन्ये संयोगे सति वर्त्तमाने तत्परशुजन्य छेदर्मं द्विधाभाव, तत्र छेदनस्य जनक संयोग-, स एव परशो-र्व्यापारस्तत्संयोगरूपव्यापारानन्तरं कर्त्ता क्रिया निष्पाद्यते अत परशुरेव साधनमिति ।

च छेदनादेर्निष्पाद्यत्वात् साधनत्वम्। अश्वेन पथा याति, "कायेन मनसा वाचा हरिराराधितो मया" इत्यादौ द्वयोस्त्रयाणामपि व्यापारवत्त्वात् साधनत्वम्। स्थाल्या पच्यते इत्यादौ तु स्थाल्यादेर्व्यापारानन्तरं क्रियासिद्धेर्विवक्षितत्वात् साधनत्वम्। यदुक्तम्—

क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम्॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥

हेतुः फलसाधनयोग्यः। यथा विद्यया यशः, धनेन कुलमित्यादौ कीर्त्यादिकमकुर्वन्नपि विद्यादिस्तत्करणयोग्यतया हेतुः। अन्ये तु अन्वयव्यतिरेकनियमेन ज्ञापकोऽपि हेतुः; यथा धूमवत्त्वेनाग्निमानयं पर्वत इत्यत्रान्वयव्यतिरेकनियमेनाग्निमत्त्वस्य ज्ञापकं धूमवत्त्वमित्याहुः। तथाच (१) यदधीनाः कर्त्तुः प्रवृत्तिः स हेतुः, कर्त्रधीनं साधनमिति साधनहेत्वोर्भेदः (२)।

विशिष्यते सम्बुध्यते येन तद्विशेषणं, विद्यमानसम्बन्धप्रतियोगीति यावत्। यथा जटाभिस्तापसः, शिखया परिव्राजक इत्यादौ जटादेर्विद्यमानसम्बन्धप्रतियोगित्वाद्विशेषणत्वम् (३)।

(१) ननु दानेन भाग्यं कुमातीत्यादावपि दानादेर्हेतुत्वेनैवेष्टसिद्धौ साधनग्रहणं कथमित्याशङ्क्याह तथा चेति।

(२) 'करणं कर्त्ता व्यापारयति, हेतुस्तु कर्त्तारमिति रचित'। ***प्रयोजनरूपहेतोरपि तृतीया दृश्यते, यथा—शुश्रूषया यैवलुतामुपेतामिति कुमार' इति विद्यालङ्कारः।

(३) सम्बन्ध उभयनिष्ठः। तयोर्द्वयोरेकोऽनुयोगी अपरः प्रतियोगी।

भेदयति सामान्यावगमे (१) इतरेभ्यो व्यवच्छिनत्तीति भेदकमितरव्यावर्त्तकमिति यावत् । यथा—काकैर्गृहं, छत्त्रेण छात्रमद्राक्षीत् इत्यादौ काकादेर्विद्यमानसम्बन्धाप्रतियोगित्वेऽपि भेदकत्वम् (२) । तथाच विशेषणं विद्यमानं, भेदकन्त्वविद्यमानमिति विशेषणभेदकयोर्भेद इत्येके । वस्तुतस्तु भेदकत्वेनैव जटाभिस्तापस इत्यादौ सिद्धे विशेषणग्रहणं क्वचिदन्यत्रापि तौविधानार्थं, तेन—

येनाङ्गिविकारस्तदङ्गात् । येनावयवेनाङ्गिनो हानिराधिक्यं वा लक्ष्यते तदङ्गवाचिनस्तौ स्यात् । यथा सुखेन त्रिलोचनः, अक्ष्णा काणः, पादेन खञ्जः, पृष्ठेन कुब्ज इत्यादौ निमित्तनैमित्तिकसम्बन्धे पौमासौ चौ स्यात् । प्रकृत्या सुभगः, धान्येन धनं, गोत्रेण गार्ग्यः, जात्या विप्रः, अश्मना हृदः, स्वभावेनोदारः, स्वरूपेण प्रियंवदः, प्रायेण वैष्णवः (३) समेन धावति, (४) सुखेन याति, कार्त्स्न्येन पचति, "तत्रागार धनपतिगृहादुत्तरेणास्मदीय"मित्यादौ प्रकृत्यादीनां सुभगादिना सहाभेदेऽपि इतरव्यावर्त्तकत्वात् भेद-

यथा जटाभिस्तापस इत्यादौ विद्यमानतासम्बन्धेन जटास्तापसे वर्त्तन्ते । अतोऽत्र जटानां विद्यमानतासम्बन्धस्य प्रतियोगित्वं तापसस्य चानुयोगित्वम् । एतेन अनुयोगित्वं सम्बन्धस्याधारत्वं प्रतियोगित्वं तदाधेयत्वमिति ।

(१) सामान्येन साधारणेन धर्म्मेण घटत्वादिनेत्यर्थः, अवगमे प्राप्ते सतीत्यर्थः ।

(२) छत्तृत्वादिनेति शेषः । छत्त्रेण गुरोर्दोषावरणेनेत्यर्थः ।

(३) वैष्णवलक्षणभूयस्त्वं प्रायशब्दार्थः ।

(४) विषमं धावतीति प्रयोगो न स्यादिति संक्षिप्तसारे कारकपादे ७६ सूत्रटीकायां गोयीचन्द्रः । प्रयोगरत्नमालायान्तु कारकविभक्तिप्रकरणे ६४७ सूत्रे "समेन धावति समं धावतीत्यर्थं" इत्युक्तम् ।

कत्वम् । तथाहि प्रकृतिशब्देन साहजिक उच्यते, अभेदस्तृतीयार्थः, (१) तेन साहजिकाभिन्नः सुभगः, धान्याभिन्नं धनं, गोत्राभिन्नो गार्ग्यः गर्गकुलोत्पन्न इत्यादिक्रमेणान्वयबोधः । परे तु हेत्वादेर्न घत्वमाहुः । अनेन त्रीविधानाय घसंज्ञा कृतेति ।

करोतीति कर्त्ता, स्वतन्त्रः, क्रियासिद्धावगुणत्वेन (२) विवक्षितः साक्षात् क्रियाश्रय इति यावत् । यथा रामो रथेन व्रजं याति, कृष्णो भवतीत्यादौ गत्यादिक्रियासिद्धौ रामादेर्गुणत्वाभावाद् धत्वम् ।

---

(१) अभेदस्तृतीयार्थं इति मतान्तराभिप्रायोक्तिः, स्वमते तु इतरव्यावर्त्तकत्वात् भेदकत्वमेव तृतीयार्थः । तथाहि स्वभावेनायं सुभगो न तु अलङ्कारादिना । सुभगत्वमिदम् अलङ्कारादिजन्यसुभगत्वाद्भिद्यत एव, तत्र प्रकृतिशब्दस्यैव भेदप्रतीतिः तस्य भेदकत्वं, तेनैव तृतीया च । अत्र प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकम् । उपसंख्यानं वक्तव्यमित्यर्थः । "एतच्च वक्तव्यं, कर्त्तृकरणयोस्तृतीयेत्येव सिद्धम् । * * * प्रकृत्याभिरूपः, प्रकृतितस्तस्याभिरूप्यम् । गार्ग्योऽस्मि गोत्रेण—एतेनाहं स्वार्थे इति भाष्यम् । 'गम्यमानापि क्रिया करणादिव्यपदेशनिमित्तं भवति । इह च करणान्तरव्युदासाय प्रकृतेरेव करणत्वं विवक्षितम् । स्वभावेनाय कृतोऽभिरूपो न तु वस्त्रालङ्करणादिनेत्यर्थः ' इति कैयटः ।' एतच्च गम्यमानकरोतिक्रियाकरणत्वात् सिद्धमिति तत्त्वबोधिनी । कातन्त्रमतेऽपि एषूदाहरणेषु करणे तृतीया । तथाच—"प्रकृत्यादीनामपि करणत्वमस्ति, भवतेर्गम्यमानत्वात्, तथा ह्यभिरूपभवने प्रकृतिः करणं यात्रिकभवने प्रायः करणं, गार्ग्यस्य भवने गोत्रं करणमिति कातन्त्रटीका । संक्षिप्तसारेऽपि 'हेतुचिह्नगोत्रादे'रिति कारकपादे ७६ सूत्रटीकायां "गोत्रेणाहं वात्स्य इत्यादौ यत्र क्रियापदं नास्ति तत्र सम्बन्धमात्रं प्रतीयते, न तु कापि क्रिया । न हि क्रियया विना कर्त्तृकरणे सम्भवतः तयोः क्रियापेक्षत्वात्, तस्मात् तृतीया । यदा तु कृत इत्यादि गम्यते तदा कर्त्तर्येव तृतीया, तस्माद् गोत्रादेरिति सपञ्चार्थ"-मित्युक्तं गोयीचन्द्रेण ।

(२) अगुणत्वेन प्राधान्येन ।

चैत्रस्तण्डुलं पचतीत्यत्र पचिर्विक्लेदनार्थः (१)। अतएव विक्लेदनाक्रियासिद्धौ चैत्रस्य गुणत्वाभावात् घत्वम् । यदा तु विक्लित्त्यर्थस्तदा तण्डुलः पच्यते स्वयमेवेति ढघविषयः, ततः प्रेरणे ञौ विक्लेदनार्थपचिसमानार्थस्तदा पाचयति तण्डुलं चैत्र इति । एवं यदा निष्पादनार्थः कृञ्स्तदा चैत्रः कटं करोति ; यदा निष्पत्त्यर्थस्तदा क्रियते कटः स्वयमेवेति । केचित्तु विक्लित्त्यर्थे पचेरकत्वात् तण्डुलस्य क्रियाश्रयत्वात् तण्डुलः पचतीति । विक्लेदनार्थस्य तु प्रेरणार्थक्रियाव्याप्यत्वात् तण्डुलादेर्ढत्वमिति । यदा तत्क्रियाव्याप्यढस्य घत्वं विवक्ष्यते तदेव कर्मकर्त्तृत्याहुः । काष्ठं पचति, परशुश्छिनत्ति, स्थाली पचतीत्यादौ काष्ठादीनां गुणत्वाभावविवक्षया घत्वम् । तथाच यदा काष्ठादीनां क्रियानिष्पत्तौ धत्वादिर्न विवक्ष्यते किन्तु गुणत्वाभावो विवक्ष्यते तदा घत्वमिति पर्य्यवसितोऽर्थः ।

यदुक्तं—

निष्पत्तिमात्रे कर्त्तृत्वं सर्व्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणत्वादिसम्भवः ॥ इति ।

पाचयत्योदनं सूदेन गृहीत्यादौ तु पाकक्रियासिद्धौ सूदस्य तत्प्रेरणक्रियासिद्धौ गृहिणो गुणत्वाभावाद्घत्व, तत्राख्यातेनोक्तत्वात् गृहीत्यत्र प्रो, सूदेनेत्यनुक्तत्वात् त्रीति । सूर्य्यं पश्यति, शिवं जानीहि, रामं जानामीत्यादावप्रयुक्तानामपि चैत्रादीनां गुणत्वाभावविवक्षायां घत्वमिति ।

---

(१) विक्लित्तिरवयवशैथिल्यं, तदनुकूलव्यापारो विक्लेदना ।

२९०। सहवारणसमोनार्थार्थं विनापृथङ्नानादैः।
( सह—नानाद्यैः ३॥ )।
एभि र्योगे त्रौ स्यात्।

---

यदुक्तं—

प्रवृत्तावप्रवृत्तौ वा कारकाणां य ईश्वरः।
अप्रयुक्तः प्रयुक्तो वा स कर्त्ता नाम कारकम्॥ इति।

नेत्रैरित्यादि। नेत्रसाधनक-पुण्यहेतुक-भूषाविशेषक-नाम-व्यवच्छिन्न-बहुत्वाश्रय जनकर्तृकातीतदर्शनविषयः शिव इत्यर्थः। नेत्राणां विषयसंयोगव्यापारेण साधनत्वम्। पुण्यं शुभादृष्टं, तस्य शिवदर्शनफलसाधनयोग्यत्वात् हेतुत्वम्। भूषाणामहिवलयादीनां विद्यमानसम्बन्धप्रतियोगितया विशेषणत्वम्। नाम संज्ञा, तस्य इतरव्यावर्त्तकत्वात् भेदकत्वम्। जनानां दर्शनक्रियासिद्धावगुणत्वात्त्वमिति।

२९०। सह। सहश्च वारणञ्च समश्च ऊनश्च अर्थश्च ते, तेऽर्थाः येषां ते, नाना आद्यो येषां ते, सहवारणसमोनार्थार्थाश्च विना च पृथक् च नानाद्याश्च ते तैः। एभिरिति—सहार्थादिभिः विनादिभिश्च योगे इत्यर्थः। यद्यपि सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम्। तथाहि सहार्थैर्योगे गौणे त्रौ, गौणत्वञ्च परम्परया क्रियागुणद्रव्यान्वयित्वम्। पुत्रेण सहागतः पिता, पित्रा सह स्थूलः पुत्रः, चैत्रेण सह मैत्रो गोमानित्यादौ पित्रादीनां साक्षात् क्रियाद्यन्वयः, न तु पुत्रादीनामिति। गम्यमानैः सहार्थैरपि, वृद्धो यूनागत इत्यादौ स्यात्, बुड्ढा जमे

सहेशार्थोऽच्युतो, भेदेनालं, तेन समोऽस्ति कः।
विकारे रहितः शम्भुः, सतामर्थः शिवार्चया ॥
श्री नेंशेन विना, शम्भुः पृथक् विश्वेन, तत् पुनः।
न नाना शम्भुना, रामात् वर्षेणाधीतजोऽवरः ॥

---

च इत्यादिज्ञापकात्। एव सार्कं सार्द्धं समं सजूरमादिभिर्योगेऽपि। वारणार्था अलं सास्र मा इत्यादयः, यथा अलं विलम्बेनेत्यादि। परे तु वारणार्थयोगे त्रीं नेच्छन्ति (१)। समार्थाः सदृशार्थाः, यथा गोपेन तुल्यो हरिः। समार्थैनेत्यादिना गोपस्य तुल्यो हरिः इत्यादिषु षी च। "सादृश्यं गतमपनिद्रचूतगन्धै"-रित्यादौ तु धर्म्मवाचिनापि त्रीति। "गिरिशस्योपमा नास्ति नास्ति लक्ष्मीपतेस्तुला" इत्यादौ तुलोपमाभ्यां योगे त्री न स्यादनभिधानात् (२)। गौरिव गवय इत्यादौ तु न स्यादिवशब्दस्य सादृश्यद्योतकत्वात् (३)। ऊनार्था ऊनहीनरहितादयः। 'यथा

---

(१) "गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका। अलं श्रमेण। श्रमेण साध्यं नास्तीत्यर्थः। इह साधनक्रियां प्रति श्रम करणम्"—इति "हेतौ" (२।३।२३) इति सूत्रे सिद्धान्तकौमुदी।

(२) तथाच "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्या'मिति सिद्धान्तकौमुदी। तत्र च तत्त्वबोधिन्यां "कथं तर्हि तुलां यदारोहति दन्तवाससेति कालिदासः, स्फुटोपमं भूतिसितेन शम्भुनेति माघश्च? उच्यते—सहयुक्तेऽप्रधाने इति तृतीयेत्युक्तं। कुमारसम्भवस्य ५।३४ श्लोकटीकायां मल्लिनाथोऽपि "अत्र तुलाशब्दस्य सादृश्यवाचित्वात् तद्योगेऽपि तुल्यार्थैरतुलोपमाभ्यामिति न तृतीयाप्रतिषेधः, तत्र सूत्रे सदृशवाचिन एव ग्रहणा" दित्याह।

(३) तत्त्वबोधिन्यामपि "पदान्तरमैरपेक्ष्येण ये तुल्यार्थास्तेषामेव ग्रहणात् गौरिव गवय इत्यादौ ने"त्युक्तं।

## २९१। काले भाद्धे वा।

(काले ७।, भात् ५।, ङे ७, वा ।१।)।

---

एकेनोन:, पुण्येन हीन इत्यादि। अर्थयोगे यथा धान्येनार्थः। सतामर्थो हरेर्भक्त्या इत्यादि। विना शब्दयोगे यथा—"विना रामेण कोऽन्यो वा दशकण्ठविनाशकृत्"। एवं धिक्समयेत्यादिना द्वौ, अन्यारभ्याथारादित्यादिना पौ च। यथा—"हरिं विना विना रामाद्गोकुलं शोकसङ्कुलम्"। विनाशब्दवत् पृथङ्नानाद्यैश्च योगे द्वीप्यौ चेति परे (१)।

सहेशार्च्चेत्र इत्यादि। ईशा सह अच्युतोऽर्च्यः, ईशधी: क्विप् ईट् ततस्तौ। भेदेन अलम्, अर्थात् शिवविष्णोर्भेदो वारणीय इत्यर्थः। तेन शिवेन विष्णुना वा कः समोऽस्ति? न कोऽपीत्यर्थः। शम्भुर्विकारैः कामक्रोधादिभिः रहितः हीन इत्यर्थः। सतां सुधियां शिवार्च्चयार्थः, शिवपूजैव प्रयोजनमित्यर्थः। ईशेन विना श्रेयो न, शिवार्च्चनाव्यतिरेकेण त्रिवर्गसम्पत् न भवतीत्यर्थः। शम्भुर्विश्वेन पृथक्, सर्व्वस्मात् चराचरजगतो भिन्नः, संसारस्य नश्वरत्वात्। तद्विश्वं पुनः शम्भुना न नाना, शिवान्नान्यत्, तेन विना पदार्थाभावात्। अधोक्षजो विष्णुः रामाद्बलरामाद्वर्षेण एकवत्सरेणावरः कनिष्ठः। एवम् आद्यशब्देन मासेन पूर्व्वः, शास्त्रेण कलहः, गुड़ेन मिश्र इत्यादि।

२९१। काले। कालवाचिनो नक्षत्रादिति—तेन युक्तः

---

(१) २।३।३२। पाणिनिसूत्रस्य काशिका द्रष्टव्या।

कालवाचिनो नक्षत्रात् ङे लौ स्याद्वा ।

रोहिण्यामभवत् कृष्णो रोहिण्यासीच्च चण्डिका ।

## २९२ । मानाद्वीप्सायां ढे ।

(मानात् ५।, वीप्सायां ७।, ढे ७।) ।

शतं शतं पयोऽपीप्यत् वत्सान् विष्णुः शतेन गाः ।

द्विद्रोणेन क्रीणाति, पञ्चकेन क्रीणाति, द्विद्रोणं पञ्चकम् ।

---

काल इत्यर्थे विहितस्य (१) ष्णस्य लुकि काले वर्त्तमानान्नक्षत्रादित्यर्थः । रोहिण्यामिति—रोहिण्या युक्तः काल इत्यर्थे विहितस्य ष्णस्य लुकि कालवाचित्वात् रोहिणीनक्षत्रयुक्तकाले इत्यर्थः । उदाहरणद्वयेन विकल्पो दर्शितः । एवं पुष्ये पुष्येण वा नवान्नमश्नीयात् इत्यादि । काले किम् ? रोहिण्यां चन्द्रः, रोहिण्यधिष्ठातृदेवतायां चन्द्र इत्यर्थः । ङे इति किम् ? अद्य पुष्यः पुष्यायुक्तः काल इत्यर्थः ।

२९२ । मानात् । मानवाचिनो वीप्सायां ढे द्वौ वा स्यात् । शतं शतमित्यादि—विष्णुः शतं शतं वत्सान् गोवत्सान् पयोऽपीप्यत्, शतेन गाः पयोऽपीप्यत् । तत्र वीप्सार्थस्योक्तत्वान्न द्विः । संख्यापि परिमाणमिति (२) कस्यचिन्मतमत एवोक्तं शतं शतमित्यादि । द्विद्रोणेन क्रीणाति द्विद्रोणं क्रीणाति द्विद्रोणपरिमितद्रव्यं

---

(१) नक्षत्रेभ्यो युक्ते काले इति पाणिनीय-वार्त्तिकमप्येवेति भेदः ।

(२) मानशब्देन हस्तादिकाष्ठादि परिमाणमुच्यते । अत्र तु संख्यापि । अतएव मानशब्देनैव द्रव्यपरिच्छेदकस्य सङ्ख्यात् परिमाणस्य संख्यायाश्च ग्रहणमित्याह कार्त्तिकेयः ।

२८३। संज्ञो ऽस्मृतौ।

( संज्ञः ६।, अस्मृतौ ७। )।

स्मरणादन्यस्मिन्नर्थे वर्त्तमानस्य संपूर्व्वस्य जानाते टं षी स्याद्वा।

संजानीष्व स्वमीशा च संजानीहि ततः शिवम्।

२८४। सन्दानो मेऽधर्म्मे नित्यम्।

(सन्दानः ६।, मे ७।, अधर्म्मे ७।, नित्यं १।)।

---

क्रीणातीत्यर्थः। द्वौ द्वौ द्रोणौ परिमाणमस्य इत्यर्थे क्तयोनोक्तत्वान्न द्विः (१)। एवं पञ्च पञ्च परिमाणमस्य इत्यर्थे विहित-कत्येनोक्तत्वाच्च द्विः (२)। इदं नेच्छन्ति परे (३)।

२८३। संज्ञो। समो ज्ञाः संज्ञास्तस्य। न स्मृतिरस्मृतिस्तस्याम्। ईशा संजानीष्व, पत्रे स्वम् आत्मानं संजानीष्व, सम्प्रतेरस्मृताविति मम्। दृष्टयेन विकल्पो दर्शितः। जानाति तु ईशः संज्ञाता इत्यत्र परत्वात् (४) ढघे क्तत्येत्यादिना ष्या षौ बाध्यते। ततस्तदनन्तरं शिवं संजानीहि स्मर, इत्यत्र स्मरणार्थत्वान्न म-षौ। स्मृत्यर्थदयेशाम् इत्यनेन षौ च, तेन शिवस्य संजानीहि इत्यपि।

२८४। सन्दा। समो दान सन्दान तस्य। न धर्म्मो-

---

(१) अत्र द्विगुसमासे तद्धितप्रत्ययेन वीप्सार्थस्योक्तत्वात्र द्वित्वम्।

(२) पञ्च पञ्च पञ्चक क्रीणातीत्यर्थे।

(३) परमते अत्र परिच्छिद्येति क्रियामध्याहृत्य यतेन शतसंख्यया परिच्छिद्य गा. पयोऽपीप्यदिति समाधानम्। द्विद्रोणेन इत्यादौ प्रकृत्यादिभ्य उपसंख्यानमिति वार्त्तिकसूत्रेण तृतीयेति।

(४) विप्रतिषेधे परं कार्य्यमित्युक्ते।

सम्प्रदानसम्बन्धिनि अधर्म्मे भे ची स्यादित्यम्।
संयच्छते स्म गोप्यैरं श्रीशः सयच्छति श्रियै।

२८५। यस्मै दित्सासूयाक्रोधेर्ष्यारुचिद्रोह स्याश्रु-श्लाघस्पृहिशप्राधीक्षाप्रतिश्रुप्रत्यनुगृधार्य्यर्था भं ची तादर्थ्ये च।

(यस्मै ४।, दित्सा—धार्य्यर्थाः १।।।, भं १।, ची ।।१।, तादर्थ्ये ७।, च ।।१।)।

---

ऽधर्म्मस्तस्मिन्। धर्म्मशास्त्रविरुद्धाचारोऽधर्म्मः। श्रीशः लक्ष्मीशः गोप्या इष्टं संयच्छते स्म, अभिलषितं दत्तवानित्यर्थः। गोप्यै रतिदानेनाधर्म्मः (१)। श्रियै श्रीशः इष्ट सयच्छति, इत्यत्र धर्म्मशास्त्रविरुद्धत्वाभावान्न म-त्वौ।

२८५। यस्मै। दातुमिच्छा दित्सा। आङ् प्रतिश्च तौ, ताभ्यां श्रुः सः। प्रतिश्च अनुश्च तौ, ताभ्यां गृः सः। स्याश्च श्रुश्च श्लाघश्च स्पृहिश्च शपश्च राधश्च ईक्षश्च आप्रतिश्रुश्च प्रत्यनुगृश्च धारिश्च ते, तेषामर्थास्ते दित्सा च असूया च क्रोधश्च ईर्ष्या च रुचिश्च द्रोहश्च ते च ते। तस्मै अर्थः (२) प्रयोजन तदर्थस्तदर्थस्य

---

(१) श्रीधरचन्द्रेण च स्त्रिया ईश्वरस्य परस्त्रियै रतिदानमधर्म्म इति दर्शितम्।

(२) बहिरङ्गितप्रयोजनार्थयोगेनेति पञ्चम्यर्थाभिकस्थलेष तस्मै इति चतुर्थी। दुर्गादासस्तु अर्थशब्दस्यात्र प्रयोजनं निवृत्तिश्चेति द्वावर्थौ प्राह। तथाच अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः। तत्र च प्रायो अर्थं प्रयोजनमस्येति तदर्थं, तस्य भावस्तादर्थ्यं, एव तस्यार्थो निवृत्तिस्तदर्थं, तदर्थं एव तादर्थ्यं स्वार्थे ष्यञ्, ततः तादर्थ्यञ्च तादर्थ्यञ्चेति एकशेषे एकत्वादेकार्थे तादर्थ्यं तस्मिन्। यत् प्रयोजनं तथा

यस्मै दातुमिच्छा, असूयादयः, स्यादेरर्थश्च यस्मै, तद् भसंज्ञं स्यात्, तत्र घी, तादर्थ्ये च।

दद्यातु सङ्गः स सुखं हरिः, स्मरात्
गोपीगणोऽसूयति कुप्यतीर्ष्यति।
स रोचते द्रुह्यति तिष्ठते ह्नुते-
ऽश्लाघिष्ट यस्मै स्पृहयत्यथम च॥

---

भावस्तादर्थ्यम्। यस्मै दातुमिच्छा इति—येन स्वेच्छया क्रियमाणं दानं (१) यो लभते स भसंज्ञः। यस्य पुनरादानं नास्ति तद्दानमित्यर्थः। अतएव भगवान् पाणिनिः "कर्म्मणा यमभिप्रैति स सम्प्रदान"मित्याह (२)। तेन विप्राय गां ददाति, माषानस्मै तिलेभ्यः प्रतियच्छति इत्यादौ (३) स्यात्, न तु घ्नतः पृष्ठं

---

चतुर्थी, यस्य निवृत्तिस्तस्मादपि चतुर्थीत्यर्थः। यथा स्नानाय पठति, पाठस्य स्नानं प्रयोजनमित्यर्थः। मशकाय धूमः, मशकस्य निवृत्तये इत्यर्थः। अतएव "नरकाय प्रदातव्यो दीपः सम्पूज्य देवता" इत्यत्र नरकाय नरकनिवृत्तये इत्यर्थ इति स्मार्त्त-भट्टाचार्य्यव्याख्येत्याह। तर्कवागीशमते तत्पदेनैव तन्निवृत्तिरिति लक्षणया विधेयमिति बोध्यम्।

(१) दीयते यत्तद् दानमिति कर्म्मण्यनट्, दीयमानं वस्तु इत्यर्थः।

(२) दानक्रियाकर्म्मणा कर्त्ता यमभिप्रैति सम्बध्नाति सम्बन्धुमीप्सति वा तत् कारकं सम्प्रदानसंज्ञकमित्यर्थः इति तत्त्वबोधिनी। अन्यत्र च कर्म्मणा दानकर्म्मणा यमभिप्रैति तत्कर्म्मनिष्ठस्वत्वभागित्वेनोद्देश्यीकरोति तत्सम्प्रदानमिति। एतेन त्यज्यमानद्रव्यस्य स्वत्वभागित्वेनोद्देश्यत्वं सम्प्रदानत्वमिति।

(३) अत्र प्रतिदानेऽपि माषदानस्य स्वेच्छाकृतत्वं पुनरादानविरहितत्वञ्चास्ति, तेनात्र सम्प्रदानत्वम्।

गर्गो राध्यति रामाय कृष्णाय ईक्षते व्रजे ।
शुभाशुभं पर्य्यालोचयदित्यर्थः ।
विभीषणायाशुश्राव राज्यं प्रत्यशृणोद्यशः ।
प्रतिज्ञातवानित्यर्थः ।

---

ददाति (१) राज्ञो दण्डं ददाति(२) रजकस्य वस्त्रं ददातीत्यादौ । शत्रवे भयं ददाति, भयानि दत्त सीतायै इत्यादौ तु स्वप्रयोजनमभिलषतो घ्नाकाङ्क्षतोऽपि भयस्य देयत्वेन विवक्षणात्, अतएवोक्तं ददातु सङ्गः स सुखमिति । एवं विवक्षावशात् यत्र वस्तुतो दानं तत्रापि न । यथा—

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे (३) ।
अधीते शतसाहस्रमनन्तं वेदपारगे ॥ इति मनुः । परे तु
पूजानुग्रहकाम्याभिः स्वद्रव्यस्य परार्पणम् ।
दानं तस्यार्पणस्थानं सम्प्रदानं प्रकीर्त्तितम् ॥

---

(१) पृष्ठपदेनात्र पृष्ठदर्शनं लक्ष्यते । तेन युद्धादौ पराजितः सन् प्लुतःशत्रवे पृष्ठदर्शनं ददातीत्यर्थः । यत् पृष्ठदर्शनं शत्रुभिः प्राप्तं तस्य पुनरादानं नास्त्येव । किन्त्वत्र पृष्ठदर्शनस्य स्वेच्छया क्रियमाणत्वाभावात् तद्ग्रहीतो मत इत्यस्य न सम्प्रदानत्वम् । विद्यानन्दाचार्य्यास्त्वेवमाहुः ।

(२) अत्र पूजानुग्रहकाम्या न सन्तीति न सम्प्रदानत्वं । स्वस्वत्वपरित्यागेन यस्य परस्य स्वत्वसम्पादयितुमिच्छा धर्म्माद्यभिसम्बन्धिनी मतिर्भवति तत् सम्प्रदानमित्यर्थं । एतेन राज्ञो दण्डं ददातीत्यत्र इच्छाविरहाच्च संघेति । यदि धर्म्माद्यभिसम्बन्धिन्या मत्या दण्डं ददाति, तदा राज्ञे दण्डं ददातीत्यत्र सम्प्रदानत्वं भवत्येवेति ४१६ कातन्त्रवृत्तटीकायां कविराजः ।

(३) "गर्भाधानादिसंस्कारैर्युक्तश्च नियमव्रतैः ।
नाध्यापयति नाधीते स ज्ञेयो ब्राह्मणब्रुवः ॥" इत्यङ्गिराः ।

रामः, प्रत्यग्रणात्तस्मै लक्ष्मणोऽन्वग्रणात् कपिः।

रामं वदन्तं प्रोत्साहयामास इत्यर्थः।

सर्व्वो धारयते सर्व्वं सद्वास्तं भज मुक्तये।

---

गुरुदेवद्विजातीनां भावशुद्धा कृतं हि यत्।
ध्यानावमतिदानैश्च पूजा माननमुच्यते॥
विरूपोन्मत्तनिःस्वानामनुकम्पापूर्व्वकं हि यत्।
पूरणं दानमानाभ्यामनुग्रह उदाहृतः॥
यत्किञ्चित् फलमुद्दिश्य दानयज्ञजपादिकम्।
क्रियते कायिकं यच्च तत् काम्येति प्रकीर्त्तितम्॥
दानपात्रं सम्प्रदानं त्रिधा तच्च निरूपितम्।
देहीति प्रेरणात् किञ्चित् प्रेरकं याचको यथा॥
महत्त्वात् याचते नैव भक्त्या दत्तन्तु मन्यते।
अनुमन्तृकमेतत् स्याद्गुणवानतिथिर्यथा॥
न स्वीकरोति माहात्म्यान्न निराकुरुते तथा।
अनिराकर्त्तृकं तत् स्याद्यथा चैत्यः (१) सपाणिधिः॥

इति मुख्यसम्प्रदानमन्यत्र तूपचारादित्यप्याहुः।

असूया गुणेषु दोषारोपः। क्रोधो नेत्रलौहित्यादिहेतुश्चित्तविकारः। ईर्ष्या अक्षमा। रुचिः प्रीतिविशेषः। द्रोहो जिघांसा।

असूयाद्यर्थानां धूनां यस्य यं प्रति कोपः। रुच्यर्थानां

---

(१) चैत्यो वृद्ध०।

प्रयोगे घो यस्य प्रीतिं करोति। ख्या-ह्नु श्लाघ-शपां प्रयोगे यो बोधयितुमिष्टः। स्पृहिधोः प्रयोगे योऽभीष्टः। राधीक्षोः प्रयोगे यद्विषयो विविधप्रश्नः। आप्रतिश्रु-प्रत्यनुगॄोः प्रयोगे गम्यमानप्राक्क्रियाया यो घः। धारेः प्रयोगे यो धनस्वामी स भसंज्ञः स्यादित्यर्थः।

ददात्विति। यस्मै हरये गोपीगणोऽसूयति स्म, (१) हरेर्गुणे दोषमारोपितवान्। यस्मै गोपीगणः कुप्यति स्म, यं प्रति नेत्रलौहित्यादिकं कृतवान्। यस्मै ईर्ष्यति स्म, यं प्रति न चान्तवान्(२)। यस्मै रोचते स्म, यस्य प्रीतिविषयीभूतो गोपीगणः। यस्मै द्रुह्यति स्म, गोपीगणो यं हिंसितुमिष्टवान्। यस्मै गोपीगणस्तिष्ठते स्म, यं प्रति स्वाभिलाषं बोधितवान् प्रकाशे मम (३)। यस्मै ह्नुते स्म, अपह्नुवानो गोपीगणः हरिं चातुर्य्यं बोधितवान्। यस्मै श्लाघिष्ट, श्लाघमानमात्मानं यं बोधितवान्। यस्मै स्पृहयति स्म, यमीप्सितवान्।

पुष्पेभ्यः स्पृह्यते राज्ञा इत्यादावढलाद्भावे मम्। स्पृहणीया विभूतय इत्यादिदर्शनाद्विकल्पयत्यन्यः (४)।

---

(१) असु उपतापं करोतीति असुशब्दात् कण्ड्वादित्वात् यके असूयेति नामधातोर्क्विप्।

(२) भार्य्यामीर्ष्यतीति नात्र भार्य्यां प्रति कोपः, किन्तु परैर्दृश्यमानां तां न क्षमते इत्यर्थः।

(३) प्रतिज्ञानिर्णयप्रकाशो इत्यनेनेति शेषः।

(४) पुष्पाणि स्पृहयति पुष्पेभ्यः स्पृहयति इत्यादौ तु क्रियाव्याप्यतया द्वयं, क्रियासम्बन्धविवक्षया मत्वमिति केचित्।

यस्मै गोपीगणोऽशप्त, (१) यं प्रति गोपीगणः शपथादिना स्वस्य तद्गतत्वं बोधितवान्। स हरिः सद्भ्यः सुखं ददात्वित्यन्वयः।

गर्गो मुनिर्व्रजे रामाय राध्यति स्म, कृष्णाय ईक्षते स्म, व्रजस्थाने विविधप्रश्नेन रामकृष्णयोः शुभाशुभं (२) पर्यालोचितवान् इत्यर्थः। स्वादि राध्नोतेरपि ग्रहणात् विप्राय राध्नोतीत्यन्ये। रामो विभीषणाय राज्यमाशृणोत्, यशश्च प्रत्यशृणोत्, याचमाने विभीषणे राज्यं यशोऽप्यङ्गीकृतवानित्यर्थः। तस्मै रामाय लक्ष्मणः प्रत्यगृणात्, कपिर्हनूमांश्च अन्वगृणात्, विभीषणाय राज्यादिकं दातुं शंसतो रामस्य प्रोत्साहनं कृतवानित्यर्थः। आप्रतिश्रु-प्रत्यनुपूर्वगॄ-प्रयोगे गम्यमान-सामान्य-प्राक्क्रियाया ग्रहणात् याचन-शंसनभिन्नत्वेऽपि।

यथा—

> शृण्वद्भ्यः प्रतिशृण्वन्ति मध्यमा भीरु नोत्तमाः।
> गृणद्भ्योऽनुगृणन्त्यन्येऽकृतार्था नैव मद्विधाः (३) ॥

---

(१) अशप्तेति शपथार्थीत्यनुकारे इति मम।

(२) अत्र चिन्तां कीदृगितीति पाठान्तरम्।

(३) सीतां प्रति रावणस्योक्तिरियम्। हे भीरु शृण्वद्भ्यः प्रार्थयमानेभ्यः स्वाभिमतं क्रियतामित्युपदेष्टृभ्य अधमा एव प्रथमं प्रतिशृण्वन्ति ते प्रयुक्ता सन्तस्तथा कर्त्तव्यमित्युपगच्छन्ति नतु मद्विधा मादृशा उत्तमाः, ते हि स्वातन्त्र्यात् स्वयमेव हिताहितं जानन्तीति भावः। अन्येऽकृतार्था अधमा गृणद्भ्यः स्तुतिं कुर्वद्भ्य एव अनुगृणन्ति, ते प्रयुक्ता धनादिकं दातुम् अभ्युपगच्छन्ति स्वार्थसिद्धये स्तावकेभ्यो यच्छन्तीत्यर्थः, नत्वेवं मद्विधाः। स्वतः प्रसिद्धत्वेन परस्तुत्यनपेक्षत्वात्। इति भट्टौ ८।७७। इति भरतव्याख्या। मतान्तरे तु अस्योदाहरणे गम्यमान-

इत्यादौ श्रवणादिप्राक्‌क्रियाया घो भं स्यात्। सङ्घः सर्व्वं सर्व्वो धारयते, सतां सम्बन्धे सर्व्वस्य स्वर्गमोचादिरूपधनस्याधमर्णः शिव इत्यर्थः (१)। अन्ये तु धृमङ् स्थिताविति गृह्णन्ति। धृङ् अवध्वंसे इति परे। वस्तुतस्तु धृमङ् स्थितौ, धृञ् च धारणे, धृञ् च धृत्यां, धृङ् अवध्वंसे इति चतुर्णां ग्रहणम्। तथाच धनं ध्रियते, तिष्ठति, साधु(२)स्तद्धनं धारयति स्थापयति,साधुर्धनस्थितिप्रयोजकः पूर्व्वस्वामी उत्तमर्णः। धृत्यर्थे साधुर्धनं धरति धरते धारयति वा, रचति, अत्र साधू रचणकर्त्ता धनस्वामी उत्तमर्णः। एवं साधुर्धनं धारयते अवध्वंसयति, साधुर्धननाशप्रयोजकः स्वामी उत्तमर्णः। सर्व्वत्र तत्प्रयोजके पूर्व्वस्वामिनि साधौ घे प्राप्तेऽनेन भमिति सारार्थः। एवं विप्राय शतं धारयति चैत्रः, विप्रस्य शतं ध्रियते, स्वरूपेणावतिष्ठते, तच्छतं चैत्र आत्मनि स्थापयति इत्यर्थः।

---

श्रवणप्राक्‌क्रियायाः कर्त्तुः सम्प्रदानत्वमुक्तम्। तथा चायमर्थः—पूर्व्वं ये शृण्वन्ति प्रभोर्वाक्यमिति शेषः, अर्थात् प्रभुवाक्यमाकर्ण्य तत्प्रतिपालयन्त प्रभोरानुकूल्ये वर्त्तन्ते, तेभ्यो मध्यमाः प्रतिशृण्वन्ति, वयमेतद् करिष्याम इत्यभ्युपगच्छन्ति। अत्र श्रवणमेव पूर्व्वक्रिया, तस्याः कर्त्ता सम्प्रदानं भवतीति। अतएवात्र तर्कवागीशेनोक्तं श्रवणादिप्राक्‌क्रियाया घो भं स्यादिति। (वङ्गियसारे कारकपादे २५ सूत्रस्य टीका द्रष्टव्या)।

(१) दयालुतया सर्व्वं अवश्यंदायिनः शिवस्य अधमर्णत्वत्वेन निर्देश इति दुर्गादासः। केचित्तु धारीति धृमङ् स्थितौ गेरभ्युपगमनः। अस्यार्थो गृहीतापरिशोधनम्। तत्र यस्य धनं गृहीतं तस्य सम्प्रदानत्वम्। यथा दरिद्रः साधवे शतं धारयतीति। का-वि।

(२) साधुरुत्तमर्णः।

तम् ईदृशं शिवं मुक्तये भज, भजनप्रयोजनं मुक्तिः। एवं यूपाय दारु, रन्धनाय स्थालीत्यादि।

अनुक्तचतुमन्तढात्। अप्रयुक्तस्य चतुमन्तस्य टाचौ स्यात्। काष्ठाय व्रजति, काष्ठमानेतुं गच्छतीत्यर्थः (१)। युद्धाय संनह्यते, युद्धं कर्त्तुं सन्नहनं करोति; पत्ये श्रेते, पतिं प्रीणयितुं श्रेते इत्यर्थः। अनुक्तेति किम्? एधानाहर्त्तुं व्रजति।

चतुमर्थभावात्। चतुमर्थे यो भावत्यस्तदन्ताच्चौ स्यात्। पाकाय व्रजति, पक्तुं व्रजतीत्यर्थः। एवं भुक्तये व्रजतीत्यादि। अत्र यद्यपि तादर्थ्यं गम्यते तथापि नियमार्थमिदं, तेन ओदनं पाचको व्रजतीत्यादौ चे चतुमर्थत्वान्न स्यात्।

उत्पातेन बोध्यात्(२)। वाताय कपिलिका विद्युत्, कपिलिका-विद्युदुत्पातेन ज्ञाप्यमानो वायुरित्यर्थः। एवमातपाय लोहिता विद्युदित्यादि।

---

(१) फलेभ्यो याति फलान्याहर्त्तुं यातीत्यर्थ इति सिद्धान्तकौमुदी। "न चेह तादर्थ्ये इति प्राप्तिः शङ्क्या, यानक्रियायाः फलार्थत्वाभावात्। आहरणार्था हि यानक्रिया आहरणन्तु फलकर्म्मकमित्यवधेयम्"—इति क्रियार्थोपपदस्येति (२।४।१४) सूत्रटीकायां तत्त्वबोधिनी।

(२) "उत्पातेन शुभाशुभसूचको भूतविकार उत्पातः, तेन ज्ञापयितेऽर्थे वर्त्तमानाच्चतुर्थी वाच्येत्यर्थः। वाताय—वातस्य ज्ञापिकेत्यर्थः' इति परिक्रयणे इत्यादि (१।४।४४) सूत्रटीकायां तत्त्वबोधिनी। कपिलिका विद्युदुत्पातः, तेन ज्ञाप्यमानो वातस्ततश्चतुर्थी भवति। 'वाताय कपिला विद्युदातपायातिलोहिनी। कृष्णा सर्व्वविनाशाय दुर्भिक्षाय सिता भवेत्'। इति भाष्यम्।

२८६। शक्तार्थ वषड्हित सुख स्वाहा स्वधा स्वस्ति नमोभिः।

( शक्तार्थ—नमोभिः ३।॥ )।

एभिर्योगे चौ स्यात्।

दैत्येभ्योऽलं हरिः, पूष्णे वषट्, सङ्गो हितं सुखम्।

स्वाहाग्नये, स्वधा पित्रे, स्वस्ति धात्रे, नमः सते॥

---

२८६। शक्ता। शक्तोऽर्थो येषां ते शक्तार्थाः, शक्तपर्य्याप्त-प्रभुप्रोथालमादयः। दैत्येभ्य इत्यादि—दैत्यानां सम्बन्धे समर्थो हरिः। एवम् "अलं प्रदोषः प्रियसङ्गमाय," शक्तो मल्लो मल्लाय,(१) इन्द्रो वृत्राय प्रभुरित्यादि। यदा प्रभुशब्द ईश्वरवाची तदा षष्ठ्येव, (२) तेन ममायं प्रभुः स्वामीत्यर्थः। भट्टौ "नाप्रोथीदस्य कथन"(३) इति दर्शनात् शक्तार्थयोगे षष्ठ्यपीत्यन्ये (४)। शक्तो मल्लो राम इत्यत्र रामो न शक्तार्थयोगः। वषट् स्वाहा स्वधा दानार्थ-

---

(१) "अलं योगे षष्ठीश्रुतिर्नास्ति "चतुर्थी पर्य्यादिभ्योऽनादरे" इति नियमसमाप्ते वाक्याभावादिति केचिद्वदन्ति। मल्लो मल्लो मल्लाय इत्यत्र कारकविभक्त्या प्रथमया बाधितत्वात् मल्ल इति न षष्ठी"—संक्षिप्तसारे कारकपादे—८१ सूत्रे गोयीचन्द्रः।

(२) प्रभ्वादियोगे षष्ठ्यपि साधुः। "तस्मै प्रभवति", "स एषां ग्रामणी"रितिनिर्देशात्। तेन प्रभुर्बुभूषुर्भुवनत्रयस्येति सिद्धम्"—इति सिद्धान्तकौमुदी।

(३) भट्टौ ११।७०। रामचन्द्रं प्रति विभीषणस्योक्तिरियम्। कथन ध्वंस कुम्भकर्णस्य न अप्रोथीत् प्रभवति स्म इत्यर्थः। प्रोथृङ पर्य्याप्तौ इति कविकल्पद्रुमः। पर्य्याप्तं सामर्थ्यम्।

(४) "शक्तार्थैः षष्ठ्यपीष्यते" इति संक्षिप्तसारसूत्रम् (कारकपादे ८१)।

द्योतकाः। (१) पूष्णे वषडिति सूर्याय दीयते इत्यर्थः। सज्जनेभ्यो हितं, सज्जनाः सुखं, परत्र ग्रहणात् सतामित्यपि। "ग्रामाय्यद्-गुणिनां हित"मिति भट्टिः (२)। अग्नये स्वाहा, अग्नये दीयते इत्यर्थः। एवं पित्रे स्वधा। धात्रे स्वस्ति, पोष्टुः कुशलमस्तु इत्यर्थः। सते नमः, सतां सम्बन्धे प्रणाम इत्यर्थः। सामान्यतो ग्रहणात् कृष्णाय कुसुमं नम इत्यादौ त्यागार्थेनापि स्यात् (३)। नमस्कृत्य मुनित्रयमित्यादौ नमःशब्दद्योतितप्रणत्यर्थकृञो व्याप्यत्वात् ढत्वम् (४)। रावणाय नमस्कुर्य्याः, नमश्चकार देवेभ्य इत्यादौ तु प्रणतिवाचकनमःशब्दस्य क्रियाव्याप्यत्वात् ढत्वं (५) स्यादेव।

---

(१) "वषट् स्वधा स्वाहा नम एषां त्यागार्थतया सम्प्रदानत्वेऽपि त्वेषिद्धौ पृथक् ग्रहणं मन्त्रान्तर्गतानामपि प्राप्त्यर्थम्। तेन शिखायै वषट्, शिरसे स्वाहा, पितृभ्यः स्वधोच्यताम्, हृदयाय नम इत्यादि सिद्धम्। नारायणं नमस्कृत्य इत्यादौ उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात् कर्म्मत्वम्"—इति दुर्गादासः।

(२) भट्टौ १७।२८। इन्द्रजितं प्रति विभीषणस्योक्तिरियम्। गुणिनां माल्यवत्-प्रभृतीनां गुणवतां साधूनां वा हितं प्रति, अत्र प्रतिरध्याहार्य्यः, ग्रामाद्यत् अनवहितोऽभवदित्यर्थः। सर्व्वेषु हस्तलिखितकर्णगोष्टीकापुस्तकेषु हित-मिति पाठ। संक्षिप्तसारेऽप्येवम्। मुद्रितपुस्तके तु हिते इति पाठो दृश्यते।

(३) "कृष्णाय गन्धो नम इत्यस्य स्व स्वत्व ध्वंस-पूर्व्वकारोपितस्वत्वाश्रय इत्यर्थः; तेन कृष्णसम्बन्ध्यारोपितस्वत्वाश्रयो गन्ध इत्यर्थः। एवञ्च सम्बन्धार्थत्वेन षष्ठी-विषयेऽस्य विषय"—इति विद्यालङ्कारः।

(४) अत तथात्वेन प्रणतिवाचकः नमःशब्दस्तु तद्द्योतकः, तस्मात् प्रणत्यर्थ-कृञो विषयतारूप-फलाश्रयत्वात् मुनित्रयमिति कर्म्मत्वम्। अतएव नमस्करोति देवानित्यत्र उपपदविभक्तेः कारकविभक्तिर्गरीयसीति न्यायात् कर्म्मत्वमिति सिद्धान्तकौमुदी।

(५) ढत्वं नमःशब्दस्येति शेष। "नमस्कुर्म्मो नृसिंहाय—नृसिंहमनुकूलयितुमि-

२९७। ढे नाशिषि वा।

( ढे ७।, न ।१।, आशिषि ७।, वा ।१। )।

मद्रः सतां वा शं भूयात्।

---

बलिरचित प्रयोजनार्थार्थेन। बलिरचिताभ्यां प्रयोजनवाचयेन च योगे चौ स्यात्। कुवेराय बलिः, विप्राय रचितं, ब्राह्मणार्था यवागूरित्यादि। नित्यं प्रयोजनार्थार्थेन वाच्यलिङ्गता चेति (१) सः।

क्लृप्यर्थैर्विकारे सम्पद्यमानाद्भेदे। क्लृप्यर्थधुभिर्योगे सम्पद्यमानाच्चौ स्यात् विकारे, न तु भेदविवक्षायाम्। मूत्राय यवागूः सम्पद्यते, मूत्ररूपेण यवागूः परिणमतीत्यर्थः। एवं उच्चाराय कल्पते माष इत्यादि। विकारे किम्? मूत्रं यवागूः सम्पद्यते, अत्र विकारो न विवक्षितः, किन्तु कारणतामात्रम्। भेदे तु मूत्रं यवाग्वाः सम्पद्यते, यत इत्यादिना अत्वम्।

२९७। ढेना। आशिषि गम्यमानायां यस्य सम्बन्धोऽवगम्यते तस्माच्चौ स्याद्वा, न तु ढे सति। यद्यपि सामान्येनोक्तं तथाप्यभिधानादिशिषतो ज्ञेयं, तथाहि कुशलायुष्य-प्रयोजन हित-सुख-शोभनार्थैरेव योगे ज्ञेयम्। मद्रः साधूनां कुशलं भवत्वित्यर्थः। एवं मद्रः सतां वा आयुष्यं जीवितं, प्रयोजनमर्थः, पथ्यमुपकारकं, शर्म सातं, शोभनं भद्रं वा भवतु भूयाद्वा इत्यादि।

---

त्यर्थं। एवं स्वयम्भुवे नमस्कृत्य इत्यादावपि"—इति सिद्धान्तकौमुदी। तन्मते एषूदाहरणेषु "अनुकरणतुमन्तढात्," इति चतुर्थी।

(१) मन्यमाना-चतुर्थीतत्पुरुषप्रकरणे वार्त्तिकद्वयमिदं द्रष्टव्यम्।

## २९८। परिक्रियो घे वा।

(परिक्रियः ६।, घे ७।, वा।१।)।

: भक्त्यै मुक्तिः परिक्रीता सद्भिर्विष्णो रुषारिभिः।

---

स्वस्ति गोभ्यो ब्राह्मणेभ्यो भूयादिति पूर्व्वेण नित्यम् (१)। हित-सुखयोरुभयत्र पाठोऽनाशिष्यपि विकल्पार्थः। टे तु शिवस्तव करोतु शम्। ढे निषेधस्तु न पाणिन्यादिसम्मतः। आशिषि किम्? आयुष्यं (२) प्राणिनां घृतम्।

२९८। परि। परिपूर्व्वक्रीञो वेतनादौ घे चौ वा स्यात्। नियतकालं भृत्या (३) स्वीकरणं परिक्रयः। सद्भिर्विष्णोर्भक्त्यै मुक्तिः परिक्रीता, विष्णुसेवन-वेतनेन सालोक्यादिरूपा मुक्तिर्निं-यत्ता इत्यर्थः। अरिभिः शत्रुभिः रुषा द्वेषेण। उदाहरणद्वयेन विकल्पो दर्शितः। एवं द्रोणाय द्रोणेन वा परिक्रीतो वृषलः (४), किञ्चित्कालपर्य्यन्तं स्वीकृतवानित्यर्थः। परेः किम्? शतेन क्रीतोऽश्वः। परे चत्र धस्य भत्वमाहुः (५)।

---

(१) स्वस्तियोगे 'आशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्। स्वस्ति ब्राह्मणेभ्यः' इति काशिका (२।३।१६)।

(२) आयुस्करमित्यर्थः।

(३) भृतिर्वेतनम्।

(४) वृषलः शूद्रः।

(५) अत्र सूत्रे दुर्गादास *"चतुर्थ्यर्थं परसूत्रे वाशब्देऽवश्यवक्तव्ये विभाषा* द्वयमध्यवर्त्तित्वेऽप्यस्य विकल्पार्थं वापदञ्च"मित्याह। वापदग्रहणमपि पौनरुक्त्यस्य निर्द्धार्य्यर्थमिति गङ्गाधरः।

२९९ । गत्यर्थमन्यढे चेष्टावज्ञेऽनध्वाकाकशूकशृगालनावन्ने वा ।

(गत्यर्थमन्यढे ७, चेष्टावज्ञे ७, अनध्वा—अन्ने ७, वा ।१। ) ।

गत्यर्थमन्योर्ढे क्रमान्मार्गकाकादिवर्जे चेष्टावज्ञयोर्थी स्याद्वा ।

---

२९९ । गत्यर्थ । गतिरर्थो यस्य सः, स च मन्यश्च तत्, तस्य ढं तस्मिन् । चेष्टा च अवज्ञा च तत्तस्मिन् । न अध्वा अनध्वा, काकश्च शूकश्च शृगालश्च नौश्च अन्नञ्च तत् न तत् अकाकशूकशृगालनावन्नम् । पुनः अनध्वा च तच्च तत्तस्मिन् । नञ्द्वयमुक्तं यथाक्रमदर्शनार्थम् । चेष्टायामित्युक्तेर्गतिरिह पादविहरणात्मिका, तेन स्त्रियं गच्छतीत्यादौ न स्यात् आप्यार्थत्वात् (१) । चेष्टा कायकृतव्यापारः, परिस्पन्दनादिलक्षणेत्येके । तन्मते स्त्रियं गच्छतीत्यादौ गृहं प्रविशति इत्यादिषन्न स्यात् (२) । वाशब्दस्य व्यवस्थावाचित्वात् अजां नयति, गृहं प्रविशति, गिरिशिखरमारोहति, सागरं तरति इत्यादौ न स्यादेव ; ग्रामाय ग्रामं गन्ता, वनाय वनं गमनमित्यादौ ढे ऽपि न स्यात् । ग्रामस्य गन्ता वनस्य गमनमित्याद्यपीति भागवृत्तिः (३) । एके तु तादर्थ्ये ङ्यां सिद्धायां ग्रामाय गच्छतीत्यादिषु समो गमृच्छेत्यादिना अढत्वात्मप्राप्तिनिरासार्थमिदमित्याहुः (४) ।

---

(१) आप्योऽत्रैव । स्त्रिया सह गच्छते इत्यर्थं ।

(२) वक्ष्यमाण वाशब्द व्यवस्थयेति शेष ।

(३) इति मतो वति भागवृत्तिरिति क्रमदीश्वरवृत्तम् ।

(४) अत्र पुनर्शोपग्रहण परस्म निवृत्त्यर्थमिति गङ्गाधरः ।

व्रजाय व्रजति श्रीशो व्रजं व्रजति केशवः।

*न त्वा तृणाय मन्येऽहं न त्वा मन्ये तृणं खलु॥*

चेष्टावत्त्वे किं—मनसा द्वारकामिति त्वां मन्येऽहं जनार्दनम्।
अध्वादौ तु—गच्छत्यनन्तः पन्थानं न त्वा काकं स मन्यते।

---

न त्वा तृणायेति—मन्यतेर्येन हेतुनानादरो गम्यते तत्रैव चौ, तेन त्वा इत्यत्र न स्यात्। गच्छत्यनन्त इत्यादि—अत्र मुख्यस्याध्वनो निषेधः। मुख्यत्वन्तु साक्षादभिमतदेशप्राप्तिहेतुत्वं, तेन उत्पथेन (१) पथि गच्छतीत्यादौ स्यात्। अत्र पथः साक्षादभिमतदेशप्राप्तौ व्यवहितव्यापारवत्त्वेन गौणत्वम् (२)। न त्वा काकमिति—त्वां काकं न मन्यते, काकादप्यपकृष्टं मन्यते इत्यर्थः। एवं न त्वा शूकं मन्ये, न त्वा शृगालं मन्य इत्यादि (३)। परे तु प्राणिमात्रे निषेधात् (४) काकशुकशृगालानामेव निषेध

---

(१) कुपथेनेत्यर्थः।

(२) अत्र पन्थाः साक्षात्सम्बन्धेन नाभिमतदेशप्राप्तिहेतुः, अपि तु स पन्थाः एतान् अभिमतदेशपदानाय, अतोऽस्य उत्पथव्यापारकृपव्यवहितव्यापारवत्त्वेन गौणत्वम्। तथा च संक्षिप्तसारे कारकपादे १०७ सूत्रटीकायां गोयीचन्द्रः—"यत्रावर्त्मना पन्थानं गच्छति तत्र ग्रामादिवत् पन्था एव गम्यः तत्र चतुर्थी भवतीत्यर्थ"इत्याह। सिद्धान्तकौमुद्यास्तु 'गत्याविष्टिते अध्वन्येवायं निषेधः' यदा तु उत्पथात् पन्था एवाक्रमितुमिष्यते तदा चतुर्थी भवत्येवे त्युक्तम्।

(३) शूक शृगालादीनां ग्रहणाच्च भाग, "न त्वा नावमहं मन्ये यावत्तीर्णं न नाव्यम्। न त्वामन्नमहं मन्ये यावद्भुक्तं न स्यादि"ति संक्षिप्तसारे कारकपादे १०२ सूत्रस्य वृत्तिः।

(४) मन्यकर्मण्यनादरे विभाषाऽप्राणिषु २।३।१७। इति पाणिनिसूत्रे प्राणिमात्रे निषेधमपनीयेत्यर्थ इत्युक्तम्। अतोऽत्र निषेधादिति निषेधमपनीयेति यबर्थे पञ्चमी।

३०० । यतोऽपायभीजुगुप्सापराजयप्रमादादानभूत्राणविरामान्तर्द्धिवारणं जं पौ ।

( यतः ५।, अपाय—वारणं १।, जं १।, पौ ।१।) ।

यत एते तत् जसंज्ञं स्यात्, तत्र पौ ।

---

इत्याहुः । तन्मते क्वचित् शुकस्थाने शृगः पाठः (१) । अन्ये तु प्राणिषु काकशृगालावेव वर्जयन्ति ।

३०० । यतो । अपायो विश्लेषः, भीर्भयं, जुगुप्सा गर्हया चित्तनिवृत्तिः, पराजयः सोढ़मशक्तिः, प्रमादोऽनवधानता, आदानं नियमतो वाक्यग्रहणं, भूरुत्पत्तिः प्रादुर्भावश्च, त्राणं रक्षा, विरामोऽश्रद्धया चित्तनिवृत्तिः, अन्तर्द्धिरन्तर्द्धानं, वारणं प्रवृत्तिविघातः । यत एते इति – अपायाद्यवधित्वेन यद्विवक्ष्यते तज्जसंज्ञं स्यात् । तत्त्रिविधम् ।

निर्द्दिष्टविषयं किञ्चिदुपात्तविषयन्तथा ।
अपेक्षितक्रियञ्चेति त्रिधापादानमुच्यते (२) ॥
श्रुतसाध्यक्रियं यत् स्यान्निर्द्दिष्टविषयन्तु तत् ।
अध्याहार्यक्रियं यत् स्यादुपात्तविषयन्तु तत् ।
अपेक्षितक्रियं तत् स्याद् यत् क्रियाशून्यमेव हि ॥

---

(१) सिद्धान्तकौमुद्यान्तु "न त्वां शुने स्वानं वा मन्ये इत्यत्र प्राणिष्वेऽपि भवत्ये"त्युक्तम । काशिकायां भाष्येऽप्येवमेव ।

(२) अपादानस्येदं त्रैविध्यमन्यत्र ग्रन्थे प्रायशो न दृश्यते।"वनाद्विद्योतते विद्युदित्यत्र निःसरणाद्धे विद्योतते विद्युतिः, निःसृत्य विद्योतते इत्यर्थ' इत्युक्तं प्रयोगरत्नमालाटीकायाम् । तन्मते अत्र निःसरणपूर्व्वक-विद्योतनमेव विद्युतेरर्थः ।

विभीषणः पदाद्भ्रष्टो, भ्रातुर्भीतो, जुगुप्सितः।
पापात्, पराजितो दुःखादप्रमत्तो विधेः, सतः।

---

क्रमेणोदाहरणानि—वृक्षात् पर्णं पतति, घनाद्विद्योतते विद्युन्मेघान्निःसृत्य विद्योतत इत्यर्थः। स्रौघ्नेभ्यो(१) माथुरा आढ्यतरा इत्यत्र नियमेन उत्कर्षक्रिया गम्यते। नियमश्चावश्यकता। ये तावदाढ्यतरा भवन्ति, ते दुर्गतेभ्य उत्कृष्टसुखभाजो भवन्ति इत्यर्थः। एवं माथुरेभ्यः स्रौघ्ना दीनतरा इत्यत्र नियमेनापकर्षक्रिया गम्यते।

अपसरतो मेषादपसरति मेष इत्यादौ एकस्यावधित्वं विवक्ष्यते। यदा तु न विवक्ष्यते तदा मेषावपसरत इति। एवं वृक्षस्य पर्णं पततीति सम्बन्धमात्रस्य विवक्षितत्वात्।

तत्र भीत्रार्थयोर्यो भयहेतुः। पराजेर्यत् सोढुमशक्यम्। आदानस्य नियमतो वाक्यग्रहणस्य च आख्याता। उत्पत्तिकर्तुर्यत् कारणम्। प्रादुर्भावकर्तुर्यदाद्योपलम्भनस्थानम्। अन्तर्धानकर्त्ता यस्मादर्शनमिच्छति। जुगुप्सा-विराम-प्रमाद-वारणार्थानां यन्निमित्तं (२)। एषामावधित्वविवक्षायां अपसंज्ञेत्यर्थः (३)।

---

एवं आम्नायात् शंसतीत्यत्र उद्धरणार्थे शंसने शंसिः, आम्नायादुद्धृत्य शंसतीत्यर्थः। आम्नायो वेदैकदेशः।

(१) देशविशेषवासिभ्यः।

(२) जुगुप्साया यद् गर्हणीयं, विरामस्य यतोऽवज्ञा, प्रमादस्य यद् विषयकमनवधानम्, वारणस्य च प्रवृत्तिविषयस्तदपादानमिति बृहन्मुग्धबोधम्।

(३) अवधिः सीमा।

आत्तविद्यो, मुनेर्जातो, भ्रातुस्त्रातो निजे, भवात् ।
विरतोऽन्तर्हितो दुष्टात्, शोकात् रामेण वारितः ॥

विभीषण इत्यादि। विभीषणः पदाद्भ्रष्टः, लङ्काया रामस्य निकटं गत इति यावत्। स कीदृशः ? भ्रातृ रावणाद्भीतः, तस्य भ्रातैव भयहेतुः। कुम्भिकयैनं भाययति इत्यादौ तु अवधित्वाभावान्न अत्वम्(१)। पापात् जुगुप्सितः, पापं निन्दन् ततो निवृत्तः। जुगुप्सायाः पापमेव निमित्तम्। दुःखात् पराजितः, दुःखं सोढुं न क्षमः, पराजेः दुःखमेव सोढुमशक्यम्। अन्यत्र रिपून् पराजयते अभिभवतीत्यर्थः। अविधेः प्रमत्तः, अशास्त्रविहितात् कर्म्मणः प्रमत्तः, प्रमादस्याशास्त्रविहितकर्म्मैव निमित्तम् (२)। यद्वा विधेः अप्रमत्त इति, अ-शब्दो निषेधे, आदौ अत्वं, पर्य्यन्तनिषेधार्थाकारेण सह सम्बन्धः, ग्रामं न गच्छतीतिवत्। एवं धनात् प्रमाद्यति इत्यादि (३)। सत आत्तविद्यः, पण्डितान्नियमतो गृहीतवाक्यः। गुरोरध्ययनस्य नियमपूर्व्वकत्वात् नियमतो वाक्यस्य सत आख्यातृत्वम्; एवमुपाध्यायात् शृणोति पठतीत्यादि। अनियमे तु नटस्य गीतं शृणोति। मुनेर्विश्रवसो जात उत्पन्नः, विभीषणस्य मुनिर्निमित्तकारणम्। जायमानस्य प्रकृतिः कारणम्। तद्द्विविधं, समवायि निमित्तञ्च। तत्र यत्समवेतं (४) कार्य्यमुत्पद्यते तत् समवायि, यथा मृत्पिण्डाद्घटो जायते, वीजादङ्कुरो जायते इत्यादि। एतद्द्विविधं

(१) कुम्भिका मत्स्यविशेष।

(२) अवैधकर्म्मोद्यमशक्तित इत्यर्थ।

(३) धनविषयकं यत्नमधान तद्दानिष्यर्थ.।

(४) यस्मिन् समवेतं समवायसम्बन्धेन वर्त्तमानं इत्यर्थं।

निमित्तं (१) यथा चक्राद्घटो जायते, पुत्रात् प्रमोदो जायते (२) इत्यादि। समवायिकारण-प्रत्यासन्नमवधृत-सामर्थ्यमसमवायि च कारणान्तरमित्यन्यः (३)। यथा तन्तुद्वयसंयोगात् पटो जायते इति। शृङ्गात् शरो जायते, गोमयाद्वृश्चिको जायते इत्यत्र शृङ्गादि समवायिकारणं, शृङ्गादिसमवायिशरादेरपृथक्सिद्धत्वात् (४)।

भ्रातू रावणान्निर्जेरात्मीयैस्त्रातः; रावणएव विभीषणस्य भयहेतुः। एवं काकात्तिलांस्त्रायते इत्यत्र त्वप्राणिनि भयमुपचरणीयं, भयस्य प्राणिधर्मत्वात्। भवाद्विरतः संसारमप्रवाय तस्मान्निवृत्तः; विरामस्य भवो निमित्तम्। दुष्टादन्तर्हितं, आत्मनो रावणाददर्शनमिष्टवान्। रामेण शोकाद्वारितः, शोके प्रवर्त्तमानो निरुद्धः, वारणस्य निमित्तं शोकः। एवं यवेभ्यो गां निषेधति, कूपादन्धं वारयति। सत्यात् स्खलति, आचाराच्चलति,

---

(१) आभ्यामन्यदन्वयव्यतिरेकानुविधायि निमित्तकारणम्।

(२) यस्मात्मनः प्रमोदो भवति स आत्मा समवायि कारणं पुत्रो निमित्तकारणमिति।

(३) अस्यार्थः—समवायिकारणे प्रत्यासन्नं स्थितं, अवधृतं निश्चितं सामर्थ्यं कारणत्वं यस्य तत्, तन्तुद्वयसंयोगात् पटो जायते इत्यादौ संयोगोऽसमवायि कारणं। अतएव "असमवायिकारणत्वं गुणकर्म्मणोरेव भवति, तदुभयस्य समवायेन सम्बद्धमित्यर्थः," इत्युक्तं विद्यालङ्कारेण।

(४) पृथग्भावेनानवस्थितत्वादित्यर्थः। कारकपादे "जन्यर्थकर्त्तुः प्रकृतौ" इति २१ संख्यक क्रमदीश्वरसूत्रस्य वृत्तिं गोयीचन्द्रटीका विद्यालङ्कारटिप्पनीञ्च पर्यालोच्य शरोऽत्र उद्भिज्जविशेष, वृश्चिको गोमयदत्त्युमजः, शृङ्गशब्दः शिखरवाचक तस्मात् शृङ्गगोमये शरवृश्चिकौ प्रति निमित्तकारणे, नतु समवायिकारणे इति तेषां मतमिति प्रतीयते। तर्कवागीशस्तु अपृथक्सिद्धत्वं समवायिकारणत्वमिति मन्यमानः शृङ्गगोमययोः शरवृश्चिकौ प्रति समवायिकारणत्वमाहेति मतभेदः।

३०१। अन्यारभ्यार्थाराद्वहिर्विनर्त्ते प्रतिपर्य्यपाङ्दिक्शब्दैर्हेतुयबर्थे च ।

( अन्य—शब्दैः ३।।।, हेतुयबर्थे ७।, च ।१।) ।

एभिर्योगे हेतौ यबन्तस्यार्थे च पौ स्यात् ।

आङ् व्याप्तिसीम्नोस्त्यागेऽन्यौ प्रतिदाननिधौ प्रति ॥

---

विप्राद्दस्तं गृह्णाति इत्यादौ गौणागौणापायावधित्वेन विवक्षितत्वान्नत्वम् । एवं सति व्याघ्रो यदि मां पश्येत् तदा ध्रुवं मृत्युरिति मनसा तं प्राप्य ततो निवर्त्तते इत्यादिक्रमेणैव गौणापायत्वात् सिद्धे भ्यादिग्रहणं प्रपञ्चार्थमित्यन्ये । व्याघ्राद्बिभेति, दस्युभ्यो रक्षितः स्वार्थं इत्यादौ नित्वस्यार्थस्याविवक्षितत्वे पूर्व्वेणाप्राप्ते ग्रहणमिति परे ।

३०१ । अन्या । अन्यश्च आरभ्यश्च तावर्थौ येषां ते, दिशि दृष्टाः शब्दाः दिक्शब्दाः, अन्यारभ्यार्थाश्च आराच्च बहिश्च विना च ऋते च प्रतिश्च परिश्च अपश्च आङ् च दिक्शब्दाश्च ते तैः । यपोऽर्थो यबर्थः, हेतुश्च यबर्थश्च तस्मिन् । येन विधिस्तदन्तस्येति न्यायादाह यबन्तस्येति ।

आङादीनां नानार्थत्वादर्थविशेष एवात्र ग्रहणम् इत्याह आङ् व्याप्ति इत्यादि । प्रतिदाननिधावित्यागमशासनस्यानित्यत्वात् न नुग् । प्रतिदाने परीवर्त्ते, प्रतिनिधौ मुख्यसदृशे प्रतिरत्र गृहीत इत्यर्थः ।

नेतरदित्यादि । ईशानाद्विष्णुर्नेतरः शिवाभिन्नः । एवं सुराद-

नेतरो विष्णुरीशानात्, भवात् प्रभृति सोऽर्च्यते।
सोऽभ्रदारात् बहिस्त्वत्, शं विना नार्यो सपाद्दते॥

न्योऽसुरवर्गा इत्यादि। परे तु नीचार्थेतरशब्दं पृथक्कृत्यैवान्तीति (१)। भवात् प्रभृति जन्मन आरभ्य स शिवोऽर्च्यते अर्थादस्माभिः। स्कन्धात् प्रभृत्येव सपक्षवानीति कुमारसम्भवे। परे त्वारभ्यार्थ-शब्दं पृथक् न गृह्णन्तीति (२)। स शिवोऽभ्रदारात् अस्माकं समीपवर्त्ती। स त्वद्बहिस्त्व दूरवर्त्ती। क्वचिदपवादविषये-ऽप्युत्सर्गस्य निवेशात् "करस्य करभो बहिः," "बहिरभोज-वनस्य वानरा" इत्यादौ षी। सपादशर्माद्विना शं न, सपाद्दते नार्यो भवतीत्यर्थः। शम्भोर्मुक्तेः सेवायाः प्रत्यसतं परीवर्त्तो मोक्षः। केशवात् प्रति प्रद्युम्नः, कृष्णस्य प्रधानसदृशः। अनन्तात् परि विष्णोस्त्यागात् त्रयः कायिकवाचिकमानसास्तापा भवन्तीत्यर्थः। एवमपानन्तादिति बोध्यम्। आ मृत्योर्मृत्युपर्यन्तं हरिः

(१) अन्यारादितरर्त्ते इति २।३।२९। पाणिनिसूत्रे इतरशब्दस्य पृथगुपादान-मस्ति, सिद्धान्तकौमुद्यां च "इतरग्रहणं प्रपञ्चार्थमि"त्युक्तं। तत्र तत्त्वबोधि-न्यामपि "न च इतरस्यान्यमीचयोरित्यमरोक्तनीचार्थस्येह ग्रहणमस्तीति वाच्यं * * * पञ्चमीविभक्ते इत्यनेनैव सिद्धत्वा दित्युक्तम्। अथाप्यतेऽपि नीचार्थेतरशब्द-योगे निर्द्धारेऽधिकेनेत्यादिसूत्रेण निर्द्धारे पञ्चम्या सिद्धत्वादितरशब्दो न पृथगुक्त इति।

(२) पृथक् न गृह्णन्तीत्यस्यायमाशयः—पाणिनिसूत्रे आरभ्यार्थशब्दयोगे पञ्चमीविधानं नास्ति। किन्तु "अपादाने पञ्चमीति सूत्रे कार्त्तिक्याः प्रभृतीति भाष्यप्रयोगात् प्रभृतियोगे पञ्चमी"ति सिद्धान्तकौमुदी। तत्र तत्त्वबोधिन्यामपि "कार्त्तिक्या प्रभृतीति भाष्यं विवृण्वता कैयटेन तत आरभ्येत्ययमिति प्रयुक्तम्"। अत एवाचार्येणारभ्यार्थं इत्युक्त्वा चातुर्यं प्रकटितम्।

भक्तेः प्रत्यमृतं शम्भोः प्रद्युम्नः केशवात् प्रति।
पर्य्यनन्तात् त्रयस्तापा, आमृत्योः सेव्यतां हरिः॥

सेव्यतां विष्णुराराध्यताम् अर्थादस्माभिः। आ सकलात् सर्व्वं चराचरं जगदभिव्याप्य ब्रह्मास्ति। अत्र दिक्शब्देतिकारणा-द्दिग्देशकालार्थपूर्व्वादीनां आ-आहित्यान्ताना अधूत्तरदानाञ्च ग्रहणम्। अत आह पूर्व्वः कृष्णाद्राम इति; कृष्णात् पूर्व्वकाले जातो बलराम इत्यर्थः। कृष्णादवर उत्तरकाले जातो गद इत्यर्थः। एवम् इयम् अस्याः पूर्व्वा दिक्, अयमस्मात् पूर्व्वो देशः, माघात् पूर्व्वः पौषः, उत्तरा जाह्नवी काश्या, दक्षिणाहि वनाश्वदी, "उत्तराहि वसन् रामः समुद्राद्रक्षसां पुरम्" इति भट्टिः, प्राक् ग्रामात्, प्रत्यङ्नगरादित्यादि। गम्यमानदिक्शब्दैरपि, ले: सि ओ जसित्यादिज्ञापकात्। आनन्दादित्यादि। यद्यपि हेतु यबर्थे इति सामान्येनोक्तं तथापि विशेषतो ज्ञेयं, भवति हि व्याख्यानतो विशेषार्थप्रतिपत्तिरिति। तथाहि—

अघे ऋणे हेतौ पौ नित्यं, गुणे हेतौ अस्त्रियां पौ वा स्यात्। शतात् बद्धः, शतस्य ऋणस्य बन्धने हेतुत्वं, अत्र प्राप्तायां वचनम्। घास्तु—शतेन बन्धितः, अन्तबन्धेः शतस्य प्रयोजकघत्वम्। जाड्या-द्बद्धः जाड्येन बद्धः, पारिखात्यान्मुक्तः पारिखात्येन मुक्तः, पारि-खात्यं तत्त्वज्ञानम्। इह गुणशब्देन द्रव्याश्रितगुणस्यैव न ग्रहणं, किन्तु सम्बन्धिरूपस्य परार्थरूपापन्नस्येति(१), तेन वह्निरत्र धूमादि-

(१) 'सम्बन्धिमात्रमिति—आन्वितमात्रमित्यर्थः। परार्थरूपापन्नमिति—परः साध्योऽर्थो बोध्यो यस्य स परार्थः परव्याप्य इति यावत्, तस्य रूप धर्मः परार्थत्वं

प्रश्नाख्यासकलात्, पूर्वः कथाद्रामोऽवरो गदः।
आनन्दादीश्वरः शैलादासनादीक्षतेऽलकाम्॥
शैलमारुह्य आसने उपविश्येत्यर्थः।

---

त्यादि(१)। स्त्रियान्तु—विद्यया मुक्तः। स्त्रीशब्देनाबीरूपां ग्रहणात् घटो नास्ति दृष्टानुपलब्धेरित्यत्र न निषेधः (२)। एवम् अप्रयुक्तस्य यवन्तस्य टे डे च पी स्यात्। यथा ईश्वरः शिवः आनन्दाद्धेतोः शैलादासनादलकाख्यां पुरं ईक्षते पश्यतीत्यर्थः। शैलादिति टे आसनादिति डे इत्याह शैलमारुह्य इत्यादि। टडादन्यत्र बलेनानयति बलेनाकृष्य इत्यर्थः। अत्राहुः—

प्रश्नोत्तरयोः। अनयोः पी स्यात्। कुतस्त्वम्? वनात्। यत्र

---

तदाधयमित्यर्थं। तथाहि जाद्यादयो बद्धाद्यान्वितासद्धोधभूताच। एतेन अन्यथा शोकः, बलेन हर्मभित्यादौ न भवति, कम्पाया अनाश्रितत्वात्, बलस्य- व्याप्यत्वात्"—इति विद्यालङ्कार।

(१) "गुणाद्धेतोः पञ्चमी वा। अन्याश्रितत्वेन विवक्षितो गुण इत्युच्यते। यथा पर्व्वतो वह्निमान् धूमात्"।—इति प्रयोगरत्नमालायां कारकविभक्तिप्रकरणे ६६८ सूत्रं। "पर्व्वत पक्ष, वह्निसाध्यो धूमो हेतु। यद्यपि धूमस्य वह्नि-कार्य्यत्वं तथापि तदनुमितिहेतुत्वेन हेतुत्व। अत्र धूमस्य द्रव्यत्वेऽपि विवक्षितपराहु गुणत्वम्। एव क्रियाया अपि गुणत्वेन विवक्षा। * * * * व्याप्ति-विशिष्टस्य हेतोः पक्षवृत्तित्वज्ञानस्यानुमितिकारणत्वादन्यस्य पक्षस्य पर्व्वत-स्याश्रितत्वविवक्षा धूमादिहेतोरित्यर्थः। पर्व्वतपक्षक वह्निसाध्यक-धूमहेतुकानु-मितिं प्रति वह्निव्याप्य धूमवत्पर्व्वतज्ञानं कारणमिति —इति तट्टीका। विभाषा गुणेऽस्त्रियाम (२।३।२५) इति पाणिनिसूत्रम्। तत्र सिद्धान्तकौमुद्यां "विभाषेति योगविभागादगुणे स्त्रियाञ्च क्वचित्। धूमादग्निमान्, नास्ति घटोऽनुपलब्धे —इत्युक्तम।

(२) अत्र उपलब्धिशब्दस्य स्त्रीत्वेऽपि व्याभीभूतनभिमतत्वात् पक्षे पञ्चमीति।

३०२। वारादर्थैः। (वा।१।, आरादर्थैः ३।।।)।

दूरान्तिकार्थैः पौ स्याद्वा।

रामाद्दूरस्य यो दूरं पापाद्दुःखस्य सोऽन्तिकम्।

३०३। समार्थैनार्य्यस्तस्ताद्धितसुखैर्निर्द्धारे सम्बन्धे ढे च षी।

(समार्थ—सुखैः ३।।।, निर्द्धारे ७।, सम्बन्धे ७।, ढे ७।, च।१।, षी।१।)।

---

तु आगच्छतीत्यादिक्रियाध्याह्रियते तत्र पूर्व्वेणैव (१) पौ स्यात्। यत्र तु नाध्याह्रियते तत्रैवास्य विषय इत्यन्ये। वस्तुतस्तु उपात्तविषयत्वात् पूर्व्वेणैव निःसृत्येत्यध्याहारात्।

३०२। वारात्। आरादर्थौ येषां ते तैः। आराद्दूरसमीपयोरित्यत आह दूरान्तिकार्थैरिति।

स्तोकाल्पकतिपयकृच्छ्रात् धादसत्त्वे। धेभ्य एभ्यः पौ वा स्यान्न तु सत्त्वे (२)। स्तोकान्मुक्तः स्तोकेन मुक्तः। एवम् अल्पादल्पेन इत्यादि। सत्त्ववाचिनस्तु स्तोकेन मधुना मत्तः। धात् किं? स्तोकं याति।

३०३। समा। समोऽर्थौ येषां ते, स्ताश्च आश्च तौ स्तौ, ताभ्यां तौ स्तातौ। पश्चात् समार्थाश्च एनश्च आश्च रिश्च अस् च

---

(१) अपादानत्वात् यतोऽपायभीत्यनेनैव।

(२) सत्त्वे द्रव्ये। स्तोकादीनां विशेष्यगामित्वे सति नेत्यर्थः। स्तोकादीनां क्रियाविशेषणत्वे सुखेन यातीतिवत् यत्र तेभ्य तृतीया स्यात्तत्रैव पक्षे पञ्चमीत्यर्थः।

एभिर्योगे एषु च षी स्यात् ।

य: सर्व्वस्य समो यश दक्षिणेनोत्तरा स्थित: ।

---

तम् च स्तातौ च हितञ्च सुखञ्च तानि तै: । जातिगुणक्रियाभि: सजातीयव्यवच्छेदो हि निर्द्धार: । विशिष्टधीहेतु: सम्बन्ध:, स चानेकप्रकार:, स्वस्वामित्व-जन्यजनकत्वावयवावयवित्व-प्रतियोग्यनुयोगित्वाधाराधेयत्वादि: । एभिर्योगे इति—समार्थैरेनादित्यान्तैर्हितसुखाभ्याञ्च योगे, जात्यादिभिर्यस्मात् सजातीयाद्व्यवच्छेदस्तस्मात्, सम्बन्धस्योभयनिष्ठत्वेऽपि सम्बन्धस्य निरूपकात् (१) स्वाम्यादे: । यदुक्तं—

भेद्यभेदकयो: (२) श्लिष्ट: सम्बन्धोऽन्योऽन्यमिष्यते ।

द्विष्ठो यद्यपि सम्बन्ध: षष्ठ्युत्पत्तिस्तु भेदकात् ॥

महाकविप्रयोगदर्शनेन धुविशेषाणां यत् टत्वेन विवक्षितं तस्मात् षी स्यादित्यर्थ: ।

य: सर्व्वस्येति—य: सर्व्वस्य शिवस्य समस्तुल्य:, पूर्व्वेण त्नी च । य: सर्व्वस्य दक्षिणेन, दक्षिणस्यां दिशि स्थित:, पूर्व्वेण इी च । य: सर्व्वस्य उत्तरा, उत्तरस्यां दिशि स्थित:, पूर्व्वेण षी च । परे तु षीं नाहु: । य: सर्व्वस्य जगत: उपरि, य: सर्व्वस्य जगतोऽध:, य: सर्व्वस्य जगत: पूर्व्वत: पूर्व्वकालवर्त्ती,य: सर्व्वस्य जगत: पश्चात् उत्तरकालवर्त्ती । पश्चादित्यात्वेन निपातितम्(३) । एवं पुरस्तात्

---

(१) भेदकात् । (२) विशेष्यविशेषणयो: ।

(३) अपरशब्दात् पश्चिमशब्दाद्वा सप्तम्या आत्प्रत्यय: तयो: पश्चादेशो निपात्य: ।

उपर्य्यधः पूर्व्वतश्च पश्चात्; यस्याखिलं हितम्।
सुखञ्च, तस्य देवानां वर्य्यस्य, पदयोर्भजे॥

---

ग्रामस्य, उपरिष्टाद्दृक्षस्य, उत्तराद्ग्रामस्य इत्यादि। एतेषा ग्रहणं दिक्शब्दयोगे प्राप्तपीबाधनार्थम्। कफोणिः कूर्पराद्ध इति उत्सर्गत्वात् पी। यस्य देवस्याखिलं चराचरं हितं मित्र, यस्याखिलं जगत् सुखं प्रीतिजनकं, तस्य देवस्य पदयोरहं भजे चरणौ सेवे। तस्येत्यवयवावयविलसम्बन्धे पी। एवं चैत्रस्य धनं, मैत्रस्य पुत्रः, कायस्य पूर्व्वं, जलस्य घटः, घटस्याभाव इत्यादि। आदिना राह्मोः शिर इत्यत्र तु अभेदसम्बन्धे पीति। तस्य कीदृशस्य? देवानां वर्य्यस्य, केनापि(१) गुणेन देवेभ्यः प्रकृष्टस्य। देवानामिति निर्द्धारणे, पदयोरिति ढे पी। एवं "माषाणामश्नीया"दिति भाष्यम्। "न च स्निह्यति कस्यचिदि"ति भट्टिः। "सा लक्ष्मीरुपकुरुते यया परेषा"मिति भारविः। "नारायणस्यानुकरोति" इत्यादिशिष्टप्रयोगाः। एषु सम्बन्धमात्रविवक्षया पीति परे। यद्यपि ढ इति सामान्येनोक्तं तथाप्यभिधानाद्विशेषतो ज्ञेयम्। यथा—

स्मृत्यर्थदयेशां वा। एषां ढे पी वा स्यात्। विष्णोरध्येति, शम्भोः स्मरति, भक्तस्य दयते दुर्गा, भक्तस्य ईष्टे हरिः, यथेष्टं विनियुङ्क्ते(२) इत्यर्थः। पक्षे विष्णुमध्येतीत्यादि।

ज्ञो ज्ञोणत्वर्थे। येन धर्म्मेण यद्वस्तु लोके प्रकाशते, स तस्य

---

(१) अनिर्व्वचनीयेन। (२) यथाभीष्टं ददातीत्यर्थः।

गुणस्तस्मात् गुणान्तरोत्पादनमुत्कर्ष(१)स्तत्र सञ्ज्ञो द्वे यौ वा स्यात्। पटस्योपस्कुरुते पटं वा (२)। सूचनावक्षेपणसेवेत्यादिना मम्।

असन्तापिज्वरि-रोगार्थानां स्वार्थघञे। सन्तापि-ज्वरिभिन्नानां रोगार्थानां द्वे यौ वा स्यात् रोगार्थस्य(३) घञे सति। रोगचौरस्य रुजति चौरं वा, आमयचौरस्य (४) आमयति चौरं वेत्यादि। असन्तापिज्वरीति किं? सन्तापचौरं सन्तापयति,ज्वरचौरं ज्वरयति। स्वार्थघञे किं? नदी कूलं रुजति।

नाट्यादिनाथयोर्हिंसाशिषोः। नाट्यादेर्हिंसायां नाथस्याशिषि गम्यमानायां द्वे यौ वा स्यात्। चौरस्य नाटयति (५) चौरं वा। नाट्यादिर्यथा—

नाटिञ् क्राथिरुज्जासिर्हिंपूर्वौज् शतन्त एव हि।
प्रनि-निप्र-प्रनिभ्यस्तु हनोऽथ पियल्टरित्यपि॥

नट क भ्रंशे, क्रथ कि वधे, उत्पूर्वजस क वधे ताड़ने च। चुरादीनाम् एषां आन्तनिर्देशात् यत्र नाटि क्राथि उज्जासि इति स्वरूपं, तत्रैवायं विधिस्तेन दस्युमनीनटदित्यादौ न स्यात् (६)। द्विषौञ् वैरे शत्, चौरस्य द्विषन् चौरं वा। अशतन्तस्य तु चौरं

(१) स च प्रतियत्न इत्युच्यते।
(२) पटो हि शुक्लगुणेन लोके प्रसिद्धस्तस्य वर्णान्तरोत्पादनमुत्कर्ष इति।
(३) रोगवाचकशब्दस्य।
(४) अम क रोगे इत्यस्य रूपम्।
(५) वध घातयतीत्यर्थः।
(६) अनीनटदित्यत्र उडो लुप्ते नाटीति रूपाभावादित्यर्थः।

३०४ । ज्ञोऽज्ञाने षे ।

( ज्ञः ६।, अज्ञाने ७।, षे ७।) ।

शम्भो र्मुकुन्दे जानीते, भक्त्या जानाति शङ्करम् ।

शम्भुना साधनेन मुकुन्दे प्रवर्त्तते इत्यर्थः, प्रहत्यर्थश्च जानातिः ।

---

द्वेष्टि । एवं चौरस्य प्रणिहन्ति निप्रहन्ति प्रहन्ति निहन्ति च चौरं वा । पीषिप् लृ संचूर्णने, चौरस्य पिनष्टि चौरं वा । आशीरभिलषितप्रापणेच्छा, नाथते पुत्रस्य पुत्रं वा । अनयोः किं ? पिनष्टि धानाः (१), वटुरन्नं नाथते, याचते इत्यर्थः ।

पणि-व्यवहृञोर्व्यवहारे । व्यवहारोऽत्र - द्यूत-क्रयविक्रयौ । शतस्य पणते व्यवहरति च शतं वा (२) । व्यवहारे किं ? शलाकां व्यवहरति, गणयतीत्यर्थः ।

दिवस्तु नित्यम् । व्यवहारे सर्गेदिवधोर्ष्टे षौ वा स्यात्, अर्गेस्तु नित्यम् । शतस्य प्रतिदीव्यति (३) शतं वा । अर्गेस्तु शतस्य दीव्यति । व्यवहारे किं ? विष्णुं दीव्यति, स्तौति इत्यर्थः ।

स्मृत्यर्थादीनां भावे । भावत्यान्तानां स्मृत्यर्थादीनां टे षौ नित्यं स्यात् । मातुः स्मर्य्यते, विष्णोः स्मृतं, भक्तस्य दय्यते हरिणा, भक्तानामीश्यते शम्भुना, शतस्य प्रतिदीव्यते चैत्रेण (४) ।

३०४ । ज्ञो । न ज्ञानमज्ञानं तस्मिन् । शम्भोरित्यादि । मुकुन्दे

---

(१) धाना भ्रष्टयवे स्त्रियामित्यमरः, भर्जाभृज्जि ।

(२) पणते द्यूते प्रतिजानीते, व्यवहरति क्रीणाति विक्रीणीते वा इत्यर्थः ।

(३) पणते इत्यर्थः ।

(४) एषु शब्देषु अकर्म्मकाणामपि स्मरतीत्यादीनां भावप्रत्ययान्तानामनुक्ते कर्म्मणि नित्य षष्ठीति ।

३०५। तृप्यर्थानां वा।

( तृप्यर्थानां ६।३, वा ।१। )।

शृङ्गारस्य हरिस्तृप्तः, पूर्णः शान्तेन शङ्करः।

३०६। ढघे कृत्यव्ययक्युक-क्तवतु-खलर्थतोच्छत्रा-न वसु-शीलार्थतृन्-भव्यर्णार्थणिनि।

(ढघे ७।, सति ७।, अ-व्य कि उक क्तवतु खलर्थ श्न उत् शतृ आन वसु शीलार्थतृन् भव्यऋणार्थ णिनि ७।)।

---

विष्णौ शम्भुरयम् इति बुद्ध्या प्रवर्त्तते, तत्प्रवृत्तौ शम्भोः साधनत्वाद्घत्वम् (१)। प्रमात्मकज्ञानस्य वर्जनात् सर्पिषो जानीते इत्यादौ भ्रान्त्यर्थेऽपि स्यात्, भ्रमस्य ज्ञानत्वेऽपि प्रमाभिन्नत्वात्। इदं विकल्पयन्ति परे। तन्मते शम्भुना मुकुन्दे जानीते इत्यपि। अज्ञाने किं? भक्त्या जानाति शङ्करम् इत्यत्र प्रमात्मकत्वान्न स्यात्।

३०५। तृप्य। तृप्तिरर्थो येषां ते तेषाम्। तृप्त्यर्थधोः प्रयोगे धे घो वा स्यात्। शृङ्गारस्येत्यादि। उदाहरणद्वयेन विकल्पो दर्शितः। एवं फलानामलमाशिताः (२), फलैर्वाशितम्भवमिति भट्टिः (४।११)।

३०६। ढघे। ढश्च घश्च तत्तस्मिन्। खलः अर्थ इव अर्थो यस्य सः। शीलमर्थो यस्य स, स चासौ तृंश्चेति सः। भव्यश्च ऋणश्च

---

(१) अत्र कार्त्तिकेयः—"मुकुन्दाधिकरणकभ्रमज्ञानस्य हरत्वात् मुकुन्दविषयकज्ञानाभावः अतोऽत्र ज्ञानार्थधातोः शम्भुरेव साधनम्, किन्त्वेतद्धातोः प्रसिद्धार्थातिरिक्तार्थविषयकत्वमिति। अतएवोक्तं भ्रमार्थ एव जानाति" इत्याह।

(२) फलैरलमनर्घ्यमाशितानुपास्यध्वं, ... भट्टी ७।२८।

व्यादिवर्ज्जे कृति प्रयुज्यमाने ढे घे च षी स्यात्।
जगतां कारकः कृष्णः कृतिर्मुररिपोरियम्।

---

ते, ते अर्थौ यस्य स, स चासौ णिंश्चेति सः। पश्चात् व्यश्च क्तिश्च उकश्च क्तवतुश्च खलर्थश्च क्तश्च उश्च शतृश्च आनश्च वसुश्च शीलार्थतृंश्च अव्ययणार्थणिंश्च तत्। न तत् अतत् तस्मिन्।

जगतामिति—कृष्णो जगतां चराचराणां कारकः कर्त्ता, जगतामिति ढे षी। इयं पृथिव्यादिचराचरमयी सृष्टिर्मुररिपोः कृतिरुत्पादा, कृधोर्ढे क्तिः, मुररिपोरिति घे षी। पूर्व्वसूत्राद्यानुवर्त्त्यं तस्य व्यवस्थावाचित्वात् "धायैरामोदमुत्तमं" (१) "बुद्धिपूर्व्वं ध्रुवं न त्वा राजकृत्वा पिता स्वम" (२) मित्यादौ न स्यात्।

सृष्टेत्यादि। कः पुरुषः हरिं संस्तुवन् सन् अर्थितं वाञ्छितं न ईयिवान् प्राप्तवान्? अपि तु प्राप्तवानेव। हरिं कीदृगम्? एतस्मात् सृष्टा दधिं धारयन्तम्। सृष्टेति क्त्वाप्रत्ययस्याद्यत्वम्। एवं घटं कर्त्तुं, पयः पायं पायं, विप्रं प्रस्थाप्य गत इत्यादि। दधिमिति धाधोः क्विः, ह्रिरालोपश्च, हरिविशेषणत्वात् ढम्। पुनः कीदृगम्? एतत् जगत् मारुकं संहरन्तम्, मृधो उंकः। पुनः कीदृगम्? अर्थकान् उत्पीतवन्तं, स्वर्गं प्रापितवन्तम्, उत्पूर्व्वनीधोः

---

(१) भट्टौ ६।७९। धाय इति अमध्यमेनेति च सम्बन्धः। धायैः धारयद्भिरित्यर्थः। अत्र धायैरिति व्यादिवर्ज्जे कृति प्रयुज्यमानेऽपि आमोदमित्यत्र न षष्ठी।

(२) भट्टौ ६।११०। सर्वं दुष्परितं त्वा त्वां पिता दशरथो यत्र राजकृत्वा राजानं न कृतवान् तद्बुद्धिपूर्वं ध्रुवं अवश्यमित्यर्थपूर्वमेवेति समाप्त भरत व्याख्या। अत्र राजकृत्वेति कर्मणि कृतोऽपि त्वा इति न षष्ठीति।

व्यादौ तु—दृष्ट्वा दधिं भ्रातकमेतदर्चकान्
उन्नीतवन्तं, यतिभिः सुदर्शनम्।
घ्रातं, हरिं, जिष्णुरघानि संस्तुवन्
मुदं दधानोऽर्थितमीयिवान् न कः॥
शं दाता हृत् कदागामी दायी मोक्षमृणं शिवः।

---

क्तवतुः। पुनः कीदृशम्? यतिभिर्जितेन्द्रियैः सुदर्शनम्, अनायासेनालोकनीयं, दृशधोः खलर्थोऽनः। एवं "पापिना दुष्करो धर्मः सुकरो धार्म्मिकेण स" इत्यादि। "कोपदग्धसमग्राणां किमिषामस्ति दुष्कर"मित्यत्र तु सम्बन्धमात्रविवक्षायां षी, नञा निर्द्दिष्टस्यानित्यत्वाद्वा। पुनः कीदृशं? यतिभिर्घ्रातं, घ्राधोर्द्धेऽतीते क्तः। एवं त्वया घ्रातो, मया घ्रात इत्यादि। पुरुषः कीदृशः? अघानि पापानि जिष्णुः, पापस्याभिभवनशीलः, जिधोः ष्णुक्। एवं धनं गृध्नुः, सुखमिच्छुः, शास्त्रं विन्दुः, कन्यामलङ्करिष्णुरित्यादि। "तव सर्व्वगतस्य सम्प्रति क्षितिपः क्षिप्रभीशुमानिव," "सत्यस्य वक्ता नरकस्य जिष्णु"रिति तु सम्बन्धविवक्षायां षी, नञा निर्दिष्टस्यानित्यत्वाद्वा। हरिं संस्तुवन्, स्तुधोः शतृ (१)। पुनः कीदृशः? मुदं दधानः, हर्षं धारयमाणः, धाधोः शानः। शान इत्यनेन कानस्यापि ग्रहणात् चक्राणो जगतीं हरिरित्यादि। अर्थितं न ईयिवानिति इनधोः क्वसुः। शिवः कदा हृत् हृदयमागामी, आगमिष्यति धर्म्माश्रम। गमधोर्भविष्यति णिन्। शिवः कीदृशः? शं दाता

---

(१) अलद्यमानयोगेऽपि निषेधः तेन हरिं शोधयन् शोधयमानो वा व्रातीति दुर्गादास।

३०७। कामुक सड्डार्थक्तेन।

( कामुक—सत्‌डार्थं क्तेन ३। )।

कामुकशब्देन वर्त्तमानडयो र्विहितेन क्तेन च योगे ढे घे ष षी स्यात्।

यो लक्ष्मराः कामुको ज्ञातः सतां तस्येदमासितं।

---

ग्रंशब्दो मोक्षार्थः तथाच वदन्ति ग्रं बुधाः श्रेयः प्रातर्नि ग्रा निगद्यते इत्येकाक्षरकोषः। तथाच श्रेयोदानशील इत्यर्थः। दाधोः शीलार्थे ट्रन्। अतएव शिवो मोक्षस्यर्णं दायी, मुक्तिरूपधनं ददातु अर्थात्मह्यम्। मोक्षस्य ऋणत्वमुपचारात्। आवश्यके णिन्यपि निषेध इति कश्चित्। यथा अंशं हारी दायाद इति। अंशस्य हारीत्यन्यः।

न चतुमर्थणके प्रायः। चतुमर्थविहितो यो णकस्तस्मिन् प्रयुज्यमाने ढे षी न स्यात् प्रायः। मुनीनां विपिने भक्तं भोजको याति माधवः। मुन्यन्नं भोक्तुं गच्छतीत्यर्थः। प्राय इति किं? वर्षशतस्य पूरको जीवति, पुत्रपौत्राणां दर्शकोऽस्तीत्यत्र न निषेधः। यस्य ढस्योक्तानुक्तव्यवहारस्तत्रैव षी, तेन साधु पाचक इत्यादौ षी न स्यात्।

३०७। कामुक। सच डश्च ते, तैरर्थो यस्य सः, स चासौ क्तश्चेति सः, कामुकश्च सड्डार्थक्तश्च तत्तेन। यो लक्ष्मरा इत्यादि—यः श्रीकृष्णो लक्ष्मराः कामुकः लक्ष्मीं कामयते, यः सतां ज्ञातः धीरैर्ज्ञायते। ज्ञाधोः ज्ञार्चेच्छार्थेत्यादिना वर्त्तमाने क्तः। तस्य इदमासितं तेनाऽऽसोपविष्टम्। आसधोर्गत्यर्थगतीत्यादिना

३०८। ल्यभावक्तास्त्यणकसटे घे वा।

( ल्य—सटे ७, घे ७, वा।१।)।

ल्ये भावार्थ-क्ते स्त्रीविहितं अं णकञ्च हित्वा अन्यत्र सटे घे षी स्याद्वा।

---

वर्त्तमाने डे क्तः। एवमिदमेषामुपगतम्, इदमेषां भुक्तम् भवस्य इत्यादि। पूर्व्वेणाप्राप्ते विधिः।

न मीलितादिना वा तु कान्तेन। शम्भुना मीलितः, हरिणा रचित इत्यादि। प्रजाभिः कान्तः प्रजानां वा। तथाच "कान्तो हरिचन्द्र इव प्रजानाम्" इति।

३०८। ल्य। भावे क्तः भावक्त', अश्च णकश्च तत्, स्त्रिया-मणकं स्त्यणकं, न स्त्यणकं अस्त्यणककं, टेन सह वर्त्तमानं स-टम्, अस्त्यणकञ्च तत् सटञ्चेति तत्, ल्यश्च भावक्तश्च अस्त्यणकसटश्च तत्तस्मिन्। ल्यस्तव्यादिः। त्वयेत्यादि—त्वया स कृष्णोऽर्च्चः मम च स कृष्णोऽर्च्चः पूज्य इत्यर्थः। अर्च्चधोर्ढं घ्यण्। टद्वयेन विकल्पो दर्शितः। एवं कर्त्तव्यं करणीयं तव त्वया वा इत्यादि। वाशब्दस्य व्यवस्थावाचित्वात् ल्ये यत्र षटयोः षीसम्भावना तत्र द्वयोर्न स्यात्। तेन कष्टव्या ग्रामं शाखा कपिना, नेतव्या ग्राम-मजा नरेण, अनुशिष्यः शिष्यो धर्म्ममुपाध्यायेन, कां दिशं गन्तव्यं मया इत्यादौ न स्यात्। यत्र तु टमात्रे षीसम्भावना तत्र पूर्व्व-णैव, तेन गेयो माणवकः साम्नामिति, गायतीति गेयः, घे यो वक्तव्यः। यस्य कृष्णस्य येन कृष्णेन वा अत्र स्नातं स्नानं कृत-

त्वया मम च कृष्णोऽर्च्यः स्नातं छात्र स यस्य तु।
सृष्टेः कृति हृति र्येन, चिकीर्षा यस्य भेदिका॥

मित्यर्थः। एवं छात्रस्य छात्रेण वा हसितं गतं वेत्यादि। यस्य कृष्णस्य येन कृष्णेन वा सृष्टेर्जगतः कृतिः करणम्। यस्य कृष्णस्य येन कृष्णेन वा सृष्टेर्हृतिर्हरणम्। कृञ्हृञोर्भावे क्तिः। षडाद्योरपि भावे त्य इति भागवृत्तिः। एवं शब्दानामनुशासनमाचार्य्यस्य आचार्य्येण वा, गवां दोहो गोपस्य गोपेन वा इत्यादौ स्यात्, स्त्रीविहिताणकभिन्नषढकृत्त्वात्। परे तु निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्य इत्युक्तेः परिचर्य्या गुरूणां शिष्यस्य शिष्येण वा, उपासना पितुः पुत्रस्य पुत्रेण वा, जागर्य्या रात्रेश्छात्रस्य छात्रेण वा, भकरणिः पुष्पस्य जाल्मस्य जाल्मेन वा इत्यादौ स्यात् स्त्रीविहितकृत्त्वात्,न तु शब्दानामनुशासनमाचार्य्येण, गवां दोहो गोपेन इत्यादौ अस्त्रीविहितत्वादित्याहुः। (१) अणकयोरुदाहरति चिकीर्षेत्यादि। यस्य कृष्णस्य सृष्टेः चिकीर्षा कर्त्तुमिच्छा, सनन्तकृञोः शंस्यादः। यस्य कृष्णस्य सृष्टेर्भेदिका भेदो नाश इति यावत्। एतेन कृष्णस्य सृष्टिस्थितिप्रलयकर्म्मकर्त्तृत्वमिति भावः। षढयोरुभयत्र पूर्व्वेण षो नित्यम्। एवं चिकीर्षा रवेरालोकानां, भेदिका चन्द्रस्य तमसामिति। षढे किं कृति-

(१) स्वमतेऽपि सृष्टेः कृति र्हृतिरित्युदाहरणप्रापणात् परमतैकदेशाख्यता समादरणीयेति। शब्दानामनुशासनमाचार्य्यस्य आचार्य्येण वा इत्यादिकन्तु वा शब्देन व्यवस्थाप्यमिति कार्त्तिकेयसिद्धान्तः।

मुररिपोरियम्(१)। यत्र द्विकर्म्मणां कृता द्वयमनुक्तं, तत्र द्वयोर्द्वयोः पूर्व्वेण षष्ठी। तेन कृष्णस्य मोक्षस्य याचको भक्तः। दोग्धा दुग्धस्य गोः कृष्णः। चौरस्य गवां दोहः कृष्णेन (२) इत्यादीत्येके। मुख्य द एवेत्यन्यः। यदुक्तं—

कर्म्मद्वयं दुहादीनामनुक्तं स्यात् कृता यदि।

कश्चित्तत्र समाचष्टे षष्ठीं प्रधानकर्म्मणि॥ इति।

तन्मते दोग्धा गां पयसो हरिः। गौणद एवेत्यन्यः। तन्मते दोग्धा दुग्धं गवां हरिरिति।

परे तु उभयप्राप्तौ कर्म्मणीति सूत्रान्तर विधायैकस्मिन् कृति प्रयुज्यमाने द्वयोः प्राप्ता षष्ठी द एवेत्याहुः। तेन यदुक्तं समुद्रस्य बन्धो वानरैः, भार्य्यां सुभगारोपस्य दूतीभिः परिमार्ज्जनं, गवां दोहः कृष्णेन, हारयिता दुग्धस्य गोपेन हरिरित्यादि। द्वप्राप्तौ किं? धनस्य गोपस्य यापयिता हरिः, दुग्धस्य गोपस्य हारयिता

---

(१) मट्टे किं कृतिर्मुररिपोरियमिति नियिकरप्रमादपाठः, अस्य सकर्म्मकत्वात्। साधोर्मुद्धि, जिष्णोः स्तुतिरित्यादिकमेव प्रत्युदाहर्त्तव्यं, तत्र पूर्व्वेण नित्यैव षष्ठी। अतएवोक्तं कार्त्तिकेयेन क्वचिदस्मैव कृतिर्मुररिपोरियमिति प्रत्युदाहृतवान्, न चास्याकर्म्मकत्वं केनापि संस्थापितवान्, स एव भ्रान्तवानिति चिन्त्य"मिति।

(२) अत्र दोह इति भावे घञ्, छटे कृतिर्वृत्तिर्नेत्युदाहरणप्रदर्शनात् सकर्म्मकाद्धातोरपि भावे प्रत्यय स्यादिति ज्ञापितम्। तेन दुग्धगोस्वयोः कर्म्मणोरनुक्तत्वादुभयत्र षष्ठीति। अत्र कश्चिदत्र वदति—अप्रधानकर्म्मणि तद्वस्तु योगे षष्ठी नियम्यते। एकदा तूभयप्राप्तौ कर्म्मण्येव न कर्त्तरि। तस्मादोग्धा षष्ठीये द्वयोरेव हि नेष्यते।

३०९। स्वामीश्वराधिपति दायाद साक्षि प्रतिभू प्रसूत कुशलायुक्त निपुण साधु सुजर्थैर्नादरे ष्ठी च।

(स्वामि—सुजर्थैः ३।।, नादरे ७, ष्ठी ।१।, च ।१।)।

स्वामी मुकुन्दः सर्व्वेषां, साक्षी सर्व्वेष्वधोक्षजः।

निग्रहक्लिश्नु गोप्योऽपत्ये मातृवदत्यजम्॥

---

हरिरित्यादावुभयोर्ष्ठ्यौ पूर्व्वेण षी। एकक्तेति किं? ओदनस्य पाको ब्राह्मणानाञ्च प्रादुर्भावः (१)।

३०९। स्वामी। सुजर्थं इवार्थो येषां ते तैः। स्वाम्यादिभिः सुजर्थैस्तैश्च योगे क्रियाया अनादरे गम्यमाने च षीष्ठ्यौ स्याताम्।

स्वामी मुकुन्द इति। प्रयोगद्वयेन षीष्ठ्योर्विकल्पो दर्शितः। एवं सर्व्वेषां सर्व्वेषु वा ईश्वरः अधिपतिर्दायादः (२) प्रतिभूः (३) प्रसूतः (४)। कुशलायुक्ताभ्यां तात्पर्य्येऽभिधानं, तेन शिवार्च्चायां शिवार्च्चाया वा कुशल आयुक्तो वा भक्तस्तत्पर इत्यर्थः। अन्यत्र कलासु कुशलः, रथेष्वायुक्तोऽश्वः नियुक्त इत्यर्थः। निपुण-साधुभ्यां पूजायां ष्ठी, अपूजायां षी एवाभिधानात्। मातरि साधु-र्निपुणो वेति पूजायाम्। अपूजायां तु पितुर्द्रोहस्य निपुणः साधुर्वा पुत्रः।

---

(१) यत्र त्वनेकस्य क्त॰ प्रयोगे कर्तृकर्मसम्बन्धो द्वयोरपि क्तयोर्दृश्यते नियमो भवत्येव तत्रापि, गवां दग्धा दोग्धो गोपेणे"ति संक्षिप्तसारे कारकपादे।८४ इत्यत्र गोयीचन्द्र।

(२) सम्बो यातनेषु यादमानां वा दायाद। दायादो ज्ञाति।

(३) जैमर्थेनस्य प्रतिभू, सुवर्णस्य प्रतिभव इत्यपरः, जामिन् इति भाषा।

(४) तस्य तत्र वा प्रसूत।

३१०। कालभावाधारं डं ष्ठी।

(काल भाव-आधारं १।, डं १।, ष्ठी ।१।)।

सामीप्याश्लेषविषये व्याप्त्याधारश्चतुर्व्विधः।

---

निश्यङ्क इति। गोष्योऽजं विष्णुं निशि रात्रौ त्रिंशीन् वारान् भगुः प्रासवत्यः। अह्नो दिवसस्य चिरगुः। द्वयेन पौर्व्वौ दर्शिते। एवं रात्रौ रात्रेर्वा पञ्चकृत्वो भुङ्क्ते। धाप्त्योऽपि सुजर्थस्तेन कतिधा रात्रौ रात्रेर्वा भुङ्क्ते इत्यादि। कालाङ्डादेवाभिधानात् कांस्यपात्र्यां द्विर्भुङ्क्ते, पञ्चकृत्वो रात्रिं भुङ्क्ते इत्यादौ न स्यात्। अपत्ये वदति, मातुः कौशल्याः, वदद‌पत्यं कौशल्यां मातरमनादृत्य वारंवारं गता इत्यर्थः। कौशल्या इत्यध्याहार्य्यम्। वददित्यस्यैव लिङ्गविभक्तिव्यत्ययेनान्वय इत्येके।

पश्यतोहर इत्यत्र संज्ञात्वान्नित्यं ष्ठी, न तु सोत्येके। त्वां मामन्तरा स्वामी, साधुर्विप्रो मातरं प्रति, निपुणो मातरं परि, त्वया सह स्वामी, तुल्यो गोभिः स्वामी, तुल्यो गवां स्वामीत्यादौ तु पूर्व्वविप्रतिषेधेन इादय एव स्युः। अन्ये तु प्रत्यादौ हेत्व नान्या क्तिरित्यर्थे सूत्रयित्वा (१) वृक्षं वृक्षं प्रति कुसुमानि सन्ति, देवदत्तं प्रति कुप्यति, त्वां प्रति स्वामी, मह्यमं प्रति साक्षी, केशान् प्रत्युत्सुक इत्युदाहरन्ति।

साध्वसाधुभ्यां सो। आभ्यां योगे सो स्यात्। साधुः कृष्णो मातरि, असाधुर्मातुले। नियमार्थमिदम्।

३१०। कान। कालय भावय आधारय तत्। कालः

---

(१) "द्वितीया वर्ष्मं माप्या विभक्ति प्रत्यादः" इति कारकपादे २०० ऋषदोदर एतम्।

रेमे शरदि गोविन्दो गोपीभिरुदिते विधौ ।
कालिन्द्यां, कानने, केलौ कुशलः, सकले स्थितः ॥

क्षणदण्डमुहूर्त्तादिः । प्रसिद्धकालक्रियाद्वारेण क्रियान्तरस्याप्रसिद्धं कालं येन साधनभूतेन वक्ता लक्षयति स इह भावः । परे तु यस्य क्रियया क्रियान्तरं लक्ष्यते स इह भावः । अत्र क्रियाशब्देन सह सामानाधिकरण्ये क्रियाश्रय एव साधनभूतः । यथा दुह्यमानासु गोषु यज्ञदत्तो गतः दुग्धास्वागत इत्यादि । अत्र अतीतगमनक्रियाद्वारेण दोहनादिक्रियाश्रयेण साधनभूतेन दोहनादिक्रियान्तरस्याप्रसिद्धवर्त्तमानादिकालं वक्ता लक्षयतीति स दोहनादिक्रियाश्रयो भाव इत्यर्थः (१)। असामानाधिकरण्ये क्रियाशब्द एव साधनभूतः । यथा गोदोहे गत इत्यादि । भुञ्जाने चैत्रे मैत्रो भुङ्क्ते इत्यत्र एकस्याः क्रियायाः सम्बन्धिभेदाद्भेदः(२) । कलायमानेष्वाम्रेषु चैत्रो गतः, पक्वेष्वागत इत्यत्र कलाय इव मानं येषां ते तेषु, क्रियान्तराभावात् सत्स्वित्यध्याहार्यम् । एवं धने सुखं, धने सति सुखं भवतीत्यर्थः (३) ।

---

(१) तर्कवागीशधृतेयं विधिः बहुना विविधरसप्रमादप्रसूता-चेति (?) विभिन्न-टिप्पणीमालोच्य सुधीभिश्चिन्त्यमिति ।

(२) तेन क्रियान्तरस्येयुक्तिर्नोपपद्यतेति भावः ।

(३) अत्र एतत् वार्त्तिकसिद्धान्तः—"कालभावयोः सप्तमी"ति कलापसूत्रम् । अस्य व्याख्याने दुर्गसिंह—अधिकारात् विशेषणमनुवर्त्तते, विशेषणभूतयोः कालभावयोर्वर्त्तमानाल्लिङ्गात् सप्तमी भवतीति व्याख्याय शरदि पुष्प्यन्ति सप्तच्छदाः, गोषु दुह्यमानास्वागतः । कालभावयोरिति किम् ? यो जटाभिः स भुङ्क्ते रुद्राक्षस्य यो भोक्ता स देवदत्त इति वाक्यमपीह, प्रतिबुद्ध किञ्च हि विशेषण मिदाह । अत्र टीकायां त्रिलोचन'... विशेषणं ... प्रतिबुद्ध

भवति नाप्रसिद्धं न हि स्वयमसिद्धः परस्य विशेषणं भवतीत्याह प्रसिद्धेत्यादि। भाव: क्रियापर्य्याय इत्याह।

एतेन क्रियावाचकपदद्वयस्य यत्र विशेषणविशेष्यत्वमवगम्यते, तत्र विशेषणक्रियावाचकपदात् सप्तमीति प्रतीयते। तद्यथा—दुह्यमानासु गोषु गत इत्यत्र अनिरूपितगमनकालस्य विशेष्यस्य गोदोहनकालविशेषणं प्रसिद्धम्, इतरव्यावर्त्तकत्वात्। यत्र इतरव्यावर्त्तकमेव विशेषणम्। ततश्च गमनदोहनवाचकयोर्गतदुह्यमानयोरप्रसिद्धप्रसिद्धकालवर्त्तमानयोर्विशेष्यविशेषणयोर्विशेषणीभूतात् दुह्यमानपदात् प्रसिद्धकालवर्त्तमानात् सप्तमीति, तत्पदसाङ्कर्य्यात् तेन सह सामानाधिकरण्यात् गोष्वित्यादिषु सप्तमीति। गमनवाचकपदस्य सम्बन्धे इतरव्यावर्त्तकत्वेन दुह्यमानस्य विशेषणत्वं, गवादेः सम्बन्धे च समानाधिकरणत्वेन तस्य विशेषणत्वमिति। क्वचिद्विशेषणस्य सिद्धत्वमपि विशेष्येणावधार्य्यते इति स्वरसादिति वाक्यार्थः।

अतोऽनेनैतद्व्याख्यानेन यस्य च भावेन भावलक्षणमिति पाणिनिसूत्रं न वक्तव्यमिति। सम्मते एतन्मतैकवाक्यतया विशेषपरतया वा विशेषणभूतयोः कालभावयोः सप्तमीति बोध्यम्। विशेषणत्वे तृतीयाप्राप्तौ तदपवादिकेयमिति। अतएव यज्ञस्यां व्रतं कुर्य्यादित्यादिषु वैदिकक्रियानिमित्तस्य कालविशेषस्य शुचित्वकालजीवित्वेनाधिकारिविशेषणीभूतस्य अन्ते या सप्तमी सा नाधिकरणे, यो जटाभिः स भुङ्क्ते इतिवत् कालविशेषणत्वेन तद्बाधकतृतीयाप्राप्तेः, किन्तु कालभावयोः सप्तमीत्यनेन तद्बाधिका पुन सप्तमी विधीयते, यददि पुष्यरान्ति सप्तम्यदा इतिवत्। अतः कर्त्तृविशेषणीभूतस्यापि कालस्य सप्तम्या वैदिकक्रियानिमित्तत्वमोल्लेख इति कार्णभट्टाचार्य्यचरणाः। ....

यस्य च भावेन भावलक्षणमिति केनचिदुक्तमिति रामानन्दः। पूर्व्वमतैकवाक्यत्वादस्यायमर्थः—यस्य क्रियावाचकशब्दस्य भावेन क्रियया अर्थात् प्रसिद्धकालक्रियया दोहनादिक्रियया भावलक्षणं क्रियान्तरलक्षणम् अर्थात् अप्रसिद्धकालक्रियान्तरं गमनादिक्रियान्तरं लक्ष्यते कर्म्मण्यनट्, स क्रियावाचकशब्दो भाव इत्यर्थः। अथवा यस्येति तद्योगे कर्त्तरि षष्ठी, भावेनेति करणे तृतीया, ततश्च येन क्रियावाचकशब्देन क्रियया करणभूतया भावलक्षणमित्यादि व्याख्यातव्यम्। यथा गोषु दुह्यमानास्वागत इत्यादौ यस्य दोहनक्रियावाचकशब्दस्य क्रियया दोहनादिप्रसिद्धकालक्रियया क्रियान्तरं गमनाद्यप्रसिद्धकालक्रियान्तरं लक्ष्यते, स दोहनादिक्रियावाचकदुह्यमानशब्दो भाववान् सप्तमी, तद्विशेष्यत्वात्

आध्रियन्ते परम्परया क्रिया यत्र स आधारः, घटाश्रय इति यावत् (१)। यदुक्तं—

"कर्त्तृकर्म्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।
उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं मतम् (२) ॥"

स चतुर्व्विध इत्याह सामीप्येत्यादि। सामीप्यं समीपत्वं, तेन एकः सामीपिक (३) आधारः, यथा गङ्गायां घोषः प्रतिवसति इत्यत्र

---

तेन सह सामानाधिकरण्यात् तद्वाचकपर्य्यायाद्वा गोष्वित्यादिषु सप्तमीति। अतएव विधौ उदिते इत्यत्र विधोरुदयक्रियया क्रियान्तरं गोविन्दस्य रमणक्रिया लक्षिता इत्यर्थः सिद्धो भवतीति स एवाह।

दुर्गसिंहोऽप्येवम्। दुर्गादासविद्यावागीशोऽपि "चन्द्रोदितशब्दस्य उदयक्रिया-वाचकतयाऽधिकरणत्वात् सप्तम्यन्तत्वे तद्विशेषणस्य विधोरपि सप्तम्यन्तत्वम्"त्याह। अनुभूतिस्वरूपाचार्य्येणापि क्रियालक्षणं भाव इत्युक्त्वा यस्य प्रसिद्धक्रियया अप्रसिद्धक्रियालक्षणं क्रियावबोधनं भाव इति व्याख्याय वर्षति देवे चौरो यात, पतत्यंशुमालिनि पतितोऽरातिरित्युदाहृतमेव।

एतेन "प्रसिद्धकालक्रियाद्वारेण क्रियान्तरस्याप्रसिद्धं कालं येन साधनभूतेन वक्ता लक्षयति स इह भाव। तत्र क्रियावाचकशब्देन सह सामानाधिकरण्ये क्रियाश्रय एव साधनभूतः, यथा देवदत्तेन दुह्यमानासु गोषु यज्ञदत्तो गत इत्यादौ अतीतगमनद्वारेण दोहनादिक्रियाश्रयेण साधनभूतेन गवा दोह-नादिक्रियान्तरस्याप्रसिद्धं वर्त्तमानादिकालं वक्ता लक्षयति, स दोहनादिक्रिया श्रयो गवादिर्भाव इत्यर्थः। असामानाधिकरण्ये क्रियाशब्द एव भावः। यथा गोदोहे गत इत्यादि। उदाहरणेऽपि उदिते विधौ विधोरुदयक्रियानन्तरम्, अनेन विधावित्ति प्रो उदित इति तद्विशेषणत्वात् प्रीति तर्कवागीशभट्टाचार्य्यमतं मयः मायनस्यमित्याह।

(१) आध्रियन्ते तिष्ठन्ति। घटाश्रयः—कर्त्तृस्थक्रियाद्वारेण कर्त्तुरथवा कर्म्मस्थ क्रियाद्वारेण कर्म्मण आश्रय इत्यर्थः।

(२) कर्त्तृकर्म्मान्यतरद्वारा क्रियाश्रयत्वमधिकरणत्वमित्यर्थः।

(३) समीपदेशस्थाधारत्वविषयया समीपे भव इत्यर्थः।

जले घोषस्य वासानुपपत्त्या नदीशब्देन तत्समीपं तीरमुपलक्ष्यते। एवं गङ्गायां घोषमत्स्यौ स्त इत्यत्र गङ्गाशब्दो वाचको लक्षकश्च वक्तृतात्पर्य्यात्। युगपद्वृत्तिद्वयविरोधान्नैवंविधः प्रयोग इति भट्टः। सामीपिकस्य औपश्लेषिकत्वेनैव सिद्धे पृथगुपादानं, लक्षणया ज्ञेयपदार्थस्याप्याधारत्वज्ञापनार्थं, तेन अङ्गुल्यग्रे करिशतमित्यत्र अङ्गुल्यग्रनिर्दिष्टस्याप्याधारत्वमिति (१)।

आश्लेषः संयोगः, पृथक्सिद्धयोः सम्बन्ध इत्यर्थः, तेन एक औपश्लेषिक आधारः। यथा कटे आस्ते, स्थाल्यामोदनं पचति, वने सिंहः प्रतिवसतीत्यादि।

विषयो ज्ञानन्यभाव-बोध्याश्रयणीयोपस्थानीयादिः, तेन भव एको वैषयिक आधारः। यथा आकाशे शब्दो जायते, धर्म्मे वेदाः प्रमाणं, तीर्थे वसति (२) गुरौ वसति (३) इत्यादि। आकाशशब्दयोरविनाभावसम्बन्धः। एवं धर्म्मवेदयोर्बोध्यबोधकभावसम्बन्धः। तीर्थवासयोराश्रयाश्रयिभावसम्बन्धः। गुरुशिष्ययोरुपास्योपासकभावसम्बन्ध इति सर्व्वत्रास्य विषयता।

व्याप्तिः साकल्येनाभिसम्बन्धः, तेन एकोऽभिव्यापक (४) आधारः, यथा तिलेषु तैलमित्यादि। यद्यपि तिलतैलयोः संयो-

(१) अङ्गुलिनिर्दिष्टस्य करियतस्याधारत्वमङ्गुल्यामित्यर्थः।
(२) दूरगमनेऽपि तीर्थमाश्रयं कृत्वा वसतीत्यर्थः।
(३) गुरुमुपजीव्य तैवमाश्रो वसतीत्यर्थः।
(४) अभिव्याप्य तिष्ठतीत्यर्थः।

३११। अधिकेशार्थोपाधिभ्यां।

(अधिक-ईश-अर्थ-उप-अधिभ्यां३॥)।

अधिकार्थेनोपेन स्वाम्यर्थेनाधिना च योगे सौ स्यात्।

गुणा उप परार्द्धे स्वर्विष्णोरधि हरौ सुराः।

---

गादौपश्लेषिकत्वेनैव सिद्धिस्तथापि देशविभागाभावात् (१) संयोगव्यवहारो नास्तीति पृथगुपादानमिति।

रेमे इत्यादि। गोविन्दः शरदि शरत्काले गोपीभिः सह रेमे क्रीड़ितवान्। उदिते विधौ विधोरुदयक्रियानन्तरम्। अनेन विधाविति सौ, उदित इति तद्विशेषणत्वात् सौ।

यदुक्तं—

विशेष्यस्य हि यल्लिङ्गं विभक्तिवचने च ये।

तानि सर्व्वाणि योज्यानि विशेषणपदेष्वपीति॥

कालिन्द्यां यमुनासमीपे, कानने वनेकदेशे, केलौ क्रीड़ायां कुशलो निपुणः, सकले सर्व्वमभिव्याप्य स्थितः (२)। परे तु वैषयिकत्वेन सिद्धत्वात् (३) कालस्य पृथगुपादानं भावस्य उसंज्ञाञ्च न कुर्व्वन्ति।

३११। अधि। अधिकस्य ईशस्य तावर्थौ ययोस्तौ, उपश्च अधिश्च

---

(१) यत्रैकस्मिन् देशे सम्बन्धो देशान्तरे तदभावः प्रतीयते, तत्रैव संयोगव्यवहारादित्यर्थः।

(२) केलौ कुशलः सकले स्थितः गोविन्दः शरदि विधौ उदिते कालिन्द्यां कानने गोपीभिः सह रेमे इत्यन्वयः। तर्कवागीशेन तु एतन्निर्द्दिष्टप्रकारेण व्याख्यातम्।

(३) अधिकरणं नाम त्रिप्रकारम्, व्यापकमौपश्लेषिकं वैषयिकमिति भाष्यम्।

३१२। ढेनार्थात्। (ढेन ३।, अर्थात् ५।)।

ढेन योगे निमित्तात् सौ स्यात्।

वस्त्रेषु रजकमवधीत् क्षपणः।

---

तौ, अधिकेशार्थौ च तौ उपाधी चेति तौ ताभ्याम्। गुण इत्यादि—उपशब्देनाधिकार्थो द्योत्यते। विष्णोर्गुणा उप परार्द्धे स्युः, परार्द्धादप्यधिकाः स्युरित्यर्थः। एवमुप खार्यां द्रोण (१) इत्यादि। ईशः स्वामी, स च स्व-सापेक्षः (२) तथा च यस्य स्वामी यस्य स्वं ताभ्यामिव पर्य्यायेण सौ, स्वस्वामित्वसम्बन्धस्योभयनिष्ठत्वात्। सुरा अधि हरौ हरिस्वामिका इत्यर्थः। एवमधि सुरेषु हरिः, सुराणां हरिः स्वामीत्यर्थः। एवम् अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इत्यादि।

३१२। ढेना। अर्थशब्दोऽत्र निमित्तार्थ इत्याह निमित्तादिति। यन्निमित्तिका क्रिया तस्मादित्यर्थः। वस्त्रेष्विति—रजकवधो हि वस्त्रनिमित्तक एव। एवं—

चर्म्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।

बालेषु चमरीं हन्ति सीम्नि पुष्पलको हतः॥ इति।

सीमा अण्डकोषः, पुष्पलको गन्धमृगः। अर्थात् किं?

---

अत्र कैयटः आद्यास्वयोर्भेदात्तद्भेदानान्त्वानन्त्यमित्याड्डरिति। व्यापकौपश्लेषिकभिन्नत्व वैषयिकत्वम्। तथाच—"एतदतिरिक्तं सर्व्वं वैषयिक"मिति लघुशब्देन्दुशेखरः।

(१) द्रोणपरिमाणं खारीपरिमाणादधिकमित्यर्थः।

(२) स्वामित्वं हि स्वत्वमपेक्षते इत्यर्थः।

खड्गेन रजकं हन्ति । टेन किं ? वस्त्रेण रजको मृत । हेतौ चया प्राप्तायां विधिः । तादर्थ्ये च्या बाधकमिति कश्चित् । (१)

---

(१) "निमित्तात् कर्मसंयोगे" इति पाणिनीयवार्त्तिकम् । "क्रियाफलमिह निमित्तत्वेन विवक्षितम् । यत्र क्रियायाः प्रयोजकं यदर्थं क्रियारम्भस्ततो हेताविति तृतीयायां प्राप्तायां सप्तमी विधीयते । तस्य निमित्तस्य यदि कर्मणा संयोगः सम्बन्धस्तदा भवति । वेतनेन धान्यं लुनातीति सप्तमी न भवति वेतनस्य धान्येन संयोगाभावा"दिति कैयटः ।

"निमित्तमिह फलं, योगः संयोगसमवायात्मकः" इति सिद्धान्तकौमुदी ।

"हन्ते कर्मण्युपष्टम्भात् प्राप्तुमर्थे तु सप्तमी । चतुर्थीबाधिकामाहुर्यूर्णि-भागुरिवामनाः" इति भर्तृहरिस्तस्मात् चर्मणि द्वीपिनं हन्तीत्यत्र चर्म प्राप्तुं द्वीपिनं हन्तीत्यर्थः । विषाय विप्रं हन्तीत्यादौ हन्तेः कर्मणि विप्रादौ संयुक्तमपि विषादिकं न तदुपष्टब्धं दन्तकेशादिवत् प्राणिनामुपष्टम्भात्संयोगस्योपगमात् । मुक्ताफलाय करिणं हरिणं पलाय सिंहं निहन्ति भुजविक्रमसूचनाय । का नीतिरीतिरियती रघुवंशवीर गाथारुणे जरति यस्य बाणमोक्ष ॥ इत्यादौ तु करिणमुपष्टब्धमपि मुक्ताफलं प्राप्तुमिति नार्थः किन्त्वाहर्तुमित्यादौ"ति शब्दशक्तिप्रकाशिकायां जगदीशः । लघुशब्देन्दुशेखरमतेऽपि मुक्ताफलायेत्यत्र क्रियार्थोपपदस्येति (स्तुकमस्सनढात) चतुर्थी । मुक्ताफलान्याहर्तुमित्यर्थः ।

"मुक्ताफलाय करिणं हरिणं पलाय इत्यादयोऽपप्रयोगाः । अथवा मुक्ताफलेषु करिणं हरिणं पलेषु इत्येव पाठः" इति दुर्गादासः ।

"निमित्तात् कर्मसंयोगे" इत्यनुशासनात् यत्किञ्चित्कर्मप्रकारकबोधजनकधातुप्रयोगो नियामकः । सकर्मकधातौ कर्मबोधकपदसमभिव्याहारेण कर्मप्रकारकबोधजनकता, यथा चर्मणि द्वीपिनं हन्तीत्यादाविति तारकब्रह्म ।

अत्र माधवीटीका—निमित्तात् कर्मयोगे इति लक्षणस्योक्तव्याख्यायां वस्त्रेषु रजकमवधीत् सन्त् इति बोपदेवोक्तोदाहरणमपि न गच्छते, वस्त्रविषयप्रदेशविनियोगप्रकारकेच्छाधीनरजककर्मक हननानुकूलकृतिमानित्याकारकस्य बोध । किन्तु मुक्ताफलाय करिणं हरिणं पलायेत्यादिप्रयोगविरोध । (अयमत्र जगदीशमतमनुसृत्य अस्माभिः प्रदर्शितम् ।) तन्मते बोपदेवोक्तप्रयोगविरोध ••• वस्त्रादौ रजकस्य तादात्म्याभावात् । जगदीशमतानुसारिणस्तु ••• बोपदेवोक्तप्रयोगो न साधुरिति वदन्ति । वस्तुतस्तु सिद्धान्तवागीशमतमेव साधु ।

## २१३। क्तेना ढे। (क्तेना ३।, ढे ७।)।

क्तादिष्टितेनेना योगे ढे सौ स्यात्। वेदेऽधीती।

## २१४। निर्द्धारेऽधिकेन क्रियान्तःकालाध्वनो-श्च पीच।

(निर्द्धारे ७।, अधिकेन ३।, क्रियान्तःकालाध्वनोः ७॥, च ।१।, पी ।१।, च ।१।)।

ग्येष्ठं क्षपालुव्वकादि रुद्रैकाद्यकेऽधिकम्।

---

२१३। क्तेना। क्तादिन् क्तेन् तेन। वेदे अधीती इति—अधीतमनेनेत्यर्थे इष्टादित्वात् भावक्तान्तादिन्। किंकर्म्मकमध्ययनमित्याकाङ्क्षायां पश्चात् कर्म्मसम्बन्धः तस्मादनुक्तादनेन सौ। मुख्यढग्रहणान्मासमधीतो इत्यादौ न स्यात्। क्तेना किं? कृतं पूर्व्वमनेन कृतपूर्व्वी कटम् (१)।

२१४। निर्द्धारे। क्रिययोरन्तः क्रियान्तः, कालश्च अध्वा च तौ, क्रियान्तश्च तौ कालाध्वानौ चेति तयोः क्रियान्तःकालाध्वनोः। निर्द्धारे गम्यमाने अधिकशब्देन च योगे क्रियाद्वयमध्यवर्त्ति-कालाध्वनोश्च पीसौ स्याताम्।

---

न चैवमुक्तकारिकाविरोधः, कर्म्मयद्वपश्यादित्यस्य कर्म्मप्रकारकबोधजनकधातुयोगादित्यर्थकत्वात् प्राप्नुमर्थे प्राप्नोत्यर्थे, सा चेच्छा फलत्वेन फलवत्त्वेन वा, मुक्ताफलार्थेत्यादौ मुक्ताफलमाप्तुमित्येवार्थ इति वोपदेवोक्तप्रयोगः साधुरित्यभ-प्रेयमिति।

(१) अधीतीति "इष्टादे"रिति, कृतपूर्व्वीति "सपूर्व्वपूर्व्वात्" इति वक्ष्यमाण-वार्त्तिकद्वयसहायेन इन्। विशेषः स्तो चे व वा इति सूत्रस्य तर्कवागीशटीका द्रष्टव्या।

मूर्त्त्यष्टकाच्छिवं ध्यायन्, भुञ्जीथा द्वाक्षि वा त्र्यहात् ॥
भूस्थो योजनलक्षेऽर्कं पश्येल्लक्षद्वयाद् विधुम् ।

---

श्रेष्ठमित्यादि—त्वं शिवं ध्यायन् द्वाक्षि त्र्यहाद्वा भुञ्जीथा इत्यन्वयः । अत्र ध्यानभोजनक्रिययोरन्वर्थत्रिकालवाचकात् पीस्थौ दर्शितौ । शिवं कीदृशं ? कपालुषु श्रेष्ठं, अर्कादिरर्केभ्यः (१) श्रेष्ठं, पूर्व्वेण पी च । पुनः कीदृशं ? रुद्रैकादशके एकादशरुद्रेषु (२) मूर्त्त्यष्टकात् अष्टमूर्त्तिभ्योऽधिकम् । एकादशानां संघ इत्यर्थे क एकादशकम्, एवमष्टकमिति । भूस्थो जनः योजनलक्षेऽर्कं पश्येत्, लक्षद्वयात् विधुं पश्येत् । अत्र भूस्थिति-दर्शनक्रिययोरन्वर्थत्र्यध्ववाचकात् पीस्थौ । सर्व्वोदाहरणद्वयेन पीस्थौ दर्शितौ । एवं नराणां नरेषु नरेभ्यो वा क्षत्रियः शूरतमः, गवां गोषु गोभ्यो वा कृष्णा क्षीरिणी, अध्वगानामध्वगेषु अध्वगेभ्यो वा धावन्तः शीघ्रतमाः (३) । अद्य भुक्त्वा द्व्यहे द्व्यहाद्वा भोक्ता, अत्र स्थित्वा क्रोशे क्रोशाद्वा लक्ष्यं विध्यतीत्यादि । निर्द्धारणेऽभिधानात् पी, न तु सर्व्वत्रेत्यन्ये (४) । परे तु विभक्तवति निर्द्धारणाश्रय एव पी, न तु पीस्थाविति । यथा श्रौघ्नेभ्यो माथुरा आढ्यतराः, माथुरेभ्यः श्रौघ्ना दीनतरा इत्यादौ श्रौघ्नत्वं न माथुरेषु माथुरत्वं न श्रौघ्नेषु इति विभागात् । निर्द्धारणत्वात् पीमिच्छायपेक्षितक्रियत्वेन

---

(१) अर्कादिभ्यः द्वादश श्रेष्ठा इत्यर्थः ।

(२) रुद्रैकादश रूपा इत्यर्थः ।

(३) मराठाधिकारस्य त्रिपुराहरणेषु कथम् जातिवाचकं जातिः, कृष्णो गुणः, धावनं क्रिया इति. समानाधिकरणादेशो दर्शितः ।

(४) "कश्चित् षष्ठी च" इति अन्ये सूत्रकारमतम् (का—१८०)।

## ३१५। सीमान्तर्म्मार्गात् मी चान्ते।

(सीमान्तर्-मार्गात् ५।, मी ।१।, च ।१। अन्ते ७।)।

सोमनाथाच्छ्रुत कोशा कृष्ण कोशेषु चायुते।
गङ्गायमुनयोर्म्मध्ये कति कोशाय जाह्नवी॥

---

जलकल्पनात् तस्मात् प्रसादिकं भवतीत्याहु (१)। एवम् अधिकशब्दयोगे मी नेच्छन्ति।

प्रसितोत्सुकाभ्यां त्रीस्यौ। आभ्यां योगे त्रीस्यौ स्याताम्। केशै केशेषु वा प्रसितस्तत्पर इत्यर्थः।

आराटर्थेभ्योऽसत्त्वे ह्रीप्यौ च। असत्त्वे वर्त्तमानेभ्यो दूरान्तिकार्थेभ्यो ह्रीत्रीपीस्य स्युः। ग्रामोद्दूरं दूरेण दूरात् दूरे वा य, पापान्निकट निकटेन निकटात् निकटे वा स। परे तु मीं नेच्छन्ति। असत्त्वे किं? दूर पन्थाः (२)।

३१५। सीमा। सीम्नोरन्तर्मार्गं सीमान्तर्मार्गस्तस्मात् (३)। चकारात् मी इत्यस्यानुवृत्तिः क्वचिदेकदेशोऽप्यनुवर्त्तत इति न्यायात्। अवधिभूतयोरन्तर्व्वर्त्त्यध्ववाचिन (४) मीस्यौ स्याताम्,

---

(१) असाद्यमाद्य —शौघ्नेभ्यो माथुरा आढ्यतरा इत्यत्र यथा निर्द्धारण्यात् पञ्चमी सिध्यति तथा अपेक्षितक्रियापादानत्वेऽपि। अपेक्षितक्रिय तत स्याद् यत् क्रियाशून्यमेवहोक्तम्। ततश्च अपादानत्वकल्पनात् कारकत्वेन बहुत्वार्थात् कादित्यादिसूत्रेण चयप्रत्ययोऽपि स्यात्। तेन गणादेकाको दुर्भगतर इत्यादौ गणम इत्यपीति।

(२) दूर दूरवर्त्तीत्यर्थ। अत्र दूरशब्दस्य विशेष्यगामित्वम्।

(३) सीम्नोरन्त सीमान्त स चासौ म र्गश्चेति दुर्गादास।

(४) अध्ववाचिन अध्वपरिमाणवाचका नद्यक्रोशयोजनादय।

३१६। व्याद्योऽर्थैकक्तेः स्वेस्तु सर्व्वाः।

(वी-आदयः १।।।, अर्थैकक्तेः ५।, स्वेः ५।, तु ०।१।, सर्व्वाः १।।।)।

---

अन्ते गम्यमाने। सोमनाथादित्यादि—सोमनाथाच्छतं क्रोशाः कृष्णः, सोमनाथान्निःसृत्य शतक्रोशान्ते कृष्णः। सोमनाथादयुते क्रोशेषु जाह्नवी, सोमनाथान्निःसृत्यायुतक्रोशान्ते गङ्गा इत्यर्थः। उदाहरणद्वयेन प्रोस्यौ दर्शिते। सोमनाथादित्युपात्तविषयत्वात्(१) धीः। अन्ते किं? गङ्गायमुनयोर्मध्ये कति क्रोशाः, कियन्तः क्रोशा इत्यर्थः।

तत्कालात् सौ। अवधिभूतयोर्मध्यवर्त्तिकालवाचकात् सौ स्यादन्ते गम्यमाने सति। कार्त्तिक्या आग्रहायणी मासे, कार्त्तिकीमवधीकृत्य मासान्ते आग्रहायणीत्यर्थः। एवं पौष्या माघी मासे इत्यादि। अन्ते किं? पौषीमाघ्योर्मध्ये कति दिनानि।

३१६। व्या। वी आदिर्येषां ते, अर्थो हेतुः, अर्थोऽर्थो यस्य सः, एका क्तिर्यस्मात् सः, अर्थेन एकक्तिः, अर्थैकक्तिस्तस्मात्। निमित्तार्थशब्दसमानाधिकरणात् क्तेरित्यर्थः। स्वेस्तु सर्व्वाः इति—अर्थार्थसमानाधिकरणात् स्विसंज्ञकात् प्रथमादय इत्यर्थः। भुक्त्यर्थेनेति—भुक्तिर्भोगः। एवं भुक्त्यै अर्थाय भुक्तेरर्थात् भुक्तेरर्थस्य भुक्त्यर्थे। भुक्त्यर्थेन भुक्त्यै अर्थाय भुक्तेरर्थात् भुक्तेरर्थस्य

---

(१) अध्वाद्यभिन्नत्वात्।

अथार्थेनैकतो लं स्त्रादयः स्युः, स्त्रेषु सर्व्वाः।
भुक्त्यार्थेनार्थस्य मुक्तेः किं कार्य्यं नार्च्यतेऽच्युतः।

---

मुक्तौ अर्थे। एवं हेतुकारणनिमित्तादियोगेऽपि। तथाच अल्पस्य हेतोर्बहु हातुमिच्छन्निति रघुः। हेतुशब्दयोगी ष्येवेति परे। किं कार्य्यं केन कार्य्येण कस्मै कार्य्याय कस्मात् कार्य्यात् कस्य कार्य्यस्य कस्मिन् कार्य्ये। अच्युतो नार्च्यते केन हेतुना न पूज्यते इत्यर्थः। एवं को हेतुः कं हेतुं केन हेतुना कस्मै हेतवे कस्माद्धेतोः कस्य हेतोः कस्मिन् हेतौ। द्वे निमित्ते द्वाभ्यां निमित्ताभ्यां द्वयोर्निमित्तयोः द्वयोः प्रयोजनयोर्भवन्तु कारणेषु इत्यादि। परे तु सामान्यलेस्त्रादिक्तौ स्त्रेषु मीं नेच्छन्ति। अन्ये तु स्त्रैरेव सर्व्वाः स्त्रीराहुः। न सामान्यलेस्त्रादिरिति कश्चित्। कश्चित् तु द्वौस्यौ नाह। हेतुकारणनिमित्तशब्दसमानाधिकरणादित्यन्यः।

सूत्रे प्रान्तं यद्विधेयं द्वान्तं तत् प्राप्यते तु यत्।
अान्तं तद्यस्य योगी स्यात् ष्यन्तं यस्मात् परन्तु तत्।
यस्य स्थाने भवेत् कार्य्यं तत् ष्यन्तं समुदाहृतम्।
स्यन्तं गम्ये परे यात्रे यस्मिन्नुपपदे तु तत्।
क्वचिद्व्यत्ययतो ज्ञेयमिदं पाणिनिसम्मतम्॥ (१)

---

(१) एतत् श्लोकद्वयं क्वचिन्न दृश्यते इति सटीकावाक्यम्। पुनरुक्तिस्तु अस्य कारकप्रकरणेन सह किञ्चित्सम्बन्धानुरोधात्। अस्यापत श्लोकोदाहरणं तत्रैव टिप्पण्यां द्रष्टव्यम्।

२१७ । संज्ञाः कम् । (संज्ञाः १अ, कं १ए) ।

ढ ध घ भ ज ङाः कसंज्ञाः स्युः ।

इति कपादः ।

---

२१७ । संज्ञाः । प्रकरणादस्मिन् पादे या या संज्ञा इत्यर्थः । अत आह ढ ध घ भ ज ङा इति । एषां संज्ञान्तरमाह कमिति । कं कारकं, तच्च शक्तिस्तस्यानेकरूपत्वात् (१) । द्रव्यन्तु शक्तिमत् शक्तिस्तस्यैकस्वभावस्यानेकरूपताया अयुक्तत्वात् (२) । द्रव्ये कारकव्यवहारस्तु शक्तिशक्तिमतोर्भेदस्याविवक्षितत्वात् । पुष्पाणि स्पृहयति, परशुश्छिनत्ति, स्थाली पचति, दोग्धि पयो गोभ्यो गवां वा, धनं याचते राजभ्यो राज्ञां वा, रिपौ कोपः, पुष्पे स्पृहा, "तपोवनेषु स्पृहयालुरेषा" इत्यादौ ढादयो न तु भादयः, विवक्षावशात् कारकाणि भवन्तीत्युक्तेः (३) । इह कारकाणामुभयप्राप्तिसन्देहे भादिक्रमेणैव प्रवृत्तिः । यथा विप्राय दत्त्वा वस्त्रं

---

(१) कर्म्मत्व करणत्व कर्तृत्वाद्यनेकस्वरूपत्वात् ।

(२) एकस्वभावस्य तस्य द्रव्यस्य गवादेः अनेकरूपत्वं न युक्तं । तस्मात् द्रव्यं गवादिकं शक्तिमत् शक्तिः । सा च शक्तिः आधेयरूपा आधारं विना न तिष्ठति । तेन जातिगुणक्रियाद्रव्यादीनाश्रयति । अतः शक्तिविशिष्टआत्मादेः कर्तृत्वादिविशेषशक्तिः कारकमेव । यद्यपि आत्मादयः शक्तिमन्तो न शक्तयस्तथापि तेषु कारक व्यवहारस्त्वेवं शक्ति-शक्तिमतोरभेदस्य विवक्षितत्वादित्येवं कार्त्तिकेयसिद्धान्तपादाः ।

(३) स्वातन्त्र्यनियमाभावेनेति व्याख्यानात् । तेन स्वेच्छया ग्रामे गच्छतीत्यादिप्रयोगो न कर्त्तव्य इति कातन्त्रदीपिका इति दुर्गादासः ।

गृह्णाति, धनुरारोप्य शरान् क्षिपति, उपविश्योत्तिष्ठति पीठे, गृहं प्रविश्य निःसरति, अस्त्येव घटः पश्येत्यादि । यदुक्तम्—

अपादानसम्प्रदानकरणाधारकर्म्मणाम् ।
कर्त्तुश्चान्योन्यसन्देहे परमेकं प्रवर्त्तते ॥ इति ।

विप्राय दुह्यति, विप्राय श्लाघते, वरायाहूय कन्यां ददाति, विप्रायार्च्चयित्वा धेनुर्दीयते इत्यादौ—

उत्सर्गस्यापवादेन प्रधानेन गुणस्य च ।
बाधा विधीयते यस्मात् ततोऽनेन न बाधिता ॥ इति ।(१)

चैत्रोऽश्वेन ग्रामं न गच्छति इत्यादौ तु प्रधानव्यवस्थितां क्रियां चैत्रादौ केनापि प्रकारेण व्यापारितां निषेद्धुं पयानजा योगः ।

करणं कारः क्रिया, स एव साध्यत्वेन मुख्य एषामि-त्यर्थे कः, (२) जात्यपेक्षया एकत्वं, कारकं, क्रियानिमित्तमि-

(१) विप्राय दुह्यतीत्यादौ कर्म्मत्व सम्प्रदानत्वोभयप्राप्तौ परत्वात् कर्म्मत्वं कथं माभूदित्याशङ्क्याह उत्सर्गस्येति । यस्मात् अपवादेन विशेषविधिना उत्सर्गस्य सामान्यविधेः, प्रधानेन समापकक्रियया गुणस्याप्रधानस्य असमापकक्रियाया बाधा विधीयते ततस्तस्मात् अनेन अपादानसम्प्रदानेत्याद्युत्सर्गनियमेन असमापक क्रियया च न बाधिता चतुर्थीति शेषः । यस्मै दित्सेत्यादि विशेषनियमेनात्र चतुर्थ्येवाभूदित्यर्थः । तर्कवागीशेन वरायाहूय कन्यां ददातीत्युक्तं । दुर्गादासस्तु वरमाहूय कन्यां ददाति कन्यां दातुं वरमाह्वयति वा इत्युभयत्र सम्प्रदानं बाधित्वा कर्म्म प्रवृत्तमित्याह । एवं सति "आच्छाद्य चार्च्चयित्वा च श्रुतशीलवते स्वयं । आहूय दानं कन्याया ब्राह्मो धर्म्मः प्रकीर्त्तितः इति कथं सङ्गच्छते तत् सुधीभिश्चिन्त्यमिति ।

(२) वैऽस्क स्वो हे तु चैत्यस्य टीकायां "स एव एषामिति' वार्त्तिकसूत्रेण कः प्रत्ययः ।

स्वर्थं.(१)। नन्वेवं विप्राय गां ददाति इत्यत्र यथा विप्रानुमतिद्वारा तस्य क्रियानिमित्तत्वं, तथा चैत्रस्य तण्डुल पचतीत्यादावपि तण्डुलादिसम्पादनद्वारा चैत्रस्य क्रियानिमित्तत्वात् स्यात् कारकत्वापत्तिरिति चेत् सत्यं, चैत्रस्य इत्युक्ते पचत्यादिकं नापेक्षते, किन्तु धनादिकमतो न क्रियानिमित्तत्वम्। शिवं, परशुना इत्याद्युक्ते पश्यति, छिनत्ति इत्यादिकमपेक्षत एव। अतः क्रियानिमित्तत्वं कारकत्वमित्येके (२)। स्वार्थद्वारा क्रियान्वयित्वं कारकत्वमिति कश्चित्। तन्न, विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमित्यादावव्याप्तेः (३)। वस्तुतस्तु अव्ययार्थाद्वारकत्वे सति (४) क्रियान्वयित्वं कारकत्वम्। चैत्रस्य तण्डुलं पचतीत्यादौ स्वार्थद्वारकत्वमेव। विषवृक्षोऽपि संवर्द्ध्य इत्यादौ स्वार्थ-

---

(१) "कारकशब्दश्चाय लोके प्रसिद्धोऽप्युत्पन्नो निमित्तपर्य्यायः। यदि पचाद्यजन्तः स्यात्, तदा कर्तृशब्देन समानार्थः स्यात्। एवञ्च सति क्रियाहेतुत्वस्यैव कारकपदेनाभिधानं भवेदिति जयादित्यादीनां मतम्। भाष्यकारस्तु करोतीति कारकमित्याह" इति संक्षिप्तसारे कारकपादे प्रथमसूत्रस्य टीकायां गोयीचन्द्रः।

(२) कारकपक्षे तु सम्प्रदानादेरनुमतिप्रकाशनद्वारेव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वेन सम्बन्धिनि, चैत्रस्य तण्डुलं पचतीत्यादौ चैत्रादावतिव्याप्तिरित्युक्तम्।

(३) स्तोकं पचतीत्यादौ क्रियाविशेषणे अतिव्याप्तिवारणाय विभक्त्यर्थद्वारेति कारकलक्षणम्। स्वमते क्रियाविशेषणस्यापि कारकत्वाङ्गीकारात् प्रकारान्तरेणात्र दोषो दर्शितः।

विषवृक्ष इत्यस्य असाम्प्रतमित्यव्यययोगे कर्म्मणि प्रथमा, न तु कर्म्मविहितप्रत्ययेनोक्तत्वात्। अतस्तया विभक्त्या विषवृक्षस्य क्रियान्वयित्वाभावात् कारकत्वाभावेनाव्याप्तिरित्यर्थः।

(४) अत्र स्वार्थद्वारा क्रियान्वयित्वमिति पाठो बहुषु पुस्तकेषु दृश्यते। तथाविधपाठे तु विषवृक्षोऽपि संवर्द्ध्येत्यादावव्याप्तेरसङ्गतत्वात् असौ न पाठो विधि-सम्मत इति भाति परिहृत इति।

द्वारकत्वात् अव्याप्तिवारणाय नो अन्वेति विशेषणीयमिति । गुरु-विप्रतपस्विदुर्गतानां प्रतिकुर्वीत भिषक् स्वभेषजैः । माषाणाम-श्नीयादित्यादौ तु तदर्थद्वारेणैव क्रियान्वयात् ष्या' कत्वमिष्टमेव, टे षीविधानादिति (१) । तथापि कर्त्तृकर्म्मव्यवहितत्वादाधारस्य कारकत्वाप्रसङ्गः स्यादत आह ढादि कमिति (२) दिक् । (३)

इति क-पादः ।

---

(१) एतेन विभक्त्यर्थद्वारा क्रियान्वयित्वमिति इत्थं न लक्षणघटकम् । ततश्च अव्ययभिन्नलिङ्गार्थाहारकत्वे सति येन केनापि प्रकारेण यदि क्रियान्वयित्वं भवेत् तदा तस्यापि कारकत्वं स्यादित्यर्थः ।

(२) आधारस्य कर्त्तृकर्म्मान्यतरद्वारा क्रियान्वयित्वादव्ययभिन्नलिङ्गार्थाहारकत्वेन कारकत्वाभावात् कर्म्मादिघटकान्यतमस्य कारकत्वमित्यवश्यवक्तव्यम् । अत एवाचार्य्येण ढ ध ध भ ज डा क स्वा इत्युक्तम् ।

(३) अत्र दुर्गादास—अथैकवाक्यम् । गुरुणा शिष्येण इक्षु खाद्यते, अत्र खादयतेर्मुख्यकर्म्मणोऽभावात् गौणकर्म्मण इक्षोरेव उक्तत्वम् । गुरुणा शिष्येण इक्षु खाद्यते, गुरुणा शिष्य श्लोक पाठ्यते । एतयोरेकवाक्यत्वे तु गुरुणा शिष्य इक्षु खादयता श्लोक पाठ्यते, अत्र शिष्यस्य खादयते प्रयोज्यत्वेन गौणकर्त्तृत्वेऽपि पाठ्यत इत्याख्यातस्य प्रधानस्यापि कर्म्मत्वादुक्तत्वम् । एवं गुरुणा शिष्येण ओदनं पाच्यते, गुरुणा शिष्य श्लोक श्राव्यते एतयोरेकवाक्यत्वे गुरुणा शिष्य ओदनं पाचयता श्लोकं श्राव्यते । एवञ्च विप्र पश्य विप्र आनीयत एतयोरेकवाक्यत्वेऽपि पश्यानीयते विप्र इति । अत्र पश्येति आख्यातस्यापि कर्त्तृविहितत्वेन कर्म्मणा सम्बन्धाभावात् आनीयते इति कर्म्मविहितत्वेन सुतरां कर्म्मण उक्तत्वम् । एवं मया सुप्तम्, अहं पश्यामीत्यादीनामेकवाक्यत्वेऽपि अहं सुप्त पश्यामीत्यादिकमेव, प्रधानेनाख्यातेनोक्तत्वात् । अत एव "रक्षस्वदुत्सङ्गनिषण्णमूर्द्धा स्मरामि वानीरगृहेषु सुप्तम्"इति रघौ । १३ ।१ । मया सुप्तमहं स्मरामीत्यर्थः ।

आख्यातार्थविवादय तेषाञ्च प्रधानस्य वाक्यसमापकत्वात् । अत एव आख्यातेन वाक्यसमाप्तिः । एवञ्च विधिनिषेधयोर्विधिरेव बलवान् । तेन राजानं पाठयन् इक्षु खादयतीत्यत्र खादयतेर्निषेधेऽपि पाठयते कर्म्मत्वमिति । क्लृपत्तदन्येष्वेवे

## समासः।

### ३१८। दैक्यं सोऽन्वये।

( दैक्यं १।, सः १।, अन्वये ७।)।

द्वयो र्बहूनां वा दानामैक्यं ससंज्ञं स्यात्। तच्चान्वये सति

---

३१८। दैक्यम्। दैक्यमिति दश्च दश्च ते दे, दश्च दश्च दश्च तानि दानि, दे च दानि च तानि दानि, तेषामैक्यम्। एकस्य भाव ऐक्यं, ब्राह्मणादित्वात् ष्णः। एकशेषं मन्वानोऽप्याह (१) द्वयोर्बहूनामिति। दानामिति बहुत्वमविवक्षितमित्येके, तथाच अनेकदानामेकदत्वं दैक्यं ससंज्ञं स्यादित्यर्थः (२)। तच्च ऐक्यम्

---

इति प्राञ्चः (वाक्यसमाप्तिरिति शेष)। क्वापिक्वाप्यादर्श। तथा हि रामेण वनं गतं, रामो रावणं हतवान्, साधुभिः रामः अर्चनीयः। एषु भवत्यादिक्रियाध्याहारो नास्ति। रामो जगतां कर्त्ता, रामो जगतां संहारकः, रामेण स्वर्गः सुगम इत्यादौ भवत्यादिक्रियाणामध्याहारं विना वाक्यसमाप्तिर्नास्तीत्यर्थः।

(१) इत्तौ द्वयोर्बहूनामित्युक्तवताचार्य्येण सूत्रे दानामैक्यमित्यत्र दे च दानि च तेषामित्येकशेषः सूचितः। स चैकशेषो वृत्तिविशेषः। तथाचोक्तं सिद्धान्तकौमुद्यामेकशेषप्रकरणे,—"कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः। परार्थाभिधानं वृत्तिः। वृत्त्यर्थावबोधकं वाक्यं विग्रहः। स द्विधा, लौकिकोऽलौकिकश्च * * यथा राज्ञः पुरुषः। अविग्रहो नित्यसमासः, अस्वपदविग्रहो वेति"। प्रत्ययान्तर्भावेनावयवपदार्थान्तर्भावेन वा यो विशिष्टोऽर्थः स परार्थः, स चाभिधीयते येन तत्परार्थाभिधानमिति तत्त्वबोधिनी। कातन्त्रटीकायामपि परार्थाभिधानं वृत्तिरित्युक्त्वा परस्यानात्मीयस्यार्थस्य यदुपसर्ज्जनपदेनाभिधानं सा वृत्तिरित्यर्थं इति व्याख्यातम्। लघुशब्देन्दुशेखरे तु "वस्तुत एकशेषे परार्थाभिधानस्वार्थोपस्थापकत्वाभावात् वृत्तित्वे न मानं, शिष्टपदेन स्वशक्त्यैव तत्तदर्थकरूपार्थोपस्थापनस्य भाष्ये स्पष्टमुक्तत्वात्" इत्युक्तम्।

(२) समास इत्यन्वर्थ एव शब्दः। समुपूर्व्वस्यास्यतेरेकीकरणार्थत्वात्। तथा

साहित्यरूपेणान्वय इति। कार्य्यमित्यनेन ऐक्यविधायकं लक्षणमप्येतदित्युक्तम्। अतएव कृष्णस्येत्यस्य चरणावित्यनेनैव सम्बन्धात् वन्द्यावित्यनेनैक्यमित्याह—न तु कृष्णवन्द्यौ चरणाविति। एवं राज्ञः पुत्रो राजपुत्र इत्यादौ स्यात्, न तु भार्य्या राज्ञः पुत्रो देवदत्तस्य इत्यादौ (१)। ऋद्धस्य राज्ञो मातङ्गा', तरुण्यौ नृपपत्न्यौ भार्य्या यस्येत्यादौ तु सापेक्षमसमर्थं भवतीति न्यायात् न सः (२)। केचित्तु प्रतियोगिकारकाभ्यां सापेक्षत्वेऽपि (३) सः। यथा चैत्रस्य दासभार्य्या, कृष्णेन हतपुत्रः, रामाय दत्तकुसुम इति।

---

इत्यर्थः। यथा देवदत्त कटमित्येकं वाक्यं, तिष्ठतो विष्णुमित्रो गुरुकुलमिति द्वितीयम्, अत्र "द्वितीयाश्रिता गताद्यै"रिति तत्पुरुषो न भवति अगमकत्वात्। यत्र हि समस्यमानयोः पदयोः परस्परव्यपेक्षालक्षणः सम्बन्धो विद्यते तत्रैव गमकत्वम्। अत्र पुनर्वाक्यभेदात् परस्परव्यपेक्षाया सम्बन्धो नास्ति तत्रागमकत्वम्। समासे तु सति एकार्थीभावलक्षणः सम्बन्धः, तद्विशेषणन्तु परस्परव्यपेक्षाया विद्यत एव। राज्ञो राज्ञां वा पुरुष इत्यत्र वाक्ये योऽर्थोऽवगम्यते नासौ राजपुरुषशब्दात्, समासे सति द्विवचनबहुवचनयोरनभिगमात्। अतोऽत्र सत्यपि समस्यमानयोः परस्परव्यपेक्षालक्षणसम्बन्धे वाक्यार्थबोधनासम्भवात् न समासः। * * * उपरि गिरेः पुरो रामस्येत्यादौ सत्यपि परस्परव्यपेक्षालक्षणसम्बन्धे स्वभावादेव वाक्यार्थबोधनासम्भवत्वेनागमकत्वात् न षष्ठीसमासः। तस्मात् वाक्यार्थबोधकत्वमेव गमकत्वं समासकारणमवगन्तव्यमित्याह।

(१) अत्र पुत्र इति पदेन राज्ञ इति पदस्य सम्बन्धाभावात्।

(२) अपेक्षया सह वर्त्तमानं सापेक्षं साकाङ्क्षमित्यर्थः। तादृशं पदम् असमर्थं वाक्यार्थाबोधकमित्यर्थः। तत्र ऋद्धस्य राज्ञो मातङ्गा इत्यादौ राजमातङ्गशब्दयोः समासे ऋद्धस्येति पदम् ऋद्धराजशब्दयोर्विशेष्यविशेषणभावं नावगमयति। अत ऋद्धस्येति पदं विहाय राजमातङ्गा इति समासो न स्यात्। एवमन्यत्रापि।

(३) प्रतियोगिपदं विशेष्य'विशेषणातिरिक्तसम्बन्धिपदमित्यर्थः। प्रतियोगिपदेन कारकपदेन च सापेक्षत्वे साकाङ्क्षत्वेऽपि।

यदुक्तम्—

प्रतियोगिपदादन्यत् यदन्यत् कारकादपि।
वृत्तिशब्दैकदेशस्य (१) सम्बन्धस्तेन नेष्यते॥

यथा—

तरुणो वृषलीभार्य्यः प्रवीरं पुत्रकाम्यति।
ऋद्धस्य राजमातङ्गा इति न स्युः प्रयुक्तयः।
चैत्रस्य दासभार्य्येयं लूनचक्रो रथो मया।
शरैः शातितपत्रोऽयं वृक्षादिति सतां मतम्॥ इत्याहुः।

असमानाधिकरणसापेक्षस्य गमकत्वेन साभ्युपगमात् समानाधिकरणसापेक्षमसमर्थं भवतीति कश्चित्। अन्ये तु समस्तस्यासमस्तेन नित्यापेक्षेण सङ्गतिरित्याहुः (२)। सः समासः। स च चतुर्व्वा—सर्व्वपदार्थप्रधानः, सर्व्वपदार्थाप्रधानः, उत्तरपदार्थप्रधानः, पूर्व्वपदार्थप्रधानः। यथा हरिहरौ, पीताम्बरः, नीलोत्पलं, कृष्णाश्रितः, द्विरात्रः, त्रिरामी, अधिस्त्रि इत्यादि (३)।

---

(१) समासनिष्पन्नशब्दो वृत्तिशब्दस्तस्यैकदेशस्तस्य।

(२) एतत् संक्षिप्तसारसूत्रम्, समासपादे १२५। नित्यमपेक्षाऽसमस्तेनान्तसमासपदेन समस्तस्य न्तसमासस्य पदस्य एकदेशेन सहेति शेषः, सङ्गतिरन्वयबोधो भवतीति शेषः। "नित्यापेक्षता च कारकाणां क्रियापेक्षया सम्बन्धिशब्दानाञ्च सम्बन्ध्यन्तरापेक्षयेति। अतएव गुरोरस्य प्रकारेण रथात् पातितसारथिरित्यादौ सङ्गतिर्द्रष्टव्या। एतदेव कथम? उच्यते—नित्यसापेक्षे तदर्थाभिधानशक्तेः स्वभावसिद्धत्वात्, अन्यत्र तदसम्भवादि"त्यादि गोयीचन्द्रः।

(३) एतेन द्वन्द्व सर्व्वपदार्थप्रधान, बहुव्रीहि सर्व्वपदार्थाप्रधान, कर्म्मधारय उत्तरपदार्थप्रधान, तत्पुरुषो द्विगुरव्ययीभावश्चैते पूर्व्वपदार्थप्रधाना इत्युक्तं भवति।

३१८ । भिन्नान्यैकार्थद्व्यादिसङ्ख्याव्यादीनां च-ह-य-ष-ग-वाः ।

( भिन्न-व्यादीनां ६।।।, च-वाः १।।। ) ।

३१८ । भिन्ना । भिन्नश्च अन्यश्च एकश्च ते, ते अर्था येषां ते, द्वौ आदिर्यासां ताः, ताश्च संख्या च व्यश्च तानि, तान्यादयो येषां ते, पश्चाद्भिन्नान्यैकार्थाश्च द्व्यादिसंख्यान्यादयश्च ते तेषां, चश्च हश्च यश्च षश्च गश्च वश्च ते । द्वन्द्वात् परः श्रूयमाणः शब्दः प्रत्येकमभिसंबध्यते (१) इति न्यायात्, संज्ञिसंज्ञानां समसंख्यत्वाच्च यथासंख्यं दर्शयन्नाह (२)—भिन्नार्थानां दानाम् इति ।

परस्परभिन्नार्थानां दानां चसंज्ञः । पदार्थो हि जात्याकृतिव्यक्तयः । जातिर्धर्मः, आकृतिरवयवसंस्थानादिः, व्यक्तिः स्वरूपम् । अतएव नीलघटयोरित्यत्रापि चः, पदार्थतावच्छेदकयोः परस्परभिन्नत्वात् । अभेदविवक्षायां तु यः स्यादेव । एवं हरिहरावित्यत्र वस्तुतोऽभेदेऽपि पदार्थतावच्छेदकयोः स्थितिसंहारयोर्भेदाच्चेद इत्येके । तथाच पदजन्यप्रतिपत्तिविषयभेदे च इति पर्य्यवसितोऽर्थः ।

अन्यार्थानामिति—असमस्यमानदार्थपराणां (३) समस्यमा-

(१) अभिसंबध्यते इति कर्मकर्त्तरि प्रयोगः । अभिसंबध्नातीति क्वचित् पाठः ।

(२) भिन्नार्थादि व्यादीनामिति द्वन्द्वात् परे श्रूयमाणाच्चहादिशब्दाः प्रत्येकमभिसंबध्नन्ति । अत्र संज्ञिनां भिन्नार्थादीनां संज्ञानां चहादीनाञ्च समसंख्यत्वमपि वेद्यमिति बोध्यम् । यथासंख्यं यथाक्रममित्यर्थः ।

(३) समस्यमान-पदार्थातिरिक्त-पदार्थबोधकानामित्यर्थः ।

भिन्नार्थानां दानां मयसंज्ञः, अन्यार्थानां दानां हसंज्ञः, एकार्थानां दाना यसंज्ञः, इत्यादित्यन्तपूर्व्वदानां षसंज्ञः, सङ्ख्यापूर्व्वदानां गसंज्ञः, व्यपूर्व्वदाना थसंज्ञः स्यात्।

---

भानां दानां सो हसंज्ञः। यथा आरूढ़ो वानरो यम्, आरूढवानरो वृक्षः। दृष्टः कृष्णो येन, दृष्टकृष्णः पुरुष इत्यादि। समस्यमानपदार्थोऽपि क्वचिदन्यपदार्थः स्यात्, व्यपदेश्यव्यपदेशिवद्भावात् (१)। यथा शोभनशरीरः शिलापुत्त्रः, जनार्द्दनस्यात्मचतुर्थ एवेत्यादि।

एकार्थानामिति—परस्परसमानाधिकरणानां सो यसंज्ञः। यथा नीलोत्पलं, परमात्मा इत्यादि।

इत्यादित्यन्तपूर्व्वदानामिति—यदि समस्यमानानां दानां पूर्व्वदानि इत्यादित्रीनामिकसमास्तानि भवन्ति, तदा तेषां दाना सः षसंज्ञो भवति। यथा कृष्णमाश्रितः कृष्णाश्रितः, मासेन पूर्व्वः मासपूर्व्वः, यूपाय दारु यूपदारु, पापाद्भयं पापभयं, कृष्णस्य सखा कृष्णसखः, पूर्व्वाह्णे कृतं पूर्व्वाह्णकृतमित्यादि।

सङ्ख्यापूर्व्वदानामिति—समस्यमानाना दाना पूर्व्वदानि यदि संख्यावाचकानि भवन्ति, तदा तेषां तार्थादौ सो गसंज्ञः। यथा पञ्चगु, त्रिलोकी, पञ्चगवधन इत्यादि।

---

(१) अत्र व्यपदेश्यः समस्यमानपदार्थः, व्यपदेशी समस्यमानपदार्थातिरिक्तः पदार्थः। क्वचिद्बहुव्रीहौ व्यपदेश्यस्य व्यपदेशिस्वरूपत्वम्। तथाच कार्त्तिकेय — समसनीय-पदार्थातिरिक्त-पदार्थबोधक यच्छब्दस्यार्थो हर्य्यादिस्तु बहुव्रीहिसमासनिष्पन्नपदस्यार्थो मुख्य इति तु व्यपदेशी, वाच्यपिकातिदेशो तद्भावात् तत्स्वरूपत्वात् व्यपदेश्यस्य व्यपदेशार्हस्य अर्थात समस्यमानपदार्थस्य इत्याह। (२८ पृ (४), २९ पृ (१) टिप्पनी द्रष्टव्या।

३२०। त्नौ लुंक् त्ये च।

(त्नेः ६।, लुक् ।१।, त्ये ७।, च ।१।)।

षे स्थितायाः त्नेः लुंक् स्यात्, त्येच परे।

---

व्यपूर्व्वदामामिति—समस्यमानानां दानां यदि पूर्व्वदानि व्यसंज्ञकानि भवन्ति, तदा तेषां कादौ सो वसंज्ञः। यथा अधिस्त्र्यमित्यादि।

इह एकत्र संज्ञाद्वयसमावेशाभावात् विशेषणबोधितानामेवैताः (१) संज्ञा ज्ञेयाः। तेन पञ्चभार्य्यः, समर्थयः, स्वःपतितः, पञ्चगुः, अधिहरीत्यादौ स्यादिसंज्ञा न तु गादय इति। अन्यथा सर्व्वेषां दानां भिन्नार्थत्वात् चसंज्ञाप्राप्तेः। चो द्वन्द्वो, ह्रौ बहुव्रीहिः, यः कर्म्मधारयः, यस्तत्पुरुषः, गो द्विगुः, वोऽव्ययीभावः। यगौ यविशेषाविति परे। एषां सामान्यतो लक्षणान्युक्तानि विशेषन्तु तत्तत्प्रकरणे विशिष्य वक्ष्यामः।

३२०। त्नेर्लुंक्। अधिकारात् स इत्यनुवर्त्तते इत्याह षे स्थिताया इति। षे कर्त्तव्ये समस्यमानदेभ्यः त्नेरित्यर्थः। प्रकरणात् स्यादित्नेरेव, तेन पचतिरूपं पचतितरामिति न त्ये त्नेर्लुंक्। यतस्यः तत्रत्य इत्यादौ तु स्यादिस्थानजत्वेऽपि स्वरादिपाठात्तदन्तानां तद्धितान्तर्गतत्वात् न तसादेर्लुक्। लुक्करणात् स्यादिनिमित्तं कार्य्यं न स्यात्, यथा सखिप्राप्तः गवाश्रित इत्यादौ न

---

(१) विशेषणबोधितानां—तत्सार्थे विषये इत्यादि-तत्तद्विशेषणेन निर्द्दिष्टानामित्यर्थः।

## द्वन्द्वसमासः (च) ।

इतरेतरयोगे च समाहारे च चो द्विधा ।

हरिश्च हरश्च हरिहरौ । ब्रह्मा च अच्युतश्च ईशश्च ब्रह्माच्युतेशाः ।

---

घौ त्रिः, धा थमृषयोरिति । वाक्त्वचं राजपुरुष इत्यादौ तु विराममाश्रित्य कङ् भो लुप् च स्यादेव ।

इतरेतरयोगे चेति (१) । चो द्विधा द्विप्रकारः, तत्र एक इतरेतरयोगः । इतरस्य इतरेण सह योग इति, परस्परापेक्षावयवभेदानुगत(२)स्तत्र द्वयोः प्राधान्यात् द्वं, बहूनां प्राधान्यात् ब्वं स्यादेव । यथा हरिहरौ ब्रह्माच्युतेशा इत्यादि ।

अन्यः समाहारः, स च तिरोहितावयवभेदः, किन्तु समुदितभिन्नभेदस्तस्यैकत्वात् क्रम् (३) । यथा समीहगदं, वाक्त्वचं, धवखदिरपलाशम् इत्यादि । समुदायिभ्योऽनन्यः समुदाय

---

(१) चार्थे द्वन्द्व इति अनुभूतिस्वरूपाचार्यसूत्रम् । तत्र समुच्चयान्वाचयेतरेतरसमाहाराश्चार्थाः । तत्र समुच्चयान्वाचययोः समासो नास्ति परस्परान्वयाभावात् । ईश्वरं गुरुञ्च भजस्वेति प्रत्येकमेकक्रियाभिसम्बन्धे समुच्चये समासो नास्ति । भो वटो भिक्षामट, यदि पश्यसि गाञ्चानयेतिक्रमेण क्रियाद्वयसम्बन्धेऽन्वाचये च समासो नास्ति, परस्परासम्बन्धात् । इतरेतरयोगे समाहारे चार्थे द्वन्द्वसमासो भवतीत्याह इतरेतरयोग इतीति कार्त्तिकेयः ।

(२) परस्परमपेक्षन्ते इति परस्परापेक्षास्तादृशा अवयवाः समासघटकीभूत पदानि तेषां भेदस्तमनुगत इत्यर्थः ।

(३) तिरोहितावयवभेद —अप्रधानावयवार्थः संहृतिप्रधान इति यावत् । किन्तु समुदितभिन्नभेदः—समुदितभिन्न समुदायस्तस्य भेदो यत्र तादृशः । तस्य समाहारस्य समुदायस्यैकत्वादेकवचनम् ।

इति दर्शनात् (१)। क्लेलुक् इत्येकं सूत्रं, त्ये चेति एकं सूत्रमिति योगविभागः कर्त्तव्यः तस्मादिष्टसिद्धिः। क्वचित् निषिद्धं (२) स्यात् तथाहि,—

नौजःसहस्तमोऽम्भोऽञ्जस्तपस. पूर्व्वात् तगाः। पूर्व्वपदभूतेभ्य एभ्यस्त्या लुक् न स्यात्। ओजसाकृतं ओजसाकृतपुत्रः (३), सहसाभुक्तं, तमसापिहितम्, अम्भसाप्लुतम्, अञ्जसानिष्पादितं, तपसाकृतम्। तथाच तमोजसानिर्जितदेवराजं दृष्ट्वा रथस्थं तपसांप्रसिद्धिमिति बोध्यम्। तपःशब्दात् विकल्पयन्त्यन्ये। अस्मन्मते तु नञा निर्द्दिष्टमनित्यमिति न्यायात्। तथाच तपःकृशाः शान्त्युदकुम्भहस्ता इति भट्टिः। पूर्व्वात् किं ? सह ओजसा वर्त्तते सौजाः तेन कृतमित्यर्थे सौजःकृतं, सहौजःकृतम्। सततनैश्तमोहृतमिति भारविः। उदन्वदम्भःपरिपूतमूर्त्तिरिति माघः (४)।

पुंजनुषोऽनुजान्धे। आभ्यामनयोः क्रमात् तसा लुक् न स्यात्। पुंसानुजः। पुंसेत्यलुग्विधानादेव षष्ठ्यर्थे त्रौ, पुमांसं प्रत्यनुजत्वेन पुंसो हेतुत्वाद्वेतौ वा त्रौति (५)। जनुषान्धः, जनुर्जन्म तेनान्धः।

---

(१) ननु यमौ इमद् दर्शनाच्चेत्यत्र कथं प्रत्येकमन्वयस्तत्राह समुदायिभ्य इति—इतिदर्शनादिति न्यायात्। समुदायिसमुदाययोरभेदाद्वोपचारादित्यर्थः।

(२) समस्यमानपदानां विभक्तिलोपो न स्यादित्यर्थः।

(३) "ओजसाकृतमित्यत्र समासेनैकपदे सति ओजसाकृतस्य इत्यत्र पुनः षष्ठीसमास, तद्भिन्नोऽपि भवति। तेन ओजसाकृतस्य इदं ओजसाकृतमिति"। संक्षिप्तसारे समासपादे।१८ सूत्रस्य टीका।

(४) एषूदाहरणेषु ओजःसहोऽम्भःतमसां पूर्व्वपदत्वाभावान्न लुक्।

(५) पुंसोऽनुज इत्यर्थे अलुग्विधानसामर्थ्यादिह षष्ठ्यर्थे प्रतीतः। अथवा

मनसो नाम्न्याम्नायिनि च। मनसस्त्या लुक् न स्यात् संज्ञायाम् आम्नायिनि शब्दे च परे। मनसादेवी मनसागुप्ता मनसासङ्गता। नाम्नीति किम्? मनोदत्ता कन्या। मनसा आम्नातुं शीलमस्य मनसाम्नायी योगी, असंज्ञार्थं पृथगुपादानम्।

आत्मनः पूरणे। आत्मनस्त्या लुक् न स्यात् पूरणप्रत्यये परे। आत्मनाषष्ठः आत्मनापञ्चमः। जनार्दनस्त्वात्मचतुर्थ एव इति तु आत्मा चतुर्थोऽस्येति ह्रः (१)।

व्याकरणाख्यायामात्मपराभ्यां च्याः। व्याकरणे व्यवह्रियमाणा या संज्ञा तस्यां गम्यमानायां आत्मपराभ्यां च्या लुक् न स्यात्। आत्मनेपदं, परस्मैपदम् (२) आत्मनेपदे भाषा उक्तिर्यस्य आत्मनेभाषः, एवं परस्मैभाषः।

स्तोकान्तिकदूरार्थकृच्छ्रात् क्ते प्याः। स्तोकाद्यर्थेभ्यः कृच्छ्राच्च क्तान्ते परे प्या लुक् न स्यात्। स्तोकान्मुक्तः, अल्पान्मुक्तः, अन्तिकान्मुक्तः, अभ्याशादागतः, दूरादागतः, विप्रकृष्टादागतः, कृच्छ्रान्मुक्तः। कृच्छ्रमुक्त इति तु तौसात्। क्ते किम्? स्तोकभयम्।

वत्सताद्धरणाभ्यां कारणंसिनोः। आभ्यां प्या लुक् न स्यात्

---

अन्यस्मात्तु जननं प्रति पूर्व्वजातस्य हेतुत्वमस्तीति हेतौ प्रतीयेति। "यस्यापजाः पुमान् स पुंसानुज" इति सिद्धान्तकौमुदी।

(१) नन्वन्यपदार्थे बहुव्रीहिरित्युच्यते, अन्यपदार्थश्च समस्यमानेभ्योऽतिरिक्तो भवति। अत्र तदभावात् कथं बहुव्रीहिरिति चेत सत्यं, अव्यतिरिक्तार्थेऽप्यन्यपदार्थत्व भवति, व्यपदेश्यव्यपदेशिवद्भावात्। यथा शोभनशरीरः शिलापुत्रक इति गोयीचन्द्रः।

(२) अत्र तादर्थ्ये चतुर्थी। नन्वत्र प्रकृतिविकृतिभावविरहात् रन्धनाय स्थालीतिवत् कथं समासाभाव? लुग्विधानसामर्थ्यात्।

क्रमादनयोः। बलादनौचित्यात् करणं बलात्कारः (१)। ब्राह्मणो वेदैकदेशस्तत उद्धृत्य शंसितुं शीलमस्य ब्राह्मणाच्छंसी ऋत्विग्-विशेषः।

क्षेपे ष्या वा तु पुत्रे। क्षेपे गम्यमाने ष्या लुक् न स्यात्, पुत्रशब्दे तु वा। चौरस्य कुलं, दास्याः पतिः, दास्याः पुत्रः, दासीपुत्रः। क्षेपे किम्? विप्रकुलं, विप्रपुत्रः।

वाक्दिक्पश्यतो युक्तिदण्डहरे। एभ्य एतेषु क्रमात् ष्या लुक् न स्यात्। वाचोयुक्तिः (२) दिशोदण्डः, पश्यतोहरः (३) पश्यन्तमनादृत्य हरतीत्यर्थः।

अदसः ष्यायन योनणकान्तकुल-णकान्तपुत्रेषु। अदसः ष्या लुक् न स्यात् ष्यायने योनणकान्तकुले णकान्तपुत्रे च। अमुष्या-पत्यं, नड़ादित्वात् ष्यायन, आमुष्यायणः, विख्यातपितृकः, अमुष्य कुले साधुः, आमुष्यकुलीनः, साधौ प्रतिजनादेर्यीनः। अमुष्य कुलस्य भावः, मनोज्ञादित्वात् णकः, आमुष्यकुलिका। एव-मामुष्यपुत्रिका इति। भाव्यर्थभूतवदङ्गीकारात् णकान्त इति विशेषणम् (४)।

ऋतो विद्यायोनिसम्बन्धे। ऋदन्तात् ष्या लुक् न स्यात्

(१) बलात्काराकिञ्चणो हि यथा अनन्तोश्वादिशिष्टप्रयोगदर्शनात् बलात्-कार इत्यत्रालुग् द्रष्टव्य इति।

(२) उपपदं वाच् वाचोयुक्तिरित्यमरटीका। वाचोयुक्तिर्वाग्मीति शब्द-कल्पद्रुमः। (३) स्वर्णकारः।

(४) कुलत्वमस्त्यासां वक्तव्यर्थतात् प्रागेव प्रथमं यदमुष्यविभागं, तत् भावि-नोऽर्थस्य भूतवदङ्गीकारादित्यर्थः।

पूर्व्वोत्तरदयोर्विद्यायोनिसम्बन्धवाचित्वे सति। होतुःशिष्यः, होतुःपुत्त्रः, पितुरन्तेवासी, स्वसुःपुत्त्रः। ऋत इति किम्? मातुलपुत्त्रः। विद्यायोनिसम्बन्धे किम्? होतृधनम् (१)।

वा स्वसृपत्योः पितुस्तु पितरि। ऋदन्तात् ष्या लुक् न स्यात् वा परयोः, पितुस्तु पितरि। मातुःष्वसा मातृष्वसा, होतुःष्वसा होतृष्वसा, दुहितुःपतिः दुहितृपतिः, पितुःपिता पितृपिता। पितामहः पितृपिता तत्पिता प्रपितामह इत्यमरः।

दिवो दासे नाम्नि। दिवः ष्या लुक् न स्यात् दासे नाम्नि। दिवोदासः, नृपतिभेदः।

शुनः पुच्छलाङ्गूलशेफशेफसि। शुनः ष्या लुक् न स्यादेषु नाम्नि गम्ये। शुनःपुच्छः, शुनोलाङ्गूलः, शुनःशेफः, शुनःशेफाः; ऋषीणां नामचतुष्टयम्।

क्वचिदन्यत्रापि। उक्तलक्षणैरप्राप्तेऽपि ष्या लुक् न स्यात्। वाचस्पतिः, वास्तोष्पतिः, दिवस्पतिः, शुनस्कर्णः, देवानांप्रिय (२) इत्यादि प्रयोगानुसारेण ज्ञेयम्।

गोऽदसन्तात् ष्या नाम्नि। गोशब्दाददन्तादसन्ताच्च परस्याः

---

(१) कथं भ्रातृपुत्त्रः, भ्रातुरेकत्वेऽसाधुरेव, द्विवचनबहुवचनान्तयोर्लुप्-भवत्येव इति गोयीचन्द्र।

(२) देवानांप्रिय इति मूर्ख इत्यर्थः। तथाच "मूर्खा हि देवानां प्रीतिं जनयन्तीति देवपशुत्वादिति मनोरमाया भावः। (मनोरमा नाम सिद्धान्तकौमुदीटीका)। ब्रह्मज्ञानरहितत्वात् संसारिणो मूर्खास्ते तु यागादिकर्म्माण्यनुतिष्ठन्तः पुरोडाशादिप्रदानद्वारा देवानामत्यन्तं प्रीतिं जनयन्ति। ब्रह्मज्ञानिनस्तु न तथा, तेषां यागाद्यनुष्ठानाभावादतो गवादिस्थानापन्नत्वात् मूर्खा एव देवपशव" इति तत्त्वबोधिनी। अन्यत्र देवप्रिय इति।

स्या लुक् न स्यात् संज्ञायाम् । गविष्ठः, गविष्ठिरः, वर्हिष्ठादित्वात् षः । अदन्तात्तु—वनेकिंशुकाः, वनेकशेरुकाः, वनेवल्वजाः, गोष्ठप्रवीर इत्यादि । इसात्तु—युधिष्ठिरः वर्हिष्ठादित्वात् षः । त्वचिसारः ।' त्वक्सार इति तु त्वक् सारो यस्येति हः । एभ्यः किम् ? नदीकुक्कुटिका । नाम्नि इति किम् ? अक्षशौण्डः ।

अप्सो य-मति-योनिषु । ये त्ये, मतौ योनौ च परे अप्सः स्या लुक् न स्यात् । अप्सु भवः दिगादित्वात् यः, अप्सव्यः, अप्सुमतिः, अप्सुयोनिः संज्ञायामिति सः । पूर्व्वदादिति किम् ? परमाप्मतिः ।

मध्यान्ताभ्यां गुरौ । पृथग्विधानादनाम्नि । मध्येगुरुः, अन्तेगुरुः । पूर्व्वादित्येव, सममध्यगुरुः । कथं मध्यगुरुः अन्तगुरुरिति ? मध्ये गुरुर्यस्य इति हः । मध्यगुरुः अन्तगुरुश्च गण इति छान्दसम् (१) ।

अमूर्द्धमस्तकात् स्वाङ्गादकामे । मूर्द्धमस्तकवर्जात् स्वाङ्गवाचकात् स्या लुक् न स्यात् न तु कामशब्दे परे । कण्ठेकालः, उरसिलोमा । "ग्रस्तं चकारोरसिवारणमाश्च" । अमूर्द्धमस्तकादिति किम् ? मूर्द्धनि शिखा यस्य मूर्द्धशिखः, मस्तकशिखः । अकामे किम् ? मुखकामः । अदसादित्येव, अङ्गुलित्राणः, गोचरः । स्वाङ्गादिति किम् ? धर्म्मवृत्तिः, धर्म्ममतिः ।

घञन्तबन्धे वा । घञन्तबन्धे परे स्वाङ्गादस्वाङ्गाच्च स्या लुक्

---

(१) छन्दोलक्षणमिति ।

न स्यात् वा। करेबन्धः करबन्धः, चक्रेबन्धः चक्रबन्धः, उरसिबन्धः उरोबन्धः। अदसन्तादित्येव। मणिबन्धः, गुप्तिबन्धः।

बहुलं पे कृदन्तेऽस्ये। अस्ये कृदन्ते स्या लुक् न स्यात् तत्पुरुषे सति। बहुलग्रहणं (१) नित्यविकल्पनिषेधार्थम्। स्तम्बेरमः, कर्णेजपः, पङ्केरुहः, खेचरः, अग्रेचरः, माण्डेवह इत्यादौ नित्यम्। सरसिरुहं सरोरुहं, वनेचरः वनचरः, दिविषद् द्युषदः इत्यादौ विकल्पः। कुरुचरः स्थण्डिलशायी साङ्काश्यसिद्ध (२) इत्यादौ लुगेव। अस्य इति किं? समस्थः, विषमस्थः, कूटस्थः, कायस्थः, उदरस्था हरीतकी। तथाच कपालेन करस्थेनेन्दुशेखर इति दण्डी। कथं द्विदिशः सव्येष्ठ इति? बाहुल्यात्। वर्हिष्ठादिपाठात् षः। पूर्ववदादेव। तेन नीलसरोरुहं महावनचर इत्यादि।

द्यु-शरत्प्रावृट्-कालाज्जे वर्ष-क्षर-शर वरात्तु वा। एभ्यः स्या लुक न स्यात् जे परे, वर्षादेस्तु वा। दिविजः शरदिजः प्रावृषिजः कालेजः, वर्षेजः वर्षजः, क्षरेजः क्षरजः (३) शरेजः शरजः, वरेजः वरजः। एभ्यः किम्? अप्सुजः, अण्डजः, स्थलजः।

कालनाम्नः काले तरादौ च। वेत्यनुवर्त्तते। कालनाम्नः स्या लुक् न स्यात् वा कालशब्दे परे, तर-तम-तन तरां-तमांसु च। पूर्व्वाह्णेकाले पूर्व्वाह्णकाले, पूर्व्वाह्णेतरे पूर्व्वाह्णतरे, पूर्व्वाह्णेतमे

(१) बहुलं—बहून (प्रकारा) सन्त्यस्य, चूडादित्वाल्। अथवा बहून् (प्रकारान्) लाति गृह्णातीति बहुलम्, आदन्तत्वात् ड। तच्च कचिद्विहितं न स्यात्, कचिन्निषिद्धं स्यात् कचिद्वा स्यात् कचित्ततोऽन्यदपि स्यादित्यर्थं इत्युक्तमाचार्य्येण।

(२) साङ्काश्यो देशविशेषस्तत्र लब्धसिद्धिः। (३) क्षरो मेघः क्षरं जलम्।

पूर्व्वाह्णतमे, पूर्व्वाह्णेतनः पूर्व्वाह्णतनः पूर्व्वाह्णेतरां पूर्व्वाह्णतरां पूर्व्वाह्णेतमां पूर्व्वाह्णतमाम्। एवमपराह्णेकाले अपराह्णकाले इत्यादि। अदसन्तादित्येव। रात्रितरायां जागर्त्ति।

अकालाद्वास-शय-वासिषु। कालभिन्नवाचिनः स्या लुक् न स्याद्वा वासशयवासिषु। वनेवासः (१) वनवासः, खेशयः खशयः, ग्रामेवासी ग्रामवासी, अन्तेवासी अन्तवासी। अकालादिति किं? पूर्व्वाह्णशयः। अदसन्तादित्येव। गुहाशयः भूमिशयः।

कारनाम्नि हसादौ। वणिक्कर्षकपशुपालाद्यैः पालनार्थं राज्ञो देयो यः स करः, कर एव कारः, तस्य नाम कारनाम, तस्मिन् वाच्ये हसादौ परे स्या लुक् न स्यात् वा। हलेद्विपदिका हलद्विपदिका, देया इत्यर्थः। द्वौ द्वौ पादौ परिमाणमस्य इत्यर्थे संख्यादेराभीच्ण्ये कः, पादः पदादेशः, तार्थे ग-सः, स्वभावात् स्त्रीत्व, त्वेन (२) आभीक्ष्ण्यं द्योत्यते। यूथे यूथे पशुः यूथेपशुः यूथपशुः देय इति। हसादौ किम्? अविकटे अविकटे (३) उरणो देय इत्यर्थे अविकटोरणः। अदसन्तादित्येव। नद्यी-दोहनः (४)।' परे तु कारः पारिभाषिकनियम इत्याहुः (५)।

---

(१) अतएव रघुनु वनेवासलताङ्ख्यातानिति भट्टिः।

(२) कप्रत्ययेन।

(३) अवीनां मेषाणां सङ्घातः अविकटः, पीलुतिलेत्यादिना कटप्रत्ययः, तत्रैव टीकायां सङ्घाते तु अविमेत इत्युक्तेः।

(४) नद्यां गोवत्सनदोर्धवरतायां दोहनो यत्र इति विद्यालङ्कारः।

(५) प्राचां देशे कारनाम्ना यत्प्रसिद्धं तस्मिन् वाच्ये सतोल्यस्याशय'। तथाच कारनाम्नि च प्राचां हलादौ। ६।३।१० इति पाणिनिसूत्रम्। प्राचां देशे यत् कार-नाम तत्र हलादावुत्तरपदे हसदन्तादुत्तरस्याः सप्तम्या अलुग् भवतीति काशिका।

३२१। पुंवत् स्त्रेः। (पुंवत् ।१।, स्त्रेः ६।)।

से स्थितस्य स्त्रेः पुंवत् स्यात् त्वे च परे। पूर्व्वपश्चिमे।

ये तु निर्विशेषणं (१) कारनाम्नीति पठन्ति, तन्मते स्तूपेशाणः इत्युदाहरणं भवति। वस्तुतस्तु विकल्पेनायं प्रतिषेधः।

३२१। पुंवत्। से त्वे चानुवर्त्तते। से स्थितस्येति—सर्व्वस्मिन् से त्वे च स्त्रेः पुंवत् स्यादित्यर्थः। तेन पूर्व्वपश्चिमे, सर्व्वस्याः प्रियः सर्व्वप्रियः। पूर्व्वपश्चिमे इत्यादौ तु न "न गौणाख्यावे"ति चे स्त्रिसंज्ञानिषेधस्तस्य जसादेरिकाराद्यादेशाभावफलकत्वादुत्तरदस्यैव स्त्रिसंज्ञानिषेधस्तेन पूर्व्वदस्य पुंवद्भावः, चसे पूर्व्वदस्य स्त्रिसंज्ञानिषेधाभावात्। अतएव पूर्व्वोत्तरे इत्यादौ नोत्तरपदस्य पुंवद्भावः, तस्य स्त्रिसंज्ञानिषेधात्। यद्वा से कर्त्तव्ये वाक्यस्थितस्य स्त्रेः पुंवद्भावः (२)। पूर्व्वोत्तरे इत्यादौ तु दिग्विशेषणत्वादापि पूर्व्वोत्तरे इत्यादि। त्वे यथा सर्व्वस्याः सर्व्वतः, सर्व्वस्यां सर्व्वत्र, एकस्या भावः एकत्वं, सर्व्वामिच्छति सर्व्वकाम्यति, पूर्व्वा पुरस्तात् इत्यादि। श्रात् समास इत्यत्र श्रग्रहणज्ञापकात् स्यादित्वे न पुंवद्भावः, तेन सर्व्वा सर्व्वे सर्व्वा इत्यादौ न स्यात्। अत्राहुः—

इदुदन्ताजाद्यदन्ताल्पाच्तरश्चेत् द्वयोर्द्वयोः।
बुधैः पूर्व्वं प्रयोक्तव्यं बहूनामपि पूजितम्॥

---

(१) प्रागदेशप्रसिद्धत्वेति विशेषणशून्यमित्यर्थः।

(२) इत्तौ से स्थितस्य स्त्रेरित्यस्य से कर्त्तव्ये स्थितस्य वाक्यस्थितस्य स्त्रेरित्यर्थः। तेन पूर्व्वोत्तरे इत्यादौ वाक्यावस्थायां उभयो पुंवद्भावे पश्चात् समासे दिग्विशेषणत्वात् पुनराप्।

समाचराणां भर्तॄणां यद्यत् पूर्व्वं क्रमेण तत् ।
संख्यानामल्परूपाणामर्थधर्म्मादिषु द्वयम् ॥
बाध्यत्वं बाधकत्वञ्च ज्ञेयं पूर्व्वापरक्रमात् ।
यथा हरिहरौ शम्भुकृष्णौ अच्युतशङ्करौ ॥
शिवगौर्य्यौ पितापुत्रौ मातृताततनूद्भवाः ।
भरणीकृत्तिके ग्रीष्मवर्षा विंशतिसप्ततौ ॥
धर्म्मार्थौ गुणवृद्धी च कामार्थौ मधुसर्पिषौ ।
आद्यन्तावर्थशब्दौ च धर्म्मादी परिकीर्त्तितौ ॥
पक्षेऽर्थधर्म्मावित्यादि शेषं ज्ञेयं प्रयोगतः (१) ।

मातृतातनूद्भवा इत्यत्र तातापेक्षया मातुरभ्यर्हितत्वम् (२)। "गर्भधारणपोषाभ्यां तातान्माता गरीयसी"त्युक्तेः। एवं मातापितराविति। युधिष्ठिरार्ज्जुनौ, विप्रक्षत्रियविट्शूद्रा इत्यादिसिद्धये "भ्राता ज्यायान्," "वर्णः क्रमेणे"ति सूत्रद्वयं कुर्व्वन्त्यन्ये। तदस्मन्मते तु जन्मवर्णकृताभ्यर्हितत्वात् सिद्धम्। एतत् सर्व्वं प्रायिकं, धूमाग्नी, लक्षणहेतू, समुद्राद्री, काकशुकौ, काशकुशवल्वज(३)मित्यादि शिष्टप्रयोगतः।

(१) द्वयोर्बहूनां वा पदानां मध्ये किञ्चित्पदं यदि इदन्त, उदन्तं, अजाद्यदन्तं, अल्पाच्तरं ( अत्र निपातनात् स्वार्थे तर' अन्यथा बहुषु पदेषु नियमो न स्यादिति तत्त्वबोधिनी ( भवेत् तदा तत् पदं बुधैर्द्वन्द्वसमासे पूर्व्वं पूर्व्वपदं कृत्वा प्रयोक्तव्यं। एवं बहूनां मध्ये यत् पूजितं, समाचाराणां भर्त्तॄणां भ्रातॄणां नक्षत्राणां ऋतूनाञ्च तथा अल्परूपाणां संख्यानाञ्च यत् यत् पूर्व्वं तत् क्रमेण पौर्व्वापर्य्यानुसारेण प्रयोक्तव्यम्। अर्थधर्म्मादिषु द्वयं प्रयोक्तव्यम् स्वेच्छयेति शेषः। एषां पूर्व्वोक्तानां बाध्यत्वं बाधकत्वञ्च पूर्व्वापरक्रमात् बोध्यम्। क्रमेणोदाहरणानि यथेति। अर्थधर्म्मादयो यथा—धर्म्मार्थौ गुणवृद्धी इत्यादि। (२) अभ्यर्हितत्वं गुरुत्वम्।

(३) बल्वजः पुं भूणे। उलुखड़ इति भाषा।

## ३२२। ऋतो ङा तत्पुत्रे सगोत्रविद्ये चे ।

( ऋतः ६।, ङा ।१।, तत्पुत्रे ७।, सगोत्रविद्ये ७।, चे ७। ) ।

---

३२२। ऋतो। स च पुत्रश्च तत्तस्मिन्, गोत्रञ्च विद्या च ते, समाने गोत्रविद्ये यस्य तत् तस्मिन्। तच्छब्देन ऋदन्तः परामृश्यत इत्यत आह—ऋदन्ते पुत्रे चेत्यादि। तथाच ऋदन्तानां चे ङा स्यात् ऋदन्तपुत्रयोः पूर्ब्बोत्तरपदयोर्विद्यायोनिसम्बन्धवाचित्वे सतीत्यर्थः। तत्रादौ योनिसम्बन्धोदाहरणमाह माता-पितराविति—माता च पिता च तौ, पिता च पुत्रश्च तौ इत्यादि वाक्यम्। एवं मातापुत्रावित्यादि। पुत्रार्थग्रहणात् पुत्री च (१) दुहितात्मजौ इति स्यादिति कश्चित्। होतापोताराविति—होता च पोता चेति वाक्यम्। एवं नेष्टा च उद्गाता च नेष्टोद्गातारौ (२) होतापोतारौ च नेष्टोद्गातारौ च ते होतापोतानेष्टोद्गातारः, समस्तयोर्द्वयोः पुनर्य्ये पूर्ब्बोत्तरव्यवस्थाया अविरुद्धत्वात्। होता च पोता च नेष्टा च होतृपोतृनेष्टारः इत्यत्र न स्यात् चे सर्व्वादिदम् आदिदं, सर्व्वान्तदमुत्तरदमिति पूर्ब्बाचार्य्यैर्व्यवस्थितम् अतः पोतृशब्देन व्यवहितत्वात् (३)। होतृपोतृनेष्टारश्च उद्गाता च ते होतृपोतृनेष्टोद्गातारः इत्यत्र तु स्यादेव, समस्तासमस्तयोर्द्वयोः

---

(१) पुत्रीच पुत्रश्च पुत्रावित्येकशेष।

(२) नेष्टा ऋत्विक्। उच्चैर्गायतीति उद्गाता, सामवेदविद्ब्राह्मण।

(३) अत्र पोतृशब्दस्य उत्तरपदत्वाभावात् होतृशब्दस्य पूर्ब्बपदत्वेऽपि तस्य ऋकारस्य ङा न स्यात्। एवं नेष्टृशब्दस्य उत्तरपदत्वेऽपि पोतृशब्दस्य पूर्ब्बपदत्वाभावात् तस्यापि ऋकारस्य ङा न स्यादिति बोध्यम्।

चे स्थितस्य ऋदन्तस्य डा स्यात् ऋदन्ते पुत्रे च परे सगोत्रविद्ये।

मातापितरौ, पितापुत्रौ, होतापोतारौ।

---

पुनर्द्वन्द्वे पूर्व्वोत्तरव्यवस्थाया अविरुद्धत्वात् (१)। होत्रादीनां ऋत्विग्विशेषवाचिनां समानविद्यासम्बन्धः कात्यायनेन दर्शितः। यथा ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छंसि-प्रस्तोतृ मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्ट्रग्नीध्र ब्रह्मण्य ग्रावस्तुदुन्नेतृ विहृणोतीति। सगोत्रविद्ये किम्? वक्तृश्रोतारौ।

अवायुदेवतार्थस्य तस्मिन्। वायुभिन्नस्य देवतार्थस्य चे डा स्यात् अवायुदेवतार्थे शब्दे परे। इन्द्रासोमौ, इन्द्रापूषणौ, इन्द्राबृहस्पती, मित्रावरुणौ, अग्नाविष्णू, सूर्य्याचन्द्रमसौ। इह देवताशब्देन येषामेकेन मन्त्रेण यैः पदैर्वा वेदे सहदानमुक्तं तेषामेव ग्रहणं, तेन ब्रह्मप्रजापती शिववैश्रवणौ स्कन्दविशाखौ रविचन्द्रौ इत्यादौ न स्यात्। तथाच रविचन्द्रावपि नोपलक्षिताविति घटकर्परः। अवायु इति किम्? अग्निवायू वाय्वग्नी।

अग्नेर्ई सोमवरुणयोः। अग्नेर्ई स्यात् सोमवरुणशब्दयोर्देवतार्थे चे। अग्नीषोमौ अग्नीवरुणौ।

लवे कुशस्य। अदेवार्थोऽयमारम्भः। कुशस्य ई स्यात् लवशब्दे परे। कुशीलवाविति वाल्मीकिप्रयोगः।

---

(१) समस्तयोरिव समस्तासमस्तयोरपि पदयोः पुनर्द्वन्द्वे पूर्व्वोत्तरपदव्यवस्था अविरुद्धैवेत्यभिप्रायः।

३२३। चगैक्यवं क्लीवम्।

(चगैक्यवं १।, क्लीवम् १।)।

चस्यैक्यं गस्यैक्यं वच क्लीवं स्यात्।

---

दिवो द्यावा परदे, पृथिव्यां दिवस् च। परदे परे दिवो द्यावा स्यात्, पृथिव्यान्तु द्यावादिवसौ च। द्यौश्च भूमिश्च द्यावाभूमी, द्यावाचमे। देवतार्थस्यैव विधानात् द्युसरसौ इत्यादौ न स्यात्। अनीवन्तभूमिशब्दस्यैव वेदे सहदानिगोक्तत्वेन देवतार्थत्वादीवन्ते न स्यात्। तथाच ऐक्यं भिन्दन् द्युभूम्योरिति सूर्यशतकम्। परदग्रहणात् सर्वान्तद एव, तेन द्युभूमिसूर्या इत्यादौ न स्यात्। द्यौश्च पृथिवी च दिवस्पृथिव्यौ, द्यावापृथिव्यौ। दिवसिति चविक्षतनिर्द्देशाद विः।

उषासोषसः। देवतार्थस्योषसः परदे परे उषासा स्यात् चे। उषासानक्तं, उषासासूर्यौ।

अग्नेर्न तौ त्रिमत्यवैष्णवे। वैष्णवभिन्ने त्रिमति परदे परे अग्नेर्डो डा च न स्यात् चे। अग्निश्च मरुच्च तौ देवते अस्य अग्निमारुतं हविः। अग्निवारुणीमनड्वाहीमालभेत। वैष्णवे तु आग्नावैष्णवं चरु। त्रिमति किम्? आग्नेन्द्रं कर्म्म।

३२३। चगे। चश्च गश्च तौ तयोरैक्य चगैक्य, चगैक्यश्च वश्च तत्। चस्यैक्यमित्यादि—ऐक्यं समाहारः, स चगयोरित्यर्थः। स च एक एव। तत्र समुदायिभ्योऽन्यः समुदाय इति न्यायादेकत्वं सिद्धमनेन तु क्लीवत्वं विधीयते। ये तु समुदायिभ्योऽनन्यः

समुदाय इत्याहुः, ते एकत्वातिदेशार्थं पृथक् सूत्रं कुर्व्वन्ति। अनेकार्थाभिधायिनः शब्दस्यैकार्थाभिधायित्वासम्भवात् (१)। वध इति। अधिस्त्रीत्यादौ पूर्व्वपदार्थप्राधान्यात् (२) लिङ्गकृतप्रयोगवैलक्षण्याभावे प्राप्ते उन्मत्तगङ्गमित्यादावन्यपदार्थत्वादन्यलिङ्गतायां प्राप्तायां वचनमिदम्।

उपज्ञोपक्रमं पे तदादित्वकथने। उपज्ञायत इत्युपज्ञा, आतोऽन्तःस्थे रिति ङः। उपक्रम्यत इत्युपक्रमः, ह्वे घञ्। उपज्ञोपक्रमान्तं पे क्लीवं स्यात्, तयोरुपज्ञोपक्रमयोः प्राथम्यस्य प्रतिपादने सति। सर्व्वज्ञस्योपज्ञा सर्व्वज्ञोपज्ञं वेदः, सर्व्वज्ञेनादावुपज्ञायत इत्यर्थः। आढ्यस्योपक्रमः आढ्योपक्रमं यज्ञः, आढ्येनादावारब्ध इत्यर्थः। मैकव्युपज्ञं यत कथनमिति भट्टिः। तदादित्वकथने किं? देवदत्तोपज्ञाप्रकारः (३)।

छाया बहूनाम्। छायान्तं पे क्लीवं स्यात्, सा चेद्बहूनां सम्बन्धिनी। वृक्षाणां छाया वृक्षच्छायं, विच्छायम् (४)। बहूनां किं? वृक्षस्य वृक्षयोर्वा छाया वृक्षच्छाया।

सङ्घे सभा, गृहेऽमनुष्यराजराजार्थाभ्यां च। सभान्तं पे क्लीवं स्यात् सङ्घे, गृहे तु मनुष्यभिन्नेभ्यो राजभिन्नराजार्थेभ्यश्च।

---

(१) ये तु समुदायिभ्यः समुदायो न भिद्यते इत्याहुस्तन्मते समुदायिनामनेकत्वात् तदभिधायकस्य शब्दस्य एकार्थाभिधायकत्वासम्भवादेकत्वं न स्यात्, अतस्तदर्थं ते एकत्वविधायकं पृथक् सूत्रं कुर्व्वन्तीत्यर्थः। अतएव "एकं समाहारे" इति संक्षिप्तसारे समासपादे २५० सूत्रम्।

(२) अधीत्याद्यव्ययपदार्थस्य प्रधानत्वादित्यर्थः।

(३) अत्र उपज्ञा ज्ञानमात्रं नत्वाद्यज्ञानम्।

(४) विः षष्ठी।

देवतानां सभा संहतिः देवतासभं, एवं दासीसभं, स्त्रीसभम् । सङ्घे किम् ? दासीनां सभा गृहं दासीसभा । गृहे तु रक्षःसभं, पिशाचसभम्, अमनुष्यशब्दस्य रक्षःपिशाचादौ रूढ़त्वात् । नृपसभम्, इनसभम् (१) । कीचकवधे तु नृपतिसभामगमद्दैपमाना इत्यत्र नृपतिशब्दो राजविशेषवाची, न तु राजसामान्यवाची । अतएव चन्द्रगुप्तसभा इत्यत्र न स्यात् । नृणां पतिर्यत्र सभायां सा नृपतिसभेति कश्चित् । अराजेति किम् ? राजसभा । गृहे किम् ? राजसभमिति पूर्व्वेण ।

उशीनराख्यासु कन्या । उशीनराख्य-जनपद-प्रतिबद्ध-ग्रामाणां संज्ञासु विषयभूतासु कन्यान्तं पे क्लीवं स्यात् । सौशमीनां कन्या सौशमिकन्थं, आह्वरकन्थम् । उशीनराख्यासु किम् ? दाक्षिकन्था ।

वा तु छाया-सेना-सुरा-शाला-निशाः । छायाद्यन्तानि पे क्लीवानि स्युर्व्वा । इक्षस्य इक्षयोर्व्वा छाया इक्षच्छायं, नृसेनं, यवसुरं, गोशालम्, श्वनिशं । पक्षे इक्षच्छायेत्यादि ।

व्य-संख्याभ्यां पथो य गे च । व्यसंख्याभ्यां परः कृतसान्तपथः क्लीवं स्यात् ये पे गे च । विशिष्टः पन्थाः विपथम्, उत्कृष्टः पन्थाः उत्पथम् । विरुद्धार्थविशब्दात् कुशब्दाद्वान्यथेति चान्द्राः । तथाच व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरः । वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषेऽदन्तपुंलिङ्गपथदर्शनात् तेनैव समासे सिद्धमिति रायः । एकश्चासौ पन्थाश्चेति एकपथं, द्वयोः

(१) इनो नृपति । इन-सूर्य्यौ नृपे पत्याविति विश्व ।

पन्थाः द्विपथं, चतुर्णां पथां समाहारश्चतुष्पथम् । आभ्यां किम् ? सत्पथः । पथ इति किम् ? अपन्थाः (१) ।

अर्द्धर्चादि-व्यविशेषणे । अर्द्धर्चादिर्व्यविशेषणं च क्लीवं स्यात् । अर्द्धर्चादिर्यथा—

अर्द्धर्चं सरकं विमान-मलिनं मानं रदं मोदकम्
धर्म्मं शर्म्म सुवर्ण-वर्ण-रुचकं शङ्खं क्रमं गोमयम् ।
वर्म्मं छत्र-पवित्र-पद्म-चषकं शेषं तमालाढ़कम्
सारं शाटक-कर्पटार्वुद-नड़ं पिन्याक-कन्दौषधम् ॥
कासार-व्रत वासराञ्जन-नखं कार्षापणं वल्कलम्
शीर्षं स्थाणु-पिधान-वेणु-वलय-ग्रीव-कोलाहलम् ।
मायोद्योग-दलान्धकार-कवचं कान्तार-देहाश्रमम् ।
पात्रीवं तितउ (२) प्रवाल-चरणं मौलं खलीनं मुखम् ॥
जीवातु-वसु-कुलिश ध्वज-मुस्त-कुन्त-
द्रोणोपवास-कुमुदोदन-शूल-काष्टम् ।
आकाश-कोश-पटलामलकावतंसं
प्रस्थ व्रण स्तवक-संक्रम सानु शृङ्गम् ॥
तन्तु-करण्डक-कुट्टिम-कच्छं सङ्गम-सम्बल-ताण्डव-पुच्छम् ।
सैन्य-च्वेड़ित-पातक-चमसं यूयं चिक्कस-करिरं दिवसम् ॥
पारावाराव्यय-शतमानं यूप-युगन्धर-दिन सन्तानम् ।
टङ्क-कमण्डलु पल्लव-षण्डं चरणं तोरण-नूपुर-मुण्डम् ॥

---

(१) अत्र मन्त्रोऽङ्कवे इत्यप्रत्ययनिषेधात् ।

(२) चालनी तितउः पुमानित्यमरः । चालनं तितउ मोक्षमिति रत्नकोष ।

मण्डप-कङ्कण-चन्दन-वंशं किशलय-दोहद-शिखर-किरीटम् ।
कम्बु-तड़ागं कुतपं तीव्रं हिङ्गु-दीपं पीठक-निष्कम् ॥
तूर्य-सैन्धव राष्ट्राणि वर्ष-निर्यास वास्रवम् ।
कटकं वारवाणोऽथ पद्मं भवनमासनम् ॥
क्लीव शरीर कुसुमं लोमारण्यं व्रणं सुखम् ।
वस्त्रं दण्डं वसन्तातपत्रं हस्तं घृतादयः ॥
केषाञ्चिद्विदुषामत्र वैदिकत्वादसम्मताः (१) ।
अर्द्धर्चादिः समाख्यातः शेषं ज्ञेयं प्रयोगतः ॥

शेषमित्यादिना कोरकतैलादयः । अर्द्धर्चादिपाठादेव सरकादीनामसेऽपि क्लीवत्वम् । व्यविशेषणं यथा—अव्ययं स्वः, परमं प्रादुरित्यादि ।

---

(१) अर्द्धर्चादीनां पुंनपुंसकलिङ्गत्व पाणिनीये दर्शितम् । तथाच अर्द्धर्चाः पुंसि च इति पाणिनिसूत्रम् । २ । ४ । ३१ । अमरसिंहेनापि पुंनपुंसकसंग्रहे अर्द्धर्चादि॰ पठित । अर्द्धर्चादय क्लीबेचेति क्रमदीश्वरसूत्रस्य समासपादे ३८९ तत्रैव गोयीचन्द्रेण "शब्दरूपान्तराचेय द्विलिङ्गता कश्चिदर्थभेदेनापि व्यवतिष्ठते । यथा पद्मपद्मशब्दो निधिवाचको पुंलिङ्गौ, जलजे तु उभयलिङ्गावित्याद्युक्ता तथाचाङ्कः लिङ्गमपिध कोकान्तरत्वादि"त्युक्तम । अर्थभेदेन लिङ्गव्यवस्था अन्यैरप्युक्ता, तथाच—"मकरन्दस्य मद्यस्य माक्षिकस्य च वाचक । अर्द्धर्चादिगणे पाठात् पुनपुंसकयोर्मधु"रिति शाश्वत ।

तर्कवागीशेन तु धर्मैक्यं क्लीवमिति क्लीवलिङ्गविधायकमाचार्य्यसूत्रमुपजीव्य अर्द्धर्चादीनां क्लीवत्वमपि भवतीत्येतत्सूचनायैव वार्त्तिकं कृत, नत्वनेनैषां द्विलिङ्गत्व निराकृतम, अन्यथा अर्द्धर्चादौ वारवाणशब्दस्य पुंस्त्वनिर्देशासङ्गते ।

घृतादय शब्दा पुंलिङ्गा इति शेष वैदिकत्वात अत्र अर्द्धर्चादौ केषाञ्चित् विदुषामसम्मता । तथाच पुंनपुंसकपक्षे "अर्द्धर्चादौ घृतादीनां पुंस्त्वाद्यं वैदिकं ध्रुवमि"त्यमर ।

## ३२४ । चैक्याच्चु-द-ष-होऽः ।

(चैक्यात् ५।, चु द-ष-हः ५।, अः १। ) ।

३२४ । चैक्या । चस्य ऐक्यं चैक्यं तस्मात्, चुश्च दश्च षश्च हश्च तत्तस्मात् । दषयोरकार उच्चारणार्थः । चैक्यादिति—द्वन्द्वसमाहारचादित्यर्थः । वाक्त्वचमिति । वाक् च त्वक् च इमे समाहृते इति वाक्त्वचम् । अस्याकारत्वस्य तत्वात् नदन्तमाविति टान्तत्वनिषेधेन विराममाश्रित्य न कड् । एवं सुवाकसम्राजं(१) श्रीस्त्रजमिति । एवं वागूर्जमित्यादि । चै किं पञ्चानां वाचां समाहारः पञ्चवाक् । ऐक्यमिति किम् ? प्रावृट्शरदौ । सर्व्वो हि द्वन्द्वो विभाषयैकवद्भवतीति न्यायाद्यदा समाहारस्तदा प्रावृट्शरदम् इति स्यादेव ।

प्राणितूर्य्यसेनाङ्गानामैक्यं चै । प्राण्यङ्गादिवाचिनां चै ऐक्यं स्यात् । हस्तश्च पादश्च हस्तपादं, शिरोग्रीवम् । "मुखनासिकाभ्यां यो निष्क्रामति स प्राणवायुः" । "ग्रीवाकुक्षिललाटेषु नित्यं स्वेदः प्रशस्यते" इति वैद्यके । "गण्डे चुम्बो ललाटाक्षिकक्षोरुभगमूर्द्धसु" इति कामशास्त्रे । 'नेत्राम्यनासिकाबाहुहृदयेभ्य इति चण्डी । इति तु दधिपय आदित्वात् सिद्धमिति । अथवा मुखसहिते नासिके मुखनासिके इति शाकपार्थिवादित्वात् मध्यपदलोपः, पुटद्वय-भेदात् (२) द्वित्वम् । एवं ग्रीवाकुक्षिसहितानि ललाटानि इत्यादौ सः, प्राणिभेदाल्ललाटादिर्व्बम । चण्डयान्तु आर्षः । तूर्य्याङ्गशब्दोऽत्र

(१) सुवाक् च सम्राट् च इयो समाहार । इच्छतीति साट् ।

(२) नासिकाया इति शेष. ।

चवर्गान्ताद्‌षहान्तात् चैकादः स्यात्। वाक् च त्वक् च द्वयोः समाहारः वाक्त्वचं, श्रीस्रजं, शमीदृषदं वाक्त्विषं पीठच्छत्रोपानहम्।

---

अर्श-आदित्वादत्वान्तस्तेन तूर्य्यवत्त्वाण्यर्थः(१)। मृदङ्गवादनं शिल्पमस्य मार्दङ्गिकः, एवं पाणविकः, अनयोस्ते मार्दङ्गिकपाणविकम्। मृदङ्गपणवमिति त्वप्राणिजातिवाचित्वात्। अन्ये तु पृथक् तूर्य्याङ्गतत्प्रवीणयो(२)र्ग्रहणं व्यतिकरनिरासार्थं(३)तेन शङ्खोशङ्खावित्यादौ न स्यात्। प्राण्यङ्गस्याप्राण्यङ्गेनापि स्यादेव, यथा—वाक्त्वचेनातिसर्व्वेणेति भट्टिरित्याहुः। सर्व्वो हि द्वन्द्वो विभाषयैकवद्भवति इति न्यायात् वाक्त्वचेनेति परे। रथेन चरन्ति रथिकाः, पदातीनां समूहाः पादातानि, भिक्षादित्वात् ष्णः, रथिकाश्च पादातानि च रथिकपादातं, हस्तिघोटकम्। हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयमित्यमरः। दृश्यन्ते पृतनाङ्गानि हस्त्यश्वरथपत्तय इति तु बहुत्वे सेनाङ्गानामैक्यनिषेधात्। पारिभाषिकसेनाङ्गग्रहणात् खरोष्ट्रशारि(४)शिरस्त्राणां न ग्रहणम्।

स्येनीष्यामनुवादे चरणानाम्। चरणः शाखा, अर्श-आदित्वादः। अनुवादे गम्यमाने चरणाध्यायिप्राणिवाचिनां चैक्यं स्यात् टीपरयोः स्येनोः प्रयोगे सति। प्रमाणान्तरावगतस्यार्थस्य

---

(१) तूर्य्यवादकपर इत्यर्थः।

(२) तत्प्रवीणस्तद्वादक।

(३) व्यतिकरोऽत्र विद्वत्सम्पर्क इति।

(४) पश्वादीना पृष्ठासनम।

शब्देन सङ्कीर्त्तनम् अनुवादः। कठाश्च कालापाश्च (१) कठकालापम् प्रत्यष्ठात्, कठाश्च कौथुमाश्च कठकौथुममुदगात्। यदा कठादीनां प्रतिष्ठोदयौ शब्देनानूद्येते तदेवेदमुदाहरणं, यदा प्रथममेवोपदेशस्तदा उदगुः कठकालापा इत्यादि। स्थेनोः किम्? अनिन्दिषुः कठकालापाः। द्यां किम्? तिष्ठन्ति कठकौथुमाः।

अक्लीवयजुःसोमयागानाम्। क्लीवलिङ्गभिन्नानां यजुर्वेदविहितसोमपानोपलक्षितयागवाचिनां चे ऐक्यं स्यात्। अर्कश्च अश्वमेधश्च अर्काश्वमेधं, साह्नाश्च अतिरात्राश्च साह्नातिरात्रम्। अक्लीवेति किं? राजसूयवाजपेये। यजुरिति किम्? इषुवज्रौ (२)। सोमयागेति किं? दर्शपौर्णमासौ।

पाठनिकटानाम्। अध्ययनेन प्रत्यासन्नानां चे ऐक्यं स्यात्। यस्तावद्वेदमर्थज्ञानं विना क्रमात् पठति स क्रमकः प्रथमपाठी, यश्च तस्यैवार्थमधीते स वार्त्तिकः, क्रमकवार्त्तिकं, पदकक्रमकं, पदानां क्रमस्य च पाठः प्रत्यासन्नः (३)। छात्रोपाध्यायं, गुरुशिष्यप्रत्यासत्तौ पाठ एव निमित्तम्। पाठेति किं? पितापुत्रौ। निकटानां किं? याज्ञिकमीमांसकौ।

अप्राणिजातीनाम्। प्राणिभिन्ननिष्ठा या जातिस्तद्वाचिनां चे

(१) कलापिना प्रोक्तं छन्दोऽधीयते कालापाः।

(२) सामवेदविहितौ।

(३) पदमधीते पदकः। क्रममधीते क्रमकः। वेदाभ्यासी पदमधीत्यैव क्रममधीते इत्यध्ययनासत्तिनिमित्ते पदकक्रमकमिति। वृत्तिमधीते वार्त्तिकः। क्रममधीत्यैव वृत्तिमधीते इत्यध्ययनासत्तिनिमित्ते क्रमकवार्त्तिकमिति इति बृहन्मुग्धबोधम्।

ऐक्यं स्यात् । आरा चर्म्मभेदिका शलाका, शस्त्री छुरिका, आरा च शस्त्री च आराशस्त्रि । धाना भृष्टयवाः, शष्कुलिः पिष्टकभेदः, धानाशष्कुलि, द्रुमशैलम् । रञ्जिता नु विविधास्तरुशैला इति तु तरुप्रधानाः शैलास्तरुशैला इति शाकपार्थिवादित्वात् । व्यक्तिपरत्वेन (१) निर्द्देशादिति परे । एवमिह कुण्डे बदरामलकानि सन्तीति । अप्राणीति किं ? विप्रक्षत्रियौ । जातीति किं ? विन्ध्यहिमालयौ । एवं रूपरसगन्धस्पर्शाः, गमनाकुञ्चने इति गुणक्रियानिष्ठाया जातेरभावात् (२) ।

भिन्नलिङ्गनदीदेशनगराणाम् । भिन्नलिङ्गानां नद्यादिवाचिनां चे ऐक्यं स्यात् । नदीनां नित्यस्त्रीलिङ्गत्वात् नदैः सह चे अस्य विषयः । गङ्गा च शोणश्च गङ्गाशोणम्, उद्देरावति (३) राढ़ामगधं वरेन्द्रीमगधम् (४) । पृथक् नदीग्रहणात् देशोऽत्र जनपदाख्यः । तेन कैलासश्च गन्धमादनश्च कैलासगन्धमादने इत्यादौ न स्यात् । मथुराकान्यकुब्जं, मथुरापाटलिपुत्रम् । नगरस्य देशत्वेऽपि ग्रहणात् ग्रामवाचिनां नगरवाचिना सह, नगरवाचिनां च ग्रामवाचिना सह न स्यात् । तेन जाम्बवश्च ग्रामः शालूकिनी च नगरी जाम्ब-

---

(१) तद्व्यक्तिविशेषपरत्वेन, न तु जातिपरतयेत्यर्थः ।

(२) यादृग्जातीयस्येति न्यायात् पार्थिववर्ज्जनाद् द्रव्यजातीयस्यैव ग्रहणं, तेन रूपरसगन्धाः गमनाकुञ्चनप्रसारणानि इत्यादौ न स्यात् इति बृहन्मुग्धबोधम् ।

(३) उद्दरो जलोत्क्षेपको नदभेदः . इरावती नदी ।

(४) वरेन्द्रो गौड़ीयराजधानी ।

वशालूकिन्धौ, शौर्य्यं नगरं केतवता ग्रामः शौर्य्यकेतवते। कश्चित्तु शौर्य्यकेतवतमित्याह। भिन्नलिङ्गाना किं? गङ्गायमुने, राढ़ावरेन्द्रौ कान्यकुब्जपाटलिपुत्रे।

अबहिष्कृतशूद्रक्षुद्रजन्तुनित्यविरोधिनाम्। एषां चे ऐक्यं स्यात्। रजकतन्त्रवायं, तक्षायस्कारं, भिल्लधीवरम्। इति मे यान्ति दिवसाः समं रजकनापितैः इति लेकशेषात्। येन भुक्ते पात्रं पुनर्गठनेन विना न शुध्यति स बहिष्कृतः शूद्रो यथा चाण्डालहड्डिपौ। दंशमशकं, यूकालिक्षम् (१)।

क्षुद्रजन्तुरनस्थिः स्यादथवा क्षुद्र एव यः।
शतं वा प्रसृतौ येषां केचिदा नकुलादपि॥(२) इति।

क्षुद्र एव य इति यत्तदस्य इत्यर्थः। अश्वमहिषं, श्वसृगालम्। नित्यविरोधिनां किं? देवासुराः, कुरुपाण्डवा इत्यत्र नैमित्तिकविरोधः।

गवाश्वादीनाम्। गवाश्वादीनां चे ऐक्यं नित्यं स्यात्।
गवाश्वादौ गवाश्वं स्यात् पुत्रपौत्रं गवाविकम्।
श्वचण्डालं गवेड़कमजेड़कम्॥

---

(१) यूकाश्च लिक्षाश्च तत्। यूका मत्कुणा उकुन् इति भाषा। लिक्षा यूकाण्डं लिकि इति भाषा। लिख्या इत्यपि।

(२) अनस्थि—यस्यास्थि न विद्यते केवलन्तु चर्म्मयोषितमांसमात्रमस्तीत्यर्थः। प्रसृतौ करकोपे येषां शतं स्यात् प्रक्षोतीति शेषः। अत्र शतशब्दो बहुलपरः, शतमहस्रापीत्यर्थः। आ नकुलादिति—नकुलपरिमाणपर्य्यन्तो जन्तुः क्षुद्रजन्तुरित्यर्थः। सर्व्वोपसंग्राहकत्वात् नकुलपर्य्यन्तमित्येतदेव कथाप्रमादरणीयमिति गोयीचन्द्रः।

तृणोलुपं स्त्रीकुमारं दासीदासं कुटीकुटम्।
भागवतीभागवतं दर्भास्तु शरपूतिकम्॥
कुब्जाद्वामनकैरातमुष्ट्रात् खरशशौ तथा।
मांसात्तु शोणितं शाट्याः पिचटं पुरुषोऽर्जुनात्।
शकृत्पुरीषं मूत्राच्च शेषं ज्ञेयं प्रयोगतः॥

गवाश्वमित्यादि निर्देशात् गोऽश्व गोऽश्वौ इत्यादौ पशुत्वाद्विकल्पः। इह केषाञ्चिद्विकल्पे प्राप्ते, दासीदासानाम् एकशेषनिरासार्थः, केषाञ्चिदप्राप्ते पाठः। श्वचाण्डालमित्यस्य नित्यविरोधित्वात् सिद्धे अविरोधार्थः पाठः। दर्भशरं, दर्भपूतिकं, कुब्जवामनं, कुब्जकैरातम्, उष्ट्रखरम्, उष्ट्रशशं, मांसशोणितं, शाटीपिचटं, अर्जुनपुरुषं, मूत्रशकृत्, मूत्रपुरीषमिति। आकृतिगणोऽयम्।

पक्षि-वृक्ष-मृग-पशु-धान्य-तृण-व्यञ्जनानां वा। पक्ष्यादिवाचिनां चे ऐक्यं स्याद्वा। हंसचक्रवाकं,धवखदिरपलाशं,रुरुपृषतं. गोमहिषं, व्रीहियवं, कुशकाशं, दधिघृतम्। येषामव्यक्तानां दधिपयआदौ पाठस्तेषां व्यक्तानामिव वैक्यम्, पक्षे हंसचक्रवाका इत्यादि। मृगाणां पशुत्वेनैव सिद्धे पृथक् ग्रहणात् मृगवाचिनां पशुत्वरवाचिना सह चे ऐक्यं न स्यात्, तेन रुरुमहिषा इत्यादि। अत्राप्राणिजातीनां नित्ये प्राप्ते विकल्पार्थः पाठः। येषां सर्व्वो हि द्वन्द्वो विभाषयैकवद्भवतीति न्यायात् विकल्पः सिद्धः, तेषां पाठो व्यतिकरनिरासार्थः (१)। तथाच "हनूमन् कीदृशं सख्यं नरवानररक्षसा"मिति भट्टिः।

(१) विरुद्धसम्बन्धोधानितरेतर एव न समाहार इत्यर्थः।

विरुद्धाद्रव्याणाम् । सहानवस्थितानां अद्रव्यवाचिनां चे ऐक्यं स्याद्वा । शीतोष्णं शीतोष्णे, जन्ममरणं जन्ममरणे । विरुद्धेति किं ? कामक्रोधौ । अद्रव्येति किं ? स्वर्गनरकौ, शीतोष्णे उदके (१) ।

अश्ववड़वा-पूर्व्वापराधरोत्तराणाम् । एषां चे ऐक्यं वा स्यात् । इहाश्वशब्देनैव पाठात् हयवड़वे इत्यत्र न स्यात् । अश्ववड़वं, पूर्व्वापरम्, अधरोत्तरम् । पक्षे अश्ववड़वे इत्यादि ।

न वेनाङ्ग-फल-क्षुद्रजन्तु-पक्षि-वृक्ष-मृग-धान्य-तृणानामब्वान्तानाम् । अब्वान्तानामेषां चे ऐक्यं न स्यात् । रथिकाश्वारोहौ बदरामलके, यूकालिक्षे, हंसचक्रवाकौ, प्लक्षन्यग्रोधौ, रुरुपृषतौ, व्रीहियवौ, कुशकाशौ ।

दधिपय-आदीनाम् । अब्वान्तानां दधिपय-आदीनां चे ऐक्यं न स्यात् ।

दधिपय-आदिर्यथा—

दधिपयसी ऋक्सामे, स्कन्दविशाखावाद्यवसाने च ।
सर्पिर्मधुनी यज्ञमेधे स्वर्गापवर्गौ च ॥
ब्रह्मप्रजापती मेधातपसी हरिकौशिकौ ।
अपवर्गोपनिषदौ परिव्राजककौशिकौ ॥
शिववैश्रवणाविध्मावर्हिषी दधिसर्पिषी ।

---

(१) अत्र शीतोष्णयन्त्र्योरुदकविशेषणत्वात् द्रव्यवाचित्वमिति ।

शुक्लकृष्णौ तथा वाङ्मनसे अध्ययनात्तपः ।
उदूखलात्तु मुषलं प्रोक्ता अष्टोनविंशतिः (१)॥

इह केषाञ्चिद्विकल्पे केषाञ्चिन्नित्ये प्राप्ते ऐक्यनिषेधः । अध्ययनात्तप इत्यादि—अध्ययनतपसी, उदूखलमुषले, इध्मावर्हिषी इति गणपाठात् घं इति ।

चावयवानामियत्तायां, वा तु सामीप्ये। चसावयवीभूतानां दानामियत्तायां गम्यमानायां प्राप्तमैक्यं न स्यात्, ससामीप्यायामियत्तायां तु वा (२)। दश दन्तौष्ठाः, सप्त मार्दङ्गिकपाणविकाः(३) उपदशा(४) दन्तौष्ठाः उपदशं दन्तौष्ठम् । उपदशा इति ह-सः, समीपिप्राधान्यात् ब्रम् । उपदशमिति व-सः, सामीप्यप्राधान्यात् क्लम् ।

इदं प्रकरणं (५) नियमार्थं, प्राण्यङ्गादीनां (६) समाहार-च एव, दधिपय-आदीनामितरेतर-च एव, अन्येषां विकल्पार्थं एवेति ।

---

(१) एषु विशाखः कार्त्तिकेयः । कौशिकः इन्द्रः । शैखिकः पिप्पलादः । वैश्रवणः कुबेरः । इध्मं इन्धनम् । बर्हिः कुश इति ।

(२) इयत्ता संख्या सीमा चेत्यर्थः । सामीप्येन सह वर्त्तमाना या इयत्ता तस्यां गम्यमानायां वा स्यात् ।

(३) उभयत्र प्राणितूर्यसेनाङ्गानामित्यनेन प्राप्तमैक्यं निषिद्धम् ।

(४) दशानां समीपे ये ते उपदशाः, नव एकादश वा इत्यर्थः ।

(५) द्वन्द्वैकत्वप्रकरणमित्यर्थः ।

(६) नियमप्रकारमाह प्राण्यङ्गादीनामिति ।

३२५। ऊर्व्वष्ठीवपदष्ठीवं धेन्वनडुहावहोरात्रः स्त्रीपुंसौ वाङ्मनसे ऋक्सामे दारगवाक्षिभ्रुवादयः। साध्या (१)।

इति चः।

---

३२५। ऊर्व्व। ऊरू च अष्ठीवन्तौ च तत्। पादौ च अष्ठीवन्तौ (२) च तत्। धेनुश्च अनड्वांश्च तौ। अहश्च रात्रिश्च सः। स्त्री च पुमांश्च तौ। वाक् च मनश्च ते। ऋक् च साम च ते। दाराश्च गौश्च तत्। अक्षिणी च भ्रुवौ च तत् इति वाक्यम्। दभेदः समाहारेतरेतराकारत्वज्ञापनार्थः। आदिना नक्तञ्च दिवा च नक्तंदिवं, द्वयोरधिकरणार्थत्वेनाधेयसापेक्षत्वादसामर्थ्येऽपि (३) सः। रात्रिश्च दिवा च रात्रिन्दिवम्, अहश्च दिवा च अहर्दिवं प्रतिदिनमित्यर्थः। ऋक् च यजुश्च ऋग्यजुषम्, उदूखलमुषलं, तण्डुलकिण्वं, चित्ररथबाह्लीकं, विष्वक्सेनार्जुनौ चित्रास्वाती भार्य्यापती पुत्रपौत्रौ केशश्मश्रू विशेषणविशेष्ये, विशेष्यविशेषणे इत्यपि कश्चित्, स्नातकराजानौ प्रतिष्ठाभिषेके शूद्राचार्य्यौ मर्य्यादाभिविधी शिरोजानू पाण्डुधृतराष्ट्रौ। उदूखलादीना मुषलादिभिः सह वे पूर्व्वनिपातः। एवं जाया च पतिश्च जम्पती

---

(१) निपात्या इत्यर्थः। (२) अष्ठीवान् जानु।

(३) नक्तं दिवा इत्युभयो सामान्येन रात्रौ दिने इत्यधिकरणवाचकत्वम्, ततश्च कोऽधिकरणवाची कोऽत्रागमिवाधेयमपेक्षते इति सापेक्षत्वम्। तस्मात् सापेक्षमसमर्थं भवतीति न्यायात् समासप्राप्त्यभावेऽपि निपातनात् समास इति दर्शयतितोऽर्थः।

दम्पती। जायाया जन्दम्वादेशौ वा। पक्षे जायापती। माता च पिता च मातरपितरौ। मातुर्मातरादेशो वा। पितुश्च पितर इति क्षपणकस्तन्मते मातरपितराभ्यां मातरपितरयोरिति। पक्षे मातापितरौ इत्यादिसंग्रहश्चैवं (१) शिष्टप्रयोगानुसारेण बोध्यम्। अहोरात्र इति निर्देशात् अहोरात्रादीनां पुंस्त्वमपि निपात्यते।

अहोरात्रादिर्यथा—

अहोरात्रादिषु प्रोक्ता रात्राह्नान्ता अहान्तकाः।
पुण्याह-सुदिनाहाभ्यां विना(२)र्द्धर्चादयस्तथा।
सूक्तवाकोऽनुवाकश्च शेषं ज्ञेयं प्रयोगतः॥

अहश्च रात्रिश्च अहोरात्रावपि इतरेतरयोगात्, तथाच अहोरात्राविमौ पुण्यौ इति। एवं पूर्व्वरात्रः, पूर्व्वाह्णः, अपराह्णः, द्व्यह्नः, त्र्यह्नः इत्यादि। पुण्याहसुदिनाहयोर्वर्ज्जनात् पुण्याहं, सुदिनाहम्। अर्द्धम् ऋचः अर्द्धर्चः, सरकः (३) इत्यादि। एषां पूर्व्वेण क्लीवत्वञ्च। अर्द्धर्चादेराकृतिगणत्वात् पुण्यरात्रं प्रियागमे इत्यादि। वचधातोर्घञ् वाकः, अनुक्रान्तो वाकोऽनया अनेन कुलेन वा अनुवाकः, एवं सूक्तवाकः इत्यादि। एषां पाठसामर्थ्यात् द्व-स-भिन्नसेऽपि पुंस्त्वम् (४)।

---

(१) अर्द्धर्चादिगणावशिष्टम्।

(२) पुण्याह-सुदिनाहाभ्यां विना अहान्तका इत्यर्थः।

(३) सरक ऐश्वर्यं मद्यम्।

(४) अतएव पूर्व्वोदाहरणे बहुव्रीहिणा श्लोकोक्तयोर्विधेयत्वेऽपि पुंस्त्वं दर्शितमिति।

## एकशेषप्रकरणम् ।

पुंस्त्रियोस्त्यभिन्नयोः शिष्यो ना । त्यमात्रकृतभेदयोः पुंस्त्रियोः पुमान् शिष्यते । देवश्च देवी च देवौ । गौरयं गौरियम् इमौ गावौ इत्यत्र त्यकृतभेदाभावेऽपि अर्थकृतभेदात् स्यादेव । त्यभिन्नयोः किम् ? हरगौर्य्यौ, इन्द्रेन्द्राण्यौ(१) । लिङ्गमात्रकृतभेदे विधानात् इन्द्राविति कश्चित् । तथाच—वरुणाविन्द्रौ भवौ सर्व्वौ मृडौ (२) इत्यादि ।

गोत्रयूनोर्गोत्रम् । त्यभिन्नयोर्गोत्र-युव-त्यान्तयोर्गोत्रत्यान्तं शिष्यते (३) । गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ । गोत्रयूनोः किम् ? गर्गगार्ग्यायणौ गर्गगार्ग्यौ । त्यभिन्नयोः किम् ? गार्ग्यवात्स्यायनौ । भगवित्तस्यापत्यं भागवित्तिः गोत्रेऽदन्तात् ष्णिः । भगवित्तस्यापत्यं युवा, कुत्सा-सौवीरगोत्रात् ष्णिकः भागवित्तिकः (४) । भागवित्तिश्च भागवित्तिकश्च भागवित्तिभागवित्तिकौ इत्यत्र न स्यात्, त्यातिरिक्तकुत्सार्थकृतभेदात् । भागवित्ती इति कश्चित् ।

स्त्री पुंवच्च । त्यभिन्नयोर्गोत्रयूनोर्गोत्रत्यान्ता स्त्री शिष्यते, स्त्रियाः पुंवद्भावश्च । गार्गी च गार्ग्यायणश्च गार्ग्यौ, गार्ग्यौ च

(१) पूर्वत्र प्रकृतिभेदात्, परत्र ङीप्प्रत्यय-कृत भेदेऽपि व्याकरणान्तरेषु प्रत्यय-भिन्नत्वात् तत्कृतभेदाच्च स्यादित्यर्थः ।

(२) वरुणश्च वरुणानी च इत्यादौ एकशेषः ।

(३) त्यभिन्नयोः प्रत्ययमात्रकृतभेदयो गोत्रार्थ-युवार्थकृत-तद्धितप्रत्ययान्तयोः । गोत्रयुवार्थयोर्भेदस्तु तद्धितपादस्य प्रथमप्रकरटीकायां द्रष्टव्य ।

(४) कुत्सार्थे सौवीरगोत्रात् ष्णिको भवतीति तद्धितपादे ष्णोटीक इति सूत्रस्य टीकायां वक्ष्यति । भागवित्तिको जाल्मइत्यर्थः ।

गार्ग्यायणी च गर्गाः (१) दाक्षी च (२) दाक्षायणश्च दाक्षी। त्वभिन्नयोः किम्? गार्गीवात्स्यायनौ।

क्लीबाक्लीबयोः क्लीबं वा तु क्वच। त्वभिन्नयोः क्लीबाक्लीबयोः क्लीबं शिष्यते तस्मात् क्वच वा। शुक्लश्च शुक्ला च शुक्लश्च शुक्लं, पक्षे शुक्लानि। त्वभिन्नयोः किम्? सितधवलशुक्लानि, हिमहिमान्यौ।

भ्रातृस्वस्रोः पुत्रदुहित्रोर्भ्रातृपुत्रौ। भ्रातृस्वस्रोर्भ्राता पुत्रदुहित्रोः पुत्रः शिष्यते। भ्राता च स्वसा च भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ।

अतरुणानेकखुर-ग्राम्यपशुसंघेषु स्त्री। अतरुणानामनेकखुराणां ग्राम्यपशूनां सङ्घेषु स्त्री शिष्यते। इमे अजाश्च इमा अजाश्च इमा अजाः। इमे गावश्च इमा गावश्च इमा गावः। अतरुणेति किम्? इमा वत्साश्च इमे वत्साश्च इमे वत्साः, इमा वर्कर्यश्च इमे वर्कराश्च इमे वर्कराः (३)। अनेकखुरेति किम्? इमे अश्वाश्च इमा अश्वाश्च इमे अश्वाः। ग्राम्येति किम्? इमा रुरवश्च इमे रुरवश्च इमे रुरवः। सङ्घे किम्? गौश्चायं गौरियम् इमौ गावौ।

त्यदाद्यन्ययोस्त्यदादिः। त्यदाद्यन्ययोस्त्यदादिः शिष्यते। स्यश्च चैत्रश्च त्यौ। स च मैत्रश्च तौ। यश्च विप्रश्च यौ। त्यदादीनां यत् परं तत् शिष्यते। स्यश्च स च तौ, स च यश्च यौ, यश्च एष

(१) अत्र बहुत्वे गर्गवत्सविदादीत्यनेन ष्यङ् लुक्।

(२) दक्षस्यापत्यं दाक्षिस्तस्यापत्यं स्त्री दाक्षीति।

(३) बर्करस्तरुणः पशुरित्यमरः।

च एतौ, स च त्वञ्च युवां, स च त्वञ्च अहञ्च वयं, स च कश्च कौ। त्यदादिर्यथा—त्यद्तद्यद् इदम् अदस् एतद् एक द्वि युष्मदस्मद् भवत् किम् इति।

सरूपाणामेकशावेकः। तुल्यरूपाणामेकः शिष्यते एकस्यां शौ। हंसश्च हंसश्च हंसौ, हंसश्च हंसश्च हंसश्च हंसाः। गार्ग्यश्च गार्ग्यश्च गार्ग्यश्च गर्गाः। माषो व्रीहिः (१) माषो मूर्खः माषो मापक(२)स्ते माषाः। अक्षो विभीतकः (३) अक्षो रथावयवः अक्षः पाशकस्ते अक्षाः। पादाः रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः। एषामर्थभेदेऽपि सारूप्यमेकानुपूर्व्वीकत्वात् (४)। इह सरूपाणां शौनामेकशेष इति मते तु हंस हंस औ, हंस हंस हंस अस् इति स्थिते एकस्यामौ-आदिशावेकः शिष्यते अर्थादन्ये निवर्त्तन्ते। सरूपसमुदायात् जातायामेकस्यां शौ परतः एकः सिद्धः शिष्टोऽर्थवान् समुदायमभिधत्ते।

यदुक्तम्—

सरूपसमुदायाद्धि विभक्तिर्या विधीयते।
एकस्तत्रार्थवान् सिद्धः समुदायार्थवाचकः॥ इति।

हंसश्च हंसश्च हंसावित्यादि बालव्युत्पत्तये यत्नेनार्थकथनं,

---

(१) मापकलाइ इति भाषा। (२) सुवर्णादिमानविशेषः।
(३) बयेड़ागाछ इति भाषा।
(४) एषा अभिन्ना आनुपूर्वी वर्णानुक्रमो येषां तेषां भावस्तत्त्वात्। अतएव अर्थभेदे हि मात्रा समानरूपता विद्यते एवेत्युक्तं बोधोपदेव।

अत्रा(१)न्योन्यार्थानुप्रवेशात् एकत्वाभावात् द्वे भवत एव न तु क्रमिति। यदुक्तम्।

सहभावविवक्षायां वृत्तिर्द्वन्द्वैकशेषयोः।

क्रमेणार्थप्रतीतौ हि न स्यात् द्विवचनादिकमिति (२)॥

त्यन्तानामेकशेष इति मते तु क्तिर्विभक्तिः। विभज्यते स्वर्थोऽनयेति विभक्ति कारकं, तथाच एकस्मिन् कारके विवक्षिते सति सरूपाणामेकशेष इत्यर्थः। एवञ्च सर्व्व (३) सिध्यति। किन्तु वृक्षयोर्वृक्षाणां वा पुष्पमित्यादावेकत्वेऽपि सरूपाणामेकशेषनिर्देशादेव स्यात् (४)।

---

(१) इन्द्रश्च इन्द्रश्च इन्द्राविन्द्रावित्यादौ विभक्त्यन्तेनार्थकथनस्य बालव्युत्पत्तिप्रयोजनकत्वमनादृत्य यदि विभक्त्यन्तानामेवैकशेषः स्वीक्रियते तदा पूर्व्वपदलोपे एकवचनान्तमेवोत्तरपदं शिष्यते इति कथं न वक्तुं शक्यते इत्याशङ्क्याह अत्रेति। अत्र—विभक्त्यन्तानामेकशेषस्थले। अन्योऽन्यार्थानुप्रवेशात्—सरूपाणां पूर्व्वपूर्व्वपदार्थानां चरमपदार्थे सम्बन्धसत्त्वात्। एकत्वाभावात्—एकस्यैव चरमपदार्थस्य द्विबहुसरूपपदार्थवाचकत्वेनैकवचनायोगात्।

(२) सहभावविवक्षायां साहित्यसम्बन्धे वक्तुमिष्टे सति द्वन्द्वैकशेषयोर्वृत्तिर्व्यापारः। तत्र द्वन्द्व एकशेषो वा भवतामित्यर्थः। हि यस्मात् क्रमेणार्थप्रतीतौ—द्वन्द्वैकशेषघटकीभूतपदानां पृथगर्थप्रतीतौ साहित्यसम्बन्धाविवक्षायामिति यावत्। द्विवचनादिकं न स्यात् साहित्यसम्बन्धेन परस्परार्थानुप्रवेशस्यैव द्वित्वादिनियामकत्वादित्यर्थः। अत्र सहभावविवक्षाया आवश्यकत्वमेव, अन्यथा पय पयो नयतीत्यत्र गौणमुख्यकर्मत्वादेकशेषापत्तेरित्युक्तम्।

(३) सरूपाणां लिङ्गानामेकशेष सरूपाणां विभक्त्यन्तानामेकशेष इति मतद्वयमित्यर्थः।

(४) वृक्षयोर्वृक्षाणां वा पुष्पमिति विग्रहवाक्ये पुष्पमित्येकवचनान्तपदं द्विबहुवचनान्तेन षष्ठ्यन्तेन सह कथमन्वेतीत्याशङ्क्याह किन्त्विति—अत्र पुष्पमित्येकशेषनिदर्शनमेव "सरूपाणामेकशेष एकविभक्ता"विति १।२।६४। पाणिनीयसूत्रे सरूपाणामेकशेषविधानसामर्थ्यादेव स्यादित्यर्थः।

## बहुव्रीहि-समासः । (ह)

पीतमम्बरं यस्यासौ पीताम्बरो हरिः । नीलमुज्ज्वलं वपुर्यस्यासौ नीलोज्ज्वलवपुः कृष्णः ।

(१०८) पुम्वोऽदान्ते न इति । हरिभाविणी हरिभाविनी, श्रीभावेण श्रीभावेन । रम्यविणा, श्रीकामेण । रम्यपक्केन, रम्ययूना, रम्याह्ना ।

---

न च एकशेष स-विशेष इति वाच्यं, पथिभ्याम् ऋग्भ्यामित्यादौ अकारत्व प्रसङ्गात् । स-विशेष एकशेष इति कश्चित् । तन्मते पथिभ्याम् ऋग्भ्यामित्यादौ तु सान्तविधेरनित्यत्वात् इति चेत् युञ्जावित्यत्र युजाविति स्यात् । पूर्व्वोक्तानामेकशेषमते (१) द्वे च दानि च तानि दानि इत्यादौ तु प्रयत्नेनार्थकथनं, तथाच कणादभाष्ये "स्वस्वैकत्वेभ्योऽनेकबुद्धिसहितेभ्यो निष्पत्तिरपेक्षाबुद्धे-स्तद्विनाशाद्विनाश" इति एकत्वे च एकत्वानि च इत्येकशेषं विधाय व्याख्यातमुदयनाचार्य्यैरिति । एकत्वौ किं ? ब्राह्मणाभ्यां ब्राह्मणाभ्यां दत्ता गौः । व्यक्तौ व्यक्तौ पदार्थे (२) प्रत्येकं शब्दाभिनिवेशात्(३) यावन्तस्ते पदार्थास्तावतां शब्दानां प्रयोगे प्राप्ते एकशेषो विधीयते । तथाच प्रत्यर्थं शब्दाभिनिवेश इति भाष्यम् । एवं पञ्च-पूनी च (४) पञ्चपूनी च पञ्चपूनी च पञ्चपून्यः इत्यादि स्यात् ।

---

(१) सरूपाणां सौनामेकशेष इति मते इत्यर्थः ।

(२) प्रतिव्यक्ति पदार्थत्वे सतीत्यर्थः ।

(३) शब्दभेदोऽनियमात् ।

(४) पूञ् पुनो च, पूञादिना इति भाषा, पाणिनिविशेष ।

इह समानलिङ्गानां सरूपाणामित्येव, तेन माता जननी, माता (१) धान्यस्य, तौ मातृमातारौ इत्यादौ न स्यात्।

समार्थानाञ्च। समार्थानां विरूपाणामेकः शिष्यते। वक्रदण्डश्च कुटिलदण्डश्च तौ वक्रदण्डौ कुटिलदण्डौ वा।

मातापित्रोः श्वश्रूश्वशुरयोः पितृश्वशुरौ वा। मातापित्रोः पिता, श्वश्रूश्वशुरयोः श्वशुरः शिष्यते वा।. माता च पिता च पितरौ, मातापितरौ। श्वश्रूश्च श्वशुरश्च श्वशुरौ श्वश्रूश्वशुरौ। इति चः (द्वन्द्वसमासः)।

इदानीं ह-सं विशेषतो निरूपयन्नाह पीताम्बर इत्यादि। अताह:—

अप्रथमान्यार्थानाम् एकार्थानां हः। द्वादिस्यन्तान्यार्थपराणां समानाधिकरणानां दानां हः स्यात्। आरूढो वानरो यं स आरूढवानरो वृक्षः। आरूढा वृक्षा बहवो वानरा यं स आरूढबहुवानरो वृक्षः। निर्जितः कामो येन स निर्जितकामः, उपनीतं भोजनं यस्मै स उपनीतभोजनः, एवम् उपनीतबहुभोजनः। निःसृतो जनोऽस्मात् स निःसृतजनः, एवं निःसृतद्विजनः। शुक्लः पटो यस्य स शुक्लपटः, एवं शुक्लमहापटः। उषितो विहगो यस्मिन् स उषितविहगः, एवम् उषितबहुविहग इत्यादि। उच्चैर्मुखः, नीचैर्मुखः, उद्बाहुरित्यादौ उच्चैरादीनाम् असत्त्ववाचित्वात् (२) सामानाधिकरण्याभावेऽपि गमकत्वात् हः।

---

(१) मातीति माधातोस्तृन्, परिमाणकारीत्यर्थः।

(२) गुणिवाचकत्वाभावात्।

स्वरादिपठितत्वात् (१) सामानाधिकरण्यमभ्युपगन्तव्यमिति कश्चित्। अस्तिक्षीरा नास्तिदोष इत्यादौ अस्तिनास्तिशब्दौ त्यन्तप्रतिरूपकनिपातौ। प्रान्तान्यार्थानान्तु हृष्टे देवे गतः (२)। एकार्थानां किम्? पञ्चभिर्भुक्तमस्य। पञ्च भुक्तवन्तोऽस्य इत्यत्रानभिधानात् न स्यात्। तथाच—कृत्तद्धितसमासाश्चाभिधानगम्या इति भाष्यम्।

संख्यादूराधिकासन्नाव्यानां संख्येयसंख्यया। संख्यावाचिनामदूरादीनां व्यानाञ्च संख्येयवृत्तिसंख्यावाचिना सह हः स्यात्। द्वौ वा त्रयो वा द्वित्राः, त्रिचतुराः, पञ्चषाः, सप्तकोटाः। एकद्वान् दिवसांस्तिष्ठेत्। सप्ताष्टैर्दिनैर्यास्यति। वार्थं एवार्यं सः। वार्थोऽत्र संशयो न विकल्पः, संशयस्यैव उभयपक्षपरामर्शत्वेन व्विषयत्वात्। अदूरे दशानाम् इमे अदूरदशाः (३) अधिका दशानाम् इमे अधिकदशाः, आसन्ना दशानाम् इमे आसन्नदशाः, समीपे दशानाम् इमे उपदशाः, उपविंशाः। यदा समीपिप्राधान्यं तदा ह सः, यदा समीपप्राधान्य तदा य-स इति। संख्येय इति किम्? अधिका विंशतिर्गवाम्।

दिङ्नाम्नां विदिशि (४)। दिङ्नाम्नां हः स्यात् दिङ्मध्यायाम्। पूर्व्वस्याश्च दक्षिणस्याश्च दिशोर्मध्ये या दिक्, सा पूर्व्व-

---

(१) स्वरादिपाठेनाव्ययत्वादव्ययानामा[illegible]र्थः।

(२) प्रथमं प्रधानं पदं यस्यार्थः अन्यपदार्थ-पदार्थातिरिक्त पदार्थो येषां तेषामेकार्थानामपि समासो न स्यादिति दर्शयति हृष्टे इति।

(३) अत्र एकादश वेदितव्यं। एवं परत्र।

(४) दिशोर्मध्ये विदिक् स्त्रियामित्यमरः।

दक्षिणा, एवं पूर्व्वोत्तरा, उत्तरपश्चिमा। दिङ्नामग्रहणात् यौगिके मा भूत् (१)। तेन ऐन्द्राश्च कौवेर्य्याश्च दिशोर्मध्ये या दिक् इत्यत्र न स्यात्।

तौस्यन्तयोः सरूपयोर्युद्धे व्यतीहारे। परस्पर-प्रहरणादिरूप-क्रियाकरणं व्यतीहारस्तत्र तुल्यरूपयोस्तौस्यन्तयोर्युद्धे वाच्ये इः स्यात्। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं, दण्डादण्डि। केशेषु केशेषु गृहीत्वा आहत्य वा इदं युद्धं वृत्तं, केशाकेशि। वृत्त-मित्यन्तर्भावितअर्थत्वात् वर्त्तितमित्यर्थः। अन्यथा भिन्नार्थत्वात् क्वाप् न स्यात् (२) अनभिधानात्। युद्धमिति उक्तार्थम्। क्षत्रियेण क्षत्रियेण च प्रहृत्य इदं युद्धं वृत्तम् इत्यादौ तु ष-त्रान्तस्य न स्यात्। एवं प्रहरणाकर्षणग्रहणान्यक्रियाव्यतीहारे न स्यात्। तेन रथे च रथे च स्थित्वा इदं युद्धं वृत्तमिति। सरूपयोः किम्? हलैश्च मुषलैश्च प्रहृत्य युद्धं वृत्तमित्यादौ न स्यात्। युद्धे किम्? हस्तेन च हस्तेन च गृहीत्वा इदं क्रीड़नं सख्यं वा वृत्तम्।

तुल्ययोगे सहस्य त्रान्तेन। तुल्ययोगे वर्त्तमानस्य सह-शब्दस्य त्रान्तेन सह इः स्यात्। पुत्रेण सह आगतः सपुत्रः, सच्छात्रः। इहोभयोस्तुल्यमागमनम्। तुल्ययोगे किम्? "सहैव दशभिः पुत्त्रैर्भारं वहति गर्द्दभी"ति, विद्यमानैः पुत्त्रैरित्यर्थः। *सपक्षः सधर्म्मा सश्लोकः सकर्म्मा सदर्पः समद इत्यादौ तु नोक्ते-*

---

(१) ऐन्द्र्यादि यौगिके दिङ्वाचि वाच्ये सतीत्यर्थः।

(२) अन्यथा अन्तर्भावितअर्थतां विना।

मुंख इतिवत् पूर्व्वेणैव सः (१)। तथाहि सह विद्यमानौ पचावस्य इत्यादि वाक्यम् । तुल्यार्थे प्रायिकत्वात् स इति परे । प्रशस्तान्यार्थत्वादप्राप्ते सूत्रचतुष्टयमुक्तम् (२)।

विशेषण-स्त्रि-क्तान्तं प्राक् । एतानि पूर्व्वाणि स्युर्हे । पीताम्बरः, चित्रगुः । कुलालकर्त्तृको घटः, गिरिप्रधानो देशः, समुद्रान्ता मही, विप्रपूर्व्वा वर्णाः, चूतादयो वृक्षाः, कर्म्मपराः सन्तः, हूतोत्तरा क्रूपाः, घृतोत्तरः सूपः, कृष्णस्वामिका गोपा इत्यादौ तु कुलालादिषु षत्वादीनां साध्यत्वेन प्राधान्याद्विशेष्यत्वम्(३) अतो न प्राग्भावः (४)। सर्व्वश्वेतः, सर्व्वकृष्णः। यत्र गुणशब्देन सह सः सोऽस्य विषयः (५) द्रव्यवाचिना सह से विशेषणत्वेनैव सिद्धत्वात् । कृतसूक्ष्मकटः (६)। कृतसर्व्वयुक्तः। स्त्रिविशेषणाभ्यां सह यत्र सः सोऽस्य विषयः । ज्ञातराम इत्यादौ ज्ञातादेर्विशेषणत्वेनैव सिद्धत्वात् ।

---

(१) सहमद्व्य साहित्यमर्थः अतः सामानाधिकरण्याभावेऽपि पूर्व्वनियमेन गमकत्वात् सरादिपाठाद्वा समास इत्यर्थः ।

(२) संख्यादूरेत्यादि तुल्ययोगे सहशब्देन सूत्रचतुष्टयमित्यर्थः ।

(३) सामान्यतः कर्म्मप्रधानादिपदानां विशेषणत्वेन पूर्व्वनिपातः कुलालादीनाञ्च परनिपात उचितः, इह तु कुलालादिष्वित्यादिसूत्रया कर्म्मप्रधानादीनामेव विशेष्यत्वम् । यतश्च इह साध्ये साध्यं प्रधानं, यदुक्तं—प्रधानं हि विशेष्यं स्यात् अप्रधानं विशेषणमिति ।

(४) कर्म्मप्रधानादि शब्दानामिति शेषः ।

(५) अत्र श्वेतादयो गुणवचना सर्व्वमत्यादिपदार्थाः ।

(६) ज्ञातस्य विशेषणत्वेनैव सिद्धे पुनर्ग्रहणात् ज्ञातविशेषेऽप्यद्य कतादि ज्ञानस्यैव प्राग्भाव इत्यनेनोदाहरणेन सूचितम् ।

स्लिसंख्ययोः संख्या संख्यानां त्वल्पाः। स्लिसंख्ययोर्द्वे मध्ये संख्या प्राक् स्यात्, संख्याना त्वपेदल्परूपा। द्वावन्यौ यस्मात् स द्व्यन्यः, त्र्यन्यः। सप्त गावो यस्य सप्तगुरित्यादौ तु विशेषणत्वात् पूर्व्वेणैव। द्वित्राः, पञ्चषाः।

स्यन्तात् पद्मादिः क्तान्ताश्च प्रहरणार्थः। ङे पद्मादिः स्यन्तात् प्राक् स्यात्, प्रहरणार्थस्तु ङीक्तान्ताभ्याम्। नाभौ स्थितं पद्मं यस्य स पद्मनाभः, गर्भे स्थिता दुहिता यस्याः सा दुहितृगर्भा, पद्महस्तः, कमण्डलुपाणिः, गडुकण्ठः, वक्षःशिरा (१) इत्यादि। पद्मादिः किम्? कण्ठेकालः, उरसिलोमा, धर्म्मेष्वसयः। दण्डपाणिः शूलपाणिः चक्रपाणिः अस्युद्यत इत्यादि। प्रायिकोऽयं पूर्व्वनिपातः। तथाच "तमुद्यतनिपातासिं प्रत्युवाच जिजीविषु"रिति भट्टिः। "उद्गूर्णलोष्टलगुडैः (२) परितोऽनुविद्ध"मिति माघः।

क्तान्ताज्जातिकालसुखादयः। जातिकालसुखादयः क्तान्तात् प्राक् स्युः। सारङ्गजग्धी, पलाण्डुभक्षिती। मासजाता। सुखजाता, दुःखजाता, अलीकजाता इत्यादि। प्राप्तोदकः, उपाहृतपशु (३) रिति तु प्रायिकत्वात्।

आहिताग्न्यादिषु वा। क्तान्तः पूर्व्वनिपातो वा स्यात्। आहिताग्निः, जातपुत्रः, जातदन्तः, जातश्मश्रुः, पीततैलः, पीतघृतः, ऊढभार्य्यः, गतार्थः, पक्षे अग्न्याहित इत्यादि।

---

(१) गडुर्गलगण्डः। उरो वत्सं वक्षं च।
(२) उद्गूर्णेति गुर् ञी वि उद्यमे इत्यस्मात् क्तः।
(३) उपाहृतो देवहिंसा कल्पस्य इत्यर्थः।

ः स्यन्तोपमानोदेर्दस्य लोपो दे। स्यन्तोपमानपूर्व्वस्य (१)दस्य लोपः स्यात् दे परे द्वे। कण्ठेस्थित इति बहुलं पे कृदन्ते इति स्या अलुक्, कण्ठेस्थितः कालोऽस्य कण्ठेकालः, उरसिस्थितानि लोमानि अस्य उरसिलोमा। उष्ट्रमुखमिव मुखं यस्य स उष्ट्रमुखः। उपमानावयवस्यैवोष्ट्रादे(२)रुपमानत्वमुपचारात्। ये तु लोपं न कुर्व्वन्ति ते वैयधिकरण्येऽपि कण्ठेकाल इत्यादौ इमुक्ता स्थितादिपदं हस्तावन्तर्भूतमित्याहुः। एवं उष्ट्रमुखमित्यादौ तु उष्ट्रादिशब्देन लक्षणया मुखमुच्यते। एवं परत्रापि बोद्धव्यम्।

ः विकारसमुदायष्ठ्यादे। विकारसमुदाययोर्विहिता या षौ तदन्तपूर्व्वस्य लोपः स्याद्दे (३)। सुवर्णानां विकारः सुवर्णविकारः, सुवर्णविकारोऽलङ्कारोऽस्य सुवर्णालङ्कारः। केशसमूहश्चूड़ा अस्य केशचूड़ः। विकारसमुदायेति किम्? राजदुहिता भार्य्या यस्य स राजदुहितृभार्य्यः। शास्त्रधन इत्यत्र शास्त्रशब्देन लक्षणया शास्त्रज्ञानमुच्यते।

प्रादेः कृदन्तस्य वा। प्रादेः कृदन्तस्य लोपः स्याद्वा। प्रपतितं पर्णं यस्मात् स प्रपर्णः, प्रपतितपर्णः।

नञोऽस्त्यर्थानाम्। नञः परेषामस्त्यर्थवाचिनां दानां द्वे लोपः स्याद्वा दे परे। अविद्यमानः पुत्त्रोऽस्य अपुत्त्रः, अविद्यमानपुत्त्रः।

---

(१) सप्तम्यन्तपदं उपमानपदञ्च पूर्व्वं यस्येत्यर्थः।

(२) उपमानम् अवयवो यस्येति विग्रहः।

(३) विकारशब्दे समूहवाचकशब्दे च परे या षष्ठी भवति, तदन्तपदं पूर्व्वं यस्य तादृशपदस्य लोपः स्यादित्यर्थः।

३२६। नञोऽनौ वाज्झसोः।

(नञः ६।, अनौ १॥, वा ।१।, अच्-हसोः ७॥)।

नञोऽचि परे अन् हसे च अः स्यात् से वा।

---

रथ्यविणेत्यादि—रथ्यो विः पक्षी यत्र वने तेन। स्त्रियां स्थितः कामोऽस्य तेन। हरिं भावयितुं शीलमस्याः सा। दाना-भ्यैक्यविधानेऽपि धात् क्रीतादित्यादिज्ञापकात् स्याद्युत्पत्तेः प्रागपि क्तानां स इति। तथाच गतिकारकोपपदानां (१) कृद्भिः समास-वचनं प्राक् सुबुत्पत्तेरिति भाष्यम्। स्त्रीभावेण इति—स्त्रीस्थितो भावो यस्येति वाक्यम्।

३२६। नञो। अन् च अश्च तौ। अच्च हस् च तौ तयोः। नास्यन्त इत्यादि—अन्तो नाशः। च्युतं च्युतिः। इदं नित्यमिति परे। तेषान्तु नान्त-नच्युतावसन्नातौ। अस्य सामान्य-स एव विषयः, हे पूरणीत्यत्र हग्रहणात्। तेन अब्राह्मणः अनीश्वर (२) इत्यादावपि स्यात्। वाशब्दस्य व्यवस्थावाचित्वात्—

अगः प्राणिनि नित्यम्। न गच्छति इति अगो वृषः, शीतेन जड़ीकृत इत्यर्थः। अप्राणिनि तु शैलवृक्षौ नगावगौ।

त्याद्यन्तेऽन् चाक्षेपे। त्याद्यन्ते परे अनौ स्यातां नित्यम् आक्षेपे गम्यमाने। अपचति जाल्म. (३) अनैधस्व पाप इति। आक्षेपे किम्? न पचति चैत्रः।

---

(१) गतिरुपसर्गः। (२) न ईश्वर इति विग्रहः।

(३) मूर्ख धर्मं न आमातीति निन्दा।

नास्यन्तो यस्यासौ अनन्तः नान्तः। अच्युतः नच्युतः।

---

न नचत्रादिषु। नचत्रादौ नञोऽनौ न स्याताम्। नचत्रादिर्यथा—

नक्षत्रं नमुचिर्नाको नपान्नक्रो नपुंसकम्।
नवेदा नकुलो नभ्राट् नासत्या नख इत्यपि॥

न चरति न क्षीयते वा नचत्रं चरक्षोरत्रे चरा- देशो मनीषादित्वात्। न मुञ्चतीति नमुचिः मुचधोः किः। नास्त्यकं दुःखं यत्र नाकः। न पातीति नपात् पाधोः शट्। तनूनपात्नं प्रजुहोतीति भट्टिः। न पातयतीति नपादिति क्विबन्त इति कश्चित्। न क्रामतीति (१) नक्रः क्रमधोर्गमादित्वात् डः। न स्त्री न पुमान् नपुंसकं मनीषादित्वात् स्त्री दस्य लोपः, अक- विधानञ्च। न वेत्तीति नवेदाः विदधोरस्। नास्ति कुलमस्य नकुलः। न भ्राजते नभ्राट्। सत्सु साधवः सत्याः न सत्या असत्या न असत्याः नासत्याः। नित्यं द्विविषय एवायमिति परे। त्रिकाण्डे तु नासत्यौ देवभिषजौ इति सूर्य्यपत्नी संज्ञा तस्याः नासाविनिःसृतत्वात् व्युत्पत्त्यन्तरेणेति। नास्ति खमिन्द्रिय- मस्य नखः। नैकं यशो यस्य स नैकयशाः, नैकगुणाः, नैक- कीर्त्तिरित्यादौ त्रयाणां दानां द्वे नञोऽनादेशो न स्यात्, परदयोरज्झसोर्विधानात्, ये सर्व्वोत्तरस्यैवोत्तरदत्वात्।

---

(१) दूरस्थमिति शेषः।

३२७ । महत्त्यैकार्थे जातीयघासकरविशिष्टे तु
तौ च ।

(महत् ।६।,त ।१।,आ ।१।, एकार्थे ७, जातीय—विशिष्टे७, तु ।१।, तौ ।१।, च ।१।) ।

महतस्त आ स्यात् एकार्थे, जातीयादौ तु तौ च । महाबलः ।

३२८ । पुंवत् स्त्र्युक्तपुंस्कः स्त्रियां ङ्य-मानि-त-त्व-ग्रसन्ततरादौ चारूप्ये ।

(पुंवत् ।१।, स्त्री ।१।, उक्तपुंस्कः १।, स्त्रियां ७, ङ्य—तरादौ ७, च ।१।, अरूप्ये ७) ।

---

३२७ । महत्त्ये । महदिति लुप्तषोंकं दम् । तौ इत्यनेनाप्य-न्वयात् त इति लुप्तप्रीकं दम् । आ इति लुप्तप्रीकं दम् । एकोऽर्थः यस्य स तस्मिन् । जातीयश्च घासश्च करश्च विशिष्टश्च तत्तस्मिन् । महाबल इति—महद्बलं यस्येति वाक्यम् । एकार्थत्वात् महादेव इति येऽपि स्यात् । जातीयादावसामानाधिकरण्येऽपि महतस्त-योराकारः पृथग्विधानात्, तेन महतो महत्या वा प्रकारः महाजातीयः, महतो महत्या वा घासः महाघास इत्यादि । पूर्व्वसूत्राद्दानुवर्त्त्यं तस्य व्यवस्थावाचित्वात् अमहान् महान् भूतः महद्भूतश्चन्द्रमाः, अमहती महती भूता महद्भूता ब्राह्मणीत्यादावभूततद्भावे न स्यात् । एकार्थे किम् ? महतः पुत्रो महत्पुत्रः ।

३२८ । पुंवत् । एकप्रवृत्तिनिमित्तेन उक्तः पुमान् येन

उक्तपुंस्कः स्त्रीलिङ्गः पुंवत् स्यात् एकार्थे स्त्रीलिङ्गे, ङप्रादौ च नतु रूप्ये ।

---

सः । शस् अन्ते यस्य सः, तर आदिर्यस्य सः, शसन्तश्चासौ तरादि-श्चेति सः, ङप्रश्च मानी च तश्च त्वश्च शसन्ततरादिश्च (१) तत्तस्मिन् । पुंस्त्वं सूक्तत्वात् । न रूप्योऽरूप्यस्तस्मिन् । एकार्थे इत्यनुवर्त्तते इत्याह एकार्थे स्त्रीलिङ्ग इति । चित्रगुरित्यादि वक्ष्यति । एकार्थ-त्वात् वृद्धा चासौ भार्य्या चेति वृद्धभार्य्यो इत्यादौ येऽपि स्यात् । एकप्रवृत्तिनिमित्तेन एकबुद्धिग्राह्यत्वेनोभयार्थस्य सन्निकृष्टत्वादेक-प्रवृत्तिनिमित्तेनोक्तपुंस्कस्यैव पुंवद्भावः (२) । तेन द्रोणीभार्य्य (३)

---

(१) "तरस्तमश्च रूपप च तरो चतमो तथा । ईयसू इमनू कल्पो देश्यो-देशीय इत्यपि । षड् पाशपरो रूप्यचपम् चैते तरादय."—इति दुर्गादासः ।

(२) कोऽपि शब्दः कस्मिंश्चित् प्रवृत्तिनिमित्ते पुमांसमुक्त्वा प्रवृत्तिनिमित्तान्तरे स्त्रियमभिधत्ते, कोऽप्येकस्मिन्नेव प्रवृत्तिनिमित्ते पुमांसमभिधाय स्त्रियमभिधत्ते । भिन्ने प्रवृत्तनिमित्ते उभयार्थाभिधानं विप्रकृष्टं बुद्धिद्वयग्राह्यत्वात् । एकप्रवृत्ति-निमित्ते उभयार्थाभिधानं सन्निकृष्टम् एकबुद्धिग्राह्यत्वात् । अतस्तद्ग्रहणमेव युज्यते, अत एवाह—एकस्मिन् प्रवृत्तिनिमित्त इति । वृद्धभार्य्येति कर्म्मधारयः, वृद्धत्वं नाम सामान्यविशेषो वृद्धशब्दस्य प्रवृत्तिनिमित्तं, तमेकमर्थमुपादाय यथा पुंसि स्त्रियाञ्च वर्त्तते, वृद्ध पुरुषः वृद्धा स्त्रीति । तस्मादेकस्मिन् प्रवृत्तिनिमित्ते वृद्धशब्द उक्तपुंस्को भवति, स्त्रियाञ्च वर्त्तते । भार्य्याशब्दे स्त्रीलिङ्गे उत्तरपदे परे पुंलिङ्गस्येव रूपं भवति । * * * द्रोणीभार्य्येति द्रोणीशब्देनाप्युक्त एव पुमान् न पुनरेकस्मिन् प्रवृत्तिनिमित्ते, यस्मात् परिमाणविशेषं प्रवृत्तिनिमित्तमुपादाय परिमाणिनि पुंसि वर्त्तते । जातिविशेषन्तूपादाय स्त्रियां गवादन्यां वर्त्तते, यत्र गावोऽदन्ति सा गवादनी द्रोणीशब्देनोच्यते ; तस्माद्य द्रोणीशब्द एकस्मिन् प्रवृत्ति-निमित्ते उक्तपुंस्कः—इति संक्षिप्तसारे समासपादे ४२२ सूत्रटीकायां गोयीचन्द्रः ।

(३) ननु द्रोण्या कथं भार्य्यात्वं सम्भवति ? सत्यं, गौण्या वृत्त्या प्रयुक्तत्वात् ।

इत्यादौ न स्यात्। द्रोणशब्दः परिमाणे पुंसि, काष्ठाम्बुवाहिन्यां स्त्रियां वर्त्तते, अतो भिन्नप्रवृत्तिनिमित्तेन बुद्धिद्वयग्राह्यत्वेनोभयार्थाभिधानस्य विप्रकृष्टत्वात् (१)। एकार्थस्त्रियां किम्? तरुणी प्रधानं यस्य स तरुणीप्रधानः। ङ्यादौ यथा—गौरीवाचरति गौरायते। दर्शनीयां मन्यते भार्य्यां चैत्रो दर्शनीयमानी भार्य्यायाः, पट्वा भावः पटुता पटुत्वम्, इयमनयोरतिशयेन शुभ्रा शुभ्रतरा शुभ्रतमा, पटुरूपा, पटिष्ठा पटीयसी, शुक्लिमा वृद्धकल्पा वृद्धदेश्या वृद्धदेशीया वृद्धपाशा, पटुचरी, बह्वीभ्यो देहि बहुश इत्यादि। अरूप्ये किम्? शुभ्रारूप्यः। एकस्या आगतम् एकरूप्यं तस्याः ततः, तस्यां तत्र, तया प्रकृत्या (२) तथा, तस्यां वेलायां तदा तर्हि इत्यादौ पुंवत् स्त्रेरिति पुंवद्भावः। तत्वे स्वजात्याख्य इति वक्ष्यमाणेनैव पटुता पटुत्वमित्यादौ सिद्धे इह तत्वग्रहणात् क्वचिदन्यत्रापि, तेन—

अपत्यार्थण्येयभिन्ने ताच्ये जातीये त्वे च पुंवत्। यथा हस्तिनीनां संघः हास्तिकं, श्येन्या इदं श्यैतं वासः, अग्नायी देवता अस्य आग्नेयः स्थालीपाक इत्यादि। अपत्यार्थण्येये तु रोहिण्या अपत्यं रौहिणेयः। श्यैनेयः। अजाये हिता अजथ्या (३) भूमिरिति।

---

तथाहि द्रोणीपदस्य लक्षणया द्रोणीसदृशीपरत्वात्। अथवा भार्य्यापदस्य भार्य्यासदृशपरत्वणीयापरत्वादिति प्रयोगरत्नमालाटीका।

(१) अनतिसन्निहितत्वात्। (२) प्रकारेण।

(३) अजायाश्चात् हितार्थे थ्यनुप्रत्ययः। अत थ्यनुप्रत्यये परेऽपि पुंवद्भावः।

३२६ । नोप्ताककोङ्पूरण्याख्यायुमत्तविकारार्थणित्तं जातिस्वाङ्गेप्त्वमानिनि ।

(न ।१।, जप्—णित्तं १।, जातिस्वाङ्गेप् ।१।, तु ।१।, श्रमानिनि ७।) ।

जबन्तं, तस्याकस्य वा केन ककारोङ्, पूरणीत्यान्तं, संज्ञाभूतम्, इम् उम् रक्तार्थविकारार्थवर्जं णित्तान्तञ्च, पुंवन्न स्यात्, जातिस्वाङ्गविहितबन्तन्तु मानिन् वर्जं ।

---

कुक्कुट्यादेरण्डादौ । कुक्कुट्यादेः पुंवत् स्यात् अण्डादौ परे । असामानाधिकरण्ये अस्य विषयः । कुक्कुट्या अण्डं कुक्कुटाण्डं, मृग्याः क्षीरं मृगक्षीरं, मृग्याः पदं मृगपदं, काक्याः शावकः काकशावकः, ग्रासा जीविका ग्रासजीविका, द्वितीया भिक्षाया द्वितीयभिक्षा, उत्ताना शेते उत्तानशया प्रजाताभार्य्या यस्य प्रजातभार्य्यः, प्रसूता भार्य्या यस्य स प्रसूतभार्य्य इत्यादि शिष्टप्रयोगानुसारेण ज्ञेयम् । प्रजाताप्रसूताशब्दयोर्गर्भविमोचकत्वप्रवृत्तिनिमित्तेन स्त्रियां वृत्तिर्न पुंसि, (१) नित्यस्त्रीत्वादत्र पाठः ।

३२८ । नोप्ता । तप अकप तौ, ताकयोः कः ताककः, स उङ् यस्य सः, ण इत् यस्य सः, णित्तो यस्मात् तत्, इय उय तौ, इुभ्यां म इुमौ, अवयवार्थचया ई, रक्तय विकारय

---

(१) प्रजातप्रसूतशब्दौ स्त्रियां गर्भविमुक्तौ वर्त्तेते, पुंसि तु गर्भोत्पत्तिनिमित्त उपादाय, यथा प्रजाता व्रीहय', गर्भाधानस्य कारयिताकृता इत्यर्थः—इति कातन्त्रटीका ।

**३३०। पूरणी प्रिया मनोज्ञा सुभगा दुर्भगा क्षान्ता कान्ता वामना वामा चपला वाला समा सचिवा तनया दुहिट स्वा कल्याणी भक्ती।**

( पूरणी—भक्ती ७। )।

एषु परेषु पुंवन्न स्यात्।

---

तौ, तावर्थौ येषां ते, युमौ च रक्तविकारार्थाश्च ते, न विद्यन्ते ते यत्र णित्स्थे तत्, तच्च तत् णित्स्थेति। पश्चात् ऊप् च ताककोङ् च पूरणी च णास्था च अयुमक्तविकारार्थणित्स्थञ्च तत्। जातिश्च स्वाङ्गञ्च ते, ताभ्यां ईप् तत्, न मानी अमानी तस्मिन्। उदाहरणन्तु वामोरुभार्य्य इत्यादि वक्ष्यति।

३३०। पूरणी। पूरणी च प्रिया चेति द्वन्द्वः। एष्विति—पूरणार्थत्यान्ते प्रियादिसप्तदशशब्देषु चेत्यर्थः। अन्ये तु क्षान्ता—तनययोः स्थाने समातकन्यावाहुः, वालावामाशब्दौ च नाहुः। इह द्रव्यार्थप्रियादिसाहचर्य्यात् ठत्यान्तस्य भज्यमानद्रव्यार्थस्य भक्तिशब्दस्य ग्रहणात् भावत्यान्ते न निषेधः। यथा मेघदूते—दृढभक्तिर्भवान्येति, रघौ—दृढभक्तिरिति (क)। कान्ताशब्दं परे नाहुः। क्रोडादीत्यादिना यसे पुंवद्भावात् ह्रस एवानयोर्विषयः।

---

(क) रघौ—१२।१९, तत्र मल्लिनाथ —दृढभक्तिरित्यत्र दृढशब्दस्य स्त्रियाः पुंवदित्यादिना पुंवद्भावो दुर्घटः, अप्रियादिष्विति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठात्। अतो दृढं भक्तिरस्येति नपुंसकपूर्व्वपदो बहुव्रीहिरिति गणव्याख्याने दृढभक्तिरित्येवमादिषु पूर्व्वपदस्य नपुंसकत्वस्य विवक्षितत्वात् सिद्धमिति समाधेयम्।

सपत्न्यादीनाञ्च। सपत्न्यादीनां प्रासपुंवन्न स्यात्। सपत्नीभार्य्यः। सपत्नीवृन्दारिका (१)। सपत्न्यादिर्यथा—

सपत्न्यनड्डुही रोहिण्यनड्वाही च रेवती।
पृथिवी च सपत्न्यादाविह प्रोक्ताग्रहायणी॥

---

इत्तिकारश्च पदार्थनिवृत्तिमात्रपरो दृढभक्तिशब्दो लिङ्गविशेषस्यानुपकारत्वात् स्त्रीत्वमविवक्षितमेव। तस्मादस्त्रीलिङ्गत्वात् दृढभक्तिशब्दस्याय प्रयोग इत्यभिप्राय। न्यासकारोऽप्येवम्। भोजराजस्तु कर्म्मसाधनस्यैव भक्तिशब्दस्य प्रियादिपाठात् भवानीभक्तिरित्यादौ कर्म्मसाधनत्वात् पुंवद्भावप्रतिषेध दृढभक्तिरित्यादौ भावसाधनत्वात् पुंवद्भावसिद्धि पूर्व्वपदस्येत्याह"—इति। मेघदूते पूर्व्वमेघस्य १७ श्लोकस्य मल्लिनाथटीकापि द्रष्टव्या।

"सामान्ये नपुंसकम्। दृढं भक्तिर्यस्य स दृढभक्ति। स्त्रीत्वविवक्षायान्तु दृढाभक्ति"—इति सिद्धान्तकौमुदी।

"पदार्थनिवृत्तिमात्रपरत्वेनास्य दृढशब्दप्रयोगाच्च लिङ्गविशेषविवक्षेति भाव। लिङ्गविशेषविवक्षायान्तु दृढाभक्तिरित्यादिसिद्धये प्रियादिषु भक्तिशब्दपाठ" इति तत्त्वबोधिनी।

"दृढभक्तिरित्यादि त्वविवक्षितस्त्रीत्वात् पूर्व्वपदस्य। प्रायेत्वादिति भागवृत्ति" इति षष्ठिप्रसारे।

प्रायेत्वादिति भागवृत्तिरिति सिद्धान्तान्तर, न ह्यार्षपद स्वसिद्धौ प्रमाणभूत लक्षणमपेक्षते इत्यभिप्राय —इति गोयीचन्द्रः। प्रयोगरत्नमालायान्तु—"अयमेव समाराध्य इति निश्चित्याभिसन्धाय भक्ति, तदर्थकभक्तिशब्देन पुंवत्, यथा महती भक्तिमानेन मूलमाराधितो हरिरिति। यत्तुवेपमादिसम्मतयर्थे पुंवत्। भयति निरयभक्तिन्होनपुष्योपहार इति। दृढभक्तिरिति गम्योक्तस्यानित्यत्वादाङ्क। अपि च सामान्योपक्रमात्पुंवत्त्वम्। दृढं क्रियतदित्याकाङ्क्षायां भक्तिरित्यन्वय। दृढं दृढ भक्तिर्यस्य स दृढभक्ति। एव शान्तोद्वेगस्तिमितनयन दृढभक्तिर्भवान्या इति मेघे। यद्वा मन्तुवोमे दृढो भक्तिर्भक्तिभाजिनिति माध्यन्तुपपत्ति" इत्युक्त (८१६)। भवान्या दृढयासौ भक्तिर्भक्तिभावेति कर्म्मधारय इति तट्टीका।

(१) वृन्दारिका श्रेष्ठा सुन्दरी च।

३३१। गवावादेः स्त्रोऽन्ते गौणेऽनीयसः।

(गवावादेः ६।, स्त्रः १।, अन्ते ७।, गौणे ७।, अनीयसः ५।)।

अन्ते स्थितस्य गोः आप ईप ऊपश्च स्त्रः स्यात् अप्रधानत्वे सति, नत्वीयसः। शीतगुः ध्वस्तमायः कालतनुः। ईयसस्तु बहुप्रेयसी।

---

३३१। गवा। आवादिर्यस्य सः, गौश्च आवादिश्च तत्तस्य। पुंस्त्वं सौत्रत्वात्। गुणस्य भावो गौणं तस्मिन्। न ईयोऽनीयस् तस्मात्। न त्वीयस इति—ईयसः परस्येपः प्राप्तस्त्रो न स्यात् इत्यर्थः। तेन सुप्रेयसी कुलमित्यादौ क्लीबे स्त्र इति स्त्रो न स्यात्।

नार्द्धपिप्पल्यादेः। अर्द्धपिप्पल्यादेः प्राप्तस्त्रो न स्यात्। अर्द्धं पिप्पल्याः अर्द्धपिप्पली अर्द्धखारी पूर्व्वनगरीत्यादि। अर्द्धपिप्पल्यादेः किं? प्राप्तो जीविकां प्राप्तजीविकः, आपन्नजीविकः।

ईयसोर्ह्रे। ईयसोर्ह्रे एव स्त्रो न स्यात्। बह्व्यः प्रेयस्यो यस्य स बहुप्रेयसी पुरुषः कुलं वा। गौणत्वेऽपि ईपः सेर्लोपः स्यादेव। ह्रे किम्? अतिप्रेयसिः खलः, उपप्रेयसि प्रेम।

लाघवादेकत्र सन्नद्वयोदाहरणमाह शीतगुरित्यादि। शीता गौर्यस्येति वाक्यं, शीता शैत्यगुणयुक्तेत्यर्थः (१)। पट्वी च मृद्वी च पट्वीमृद्व्यौ, ते भार्य्ये यस्य स पट्वीमृदुभार्य्य इत्यत्र पट्वीशब्दस्य न पुंवद्भावः, एकार्थस्त्रीलिङ्गोत्तरदे एतद्विधानात्। यत्र तु पटुमृदुभार्य्यस्तत्र य-गर्भद्वः। एकार्थे किं? कल्याण्या माता कल्याणी-

---

(१) शीता शीतला गौः किरणो यस्यासौ शीतगुश्चन्द्र इति गङ्गाधरः।

अचादेस्तु (३२९)—वामोरूभार्य्यः रसिकाभार्य्यः पाचिकाभार्य्यः षष्ठीजायः दत्ताजायः मैथिलीभार्य्यः। ब्राह्मणीभार्य्यः सुकेशीभार्य्यः। अमानिनि किं—ब्राह्मणमानिनी। शुमादेस्तु वैयाकरणभार्य्यः सौवश्वभार्य्यः काषायकन्यः हैममुद्रिकः।

पूरण्यादौ तु (३३०)—

---

माता। स्त्रियामिति किं? तरुणी प्रधानं येषां ते तरुणीप्रधानाः। ध्वस्तमाय इति—ध्वस्ता नष्टा इत्यर्थः। कालतनुरिति—काली कृष्णवर्णेत्यर्थः(१)। गवादेः किम्? अतिलक्ष्मीः। वामोरूभार्य्य इति—वामोरूर्भार्य्या यस्य इति वाक्यम्। एवं धीवन्धूवासौ बाला चेति धीवन्धूबालेत्यादि (२)। रसिकाभार्य्य इति—रसं वेत्ति इत्यर्थे इकः। रसिकेति त-ककारोड्। पाचिकाभार्य्य इति—पचतीत्यर्थे णकः। पाचिकेति अक ककारोड्। नाककोड् किं? पाका भार्य्या यस्य पाकभार्य्यः (३) शुष्कभार्य्यः। षष्ठीजाय इति—षण्णां पूरणीत्यर्थे थट्। एवं पञ्चमीभार्य्य इत्यादि।

दत्ताजाय इति—यद्यपि संज्ञाशब्दानाम् एकद्रव्याभिनिवेशित्वात्

---

(१) कप्रत्ययेन बाधितत्वात् ईवन्तस्योदाहरणं बहुव्रीहौ न सम्भवतीति गङ्गाधरः। काली तनूर्यस्यासौ कालतनुः, पूर्वस्य पुंवद्भावः, अनभिधानाद्रूपः कप्रत्ययाभावे ह्रस्व इति दुर्गादासः। वस्तुतो हि समासान्तविधेरनित्यत्वात् न कप्रत्ययः, अतएव अतिलक्ष्मीरन्द् सिद्ध इति गङ्गाधरः।

(२) २०८ सूत्रस्थ टीका द्रष्टव्या।

(३) पाका बालेत्यर्थः। तथाच पाकशब्दोऽयमव्युत्पन्न एव नित्यवचन, एवं शुष्कभार्य्य इत्यत्रापीति गोयीचन्द्रः।

उक्तपुंस्कत्वाभावेनैव पुंवत्त्वाप्राप्तिस्तथापि शास्त्रे लिधुसंज्ञादिशब्द-वद्दत्तादीनाम् अनेकद्रव्याभिनिवेशित्वात् उक्तपुंस्कत्वम्। "दत्त-गुप्तात्मकं नाम प्रशस्तं वैश्यशूद्रयो"रिति स्मृतेः। तथाच दत्तत्व-प्रवृत्तिनिमित्तेनैव दत्तः पुमान् दत्ता स्त्रीति पुंस्त्रियोर्वर्त्तते अतो निषिध्यते (१)। एवं गुप्ताभार्य्य इति।

मैथिलीभार्य्य इति—मिथिलायां भवा इत्यर्थे ष्णः। ब्राह्मणी-भार्य्य इति—जातिवाचित्वादीप्। सुकेशीभार्य्य इति—स्वाङ्ग-त्वादीप्। जातिस्वाङ्गेष्विति किं? कुमारभार्य्यः। युवती जाया यस्य युवजानिः। तथाच "युवजानिर्धनुष्पाणि"रिति भट्टिः। कुमारत्वादिजातिवाचिनस्तु कुमारीभार्य्य इत्याद्याहुः। ब्राह्मण-*मानिनीति—ब्राह्मणी मानिनी यस्य इति वाक्यं* (२), ब्राह्म-णीम् आत्मानं मन्यते इति वाक्येऽपि। एवं सुकेशमानी दीर्घकेशमानी भार्य्यायाः (३)। मानिन्भिन्ने जातिस्वाङ्गेष एव नियमात्, दत्तामानिनी पद्मीमानिनीत्यादौ निषेध'

(१) न ह्यय नियम एकद्रव्याभिनिवेशिभि सञ्ज्ञाशब्दै र्भवितव्यमिति। तथाहि देवदत्तादिशब्दोऽनेकद्रव्यसञ्ज्ञाभूत प्रयुज्यमानो लोके उपपद्यते, यथा शास्त्रेऽपि धात्वादिशब्द। या त्वेकद्रव्याभिनिवेशिनी सञ्ज्ञा, तां प्रति नैवाय निषेध क्रियते। * * * सञ्ज्ञाशब्दानामपि केषाञ्चित प्रवृत्तिनिमित्तमस्त्येव सप्तपर्णादिवत। यत्रा पर्य्यायत्वं नास्ति तत्रापि सद्रूपप्रवृत्तिनिमित्तमुपादाय अभिधेये वर्त्तन्ते। तत्राप्य भिन्ने प्रवृत्तिनिमित्ते यैरुक्त पुमान् ते उक्तपुंस्का इति सक्षिप्तसारे ४३१ सूत्र *टीकायां गोयीचन्द्र।* दानक्रियानिमित्त स्त्रिया पुंसि च सञ्ज्ञाभूतोऽयमिति भाषितपुंस्कत्वमस्तीति सिद्धान्तकौमुदी। दत्ता इति सञ्ज्ञाशब्दस्यापि समान निमित्तत्वेन पुंसि वृत्तिसम्भवादुक्तपुंस्कता इति विद्यानिवास।

(२) अत्र क प्रत्ययाभावबीज ३३२ सूत्रस्य टीकायां वक्ष्यति।

(३) सुकेशीं दीर्घकेशीं मन्यते भार्य्यामिति वाक्ये मनधोर्ग्रहादित्वात णिन्,

३३२। हे पूरणीप्रमाणीभ्यामः।

(हे ७, पूरणी प्रमाणीभ्यां ५॥, अः १)।

आभ्याम् अः स्यात् हे। (२५८) ययोर्लीपोऽयुक्तौ पी। कल्याणीपञ्चमा रात्रयः, कल्याणीप्रियः। मुख्यात्र पूरणी ग्राह्या, तेन—

---

स्यादेव (१)। वैयाकरणभार्य्य इति—व्याकरणं वेत्त्यधीते वा इत्यर्थे ष्णो यस्येम् ष्णित्स्वाद्विः। सौवश्वभार्य्य इति—स्वश्वस्यापत्यम् इत्यर्थे ष्णो वस्य उम्, ष्णिति त्रिः। काषायकन्थः इति—कषायेण रक्ता इत्यर्थे ष्णः। हैममुद्रिक इति—हेम्नो विकार इत्यर्थे ष्णः।

३३२। हे। पूरणी च प्रमाणी (२) च ते ताभ्याम्। कल्याणीपञ्चमा रात्रय इति—कल्याणी पञ्चमी यासां रात्रीणां ताः (३)। पूरणीत्यास्ते परे कल्याणीत्यस्य न पुंवद्भावः। एवं कल्याणीप्रिय इत्यत्र प्रियाशब्दे परे। एवं कल्याणीमनोज्ञ इत्यादि। गौण-

---

इति प्रयुज्यमाने भार्य्यामिति ङे णी, मानिनि परे पुंवद्भावः। अतएव सुकेशमानी भार्य्याया इति पुंलिङ्गप्रयोगोऽपि साधुः।

(१) ननु ब्राह्मणमानिनी सुकेशमानिनीत्यादिवत् दत्तामानिनी पञ्चमीमानिनीत्यादौ मानिनि परेऽपि न कथं पुंवद्भाव इत्याशङ्क्याह मानिनुभिन्न इति। तथाच यत्र जातिविहितत्वात् स्वाङ्गविहितत्वाद्वा मानिनुशब्दो भविष्यति तत्रैव पुंवद्भावः। दत्ता पञ्चमीशब्दयोस्तु न तथात्वमिति निषेधः।

(२) पूरणीशब्देन पूरणप्रत्ययान्ता गृह्यते। प्रमीयते अनया इति प्रमाणी।

(३) पञ्चानां पूरणी पञ्चमी, णोऽसंख्यादेरिति मट्। कल्याणी प्रशस्ता पञ्चमी रात्रिर्यासु रात्रिषु ता रात्रयः कल्याणीपञ्चमा। इति दुर्गादासः।

३३३। द्यृतः कः। (दी-ऋतः ५।, कः १।)।

दीसंज्ञकादृदन्ताच्च कः स्यात् ह्रे। कल्याणपञ्चमीकः पक्षः। रात्रिः पूरणी वाच्या चेति पूर्व्वत्र मुख्यत्वम्। स्त्रीप्रमाणः।

---

मुख्ययोर्मुख्ये कार्य्यसम्प्रत्यय इति न्यायेनात्र पूरणीप्रियेत्यत्र च मुख्यपूरणीग्रहणमित्याह मुख्यात्र पूरणी ग्राह्येति। अत्र अनयोरित्यर्थः (१)। एतस्य फलं दर्शयन् तेनेत्युक्ता सूत्रान्तर-सापेक्षत्वात् सूत्रयति।

३३३। द्यृतः। दी च ऋच्च तस्मात्। कल्याणपञ्चमीकः पक्ष इति—कल्याणी पञ्चमी रात्रिर्यस्मिन् पक्षे सः। इहान्यपदार्थे पक्षे पञ्चमी रात्रिः परम्परया प्रविशतीत्यतो गौणत्वम्। कल्याणी-पञ्चमा रात्रय इत्यत्र तु अन्यपदार्थभूतासु रात्रिषु पञ्चमी साक्षादेव प्रविशति इत्यतो मुख्यत्वमित्याह रात्रिः पूरणी वाच्या चेति पूर्व्वत्र मुख्यत्वमिति। पूर्व्वत्र—कल्याणीपञ्चमा रात्रय इत्यत्र

---

(१) अत्र पूरणप्रत्ययान्ते परे पुंवद्भावनिषेधे पूरणप्रत्ययान्तादप्रत्ययविधाने च उभयत्र मुख्या पूरणी ग्राह्या। तेन हेतुना कल्याणी पञ्चमी रात्रिर्यस्मिन् पक्षे स पक्षः कल्याणपञ्चमीक इत्यत्र पञ्चमीशब्दस्य गौणत्वात्तस्मिन् परे पुंवद्भाव-निषेधो नाभूत्, तस्मादप्रत्ययोऽपि नाभूत। ततो द्यृतः क इति कप्रत्ययः। * * * समासवाच्यानां योऽसाधारणधर्म्मो तद्धत्वं मुख्यत्वम्। ततश्च समासवाच्यानां रात्रीणाम् असाधारणधर्म्मो रात्रित्वं, तत्तु तासु रात्रिषु पञ्चम्यां रात्रावपि वर्त्तते, अतो मुख्यत्वम्। कल्याणपञ्चमीकः पक्ष इत्यत्र समासवाच्यः पक्षः, तस्यासाधा-रणधर्म्मः पक्षत्वं, तत्तु प्रतिपदादिपञ्चदशतिथ्यात्मककाल एव वर्त्तते न रात्रौ इति भेदः—इति दुर्गादासः।

इत्यर्थः (१)। स्त्रीप्रमाण इति—स्त्री प्रमाणी यस्येति वाक्यम्। पूर्व्वत्र प्रमाणीत्यस्याप्रधानस्यापि ग्रहणात्। स्त्रीत्वस्य उक्त-पुंस्कत्वाभावान्न पुंवद्भावः।

मध्वादि-क्वार्थनावादिभ्याम्। मध्वादेरेकत्वार्थनावादेश्च कः स्याद्बे। प्रियं मधु यस्य स प्रियमधुकः, अनर्थकः। मध्वादिर्यथा—

मधूपानदुरः शालि नञर्थौ दधिसर्पिषी (२)।

लब्धा नौर्येन स लब्धनौकः। नावादिर्यथा—

नौरनड्वान् पयो लक्ष्मीः पुमान् पञ्चेह कीर्त्तिताः।

क्वार्थे किं? द्वे नावौ यस्य द्विनौः।

स्त्रियामिनः। बेऽन्यपदार्थभूतायां स्त्रियामिनन्तात् कः स्यात्। बह्वी वाग्मिनो यस्यां सा बहुवाग्मिका सभा। स्त्रियां किं? बहुदन्ती राजा (३)।

ऋद्दक्तसान्ताभ्यां वा। ऋदन्तदीसंज्ञकात् अक्तसान्ताच्च

---

(१) तत्र रात्रि पूरणी पूरणप्रत्ययान्तवाच्या समासवाच्या च यथात् पूरणप्रत्ययान्तकर्त्तृकवाच्या समासकर्त्तृकवाच्या च भवति, इति हेतोः पूर्व्वत्र पूर्व्वोदाहरणे पञ्चम्याः ह्रस्वत्वम्—इति गङ्गाधरः। पूरण्यपि रात्रि समासवाच्यापि रात्रि॰ इति हेतो पूर्व्वत्र कल्याणीपञ्चमा इति पूर्व्वोदाहरणे पञ्चम्या ह्रस्वत्वं समस्यमानपदार्थान्यपदार्थयोर्भेदाभावात्। यद्यपि पञ्चमीरात्रीतररात्रेरपि समासवाच्यत्वमस्ति, तथापि व्यापकत्वात् रात्रिरूपेण समासार्थेति। कल्याणपञ्चमीकः पक्ष इत्यत्र च पक्षस्य समासवाच्यत्वात् भेदोऽस्तीति पूरण्या ह्रस्वत्वं नास्तीति कार्त्तिकेयः।

(२) मधु, उपानह्, उरस्, शालि, नञ्पूर्व्वक॰ अर्थशब्द, दधि, सर्पिष।

(३) पक्षे व्यक्ततसमासान्ताद्धेति बहुदन्तिक इति गोयीचन्द्रः। बहुदन्तीति पाठान्तरम्।

कः स्यात् वा हे । (१) बहुतन्त्रीः बहुतन्त्रीकः सुवधूः सुवधूकः । ऋद्रात् किम् ? सुश्रीः सुभ्रूः (२) । बहुमानः बहुमानकः बहुयोगिकः बहुयोगी । ऋतसान्तात्तु—प्रियपथः, प्रियधुरः ।

नाख्यायाम् । संज्ञायां गम्यमानायां प्राप्तः को न स्यात् । विश्वो देवो यस्य स विश्वदेवः, विश्वयशाः ।

ईयः स्वाङ्गार्थनाड़ीतन्त्रीभ्यः । ईयसः स्वाङ्गार्थाभ्यां नाड़ीतन्त्रीभ्याञ्च को न स्यात् । बहुप्रेयसी, बहुनाड़िः कायः, बहुतन्त्रीः ग्रीवा । स्वाङ्गे किं ? बहुनाड़ीको दिवसः, बहुतन्त्रीका वीणा, पूर्व्वेण वा (३) ।

भ्रातुः स्तुतौ । (४) सुभ्राता लक्ष्मणः, पुण्यभ्राता विप्रः । स्तुतौ किं ? बहुभ्रातृकः क्रूरः ।

निरः प्रवाण्याः (५) । निर्गता प्रवाणी शलाका यस्मात् स

---

(१) अत्र यकारादृतन्तसमासान्तात् सूत्रान्तरेण कप्रत्ययो न प्राप्तस्तस्मादृकारान्तसमासान्तात् कप्रत्यय अनेन विभाषया विधीयते । अतएव ऋदन्तनदीसंज्ञकात् ध्यत क इत्यनेन नित्ये प्राप्ते अकृतसान्तादित्यनेनाप्राप्तौ विभाषार्थं सहोति युक्तमिति बृहन्मुग्धबोधम् ।

(२) नास्त्रीयुव इत्यनेन दीर्घसंज्ञानिषेधात् ।

(३) ईयत्प्रत्ययान्ततन्त्रीशब्दो धमनीवचनः । नाड़ीति दिवसस्य त्रिंशो भाग इति गोयीचन्द्रः । पूर्व्वेण ऋद्रात इत्यनेन ।

(४) प्रशंसायां गम्यमानायां भ्रातृशब्दात् को न स्यादित्यर्थः । स्तुतिरत्र भ्रातृवाच्यस्यैव भवतीति गोयीचन्द्रः ।

(५) निर उत्तरस्याः प्रवाण्या बहुव्रीहौ को न भवतीत्यर्थः । प्रवाणीति वे ञ सूतौ इत्यस्मात् अधिकरणे अनट्, एचोऽशित्या इत्याकारः नोऽचोऽन्तर इत्यनेन णत्वम् । यस्याः शलाकाया वस्त्रं युज्यते सा प्रवाणीति गोयीचन्द्रः । निष्प्रवाणि पटः अभिनव इत्यर्थ इति बृहन्मुग्धबोधम् ।

३३४ । सहः सो वा । ( सहः ।१, सः ।१, वा ।१) ।

सहस्य हे सः स्याद्वा ।

सह मात्रा वर्त्तते योऽसौ समातृकः सहमातृकः ।

---

निष्प्रवाणिः पटः । क्वचिदन्यत्रापि । ब्राह्मणमानिनी । निःसृत-नीव्यः, विलुलितकबरी प्रवरीत्यादयः ।

३३४ । सहः । सह इति षष्ठ्यर्थे प्रो, अनुकरणात् तस्या अलुक् । समातृक इति—वाक्यस्य सानुपूर्व्विकत्वात् सह मातरा वर्त्तते इति वाक्यमिति परे (१) । सह समानम् उदरमस्य सोदरः सहोदरः । “त्वं सोदरस्यातिमदोद्धतस्य” इति भट्टिः । हे इति किम् ? सहकृत्वा (२) ।

गोहलवत्सेष्वाशिषि । एष्वेवाशिषि गम्यमानायां सहस्य सो वा स्याद्धे । स्वस्ति ते चैत्राय सगवे सहगवे सहलाय सह-हलाय सवत्साय सहवत्साय । एषु किम् ? स्वस्ति ते सहपुत्राय ।

संज्ञाधिक्यानुमेयाव्ययसमासेषु नित्यम् । एष्वर्थेषु सहस्य सो नित्यं स्याद्धे । अक्षत्वेन सह वर्त्तते यत् तत् साक्षत्वं नक्षत्रचक्रम् ।

---

(१) समातृक इति वाक्यस्य सानुपूर्व्विकत्वात् सह मात्रा वर्त्तते इति वाक्यं साम्प्रदाया कुर्व्वन्ति । ये तु मात्रा सह वर्त्तते इति वदन्ति तेषां मते सहपूर्व्व-निपातः, स च न सार्व्वत्रिकः तस्य तत्पुरुषादावुक्तत्वादिति केचित् । • • • इत्युदाहरणात् प्रथमान्तान्यपदार्थबहुव्रीहिरनेनाङ्गीकृतः । अन्ये तु प्रथमा-न्तान्यपदार्थं बहुव्रीहिमनभ्युपगम्य मात्रा सहितः समातृक इति तृतीयातत्पुरुषं वदन्ति, तदयुक्तं, तथा सहरूपेण निर्द्देशात् सहितशब्दादेशानुपपत्तेः, सहितशब्देन योगे मात्रा इत्यत्र तृतीयाया अप्राप्तेः – इति कार्त्तिकेयः ।

(२) सहकृतवान् य इति वाक्ये सहपूर्व्वक कृधातोः क्विप् ।

३३५ ।  सक्थ्यक्ष्णोः षः स्वाङ्गे ।

(सक्थ्यक्ष्णोः ५।, षः १।, स्वाङ्गे ७।) ।

आभ्यां हे षः स्यात् स्वाङ्गे । दीर्घसक्थः, पुण्डरीकवदक्षिणी यस्यासौ पुण्डरीकाक्षः । स्वाङ्गे किं ? दीर्घसक्थि शकटम् ।

३३६ ।  दारुण्यङ्गुलेः ।

( दारुणि ७।, अङ्गुलेः ५।) ।

पञ्चाङ्गुलं दारु ।

---

एवं सपलाशं सशिंशपं स्थलम् । सकाकलीको द्रोणः, काकल्या अधिक इत्यर्थः । साग्निः कपोतः, अद्य हि कपोतपातात् भाव्यग्निरनुमीयते इत्यग्निरनुमेयः । एवं सपिशाचा वात्या (१) । साङ्गान् वेदानधीते, अङ्गानां समाप्तिं यावदित्यर्थः ।

३३५ ।  सक्थ्य । सक्थि च अक्षि चेति सक्थ्यक्षि तस्मात् । स्वाङ्गलक्षणमुक्तम् । स्वाङ्गवाचिभ्याम् आभ्याम् इत्यर्थः । पुण्डरीकवदिति—पुण्डरीकं सितपद्मं, अन्तोपमानेत्यादिना वत्शब्दलोपः । षित्वात् स्त्रियां दीर्घसक्थी पुण्डरीकाक्षीति । दीर्घसक्थीति—शकटस्य प्राणित्वाभावात् इति भावः । हे किं ? दीर्घसक्थि देवदत्तस्य ।

३३६ ।  दारु । अन्यदार्थे दारुणि अङ्गुले षः स्याद्धे । पञ्चाङ्गुलमिति—पञ्चाङ्गुलयो यस्मिन् इति वाक्यम् । अङ्गुलितुल्या-

---

(१) वात्यया अनुमानभूतया साक्षादनुपलभ्यमानोऽत्र पिशाचोऽनुमीयते। अनानुमेये तु विकल्प एव, सहविद्युन्मेघ सविद्युन्मेघ इति गोयीचन्द्रः ।

३३७। द्वित्रेर्मूर्द्ध्नः। (द्वित्रेः ५।, मूर्द्ध्नः ५।)।

३३८। न्वोर्लोपौती तेऽच्ये।

( न्वोः ६॥, लोपौती १॥, ते ७।, अच्ये ७। )।

नस्य लोपः स्यात्, उवर्णस्य औत् स्यादचि ये च ते। द्विमूर्द्धः।

३३९। सङ्ख्याया डोऽबहोः।

( सङ्ख्यायाः ५।, डः १।, अबहोः ५। )।

---

वयवयुक्तं धान्याद्युत्क्षेपणकाष्ठमुच्यते। दारुणि किं? पञ्चाङ्गुलि-र्हस्त इत्यत्र न स्यात्।

३३७। द्वित्रेः। द्विश्च त्रिश्च तत्तस्मात्। आभ्यां परस्मात् मूर्द्ध्नः षः स्यात् हे।

३३८। न्वोः। न च उश्च तौ तयोः, लोपश्च औच्च तौ, अश्च यश्च तस्मिन्, ते इति अस्य विशेषणम्। द्विमूर्द्ध इति—द्वौ मूर्द्धानौ यस्य इति वाक्यम्। एवं त्रयो मूर्द्धानो यस्य त्रिमूर्द्धः। आभ्यां किं? बहुमूर्द्धा। औदृयथा—बाभ्रविः बाभ्रव्य इत्यादि। पृथक्करणात् (१) क्वचिन्न स्यात्। तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुरिति कुमारसम्भवे।

३३९। संख्या। बहुवर्जाया इति—बहोरुपलक्षणत्वात् उपगणा इत्यत्र न स्यात्(२)तेनाकृतगणान्तत्वात् उपगणका इत्यपि(३)।

---

(१) ताच्ये इत्यकृत्वा तेऽच्ये इति करणादित्यर्थः।

(२) अत्र गणवर्ज्जाया इत्यपि वक्तव्यमित्यभिप्रायः।

(३) उपगण्या इत्यत्र द्वे सति भवति च रूपे विशेषो नास्तीति गणवर्ज्जनस्य फलं दर्शयति तेनेति।

बहुवर्जायाः सङ्ख्याया डः स्यात् हे। पञ्च षट् परिमाणं येषां ते पञ्चषाः, उपगताः दश येषां ते उपदशाः। बह्वीस्तु उपबहवः।

३४०। नाभे र्नाम्नि। (नाभेः ५/I, नाम्नि ७/I)।

पद्मनाभः।

---

बहुवर्जनात् संख्येयवृत्तिसंख्याया एव ग्रहणं, तेनाष्टभिः सह वर्त्तते साष्टा पञ्चाशदित्यत्र न स्यात् (१)। पञ्चषा इति पञ्च वा षड् वा इति वाक्यमिति परे। एवमुपदशा इत्यत्र दशानां समीपे ये ते उपदशाः, नव एकादश वा इत्यर्थः। संख्यादूरेत्यादिना(२) यत्र सः तत्रैवायं विधिस्तेन शोभना दश येषां ते सुदशान इत्यत्र न स्यात् इत्यपि परे (३)। उपबहव इति—संख्यावडतोरिति संख्यात्वातिदेशात् प्राप्तौ निषेधः।

सोः स्वः-प्रातर्भ्याम्। सोः पराभ्यामाभ्यां डः स्यात् हे। शोभनं श्वोऽस्य सुश्वः सुश्वौ सुश्वाः, सुप्रातः सुप्रातौ सुप्राताः दिवसाः। तथाच "सुप्रातमासादितसम्मदं तत्" इति भट्टिः।

३४०। नाभिः। संज्ञायां गम्यमानायां नाभेर्डः स्यात् हे।

---

(१) संख्यावाचक एकादिदशशतिपर्य्यन्तशब्दः संख्येयवृत्तिरेव न तु संख्यानवृत्तिः, तस्मादेव डः। विंशत्यादिसंख्यावाचकः शब्दः संख्येयवृत्तिः संख्यानवृत्तिश्च। यदा विंशत्यादीनां संख्यानवृत्तित्वं तदा तस्मात् डो न स्यात्। तेन अष्टाभिः सह वर्त्तते साष्टा पञ्चाशदित्यत्र न स्यादिति कार्त्तिकेयः। अत्र साष्टम् इत्यस्मात् सौ साष्टा इति गङ्गाधरः। २०२ सूत्रस्य टीका द्रष्टव्या।

(२) २८६ सूत्रं द्रष्टव्यम्।

(३) पूजार्थे स्वति वर्ज्जमिति च संक्षिप्तसारसूत्रम् (१२२)।

३४१। लोम्नोऽन्तर्वहिर्भ्याम्।

(लोम्नः ५।अन्तर्-वहिर्भ्यां ५॥)।

अन्तर्लोमः वहिर्लोमः।

३४२। नञ्‌दुःसोः सक्थ्नो वा।

(नञ्‌दु सोः ५।, सक्थ्नः ५।, वा।१।)।

असक्थः असक्थिः।

---

पद्मनाभ इति—नाभिस्थितं पद्मं यस्य इति वाक्यम् (१)। "प्रजा इवाङ्गादरविन्दनाभे"रिति तु सान्तविधेरनित्यत्वात् असंज्ञात्वाद्वा (२)। एवं नाभिस्थिता ऊर्णा यस्य, मनोपादित्वात् से, ऊर्णनाभो मर्कटः। ऊर्णनाभिरित्यन्ये। तथाच "प्रवृत्तिर्नो विना कार्य्यमूर्णनाभेरपीष्यते" इति भट्टवार्त्तिकम्।

३४१। लोम्नो। अन्तर्लोम इत्यादि—अन्तर्गतानि लोमानि यस्य, वहिर्गतानि लोमानि यस्य स इति वाक्यम्। अत्र नाम्नीति नानुवर्त्तते पृथग्योगात्। आभ्यां किं? दीर्घलोमा चैत्रः।

३४२। नञ्। एभ्यः परात् सक्थ्नो डः स्यात् हे वा। असक्थ इति—नास्ति सक्थि यस्य इति वाक्यम्। असक्थिरिति। एते उदाहरणे अस्वाङ्ग एव ज्ञेये, (३) स्वाङ्गे तु यः पूर्व्वेणैव।

---

(१) पद्मं नाभिरस्येति अथवा पद्मं नाभावस्येति व्यधिकरणो बहुव्रीहिरिति ३११ सूत्र टीकायां गोयीचन्द्र।

(२) अरविन्दनाभिपदेन व्युत्पत्त्या हरादिर्लभ्यते, न तु संज्ञया, विष्णुपर्य्याये अदृष्टत्वादिति वार्त्तिकम्।

(३) सक्थिवत् शकटाङ्गविशेषम्।

३४३ । अस् प्रजायाः । (अस् ।१।, प्रजायाः ५।)।

अप्रजाः सुप्रजाः ।

३४४ । मन्दाल्पाच्च तु मेधायाः ।

( मन्दाल्पात् ५।, च ।१।, तु ।१।, मेधायाः ५।) ।

अमेधाः सुमेधाः मन्दमेधाः ।

---

परे तु इह हलिशब्दस्यापि ग्रहणात् अहलः अहलिः दुर्हलः दुर्हलिः सुहलः सुहलिरित्यप्याहुः । अन्ये तु नञ्सुदुर्भ्यो हलिसक्थिसक्तिभ्यो यथाक्रममुक्ता अहलः अहलिः सुसक्थः सुसक्थिः दुःशक्तः दुःशक्तिः इत्याहुः । हलसक्त-शब्दाभ्याम् एव सिद्धत्वात् चान्द्रा हलिसक्ती न पठन्ति । एकस्मिन्नर्थे प्रयोगद्वयसिद्ध्यर्थम् अप्रातसान्तात् कविधानार्थञ्च हलिसक्तिग्रहणमित्यन्ये । एतत् सर्व्वं यन्यत्सन्यते वाशब्दस्य व्यवस्थया सिद्धमिति ज्ञेयम् । सक्तिरिति सन्जधोः क्तिः ।

३४३ । अस् । वेति नानुवर्त्तते, व्यतीहारे चिरित्यत्र वाग्रहणात् । नञ्दुःसुभ्यः प्रजाया अस् स्यात् । अप्रजा इति । एवं दुष्प्रजाः सुप्रजाः, अत्वसोऽधौरिति घंः (१) ।

३४४ । मन्दा । चकारान्नञ्दुःसोरित्यनुवर्त्तते । नञ्दुःसोर्मन्दाल्पाच्च परस्या मेधाया अस् स्यात् । अमेधा इति । एवं दुर्मेधाः सुमेधाः अल्पमेधाः । परे तु नञ्दुःसोर्मेधाया अस् नित्यम्

---

(१) इह नञादेरव्यवहितोत्तरत्वमपेक्षितं तेन शुद्ध गुणिनी प्रजा यस्य स शुद्धगुणिप्रज इत्यादौ न स्यादिति दुर्गादासकार्त्तिकेयमङ्गाधराः ।

३४५। धर्म्मादन्। धर्म्मात् ५।, अन् ।१।)।

सुधर्म्मा।

---

अन्यस्मात्तु वेत्याहुः, तन्मते मन्दमेधाः मन्दमेधः अल्पमेधाः अल्पमेधः इत्यपि (१)।

३४५। धर्म्मा। त्वन्तत्वान्मन्दाल्पादयो नानुवर्त्तन्ते, तेन सामान्यतोऽयं विधिः। सुधर्म्मेति नसवमहत्र इति घं। एवं सन्दिग्धधर्म्मा परधर्म्मा इत्यादि। इह केवलधर्म्मस्यैव ग्रहणात् सुष्ठासौ धर्म्मश्चेति सुधर्म्मः, परमः सुधर्म्मो यस्य इति वाक्ये परमसुधर्म्मः इत्यादौ न स्यात्। परमः शोभनो धर्म्मो यस्येति वाक्ये परमसुधर्म्मा इति स्यादेव, केवलधर्म्मशब्दस्य सु-सावयवत्वात् (२)।

---

(१) नित्यमसिच् प्रजामेधयोः (५।४।१२२) इति पाणिनि सूत्रम्। "नित्यग्रहणमन्यतो विधानार्थं, तेनाल्पमेधस इति सिध्यतीति वृत्तिकारादय" इति तत्त्वबोधिनी। "एवं तर्हि नित्यग्रहणादन्यत्रापि भवतीति गम्यते। श्रोत्रियस्येव ते राजन् मन्दकस्याल्पमेधसः। अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी"। इति काशिका। अतएव तर्कवागीशेन "अन्यस्मात्तु वा" इत्युक्त्वा परेषामत्र मतभेदो दर्शित इति।

(२) "धर्म्मादनिच् केवलात्" इति पाणिनीय सूत्रं (५।४।१२४)। केवलात् पूर्वपदात् परो यो धर्म्मशब्दस्तदन्तात् बहुव्रीहेरनिच् स्यात्। कल्याणधर्म्मा। केवलात् किम्? परमः स्वो धर्म्मो यस्येति त्रिपदे बहुव्रीहौ माभूत्। * * * सन्दिग्धसाध्यधर्म्मेत्यादौ तु धर्म्ममात्रपूर्वपदो बहुव्रीहिः। एवं तु परमस्वधर्म्मेत्यपि साध्वेव। इति सिद्धान्तकौमुदी। काशिकायामप्येवमेव। परमश्चासौ स्वश्च परमस्वः, स धर्म्मो यस्येति यदा विग्रह्यते तदा परमस्वधर्म्मेत्यपि साध्वेव इति तत्त्वबोधिनी। संक्षिप्तसारे तु—"अलवणमासामानरडधर्म्मादन्" (समासपादे ४६० सूत्रं)। भिन्नधर्म्मा, साक्षात् ततो धर्म्मो एतैः साक्षात्कृतधर्म्माणो वेदितव्या इति

## ३४६ ।। नञ् सुविवुपाच्चतुरोऽः ।

( नञ्-सु-वि-वि-उपात् ५।, चतुरः ५।, अः १) ।

सुदन्तसोमहरिताज्जम्भाद्दन्ताहारयोः। स्वादिभ्यः परात् दन्ते आहारे च वर्त्तमानात् जम्भशब्दादन् स्यात्। शोभनो जम्भो दन्त आहारो वा यस्य सुजम्भा, तृणवज्जम्भो दन्तोऽस्य तृणजम्भा, हरितजम्भा। एभ्यः किं ? पतितजम्भः। "दन्तयोरन्तरा शुद्धो दन्तो जम्भस्तथाशन"मिति रुद्रः।

दक्षिणादीर्म्माद्व्याधव्रणिते। दक्षिणात् परादीर्म्मादन् स्यात् व्रणयेद्व्याधक्षतो भवति। दक्षिणस्थितमीर्म्मास्य दक्षिणेर्म्मा मृगः (१)। अन्यत्र दक्षिणेर्म्मः शूकरः।

---

भाष्यम्। समासान्तरात्—परमः स्वधर्मो यस्य स परमस्वधर्मा, अनुपालितकुलधर्मा" इत्युक्तम्। तत्र गोयीचन्द्र—"समस्तं समासान्तरं यत्र तस्माद्धर्म्मशब्दाद्बहुव्रीहावनिच् भवति। * * * शब्दात्परो धर्म्म एतैरिति वाक्योपदर्शनं त्रिपदे बहुव्रीहावनिच् भवतीति सूचनार्थम्। केवलात् पूर्व्वपदात् परो यो धर्म्मशब्दस्तस्मादनिच् भवति, न पदसमुदायात् अतस्त्रिपदे बहुव्रीहौ न भवतीति चन्द्रवर्द्धमानजयादित्यादयः। तन्निरासाय भाष्यमित्युक्तम्। नहि प्रत्ययव्यक्तिरपेक्षणीया भवति। परमः स्वधर्म्मोऽस्येति धर्म्मशब्देन सह प्रथमं तत्पुरुषस्ततो बहुव्रीहिः। परमः शोभनो धर्म्मोऽस्येति त्रिपदे बहुव्रीहौ तु परमस्वधर्म्मा इत्येव भवति। अनुपालितकुलधर्म्म इति प्रथमं षष्ठीसमासस्ततो बहुव्रीहिः। अनुपालितकुलं धर्म्मोऽस्येति बहुव्रीहावनिच् भवति। समासान्तरोऽत्र कुलशब्दो, न तु धर्म्मशब्दः। चन्द्रवर्द्धमानौ विकल्पेनानिच्छतः" इति। तर्कवागीशेन भाष्यकारकमदीश्वरयोर्मतमनुसृतमिति प्रतीयते। समासपूर्व्वपदात् धर्म्मादनिच् न स्यादिति कार्त्तिकेयः।

(१) ईर्म्मं व्रणमुच्यते। दक्षिणमङ्गं क्षतिमस्य व्याधेन इत्यर्थः इति कालिका। स्वठ आते व्रणे दक्षिणेर्म्मा मृग इति गोयीचन्द्रः।

एभ्यश्चतुरः षः स्यात् हे । अचतुरः सुचतुरः ।

३४७ । भान्नेतुः । (भात् ५।, नेतुः ६।) ।

---

३४६ । नञ् । नञ् च सुश्च त्रिश्च विश्च उपश्च तत्तस्मात् । अचतुर इति—अविद्यमाना धर्म्मार्थकाममोक्षाश्चत्वारो यस्य सोऽचतुरः, । सुचतुर इति—शोभनाश्चत्वारो यस्य सः । एवं त्रयश्चत्वारो वा मानं येषां, त्रयो वा चत्वारो वा इति वा त्रिचतुराः(१) । विगताश्चत्वारो यस्य स विचतुरः । उपगताश्चत्वारो येषां, चतुर्णां समीपे वा उपचतुराः ।

३४७ । भा । मृगनेत्रेति—मृगो मृगशिरा नेता यस्याः सा । एवं हस्तनेत्रा पुष्यनेत्रा रात्रिरित्यादि । यस्य नक्षत्रस्य उदयसमकालं रात्रिः प्रवर्त्तते तत्तस्या नेतृ इति ।

गेर्नासिकाया नस् च । गेः परस्या नासिकाया अः स्यात्, तस्मिन् नसादेशश्च हे । प्रगता नासिकास्य प्रणसम् उन्नसं मुखम् । नासिकां प्रति प्रादेरगित्वेऽपि गतादिक्रियानुगतत्वात् गित्वम् (२) । गेः किं ? शोभना नासिका यस्य स सुनासिकः । अनु पश्चान्नासिका यस्य सः अनुनासिकः ।

---

(१) संख्याया डो बहोरिति ड प्रत्ययस्य बाधकोऽयं अप्रत्यय इति कार्त्तिकेयः ।

(२) "उपसर्गाच्च" (५।४।११९) इति पाणिनीयसूत्रम् । उपसर्गपदञ्च प्रादेर्मात्रस्योपलक्षणं, नासिकायन्त्रसाक्रियाभेदेन तं प्रत्युपसर्गत्वायोगात् । न च क्रियायोगाभावेऽप्युपसर्गत्वमस्तीति वाच्यम् । सामके अधिनायकमित्यव्ययीभावे उपसर्गात् सुनोतीति षत्वं मा भूदित्याह—इति तत्त्वबोधिनी ।

अस्थूलान्नाम्नि खरखुराभ्यान्तु वा त्वलुक् । स्थूलभिन्नात् परस्याः नासिकाया अः स्यात् संज्ञायां, तस्मिन् नसादेशश्च, खर-खुराभ्यां परस्यास्तु त्वस्य वा लुक् स्यात् । द्रुरिव नासिका यस्य द्रुणसः वार्ध्रीणसः । नाम्नि किम् ? तुङ्गनासिकः । स्थूलात्तु—स्थूलनासिको वराहः । खरा तीक्ष्णा नासिका यस्य खरणाः खरणसः, खुरणाः खुरणसः ।

वेः खग्रौ च । वेः परस्या नासिकायाः अः स्यात्, तस्मिन् खग्रौ (१) आदेशौ, चकारात् नसादेशश्च । विगता नासिका यस्य विखः, विग्रः, विनसः । तथाच "विनसा हतबान्धवा" इति भट्टिः (२) । विखुरित्येके ।

सुदिवादयः । सुदिवादयो अदन्ता निपात्यन्ते । शोभनं दिवा यस्य स सुदिवः,(३) शारिकुक्षिरिव कुक्षिरस्य शारिकुक्षः, चतस्रोऽस्रयो यस्य स चतुरस्रः, (४) एण्या इव पादा यस्य स एणीपदः,

---

(१) भाष्ये सिद्धान्तकौमुद्याञ्च ख इत्यत्र ख्य इति दृश्यते ।

(२) नसादेशं बाधित्वा ग्रादेश एव नित्यं भवतीति चन्द्रादिमतं, तन्निरासार्थं "विनसा हतबान्धवा" इति भट्टिप्रयोगो दर्शित इति गोयीचन्द्रः । सिद्धान्तकौमुद्यान्तु—"कथं तर्हि विनसा हतबान्धवा इति भट्टिः ? विगतया नासिकयोपलक्षितेति व्याख्येय" मित्युक्तम् । विनसेति न प्रथमान्तं किन्तु नसादेशे तृतीयान्तमिति भाव इति तत्त्वबोधिनी ।

(३) दिवाशब्दोऽयं स्वभावादधिकरणार्थप्रधानोऽव्ययम् । शोभनं दिवा यस्येति शोभनमिति कर्म्मणो विशेषणं शोभनं दिवाकार्य्यं कर्म्मास्येत्यर्थ इति १२०सूत्र टीकायां गोयीचन्द्रः ।

(४) शारि पक्षी । कुक्षि कोटि ।

### ३४८ । सङ्ख्यासूपमानात् पात् पादोऽहस्त्यादेः ।

(सङ्ख्या-सु-उपमानात् ५।, पात् ।१।, पादः १।, अहस्त्यादेः ५।) ।

एभ्यः पादस्य पात् स्यात् हे, न तु हस्त्यादेः ।

द्विपात् सुपात् व्याघ्रपात् । हस्त्यादेस्तु हस्तिपादः ।

---

अजपदः, प्रोष्ठपदः (१) । गोर्धूलिर्यस्मिन् काले स गोधूल इत्यन्ये ।

३४८ । संख्या । संख्या च सुश्च उपमानञ्च तत्तस्मात् । द्विपादित्यादि—द्वौ पादावस्य, व्याघ्रपादा इव पादा यस्येति वाक्यम् । हस्त्यादेस्तु—हस्तिपादः । हस्त्यादिर्यथा—

हस्ती कटोलः कण्डोलो गण्डोलो गणिका महान् ।
दासी कुशूल इत्यष्टी हस्त्याद्यौ परिकीर्त्तिताः (२) ॥

इह महच्छब्दस्यानुपमानत्वेऽपि पाठात् क्वचिदनुपमानादपि पादस्य पात्, तेन गूढौ पादावस्य गूढपात् । पादसमानार्थपात्-शब्देनेत्यन्यः ।

---

(१) प्रोष्ठो गौः, तस्येव पादावस्य प्रोष्ठपद इति सिद्धान्तकौमुदी । पादशब्दसमानार्थेन पदशब्देन एषां सिद्धिरिति चान्द्राः, न तद्रूपमतमिति गोयीचन्द्रः ।

(२) कटोलश्चण्डालः । कण्डोलो धान्याधारविशेषः कोल इति ख्यातः । गण्डोलः शाटुक इति ख्यात—इति दुर्गादास कार्त्तिकेय गङ्गाधराः । अपरेऽपि कतिपये शब्दा हस्त्यादिगणे पाणिनीयैः पठ्यन्ते । तर्कवागीशेन तु संक्षिप्तसारमतमनुसृतम् ।

३४९ । **कुम्भादेरीपि** । (कुम्भादेः ५।, ईपि ७।) ।

कुम्भादेः परस्य पादस्य पात् स्यात् हे ईपि परे ।

( २२४ ) पात् पत् पौ । कुम्भपदी शतपदी । ईपि किं ? कुम्भपादः ।

---

३४९ । कुम्भा । ईपीति विषयसप्तमी (१) तथा च स्त्रियामन्यदार्थभूतायां कुम्भादेः पादस्य पात् स्यादि । कुम्भपदीति—कुम्भाविव पादावस्याः, शतं पादा यस्या इति वाक्यम् । कुम्भादिर्यथा—

कुम्भजालशताष्टैकसूपाकुणर्दशूकराः ।
सूत्रगोधाशकृद्दासीसूचीकालसनिर्व्वयः (२) ।
सुनिर्द्रोणः शितिर्व्याणो विष्णुय कथिता इमे (३) ॥

इह केषाञ्चिदुपमानत्वात् पूर्व्वेणैव सिद्धे नियमार्थमिदमत आह ईपि किं कुम्भपाद इति (४) । ईपीत्युक्तेः पाच्छोपादीत्यत्र वाशब्दस्य व्यवस्थया कुम्भाद्यादिपाच्छब्दात् स्त्रियां नित्यमीप् (५) ।

---

(१) तेन ईपि कर्त्तव्ये इत्यर्थः ।

(२) निर्व्वय इत्यस्य निरपूर्व्वको विपूर्व्वकश्च पाद इत्यर्थः । कुणिः विकलाङ्गे लिषु, हस्तविशेषे पुंसि ।

(३) संक्षिप्तसारधृतकुम्भादिगणे नाक्षविष्णुशब्दौ न दृश्येते । शकृच्छब्दश्च तत्र दन्त्यादिर्दृश्यते । सिद्धान्तकौमुदीमते कुम्भादिगणः द्वात्रिंशत्संख्यकः । काशिकामते तयोर्विंशतिसंख्यकः । उभयत्रैव शकृच्छब्दो तालव्यादिर्दृश्यते ।

(४) एतत् सूत्रं विना पूर्व्वसूत्रविहितपादादेशोऽनिवार्य्य इति गदाधरः ।

(५) पाच्छोपादीत्यस्य वैकल्पिकत्वेऽपि अत्र ईप् नित्यः । अन्यथा "कुम्भादेः

। ३५० । व्यतीहारे चिः पूर्व्वो घोऽनच्या वा ।

( व्यतीहारे ७।, चिः १।, पूर्व्वः १।, घः १।, अनचि ७।, आ ।१।, वा ।१।) ।

व्यतीहारे यो हस्तस्मात् चिः स्यात्, पूर्व्वस्य च घः स्यात्, आ वा नत्वचि ।

केशेषु केशेषु गृहीत्वा यद् युद्ध प्रवृत्तं—केशाकेशि ।

दण्डैश्च दण्डैश्च प्रहृत्य यद् युद्धं प्रवृत्तं—दण्डादण्डि ।

मुष्टामुष्टि मुष्टीमुष्टि, बाहाबाहवि बाहुबाहवि ।

अचि तु असासि ।

इति हः ।

---

३५० । व्यती । परस्परं प्रहरणादिरूपक्रियाकरणं व्यतीहारस्तस्मिन् तौस्यन्तयोरित्यादिना (१) यत्न हस्तश्चेवायं विधिः । दण्डादण्डीत्यादि—चित्वाद्दयात् तोर्लुक् । मुष्टामुष्टीति—ये पूर्व्वस्यात्वं नेच्छन्ति तेषां मते तु मुष्टीमुष्टीत्येव ।

द्विदण्ड्यादयश्चान्ता निपात्यन्ते । द्वौ दण्डावस्यां क्रियायां द्विदण्डि प्रहरति ।

द्विदण्डि उभयापाणि द्विमुषल्येकपद्यपि ।

उभाहस्त्युभयाहस्ति उभापाण्युभयाञ्जलि ।

उभाकर्ण्युभयाकर्णि उभयादन्त्युभाञ्जलि ।

---

क्रियायाम्" इत्यनेनापीष्टसिद्धौ ईपीति पृथक्सूत्रकरणं व्यर्थं स्यात् । यदा ईप् समाप्यते तदैव साधुत्व इत्यर्थः । अतएवाह ईपि किं वृक्षशाद इति—इति दुर्गादासः ।

(१) १८७ पृष्ठ द्रष्टव्यम् ।

संहतपुच्छुभादन्ति निकुच्यकर्णि इत्यपि ।
उभावाह्नभयाबाहु प्रोष्ठपद्यत्र सम्मतम् ॥

अत्रोभयशब्दस्याप्रयोगेऽपि उभयापाणि इत्यादौ उभशब्दस्यो-भयादेशः । उभाबाहु उभयाबाहु इत्यत्र चेलुक् निपातनात् । कर्णौ निकुच्य(१) धावति, प्रोष्ठस्य गोः पदं गृहीत्वा धावति इत्यर्थे निकुच्यकर्णि प्रोष्ठपदि इति केऽपि चिगणपाठात् । क्रियाविशेषणा-नामेवाभिधानाद् हिदण्डा शाला इत्यादौ न स्यात् ।

धनुषो ऽनङ् प्रायो वा तु नाम्नि । धनुषो ऽनङ्(२) प्रायः स्यात्ते संज्ञायान्तु वा । गाण्डीवं धनुर्यस्य गाण्डीवधन्वा गृहीतधन्वा इत्यादि । प्राय इति किं ? धृतधनुषमझ्राय इति पुष्पदन्तः । पुष्पधन्वा पुष्पधनुः कन्दर्पः ।

संप्राज्जानुनो ज्ञुर्वा तूर्द्धात् । संप्राभ्यां जानुनो ज्ञुः स्यात् हे, ऊर्द्ध्वात्तु वा । संहतं जानु यस्य संज्ञुः । प्रगतं जानु यस्य प्रज्ञुः । ऊर्द्ध्वं जानु यस्य ऊर्द्ध्वज्ञुः ऊर्द्ध्वजानुः ।

सुसंख्याभ्यां वयसि दन्तस्य दतृः । सुशब्दात् संख्यावाचकाच्च परस्य दन्तस्य दतृ स्यात्ते वयसि गम्यमाने । ऋ इत् । शोभना दन्ता अस्य सुदन् षोड़शदन् कुमारः, हिदन् वत्सः (३) । वयसि किं ? हिदन्तो गजः ।

स्त्रियां नाम्नि । स्त्रियामन्यदार्थभूतायां दन्तस्य दतृः स्यात्

---

(१) निकुच्य व्याकुञ्च्य इति कार्त्तिकेय ।
(२) ऋ इत, चतुस्थिति । ङित्त्वादन्त्यस्य स्थाने ।
(३) शिशुत्वावस्था त्विह गम्यते इति तत्त्वबोधिनी ।

हे संज्ञायां गम्यमानायाम्(१)। सुदती, फालदती। नाम्नि किं? सुदन्ता।

अग्रान्त-श्यावादिभ्यां वा। अग्रान्तात् श्यावादेश्च परस्य दन्तस्य दतः स्यात् हे वा। कुन्दकुड्मलाग्रवद्दन्ता यस्य कुन्दकुड्मलाग्रदन् कुन्दकुड्मलाग्रदन्तः, श्यावदन् श्यावदन्तः (२)।

श्यावारोक(३)वराहाहिवृषमूषिकगर्दभाः।
शिखरः शुद्धशुभ्रौ च श्यावादौ दश कीर्त्तिताः॥

ककुदस्य ककुदवस्थायां शैले तु त्रेः। अवस्थायां गम्यमानायां ककुदस्य ककुत् स्यात् हे, त्रेस्तु शैले(४)। अजातं ककुदमस्य अजातककुत् वत्सः, स्थूलककुत्तरुणः (५)। अवस्थायां किं? श्वेतककुदः। ककुदिव ककुदं शृङ्गादि, त्रीणि ककुदानि यस्य त्रिककुत्त्रिकूटः (६)।

---

(१) पृथग्योगात् सुसंख्याभ्यामित्यस्य वयसीत्यस्य च निवृत्तिः।

(२) श्याव, श्यात् कपिश इत्यमरः, कृष्णपीतमिश्रो वर्णविशेष।

(३) अरोका अच्छिद्रा दन्ता यस्य सः अरोकदन् अरोकदन्त इति तत्त्वबोधिनी। अरोको निर्दीप्तिरिति काशिका। श्यावारोकाभ्यां संज्ञायामेव विभाषा इत्यपि काशिका।

(४) त्रिपूर्वात् परस्य ककुदस्य ककुद् स्यात् शैले गम्यमाने इत्यर्थः।

(५) कालादिकृता वस्तुधर्म्मा वयःप्रभृतयोऽवस्था इत्युच्यते। असञ्जातककुत्, बाल इत्यर्थः। पूर्णककुत्, मध्यमवया इत्यर्थः। उन्नतककुत् युवतया इत्यर्थः। स्थूलककुत्, बलवानित्यर्थः। यष्टिककुत्, नातिस्थूलो नातिकृश इत्यर्थः—इति काशिका (५।४।१४६)।

(६) ककुदाकारं पर्वतस्य शृङ्गं ककुदमित्युच्यते। न च सर्वस्त्रिशिखरः पर्वत त्रिककुत्। किं तर्हि? संज्ञैषा पर्वतविशेषस्येति काशिका (५।४।१४७)।

व्युद्भ्यां काकुदस्य काकुत् पूर्णात्तु वा । व्युद्भ्यां परस्य काकुद-शब्दस्य काकुत् स्यात्, पूर्णात्तु वा। विगतं काकुदमस्य (१) विकाकुत्, उत्काकुत्, पूर्णकाकुत् पूर्णकाकुदः।

सदुर्भ्यां हृदयस्य हृन्मित्रशत्रोः। आभ्यां मित्रशत्रोः क्रमात् हृदयस्य हृत् स्यात्। शोभनं हृदयमस्य सुहृन्मित्रं, दुष्टं हृदयमस्य दुर्हृत् शत्रुः। अनयोरिति किं ? सुहृदयः साधुः, दुर्हृदयः खलः। आभ्यां किं ? सहृदयं मित्रम्।

जायाया जानिः। जायाया जानिः स्यात्। युवती जाया यस्य युवजानिः, वृद्धजानिः (२), तथाच "युवजानिर्धनुष्पाणि"रिति भट्टिः।

इति बहुव्रीहिसमासः समाप्तः।

---

## कर्म्मधारय समासः। (यः)

इदानीं यमाह। परमचासौ इत्यादि।

व्यवत् व्यस्तम्। इतःपरं सूत्रे यत् व्या निर्द्दिष्टं तद्व्यवत् स्यात्। अतिदेशाद्वा पूर्व्वमिति पूर्व्वनिपातः।

विशेषणानां विशेष्यैः। विशेषणानां विशेष्यैः सह यः स्यात्। एकार्थानां दानां सो यसंज्ञ इत्युक्तम्। तत्र एकार्थता च

---

(१) तालु काकुदमुच्यते इति काशिका (५।४।१४८)।

(२) यद्यपि जानिः सीमन्तिनीवध्वोरिति मेदिन्यादौ वर्त्तते, तथापि युवती जाया यस्य इति वाक्ये युवजाय इति निवारणार्थं सूत्रकरणमिति गङ्गाधरः। यत्तु पत्नीजाय इति स्वयमुक्तं तत्समासान्तविधेरनित्यत्वज्ञापनार्थमिति दुर्गादासः।

सामानाधिकरण्यम् (१)। तच्च भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नर्थे वृत्तिः (२)। सा च विशेषणविशेष्यरूपाणामेव भवति (३)। तत्र यत्सामान्याकारेण प्रवृत्तमनेकप्रकारि वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकत्र प्रकारे व्यवस्थापयति तद्भेदकं विशेषणम् (४)। एवं यद्भेद्यं तद्विशेष्यम्। परमात्मा इत्यत्र परमशब्दार्थस्योत्कर्षस्य जीवात्मतः परमात्मव्यावर्त्तकत्वाद्विशेषण-

---

(१) समानं एकरूपम् अभिन्नमिति यावत् अधिकरणम् आश्रयो ययोः प्रवृत्तिनिमित्तयोः ते समानाधिकरणे, तयोर्भावः—सामानाधिकरण्यम्, भावार्थे ष्यञ्।

(२) भिन्नप्रवृत्तिनिमित्तानां—भिन्नानि पृथग्भूतानि प्रवृत्तिनिमित्तानि शक्यतावच्छेदकधर्म्मा येषां ते भिन्नप्रवृत्तिनिमित्तास्तेषाम्। अत्र विद्यालङ्कारः—भिन्ने प्रवृत्तिनिमित्ते पदार्थतावच्छेदके ययोरिति बहुव्रीहिणा भिन्नप्रवृत्तिनिमित्तयोः शब्दयोरित्यर्थ—इत्याह। नीलोत्पलमित्यत्र नीलत्वमेव नीलशब्दस्य तथा उत्पलत्वमेवोत्पलशब्दस्य प्रवृत्तिनिमित्तम्। एतयोरेकस्मिन् अर्थे उत्पलरूपे वृत्तिर्वर्त्तनं विद्यमानतेति यावत् सामानाधिकरण्यं भवति।

(३) विशेषणमिति—विपूर्व्वात् शिष् वधे च विशेषे इत्यस्मात्, शिष ञि अवर्ज्जोपयोगे इत्यस्मात् युजादेर्वा करणे अनट्, विशिष्यते अनेनेति विशेषणम्। अवर्ज्जोपयोगः परिशेषीकरणमिति दुर्गादासः।

(४) सामान्याकारेण—सामान्यरूपतया विशेष्यत्वेनाभिमतातिरिक्तवृत्तिधर्म्मतया इत्यर्थः। प्रवृत्तमिति—आरब्धे क्त, वर्त्तमानमित्यर्थः। अनेकप्रकारीति—अनेकधर्म्मसमानाधिकरणमित्यर्थः। वस्त्विति—वस्तुपदं द्वितीयान्तं पदार्थपरम्। व्यवच्छिद्य—व्यावर्त्त्य इत्यर्थः। एकत्र प्रकारे—इति विषयसप्तमी, विषयोऽत्रावच्छिन्नत्वम्। व्यवस्थापयति—नियामयति, तस्मात् प्रकारात् भ्रमति निरासीकरोतीत्यर्थः। इति विद्यालङ्कारः। इतरेभ्यो व्यवच्छेदकत्वात् भेदकत्वम्, एकप्रकारे व्यवस्थापकत्वाद्विशेषणम्। भेदेन भेद्यं प्रकारान्तरेभ्यो व्यवच्छिद्य एकत्र प्रकारे व्यवस्थापनीयं विशेष्यत्वमिति गोयीचन्द्रः।

त्वम्। आत्मनो भेद्यत्वाद्विशेष्यत्वम्। एवं नीलोत्पलं, पुत्त्वट्-गृही, पाचकपुरुष इत्यादि। यद्यपि नीलादिवत् उत्पलादीनामपि इतरव्यावर्त्तकत्वं, तथापि नीलाद्याश्रयत्वेनोत्पलादीनां प्राधान्याद्विशेष्यत्वं, नीलादीनामुत्पलाद्याश्रितत्वेनाप्राधान्याद्विशेषणत्वम् (१)। अतएव नीलादीनामुत्पलाद्यधीनत्वात्तल्लिङ्गवचनत्वम्। कुब्जकुण्ठः कुण्ठकुब्जः, (२) विसृष्टपटुः पटुविसृष्टः, इत्यादौ द्वयोर्विशेषणत्वेऽपि विशेषणविशेष्यभावस्य कामचारादेकस्य विशेष्यत्वं कल्प्यते। अभिधानात् य-सः क्वचिन्नित्यः, क्वचिन्न स्यात्, क्वचिद्विकल्पः। यथा कृष्णसर्पः लोहितशालिः; रामो जामदग्न्यः अर्जुनः कार्त्तवीर्यः; नीलोत्पलं नीलमुत्पलमित्यादि(३)। विशेषणस्य

(१) नीलशब्दो हि गुणवचनतया द्रव्ये इतत्वादप्रधानम्, उत्पलशब्दस्तु जातिवचनतया द्रव्ये इतत्वात् प्रधानं; यतो गुणः सत्येव द्रव्ये प्रवर्त्तते निवर्त्तते च, अतो गुणः द्रव्यस्य अनात्मभूतत्वादप्रधानम्। जातिर्हि द्रव्यस्योत्पत्तेः प्रभृत्याविनाशात् द्रव्यं न जहाति, अतः सा द्रव्यस्यात्मभूतत्वात् प्रधानम्। यतश्च श्वेतं छागमालभेत इत्यत्र एवं व्यवस्थितं; तथाहि श्वेतगुणयुक्तस्य छागस्याभावे वर्णान्तरयुक्तोऽपि छाग आलभ्यत एव, न तु श्वेतगुणयुक्तं द्रव्यान्तरमिति गोयीचन्द्रः (समासपादे ८६ सूत्रम्)।

(२) कुण्ठत्वञ्च क्रियायामलसंस्कारवत्त्वं कुब्जत्वञ्च पृष्ठकृतावक्रसंस्कार इति उभयोरपि गुणशब्दत्वम्। कुण्ठत्वस्य यद्यप्यात्मगुणत्वं कुब्जत्वस्य देहगुणत्वं तथापि अत्यन्तासामानाधिकरण्यं बोध्यम्। केचित्तु कुण्ठकुब्ज इत्यत्र सामानाधिकरण्यं विषयतैव, कुण्ठशब्दस्य कुब्जशब्दस्य चैकविषयत्वादिति भाव इति विद्यालङ्कारः।

(३) क्वचिदित्यनेन तदेव ग्राह्यं यत्र समासे रूढिस्तथाहि कृष्णसर्प इति रूढा शब्दवृत्तिरियम्। अतएव कर्मधारयादपि इह मत्वप्रत्ययो भवति, कृष्णसर्पवान् पर्वत इति। नहि बहुव्रीहिणा सोऽर्थः प्रतिपादयितुं शक्यते, कृष्णसर्पः पर्वत इति। एव लोहितशालिरित्यादावपि। केचित् नीलोत्पलमित्यत्रापि नित्यमेव समासं मन्यन्ते, यतस्तदपि रूढम्। अतएव नीलोत्पलवत्सर इति भवति,

इतरव्यावर्त्त्यंन विशेष्येणैव सह यः। तेन वृक्षः शिंशपा, लोहितस्तक्षकः, शङ्खः पाण्डर इत्यादौ न स्यात् (१)। आम्रवृक्षः शिंशपावृक्षः इत्यादौ यदा आम्रादीनां विशेषवृत्तिर्नावधार्य्यते तदैव फलवृक्षयोर्वर्त्तमानत्वात् सामान्याकारेण प्रवृत्तत्वेन विशेषणत्वात् (२) स इति कश्चित्। नीस एवेत्यन्यः।

बहूनां दानामपि यं कुर्व्वन्वाह संयासी इत्यादि। अन्ये तु बहूनां दानां च-द्वाय सं न कुर्व्वन्ति, महच्च तन्नीलञ्च तदुत्पलञ्चेति, पट्वी चासौ श्यामा चासौ कन्यका चेति, राज्ञो गोः चौरमित्यादौ महनीलोत्पलं पट्वीश्यामकन्यका राजगोचौरमित्यादिप्रयोगापत्तेः। वे सर्व्वान्तस्यैव परदत्वेन तस्मात्त्व-पुंवद्भावाकारत्वाभावप्रसङ्गात्। यगर्भे महानीलोत्पलं पटुश्यामकन्यका, यीगर्भदोसे राजगवीचौरमिति तु स्यादेव। बहूनां

---

न तु नीलोत्पलं सरः। * * * राज्ञो नामदन्यः, अर्ज्जुनः कार्त्तवीर्य्य इत्यत्र रामार्ज्जुनपदयोरेकार्थत्वे उभयोरेव व्यवच्छेद्यव्यवच्छेदकत्वाद्विशेषणविशेष्यभावे विद्यमानेऽपि न समास इति गोयीचन्द्रः (११६।११७)। ननु कथं कार्त्तवीर्य्यार्ज्जुनो नाम राजा बाहुसहस्रभृदिति? नैवमहोऽभूदितिवत् षष्ठीसमासः कार्य्य इति विद्यासागरः।

(१) वृक्षः शिंशपा इति—वृक्षो हि शिंशपात्वं व्यभिचरति, यतः प्रकारान्तरेभ्यः पलाशादिभ्यश्चापि व्यवच्छिनत्तीति भवति तस्य शिंशपा विशेषणं, स च वृक्षो विशेष्यः। शिंशपात्वं तु वृक्षत्वं न व्यभिचरतीति न वृक्षो विशेषणं, न शिंशपार्थो विशेष्य इति मत्वैकं द्वयोरेव विशेषणविशेष्यत्वाभावान्न समास इति गोयीचन्द्रः। व्यभिचरति त्यजतीत्यर्थः।

(२) यद्यपि वृक्षे पृथक् शिंशपात्वं जातिः, फले चाम्रा, तथापि शिंशपा-महार्घत्वादय-सामान्यधर्मोऽत्र विशेषणमिति बोध्यमिति विद्यासागरः। यदा तु तुल्यविषयोः प्रकरणादा पदार्थं पदान्तरगतत्वं न भवितव्यमेव समासेन—इति गोयीचन्द्रः।

दानामपि च-इसौ स्त्रीकृत्यापि राज्ञो गौश्च अश्वश्च पुरुषश्चेति, पञ्च भुक्तवन्तो ब्राह्मणा यस्येत्यादौ राज्ञो गवाश्वपुरुषाः पञ्चभुक्तवद्ब्राह्मण इत्यादि न स्यादनभिधानादित्याहुः। अन्यक्तन्मते तु महन्नीलोत्पलम् इत्यादिप्रयोगाभावनिश्चयश्चेदस्ति; तदा राज्ञो गवाश्वपुरुषा इत्यादिवत्ताद्दृशप्रयोगाभावोऽनभिधानादिति प्रत्याख्यातम्। तथाच कालाः परिमाणिनेति (१) पाणिनीयसूत्रे काला इति व्यनिर्द्दिश्यात्सिद्दोऽप्ययं सः, तेन द्वे अहनी जाते अस्येति विग्रहे द्व्यहजात इत्यादि स्यादिति न्यासकृतोक्तमिति। अभिधानात् क्वचिदन्यत्रापि—

एकादीनां यः। एकादीनां स्याद्यन्तेन सह यः स्यात्। एका चासौ शाटी चेति एकशाटी। एकादेः पूर्व्वनिपातः। सर्व्ववेदाः। एकादिर्यथा,—

एक सर्व्व जरत् पूर्व्व समान नव मध्यमाः।
जघन्यचरमौ वीर पुराणाऽपर केवलाः।
मध्यः प्रथम एकादाविह पञ्चदश स्मृताः॥

सामान्यशब्देनोपात्तत्वात् कार्षापणार्थपुराणशब्दस्य इह न ग्रहणम्। विशेषणविशेष्यत्वादेव सिद्धे एकपण्डितः सर्व्वशुक्लः जरद्वाचक इत्यादौ पूर्व्वनिपातार्थोऽयमारम्भः (२)।

पूर्व्वकालस्य। पूर्व्वकालक्रियावाचिनः परकालक्रियावाचिना

---

(१) तदुक्तं सच्चिदानन्दमिश्रस्य टीका द्रष्टव्या (४८)।

(२) अन्यथा एकादीनां पण्डितादीनाञ्च द्वयोरेव विशेषणत्वात् कुब्जखञ्जः खञ्जकुब्ज इत्यादिवदनियमः स्यात्।

सह यः स्यात्। आदौ स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः, लूनप्ररूढ़ः, लिप्तवासितः, बद्धताड़ितः, स्नापितभोजितः। इदमपि पूर्व्वनिपातार्थम्।

दिक्संख्ययोर्नाम्नि। दिग्वाचिनः संख्यावाचिनश्च स्याद्यन्तेन सह यः स्यात् नाम्नि गम्यमाने। पूर्व्वा चासाविषुकामशमी चेति पूर्व्वेषुकामशमी (१), चतुर्विद्याः, पञ्चाम्राः, सप्तर्षयः। अत्र से एव संज्ञाप्रतीतेः वाक्याभावेऽपि बालबोधनार्थमर्थकथनम्। नाम्नि किम्? उत्तरा वृक्षाः, अष्टौ ब्राह्मणाः। विशेषणत्वादेव सिद्धे नियमार्थमिदं, तेनानाम्नि न स्यात् (२)। पञ्चपुराणानां दशदिक्षु पञ्चपुरुषनासिक्य इत्यादयोऽसाधव इत्यन्ये (३)। शिष्टप्रयोगदर्शनात् उत्सर्गत्वेन क्वचिदनाम्न्यपीत्यन्यः। चतुर्दिगीशा-

---

(१) पूर्व्वेषुकामशमीति देशविशेषसंज्ञेति प्रयोगरत्नमाला।

(२) कथं तर्हि "त्रिलोकनाथेन सदा मखद्विषः" इति कालिदासः? त्रिलोकशब्दस्यार्षप्रायत्वात्। न च समाहारे द्विगुः, द्विगोरिति ङीप्प्रसङ्गात्। न च पात्रादित्वं कल्प्यम्, "यदि त्रिलोकीगणनापरा स्यात्" इति प्रयोगविरोधात्। न चोत्तरपद इति समासः, त्रिपदतत्पुरुषस्यैव दुर्लभत्वात्। अत्रोच्यते। लोकशब्दोऽत्र लोकसमुदायपरः। त्रयाणां लोकः त्रिलोकः, शाकपार्थिवादिः—इति मोहनगोस्वामी। तत्त्वबोधिन्यामप्येवमेव। मल्लिनाथमते त्रिलोकनाथेन इत्यत्र उत्तरपदद्विगुसमासः। रघुवंशे ३।४५ श्लोकस्य टीका द्रष्टव्या।

(३) "पञ्चपुराणीः पञ्चपुराणानां दशदिक्षु इत्यादयोऽसाधवः" इति संक्षिप्तसारे दृश्यते (समासपादे ८८ सूत्रम्)। पञ्चपुरुषनासिक्य इति तु तत्र न दृश्यते। "कथं तर्हि पञ्चपुरुषनासिक्य इति? सान्दर्भोऽयं प्रयोग इति वाच्यम्, अथवा शिष्टप्रयोगदर्शनात् क्वचिन्नाम्न्यपि संख्याया समासो भवति। त्रिगुण-चतुर्म्मार्ग-षड्वर्गादयः प्रयोगबलेन अथवा त्रिनवो गुण इत्यादौ वाक्ये शाकपार्थिवादित्वात् समासः" इति गोयीचन्द्रः।

नवमन्ये मानिनी, द्विचन्द्रज्ञानमित्यादौ तु चतसृणां दिशां समाहारश्चतुर्दिक्, द्वयोश्चन्द्रयोः समाहारः द्विचन्द्रमिति गसात्(१)। पूर्व्वासु वर्षासु भवः पौर्व्ववार्षिक इत्यत्र तु कालवाचिपूर्व्वशब्दस्यैकादित्वात् सः (२)।

कतरकतमयोर्जातिप्रश्ने। कतरकतमयोर्जातिप्रश्ने एव यः स्यात्। कतरकठः (३) कतमकठः। जातिप्रश्ने किं? कतरः पाठकः।

किमः क्षेपे। क्षेपो निन्दा, तस्यां गम्यमानायां किमो यः स्यात्। किंराजा यो न रक्षति महीं, (४) किंगौः यो न वहति भारम्। क्षेपे किं? को राजा पाटलिपुत्रे? प्रश्नेऽत्र किंशब्दः।

निन्द्यानां निन्दनैः। निन्दाविषयाणां निन्दाकारणैः (५) सह यः स्यात्। वैयाकरणश्चासौ खसूचिश्चेति वैयाकरणखसूचिः निष्प्रतिभ इत्यर्थः (६)। याज्ञिककितवः अयाज्ययाजनात्प्रा-

(१) ननु सद्यामान्नि नार्थं समासस्तदा कथं चतुर्दिगीयामित्यादौ समास? अत आह—चतुर्दिगिति। चतसृणां दिशां समाहारः चतुर्दिक्, चतुर्दिश ईया-चतुर्दिगीया इति षष्ठीतत्पुरुषः। द्वयोश्चन्द्रयोः समाहार इति द्विचन्द्रं, पात्रादित्वात् स्त्रीत्वाभाव इति गोयीचन्द्रः।

(२) अत्र पूर्व्वशब्दस्य कालवाचित्वं, न तु दिग्वाचित्वम्, अतएव "एकादीनां च" इत्यनेनैव समासः।

(३) गोत्रञ्च चरणैः सहेति जातित्वमिति।

(४) महीरक्षणं हि राज्ञो धर्म्मस्तदकरणात्तस्य निन्देति गोयीचन्द्रः।

(५) निन्दनैरित्यनेन निन्दासाधनानां निर्देशात् निन्दादिपदोपादाने माभूदिति दर्शितमिति बृहन्मुग्धबोधम।

(६) खसूचिरिति—यः पृष्टो निष्प्रतिभत्वात् खं सूचयति अहो गगनं निर्म्मलमिति, प्रश्नं विस्मारयितुं, स निष्कलव्याकरणाध्ययनत्वात् कुत्स्यते।

पर इत्यर्थः। तार्किकदुर्दुरूटः (१) नास्तिक इत्यर्थः। निन्द्यानां किं? वैयाकरणचौरः, न ह्यत्र वैयाकरणत्वं निन्द्यते, किन्तु चौरत्वम्। निन्द्यैः किं? कुत्सितो विप्रः। विशेष्यस्य पूर्व्वनिपातार्थम् इदम्।

पापाणकयोर्निन्द्यैः। निन्दाविषयैः सह पापाणकयोर्यः स्यात्। पापनापितः, अणकनापितः (२)। इह पापाणकशब्दौ स्वहृत्यपरिज्ञाननिन्दावचनौ। निन्द्यस्य पूर्व्वनिपाते परनिपातार्थमिदम्।

उपमानस्य सामान्यवाचिना। उपमीयते येन तदुपमानं, सादृश्येन स्वभिन्नपदार्थपरिचायकम् इत्यर्थः। उपमानोपमेययोरेव साधारणो धर्मः सामान्यम्। तद्वाचिना सह उपमानवाचिनो यः स्यात्। शस्त्रीव श्यामा (३) शस्त्रीश्यामा देवदत्ता,

---

इति कैयटः। न हि अध्ययनमेव निन्दा किन्तु निपुणतिभत्वमत्र निन्दारूपं गर्भितं प्रतीयते। निपुणतिभतया हि वैयाकरणो निन्द्यो भवति। यतो व्याकरणाध्ययनसंवेदनसम्बन्धेन वैयाकरणशब्दस्तत्र प्रवृत्त—इति गोयीचन्द्रः।

(१) दुर्दुरूट इति—दुरु वञ्चने। दुर्दुरं। औणादिकः कूटप्रत्ययः। बहुलमन्यत्रापीति वेदितुम्। रलयोरैकत्वस्मरणाद्रुरुश्च र इति प्रौढमनोरमा शब्दबोधिनी च। अयुक्तिवादी दुर्दुरूटः, युक्तिमजानन् प्रगल्भ इत्यर्थ—इति, यो युक्तिमजानन् शुचिम्यादिवमीश्वरत्वं न मन्यतीति वदति स दुर्दुरूट—इति च प्रयोगरत्नमाला टीका।

(२) कुप्य कुत्सितोऽस्य श्चेटकाद्यावकाः यथा इत्यमरः। निन्द्येय' कुत्सितोऽपव इति च भाषमाला।

(३) शस्त्रमस्य शस्त्री, अस्त्रार्थे ईप्रत्ययः। शस्त्री तु छुरिका। "इह पूर्वपदं तद्गते कार्त्स्नविशेषमिति इत्यविदं कौमिकविषये इवशब्दः प्रयुज्यते"—इति सिद्धान्तकौमुदी। अ कार्यार्थं धर्म्मान्तरनिषेधाद सामान्यवचनेति पूर्वे वर्णने, तेऽभि

हंसश्येनी (१) शाटी। सामान्यवाचिना किं? पर्व्वता इव बलाहकाः (२)। उपमानस्येति किं? देवदत्ता इव श्यामा। कश्चित् श्यामत्व गुणमुपादाय शस्त्रीशब्दो देवदत्तायां वर्त्तते, अतः सामानाधिकरण्यमित्याह। तन्मते शस्त्री चासौ श्यामा चेति वाक्यम्। वचनसामर्थ्याद्वैयधिकरण्येऽपि य इत्यन्ये। एवं परत्रापि।

उपमेयस्य व्याघ्राद्यैः। सामान्याप्रयोगे। उपमेयवाचिनो व्याघ्राद्यैः सह यः स्यात् सामान्यस्याप्रयोगे सति। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः। व्याघ्रादिर्यथा—

व्याघ्र पुङ्गव शार्दूल सिंह कण्ठीरवर्षभाः (३)।
वराह महिषाकर्ष पद्म कुञ्जर हस्तिनः।
कमलं पल्लवं नागः केशरी वृषभो हरिः।
वृषचन्द्रः किशलयं कडारोऽन्ये प्रयोगत.॥

सामान्याप्रयोगे किं? पुरुषो व्याघ्र इव शूरः। शूरत्वमिह उपमेयोपमानयोः पुरुषव्याघ्रयोः साधारणो धर्म्मः।

---

धीयन्ते। यथा शस्त्रीव श्यामा इत्यत्र श्यामाशब्द उपमानोपमेययो साधारण-धर्म्मवचन तद्धर्म्मयुक्तायां देवदत्तायां सत्यपि वलोपाद्यभेदोपचाराद्वा वर्त्तत इति भवति सामान्यवाची—इति गोयीचन्द्र।

(१) हंसीव श्येनी हंसश्येनी पुंवद्भाव। श्येनीति श्वेतशब्दस्य स्त्रिया रूप पलितीमक्नीत्यादिना निपातनात् सिद्धम्।

(२) अत्र बलाहकशब्द उपमानोपमेययोर्न साधारणधर्म्मवाची। बला हको मेघ।

(३) कण्ठीरव सिंहो मत्तहस्ती वा।

श्रेण्यादेः कृतादिना च्व्यर्थे। श्रेण्यादिः (१) कृतादिना सह यः स्यात् अभूततद्भावे। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः (२)। श्रेण्यादिर्यथा—

श्रेणिः कुङ्कुममुदकं पूगः।
कुशलं निधन कुसुमं कूटः।
इन्द्रः कलिम पण्डित मुण्डम्।
निचयो निपुणो देव विशिष्टम्।
अमरश्चपलो राशिर्दृषदध्यापकः पटुः।
ब्राह्मणः क्षत्रियो भूतो वदान्यः कृपणो खटुः॥

कुङ्कुमविशिष्टयोः स्थाने पदार्थविषयशब्दौ पठन्त्यन्यः। कृतादिर्यथा—

कृत भूत समाम्नात सम्भावित निराकृताः।
गत उक्त समाख्यात समाख्यात विकल्पिताः॥
मतावधारित ख्यात मुक्त ज्ञात श्रुतानि च।
कलितोपकृताम्नातावधारितमुपाकृतः (३)।
एकविंशतिराख्याता ग्रेय ज्ञेयं प्रयोगतः॥

---

(१) श्रेण्यादय इति निर्देशात् श्रेणिशब्दस्य ह्रस्वेकारान्तस्य श्रेणीति दीर्घेकारान्तस्य च ग्रहणम्। *** श्रेणिपूगकूटाः समूहवाचकाः—इति प्रभाप्रकाशिका।

(२) यदा तु सिद्धा एव श्रेणयः सम्यक् कृतास्तदा समासो नेष्यत इत्याशयेनाह अश्रेणयः श्रेणयः इति। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः। अभूताभ्दो तु कृतमिति निपातनात् पदत्वात्—श्रेणीकृतम्। इह तु च्वौ नेति हार्द—इति तत्त्वबोधिनी।

(३) कलितप्रकारे कलित इत्यत्र कथित इति पाठो दृश्यते।

श्रेणीभूतः पूगीभूत इत्यादौ तु श्रदादित्वात् (१) सः । च्व्यर्थे किम्? श्रेणयः कृताः ।

अनञ्क्तस्य सनञ्क्तेन । अनञ्क्तान्तस्य सनञ्क्तान्तेन सह यः स्यात् (२)। कृतञ्च तदकृतञ्चेति कृताकृतं । कृतभागसम्बन्धात् कृतम्, अकृतभागसम्बन्धात् अकृतम्, अवयवधर्म्मेण समुदायस्य तथा व्यपदेशात् (३) । एवं क्लिष्टाक्लिष्टं, भुक्ताभुक्तम् इत्यादि ।

कृतादेरपकृतादिना । कृतादेरपकृतादिना सह यः स्यात् । कृतञ्च तत् अपकृतञ्चेति कृतापकृतम्, अभिमतानभिमतयोर्भागयोः करणाकरणात् (४) । भुक्तञ्च तदभ्यर्हितत्वात् विभुक्तञ्चाशोभनत्वात् भुक्तविभुक्तं (५)। कियद्गतं कियत्प्रत्यागतं गतप्रत्यागतम् (६) ।

---

(१) च्व्यन्तस्य च्व्यनुकारेत्यादिना ऊर्यादित्वात् इत्यर्थः । ऊर्यादिस्थले श्रदादीति धविप्रधारमतम् (समासपादे ५२ सूत्रम्)। यदि च्व्यर्थे समासोऽयं, तदा च्विप्रत्ययान्तानां श्रेण्यादीनाम् अभूततद्भावेऽर्थे अनगते कथं समासः ? अत आह श्रदादित्वादिति। तद्भूतव्यतिरिक्तस्य च्विप्रत्ययस्यैवाभाव इति गोयीचन्द्रः।

(२) नञ्समासाधिकेन नञ्रहितं समस्यते इति सूत्रार्थः, तेनेह न सिद्धं पाधकं च—इति तत्त्वबोधिनी।

(३) ननु कृताकृतमित्यादौ कथं सामानाधिकरण्यं, न ह्येकं वस्तु कृतं स्यादकृतञ्च—इत्याशङ्क्याह कृतभागेति। "एकदेशकरणात् कृतम्, एकदेशान्तराकरणात् तदेवाकृतम्"—इति तत्त्वबोधिनी। कृतं किञ्चित् धान्यस्य तण्डुलादि, अकृतं किञ्चित् तण्डुलस्याचारादि इति कृताकृतं तण्डुलादिकमिति प्रभाप्रकाशिका ।

(४) कृतापकृतमित्यत्राप्यसमासोऽभिगम्यते, यत् कृतं तदेवापकृतं विरूपं कृतमित्यर्थावगमात्—इति कैयटः । अकरणादित्यत्र अप्रशस्ते नञ् करणमप्यकरणमेवाप्रशस्तत्वात्—इति विद्यालङ्कार ।

(५) विशब्दोऽत्र अशोभनत्वं द्योतयति विरूपवत्—इति गोयीचन्द्र ।

(६) गतप्रत्यागतं लोकवन्धविशेष इति प्रभाप्रकाशिका ।

यदा तु पूर्व्वं गतं पश्चात् प्रत्यागतमिति वाक्यं, तदा पूर्व्वकालस्येति सः। क्रयश्चासौ क्रयिका (१) चेति क्रयाक्रयिका, मनीषादित्वात् घः। क्रयावयवत्वात् क्रयः, क्रयिकावयवत्वात् क्रयिका इति अवयवधर्म्मेण समुदायस्य तथा व्यपदेशादभेदः। एवं पुटापुटिका फलाफलिका मानोन्मानिका इति (२)।

सदादिपूज्यमानयोः पूज्यमाननागादिभ्याम्। सदादेः पूज्यमानवाचिना पूज्यमानवाचिनो नागादिना सह यः स्यात्। सञ्चासौ पुरुषश्चेति सत्पुरुषः। सदादिर्यथा—

सन्महत् परमोत्कृष्टोत्तमाः पञ्च सदादयः।

पूज्यमानेन किम्? सन् भृत्यः, विद्यमान इत्यर्थः। उत्कृष्टो गौः, पङ्कादुद्धृत इत्यर्थः। गौश्चासौ नागश्चेति गोनागः। नागादिर्यथा—

नागो वृन्दारकश्चैव कुञ्जरोऽत्र त्रयो मताः।

व्याघ्रादित्वादेव सिद्धे सामान्यप्रयोगेऽपि यत्नविधानार्थमिदं, तेन नागवृन्दारकः शूरः (३) नरवृन्दारको बुधः। पूज्यमानस्येति किम्? मैत्रो नागः मूर्खत्वात्।

जातेः पोटादिप्रशंसार्याभ्याम्। जातिवाचिनः पोटादिना प्रशंसावाचिना च सह यः स्यात्। इभ्या करेणुः, पोटा स्त्रीपुंस-

(१) क्रयशब्दात् स्वार्थे क, स्त्रीत्वविवक्षायामाप्, कामयमानोऽस्के इत्यादिना अकारस्य इकारः।

(२) पुटश्चासौ पुटिका चेति फलञ्च तत् फलिका चेति, मानञ्च तत् उन्मानिका चेति वाक्यम्।

(३) इदं रूपं प्रमादतो वा भाति अस्य, गोतल्पेत्यादिना वृन्दारादित्वात् [illegible]। वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिषु इति मेदिनी।

लक्षणा, इभ्या चासौ पोटा चेति इभ्यपोटा, गोवेहत्। पोटादिर्यथा—

पोटा वेहत् वशा धूर्त्तस्तोक श्रोत्रिय धेनवः।
प्रवक्ता युवतिर्गृष्टिस्तथा वष्कयनीत्यपि।
अध्यापकः कतिपयो दश विभिरिहेरिताः॥ (१)

वक इव वकः पुवयः स चासौ धूर्त्तश्चेति वकधूर्त्त इत्यत्र निन्द्यानां निन्दनैरित्यनेनैव सिद्धे कठधूर्त्त इत्यादौ अनिन्दार्थं वचनम्। धूर्त्तकठः "जनयति कुमुदभ्रान्ति धूर्त्तवको हि बालमत्स्याना"मित्यादयोऽसाधव इत्यन्ये, उत्सर्गत्वात् विशेषणविशेष्यत्वेनैव साधुत्वमित्यपरः। अत्र प्रशंसार्थशब्देन रूढिशब्दानां मतल्लिकादीनामिव ग्रहणम् (२)। गौश्चासौ मतल्लिका चेति गोमतल्लिका गोमचर्चिका गोप्रकाण्डं विप्रोद्धः विप्रतल्लजः (३)।

युनः पलितादिना। युवन्शब्दस्य पलितादिना सह यः स्यात्। युवा चासौ पलितश्चेति युवपलितः।

---

(१) उभयव्यञ्जना पोटेत्यभिधीयते (स्तनश्मश्र्वादियुक्ता स्त्री)। गृष्टिरेकवारप्रसूता। धेनुः प्रत्यग्रप्रसूता। वशा वन्ध्या। वेहत् गर्भोपघातिनी। वष्कयणी तरुणवत्सा—इति काशिका (२।१।६५)। प्रत्यग्र अभिनव, दुग्धपानाधीनजीवनो वत्सो यस्याः सा इत्यर्थः। संक्षिप्तसारे अध्यापक इत्यत्र अध्यायक इति पाठो दृश्यते। अधिपूर्वादिङो ण्वक वृद्धिरायादेशश्च—इति गोयीचन्द्रः (समासपादे १०२ सूत्रम)।

(२) ये तु यौगिकाः प्रशस्तशोभनरमणीयादयो ये च विशेषवचना शुचिमृद्वादयो ये च गौण्या वृत्त्या प्रशंसां गमयन्ति सिंहो माणवक इत्यादयस्ते सर्व्वे व्युदस्यन्ते—इति प्रौढमनोरमा तत्त्वबोधिनी च।

(३) गोमतल्लिकेत्येवमादीना शोभन प्रशस्तो गौरित्यर्थः। "मतल्लिका मचर्चिका प्रकाण्डमुद्ध तल्लजौ। प्रशस्तवाचकान्यमूनि" इत्यमर।

पलितादौ तु पलितः खलतिर्वलिनो जरन्।

प्रायो नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं, तेन युवती चासौ पलिता चेति युवपलिता युवजरतीति।

स्व-तुल्यार्थयोरजात्या। स्वसंज्ञकत्यान्तानां तुल्यार्थानाञ्च जातिभिन्नवाचिभिः सह यः स्यात्। भोज्योष्णं पानीयशीतं, शीतपानीयोष्णपानीयादयोऽसाधवः इत्यन्ये। शीतगुणयुक्तं पानीयमित्यादिवाक्ये शाकपार्थिवादित्वात् सिद्धमित्यन्यः। तुल्यश्वेतः सदृशश्वेतः। तुल्यमहान् सदृशमहान् इत्यादौ तु सदादित्वात् प्राप्तः सोऽनेन बाध्यते परत्वात्। तस्य तु महापुरुष इत्यादौ विषयः। अजात्या किं भोज्य ओदनः।

वर्णो वर्णैः। वर्णवाचिनां वर्णवाचिभिः सह यः स्यात्। कृष्णसारङ्गः कृष्णशबलः, सारङ्गशबलशब्दौ (१) मुख्यवृत्त्या समुदायवृत्ती, अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसीति न्यायात्। कृष्णशब्दो हि कृष्णावयवसम्बन्धात् समुदाये वर्त्तते इति गौणसामानाधिकरण्यात् पूर्व्वेणाप्राप्तेऽनेन यो विधीयते (२)। तत्र गौणत्वाद्विशेषणत्वेन कृष्णशब्दस्यैव पूर्व्वनिपातः। यत्र तु अवयवसम्बन्धात् समुदायवृत्ती तत्र कामचारात् प्राग्भावः, यथा कृष्णशुक्लः शुक्लकृष्ण इति।

---

(१) सारङ्गः शबले त्रिष्वमरः।

(२) अत्र कृष्णादिशब्दा अवयवविशेषवाचिनो [illegible] वर्णवाचिन एव, न समुदायवाचिनः। अतो [illegible] सामानाधिकरण्याभावात् [illegible] पूर्व्वेणाप्राप्तौ विधीयते इति [illegible]।

कुमार्य्याः श्रमणादिना। कुमारीशब्दस्य श्रमणादिना सह यः स्यात्। कुमारी चासौ श्रमणा (१) चेति कुमारीश्रमणा। श्रमधोर्नन्द्यादित्वादनः। श्रमणादिषु—

श्रमणा तापसी दासी बन्धकी कुलटेत्यपि।
तथा प्रव्रजिता गर्भिण्यश्च सप्त प्रकीर्त्तिताः॥

कुमारस्य च मृद्वादिना। कुमारश्चासौ मृदुश्चेति कुमारमृदुः कुमारी चासौ मृद्वी चेति कुमारमृद्वी। मृद्वादिर्यथा—

मृदु पटु पण्डित चपला निपुणः।
कुशलाध्यायकमव्यभिरूपः॥

मृद्वादीनां कुमारीसामानाधिकरण्ये स्त्रीत्वमेव विशेषणत्वात्।

चतुष्पदां गर्भिण्या। चतुष्पदां जातिवाचिनां गर्भिण्या सह यः स्यात्। गोगर्भिणी अजगर्भिणी। चतुष्पदां किं ब्राह्मणी गर्भिणी, शरभी गर्भिणी (२)।

मयूरव्यंसकाद्याः। मयूरव्यंसकाद्याः शब्दाः यसंज्ञकाः निपात्यन्ते। व्यंसयति छलयति व्यंसको धूर्त्तः। विपूर्व्वादंसधोर्णकः। मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः छात्रव्यंसकः काम्बोजमुण्डः। यवनमुण्डः।

एहीहादयोऽन्यार्थे। अन्यार्थे वर्त्तमानाः एहीहाद्याः मयूरव्यंसकादित्वात् यसे निपात्यन्ते। एहि इहेति यत्र कर्म्मणि वर्त्तते तत् एहीहम्, एहि यवैरिति यत्र कर्म्मणि वर्त्तते तत् एहियवम्, एहि वाणिजेति यस्या क्रियायां सा एहि-

(१) श्रमणा सन्न्यासिनी। (२) शरभः शलभः।

वाणिजा, एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता, प्रोह्य कटमिति यस्यां सा प्रोह्यकटा, प्रोह्यकर्दमा आहरवसना आहरचेला आहरवितता उद्धरचूड़ा छिन्धिविचक्षणा, भिन्धि लवण-मित्युच्यते यस्यां क्रियायां सा भिन्धिलवणा, पचलवणा, उद्धर उत्सृजेति यस्यां क्रियायां सा उद्धरोत्सृजा, उच्चमविषमा उत्पत-निपता अपेहिप्रघसा, उदक् च अवाक् च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितश्च उपचितश्च आचोपचम्, आचितश्च पराचितश्च आचपराचं, निश्चितश्च प्रचितश्च निश्चप्रचं, नास्ति किञ्चिदस्य अकिञ्चनः नकिञ्चनो वा, पीत्वास्थिरकः भुक्त्वासुहितकः प्रोष्यपापीयान् द्वहपञ्चमी द्वहद्वितीया स्नात्वाकालकः उत्पत्य-पाकला जाता, निपत्यरोहिणी जाता, विपक्वश्यामा जाता इत्यादि। उद्धरोत्सृजेत्यादीनां त्यादिस्तादिना क्रियासातत्य इत्यादिना सिद्धेऽसातत्यार्थे गणे पाठः। पीत्वास्थिरक इत्यादौ से सत्येक-त्वात् पीत्वास्थिरकस्य इदम् इत्यर्थे ष्णे पैत्वास्थिरकं भौक्त्वासुहि-तकं प्रौष्यपापीयसम् इत्यादौ णित्ते आद्यचो वृिः।

द्यन्तं टेनाभीक्ष्ण्ये घे। आभीक्ष्ण्ये गम्यमाने मयूरव्यंसकादित्वात् द्यन्तं यसे निपात्यते, यदि यसो घमाह। जहि जोडमिति यः पुनःपुनराह स जहिजोडः (१) जहिस्तम्बः उज्जहिजोड उज्जहिस्तम्बः।

त्यादिस्तेन क्रियासातत्ये। त्याद्यन्तं त्यादन्तेन सह क्रिया-सातत्ये गम्यमाने यसे मयूरव्यंसकादित्वात् निपात्यते। अश्नीत

(१) जोड इत्यत्र जोट जोड इति पाठभेदो दृश्यते।

कर्म्मधारय समासः। (यः)।

परमश्चासावात्मा चेति—परमात्मा।

संश्चासौ चिच्चासावानन्दश्चेति—सच्चिदानन्दः।

३५१। क्रोड़ादिः पुंवद् यजातीयदेशीये तत्वे त्वजात्याख्यः।

( क्रोडादिः १।, पुंवत् ।१।, य जातीय देशीये ७।, तत्वे ७।, तु ।१।, अजात्याख्यः १।)।

---

पिबत इति यस्यां क्रियायां सा अश्नीतपिबता पचतभृज्जता खादतमोदता इत्यादि।

शाकपार्थिवाद्याः। शाकपार्थिवाद्या निपात्यन्ते। शाकः भक्तिः प्रधानं यस्य स शाकप्रधानः, शाकप्रधानः पार्थिवः शाकपार्थिवः, मेरुनामा महीभृत् मेरुमहीभृत्, सुग्रीवनामा कपिः सुग्रीवकपिः, श्रीहर्षनामा नृपतिः श्रीहर्षनृपतिः, सुखयुक्ता नासिका सुखनासिका, त्रिगुणीकृता जगती त्रिजगती, अर्द्धावशिष्टं घृतम् (१) अर्द्धघृतम् इत्यादि। शाकपार्थिवादिराकृतिगणः। अविहित-यस-लक्षणो मयूरव्यंसकादौ द्रष्टव्य आकृतिगणत्वात्। एषां मयूरव्यंसकादीनां यान्तर न स्यात्, तेन परमो मयूरव्यंसकः।

३५१। क्रोड़ा। क्रोड् च पूरणी च ते आदी यस्य सः। यश्च जातीयश्च देशीयश्च तत्तस्मिन्। तश्च त्वश्च तत्तस्मिन्।

---

(१) घृतमित्यत्र घृतमिति क्वचित् पाठः।

कोड्पूरणादिः पुंवत् स्यात् यादौ, तत्वयोस्तु जातिसंज्ञावर्ज्जम्।

पाचकस्त्री पञ्चमभार्य्या।

---

जातिश्च आख्या च ते, ते न स्तो यत्र सः, कोड्पूरणादिरित्यादि। कोडादयो नोसाककोड् इत्यादिसूत्रे ये पठितास्ते पुंवत् स्युः ये जातीये देशीये च परे। पाचकस्त्रीति पाचिका चासौ स्त्री चेति वाक्यम्। एवं रसिकभार्य्या इत्यादि। पञ्चमी चासौ भार्य्या चेति वाक्यम्। दत्तभार्य्या मैथिलभार्य्या महाष्टमी महानवमी सुन्दरप्रिया कल्याणमनोज्ञा इत्यादि। वैयाकरणभार्य्या सौवश्वभार्य्या काषायकन्या हेममुद्रिका ब्राह्मणमानिनीत्यादि तु निषेधाभावात् पूर्व्वेणैव सिद्धम्। नोसाककोड् इत्यादिना येषां निषेधः प्राप्तस्तेषामेवानेन पुंवद्भावः, तेन मक्षिकावृन्दारिका द्रोणीभार्य्या कुमारीतन्नजा इत्यादौ न स्यात्। जातीये पूर्व्वेणाप्राप्ते, देशीये कोडादित्वादप्राप्ते विधिर्यथा—तार्किकजातीया कारकजातीया तार्किकदेशीया इत्यादि। अजात्याख्य इत्यस्य विशेषपरत्वात् गुणवचनस्यैव तत्वयोः पुंवत्, तेन पट्व्या भावः पटुत्वं मृदुत्वम् इत्यादौ स्यात्, न तु कठोलत्वं दत्तात्वं पाचिकात्वं व्यभिचारिणीत्वम् इत्यादौ। ये तु क्रियापि गुणः इत्याहुः तन्मते पाचकत्वं व्यभिचारित्वम्। तन्वीत्वमित्यादौ तु नोसाककोड् इत्यादिना निषेधः। ऊवित्यनेन यस्मात् ऊप्रत्ययस्तस्यापि ग्रहणात्। कोड्पूरणादीति किं ? ब्रह्मबन्धूवाम्ना(१)। यादौ किं

---

(१) ब्रह्मबन्धूजातीया भार्य्येत्यर्थः।

३५२ । द्विव्यष्टाधिका द्वात्रयोऽष्टा स्त्रिदशाद्येऽन्त्यषट्के त्वनशीतौ वा ।

( द्विव्यष्टाधिकाः १।।।, द्वात्रयोऽष्टाः १।।।, त्रिदशाद्ये ७।, अन्त्यषट्के ७।, तु ।१।, अनशीतौ ७।, वा ।१। ) ।

एषामेते क्रमात् स्युः दशादित्रिके, चत्वारिंशदादि षट्के अशीतिवर्जे तु वा । द्व्यधिका दश द्वादश, त्रयोदश, अष्टादश ।

द्वाचत्वारिंशत् द्विचत्वारिंशत् । अनशीतौ किं ? द्व्यशीतिः ।

---

रसिकाभार्य्यः, पञ्चमीवाचरति पञ्चमीयते, आत्मानं पाचिकां मन्यते पाचिकामानिनी, कुत्सिता दत्ता दत्तापाशा, पाचिकाकल्पा हेमीरूप्या ब्राह्मणीदेश्या सुकेशीकल्पेत्यादि ।

३५२ । द्वित्र । द्वौ च त्रयश्च अष्ट च ते, तैः सहिता अधिकाः, द्व्यधिकत्र्यधिकाष्टाधिका इत्यर्थः । द्वाश्च त्रयश्च अष्टाश्च ते । दश आद्या येषां ते दशाद्याः, त्रयाणां दशाद्यानां समाहारस्त्रिदशाद्यं, पात्रादित्वान्नेप् तस्मिन् । षसां समूहः षट्कम्, अन्त्यञ्च तत् षट्कञ्चेति तत्तस्मिन् । न अशीतिरनशीतिः तस्याम् । एषामित्यादि— द्वित्र्यष्टन् इत्येतेषां स्थाने द्वा त्रयस् अष्टा इत्येते आदेशाः क्रमात् स्युः दशादित्रिकसङ्ख्याशब्दे परे द्वित्र्यष्टानघेदधिका भवन्ति । इह त्रिदशाद्यशब्देन दशविंशतित्रिंशत्शब्दानामेव ग्रहणम् । अन्त्यषट्के अशीतिवर्जनात् पञ्चसु एते आदेशा इत्यर्थः । द्व्यधिका दश इत्यादि शाकपार्थिवादित्वादधिकशब्दलोपे द्वाद्यादेशः । एवं द्वाविंशतिः त्रयोविंशतिः अष्टाविंशतिः द्वात्रिंशत् त्रयस्त्रिंशत्

### ३५३। वैकोनस्यैकाद्नैकान्नौ सङ्ख्यायाम्।

(वा।१।, एकोनस्य ६।, एकाद्न-एकान्नौ १॥, सङ्ख्यायां ७।)।

एकाद्नविंशतिः एकान्नविंशतिः एकोनविंशतिः।

### ३५४। सख्यह्नोराज्ञः षः षगे च।

(सखि-अहन्-राज्ञः ५।, षः १।, ष-गे ७।, च ।१।)।

एभ्यः षः स्यात् ये षे गे च।

प्रियसखः परमाह्नः महाराजः।

---

अष्टात्रिंशत् इति। एवं द्वाचत्वारिंशत् द्विचत्वारिंशत् त्रयश्चत्वारिंशत् त्रिचत्वारिंशत् इत्यादि। एवं पञ्चाशत्-षष्टि-सप्तति-नवति-शब्दे परेऽपि। द्व्यशीतिः त्र्यशीतिः ; अष्टाशीतिरिति सह र्यों र्घः। एषु किं ? द्विशतं त्रिशतम् अष्टशतम् इत्यादि।

३५३। वैको। एकाद्नश्च एकान्नश्च तौ। वाद्वयमध्य-वर्त्तित्वात् नित्ये प्राप्ते वाग्रहणम्। परे तु जनार्द्दनञः प्रकृति-वद्भावं विधाय एकशब्दस्यादुगागमं कुर्व्वन्ति (१)। एकाद्नविंशतिः एकान्नविंशतिः। एकोनविंशतिस्तु ऊनशब्देनैव।

३५४। सख्य। षगे चेति षगात्परयकारो यसमित्यनु-कर्षतीत्यत आह ये षे गे चेति (२)। षकारस्येवर्य्यत्वात् परेभ्य

---

(१) एकादिश्चैकस्य चादुक् इति पाणिनिः।६।३।७६। एकादिर्नञ् प्रकृत्या स्यादेकस्य चादुगागमश्च। नञो विंशत्या समासे कृते एकशब्देन सह ततोऽपीति योगविभागात् समासः। अनुनासिकविकल्पः। एकेन न विंशतिः। एकान्न-विंशतिः एकाद्नविंशतिः। एकोनविंशतिरित्यर्थः इति सिद्धान्तकौमुदी।

(२) षगे चेति समाहारद्वन्द्वात् षगात् परयकारः पूर्व्वोक्तयकारातीत इत्यस्मात्

## ३५५। सर्व्वैकदेशसङ्ख्यातसङ्ख्याव्यान्नैकान्नैक्येऽङ्गोऽङ्गः।

(सर्व्व—व्यात् ५।, न ।१।, एकात् ५।, न ।१।, ऐक्ये ७।, अङ्ग. ६।, अङ्ग १।)।

एभ्यः परस्य अहन् इत्यस्य स्थाने अङ्गः स्यात् यादौ नत्वेकात् न चैक्ये।

---

एभ्यः प इत्यर्थः, तेन सखिसुत इत्यादौ न स्यात्। प्रियसख इत्यादि—प्रियश्चासौ सखा चेति, परमश्च तदहश्चेति (१) महांश्चासौ राजा चेति वाक्यम् (२)।

३५५। सर्व्वैक। सर्व्वश्च एकदेशश्च सङ्ख्या च व्यश्च तस्मात्। न एको नैकस्तस्मात्, न ऐक्यं नैक्यं तस्मिन्। एभ्य इत्यादि। सर्व्वशब्दात्, एकदेशवाचिनः पूर्व्वादेः, सङ्ख्यातशब्दात्, एकशब्द-भिन्नात् सङ्ख्यावाचिनो, व्यसन्नकाश्च परस्याहन्शब्दस्याङ्गादेशः स्यात् ये घे समाहारभिन्ने गे च। पूर्व्वसूत्रात् प इत्यस्य निवि-

---

कर्म्मधारयसमासमेवानुकर्षति न । जातीयादीत्यत आह ये घे गे च इति कार्त्तिकेय।

(१) अङ्गाहान्तानां पुंस्त्वमभिधानात्।

(२) अत्र कार्त्तिकेय "इतीशाचानुरसुखे ससख प्राविशद्धरिरित्यत्र सखिशब्द समानार्थकसखशब्देन ससख इति। किंवा सखिशब्दादर्शआदित्वादप्रत्यये सख इति स इति च पृथक्पदम्। अथवा सखिशब्दात स्वार्थे ण्ए सख तेन सह वर्त्तमान ससख। एवम् आगामिवर्त्तमानाहर्युक्तायां निशि पक्षिणीत्यमरोक्तं समासान्तविधेरनित्यत्वात् सिद्धम्। किंवा आगामिवर्त्तमानाभ्याम् अहोभ्यां युक्ता इति त्रिपदतत्पुरुषादरयम्। अथवा आगामिवर्त्तमानयोरह्नोर्युक्ता योगो यस्येति बहुव्रीहिणा समाधानीयम्। ये तु रेफशून्यपाठं कल्पयन्ति तन्मते कर्म्म-धारयसमासेनैव सिद्धमिति।

३५६। प्राग्वन्नो णोऽतोऽह्नस्य।

(प्राग्वत् ।१।, नः ६।, णः १।, अतः ५।, अह्नस्य ६।)।

सर्व्वाह्णः पूर्व्वाह्णः। एकात्तु एकाहः।

अत इति किं? विभिरह्नोभिर्जातः त्र्यह्नः।

३५७। कीटग्रामात् तक्ष्णः।

(कीटग्रामात् ५।, तक्ष्णः ५।)। कीटतक्षः।

---

परिणामिनानुवृत्तेः षे परे इत्यर्थः, तेन प्रियपूर्व्वाह्नः सुर इत्यादौ छातसान्तत्वात् को न स्यात् (१)।

३५६। प्राग्व। प्राग्वदित्यनेन पूः अवक्कुव्यन्तरेऽपीति प्राप्तं, तथाच षकार-रेफ-ऋटवर्णयुक्तादद्न्तात् परस्याह्नस्य नो णः स्यात् अव-कवर्ग-पवर्ग-व्यवधानेऽपि सतीत्यर्थः। सर्व्वाह्ण इति— सर्व्वञ्च तदहश्चेति वाक्यम्, एवं पूर्व्वाह्णः अपराह्ण इति। अह्न इति किं? दीर्घाण्यहानि यस्यां दीर्घाह्नी शरत् (२)। एकाह इति— एकञ्च तदहश्चेति वाक्यम्। त्र्यह्न इति—तार्थे गः, प्रत्युदाहरणार्थ-मिहोक्तमिदम्। प्राग्वदिति किं? संख्याताह्नः व्यह्न इत्यादि। संख्याताह्न इति कश्चित्। नैक्ये किं? द्वयोरह्नोः समाहारः द्व्यहः। सर्व्वैकदेशादेः किं? पुण्याहम्।

३५७। कीट। आभ्यां पराशक्ष्णः षः स्यात् यादौ।

---

(१) केचित्तु अत्र अदन्तात्प्राग्देशविधानं पदस्य बाधकं, तेन क्वचिदपवादविषये-ऽप्युत्सर्गोऽभिनिविशते इति न्यायात् सर्वाह्न इत्यत्र पदमध्ये आङ्गादेश इति वार्त्तिकेऽपि।

(२) अत्र दीर्घाह्नीति स्थिते णान्तत्वादीप् न भवतीति।

३५८। जातमहद्वृद्धादुक्ष्णः।

(जात महत् वृद्धात् ५।, उक्ष्णः ५।)।

जातोक्षः, महोक्षः।

३५९। श्वनोऽत्यप्राण्युपमानात्।

(श्वनः ५।, अति-अप्राण्युपमानात् ५।)।

अतेः प्राणिवर्जादुपमानाच्च श्वनः षः स्यात् यादौ।

आकर्ष इव श्वा आकर्षश्वः। प्राणिनस्तु व्याघ्र इव श्वा व्याघ्रश्वा।

---

कौटतक्ष इति—कुट्यां भवः कौटः, कौटश्चासौ तक्षा चेति वाक्यम् (१)।

३५८। जातः। एभ्यः परादुक्ष्णः षः स्यात् यादौ। जातोक्षः इति—जातश्चासौ उक्षा चेति वाक्यम्। एवं महोक्षः वृद्धोक्षः। यादौ किं? महोक्षा शिवः।

३५९। श्वनो। उपमीयते यत् तदुपमानम् उपमेयमित्यर्थः। अप्राणी च तदुपमानं चेति तत्। अतिश्च अप्राण्युपमानञ्च तत् तस्मात्। आकर्षः (२) श्वेवेति उपमेयस्य व्याघ्रादेरित्यनेन षः। आकर्षो द्यूत इन्द्रिये। पाशके शारिफलके कोदण्डाभ्यासवस्तुनि। आकर्षणेऽपि पुंसि स्यादिति मेदिनी। श्वन्शब्दो व्याघ्रादौ द्रष्टव्य आकृतिगणत्वात्। यद्यपि आकर्षशब्दोऽपि

---

(१) कौटतक्ष स्वालयस्थानधीनकर्मीतक्षणोऽस्त्यनुशासनमिति गङ्गाधरः।

(२) आकृष्यतेऽनेनेति आकर्षं आकुड़शी इति भाषा।

३६३। सर्व्वैकदेशसङ्ख्यातपुण्यवर्षादीर्घाद्रात्रेः।

(सर्व्व—दीर्घात् ५।, रात्रेः ५।)।

रात्रेरेकैकदेशे वर्त्तमानः पूर्व्वादिरेकदेशः।

पूर्व्वरात्रः अपररात्रः।

३६४। गोरतार्थे। (गोः ५।, अतार्थे ७।)।

गोशब्दात् षः स्यात् यादौ, नतु तार्थे। परमगवः।

---

कालायसाश्मतक्षाः जातौ। अनयोः किं? सत्सरः महाश्मा। चन्द्रसरः द्वैतवनसर इत्यत्र चन्द्रद्वैतवनशब्दौ संज्ञे न तु समुदायौ, विशेषनिष्ठसंज्ञाशब्दस्य सम्बन्धादुत्तरदस्य विशेषवृत्तेः (१)।

३६३। सर्व्वै। सर्व्वशब्दादेकदेशवाचिपूर्व्वादेः संख्यात-पुण्य-वर्षा-दीर्घेभ्यश्च परस्या रात्रेः षः स्याद्यादौ। पूर्व्वरात्र इति—रात्रिशब्दोऽपि लक्षणया पूर्व्वावयवे वर्त्तते। पूर्व्वा चासौ रात्रिश्चेति वाक्यम्। पूर्व्वं रात्रेरिति परे। एवम् अपररात्रः मध्यरात्र इत्यादि। सर्व्वा चासौ रात्रिश्चेति सर्व्वरात्रः, संख्याता चासौ रात्रिश्चेति सङ्ख्यातरात्रः, पुण्या चासौ रात्रिश्चेति पुण्यरात्रः, वर्षाणां रात्रिः वर्षारात्रः, दीर्घा चासौ रात्रिश्चेति दीर्घरात्रः। परे तु वर्षादीर्घशब्दौ नाहुः। त्रिरात्रम् अतिरात्र इत्यादौ संख्याव्ययाद्रात्रह्नुन्निभ्यामः। यादौ किं? पुण्यरात्रिर्हेमन्तः।

३६४। गो। यादाविति—त्रे षे तार्थभिन्ने चेत्यर्थः। परम-

---

(१) [illegible] गोयीचन्द्रः—"यो [illegible] विशेषे वर्त्तते स एव संज्ञाशब्दो [illegible]" इति।

३६५। नावोऽर्द्धात् गेच।

(नावः ५।, अर्द्धात् ५।, गे ७, च ।१।)।

अर्द्धात् परात् नौशब्दात् षः स्यात्, अतार्थे गे च। अर्द्धनावं।

---

गव इति—परमश्चासौ गौश्चेति वाक्यम्। एवं पुमांश्चासौ गौश्चेति पुङ्गवः, पञ्चानां गवां समाहारः पञ्चगवं, राज्ञो गौः राजगवः, स्त्रियां परमगवीत्यादि। अतार्थे किं? पञ्चभिर्गोभिः क्रीतः पञ्चगुः। तार्थे इति वाच्य एव, तेन पञ्चभ्यो गोभ्य आगतः पञ्चगवरूप्य इति स्यात् (१) परसूत्रे गग्रहणज्ञापकात्।

३६५। नावो। अर्द्धनावमिति अर्द्धञ्च तत् नौश्चेति वाक्यम्, अर्द्धं नाव इति परे। एवं द्वयोर्नावोः समाहारः द्विनावं, त्रिनावम्। अतार्थे किं? पञ्चभिर्नौभिः क्रीतः पञ्चनौः। वाच्य एव निषेधात् द्वाभ्यां नौभ्यामागतः द्विनावरूप्य इति (२)।

---

(१) ऋच्छेतुभ्यो मयट्‌रूप्यौ वा। जेभ्यो गवादिभ्यो हेतुवाचिभ्यश्च आगतेऽर्थे मयट् रूप्यश्च स्यादिति ठषेकादित्यादिवक्ष्यमाणसूत्रटीकायां वार्त्तिकसूत्रम्।

(२) अर्द्धात् परान्नौशब्दात् ष स्यात्, अति सम्भवे गे घे तार्थभिन्ने द्विगौ च, अयमेकोऽर्थश्चकारेणैव लब्धः पुनर्गे इत्यनेन अर्थान्तरोपन्यासो यथा—नौशब्दात् ष स्यात् गे अर्थात् अतद्धितार्थद्विगावित्यपरोऽर्थः। तत्र अर्द्धापेक्षा नास्तीति। अतार्थे इति विशेषणस्य उभयपक्षे योगः। * * * द्विगौ तु द्वयोर्नावोरित्यर्थे नावोः समाहारः द्विनावं त्रिनावमिति गङ्गाधरः।

अतार्थे गे इत्यस्यानुवृत्तावपि पुनर्गग्रहणं द्विगुसमासे अर्द्धशब्दातिरिक्तपूर्वपदस्यापि प्राप्त्यर्थम्। तेन द्वयोर्नावोः समाहारः द्विनावम् अत्र संख्यावाचकादपि नौशब्दात् ष। पुनर्गकारग्रहणात् घषयोर्निवृत्तिरस्तु इत्याशङ्कया चकारग्रहणं तेनैव तावनुकृष्येते। इति कार्त्तिकेयः।

३६० । पूर्व्वोत्तरमृगाच्चानतेः सक्थ्नः ।

(पूर्व्व-उत्तर-मृगात् ५।, च ।१।, अनतेः ५।, सक्थ्नः ५।) ।

एभ्यः पूर्व्वोक्ताच्च अतिवर्ज्जात् सक्थ्नः षः स्यात् यादौ ।

पूर्व्वसक्थम् ।

---

व्याघ्रादौ वर्त्तते (१) तथापि श्वन्शब्दस्य न आकर्षशब्देन सह यः, (२) उपमेयवाचिनः उपमानवाचिभिर्व्याघ्राद्यैः सह यविधानात् (३)। इह तु उपमेयशब्दाकर्षशब्दः। एवं व्याघ्रश्वेति प्रत्युदाहरणेऽपि। परे तु (४) अप्राणिनि वर्त्तमानात् उपमानवाचिनः शुनः ष इत्याहुः। एके तु आकर्ष इव आकर्षः (५) आकर्षश्चासौ श्वा चेति आकर्षश्व इत्याहुः, मूले आकर्ष इव श्वेति दर्शनात्। तन्मते उपमीयतेऽनेन इति धे अनट् (६)।

३६०। पूर्व्वो। पूर्व्वश्च उत्तरश्च मृगश्च तत्तस्मात्, न अतिः अनतिः तस्मात्। पूर्व्वोक्तादिति—अप्राण्युपमेयवाचिन इत्यर्थः। पूर्व्वसक्थमिति—पूर्व्वशब्दः सक्थ्नः पूर्व्वावयववाची, सक्थिशब्दो-

---

(१) एतेनाकर्षशब्दस्याप्युपमानत्वमायातीत्यर्थः।

(२) श्वानमुपमेयमाकर्षश्चोपमानं कृत्वा अत्र कर्म्मधारयो न कर्त्तव्य इत्यर्थः।

(३) उपमेयस्य व्याघ्रादेरित्यनेन उपमेयपदस्य पूर्व्वस्थितिः सूचितेति भावः।

(४) तकारोऽत्र समुच्चये।

(५) अन्यथा आकर्षशब्दस्यैवाकर्षतुल्यार्थ इत्यर्थः।

(६) अतेरदाद्युपमतिश्चेति वक्ष्यति। तत्र "अतिक्रान्तः श्वानमतिश्वो वराह जवेनेत्यर्थः। अतिश्वः सेवक उत्कृष्टाभिभक्त इत्यर्थः। अतिश्वी सेवा अतिनीचेत्यर्थं" इति काशिका ५।४।८६।

३६१। देशाद् ब्रह्मणः कुमहद्भ्यान्तु वा।

(देशात् ५।, ब्रह्मणः ५।, कु-महद्भ्यां ५॥, तु ।१।, वा ।१।)।

कुत्सितो ब्रह्मा कुब्रह्मः कुब्रह्मा।

३६२। सरोऽनोऽयोऽश्मनः संज्ञाजात्योः।

(सरस्-अनस्-अयस्-अश्मनः ५।, संज्ञा-जात्योः ७॥)।

महानसं उपानसं लोहितायसं कालायसं पिण्डाश्मः अमृताश्मः।

---

ऽपि तदवयववाची (१) पूर्व्वञ्च तत् सक्थि चेति वाक्यं, पूर्व्वं सक्थ्न इति परे। एवमुत्तरसक्थमिति। फलकसक्थं—फलकं शरावरणं चर्म्म, फलकं सक्थि इवेति वाक्यम्। तथापि सर्व्वं पूर्व्ववदूह्यम्।

३६१। देशात्। देशो जनपदः, तद्वाचिनः परात् ब्रह्मशब्दात् यः स्यात् यादौ, वा तु कुमहद्भ्याम्। कुत्सितो ब्रह्मेति—ब्रह्मशब्दोऽत्र ब्राह्मणवाची। कुशब्दस्य ब्रह्मशब्देन सह यस इति परे। एवं महांश्चासौ ब्रह्मा चेति महाब्रह्मः महाब्रह्मा। देशात्तु अवन्तिब्रह्म इति वक्ष्यति।

३६२। सरो। सरस् अनस् अयस् अश्मन् इत्येतेभ्यः नाम्नि जातौ च यः स्यात् यादौ। महानसमिति—महच्च तत् अनश्चेति, उपगतञ्च तदनश्चेति, लोहितञ्च तत् अयश्चेति, कालञ्च तदयश्चेति, पिण्डश्चासावश्मा चेति, अमृतश्चासौ अश्मा चेति वाक्यम्। सरःशब्दस्य तु मण्डूकसरसं जालसरसमिति वक्ष्यति। एषु जालसरस-महानस लोहितायस-पिण्डाश्माः संज्ञायाम्। मण्डूकसरसोपानस-

---

(१) सक्थि जङ्घा, सक्थि क्लीवे पुमानूरुरित्यमरः।

२६३। सर्व्वैकदेशसङ्ख्यातपुण्यवर्षादीर्घाद्रात्रेः।

(सर्व्व—दीर्घात् ५।, रात्रेः ५।)।

रात्रेरेकैकदेशे वर्त्तमानः पूर्व्वादिरेकदेशः।

पूर्व्वरात्रः अपररात्रः।

२६४। गोरतार्थे। (गोः ५।, अतार्थे ७।)।

गोशब्दात् षः स्यात् यादौ, नतु तार्थे। परमगवः।

---

कालायसाश्मतक्ष्माः जातौ। अनयोः किं? सत्सरः महाश्मा। चन्द्रसरः हैतवनसर इत्यत्र चन्द्रहैतवनशब्दौ सञ्ज्ञे न तु समुदायौ, विशेषनिष्ठसंज्ञाशब्दस्य सम्बन्धादुत्तरदस्य विशेषवृत्तेः (१)।

२६३। सर्व्वै। सर्व्वशब्दादेकदेशवाचिपूर्व्वादेः संख्यात-पुण्य वर्षा-दीर्घेभ्यश्च परस्मा रात्रेः षः स्याद्यादौ। पूर्व्वरात्र इति—रात्रिशब्दोऽपि लक्षणया पूर्व्वावयवे वर्त्तते। पूर्व्वा चासौ रात्रि-श्चेति वाक्यम्। पूर्व्वं रात्रेरिति परे। एवम् अपररात्रः मध्यरात्र इत्यादि। सर्व्वा चासौ रात्रिश्चेति सर्व्वरात्रः, संख्याता चासौ रात्रिश्चेति सङ्ख्यातरात्रः, पुण्या चासौ रात्रिश्चेति पुण्यरात्रः, वर्षाणां रात्रिः वर्षारात्रः, दीर्घा चासौ रात्रिश्चेति दीर्घ-रात्रः। परे तु वर्षादीर्घशब्दौ नाहुः। त्रिरात्रम् अतिरात्र इत्यादौ संख्याव्याद्रात्राङ्गुलिभ्यामः। यादौ किं? पुण्यरात्रि-र्हेमन्तः।

२६४। गो। यादाविति—चे षे तार्थभिन्ने चेत्यर्थः। परम-

---

(१) संज्ञालक्षणमाह गोयीचन्द्रः—"यो योगशक्तिमितरमपहाय विशेषे वर्त्तते स एव संज्ञाशब्दो भण्यते" इति।

। ३६५ । नावोऽर्द्धात् गेच ।

(नावः ५।, अर्द्धात् ५।, गे ७, च ।१।) ।

अर्द्धात् परात् नौशब्दात् यः स्यात्, अतार्थे गे च । अर्द्धनावं ।

---

गव इति—परमश्चासौ गौश्चेति वाक्यम् । एवं पुमांश्चासौ गौश्चेति पुङ्गवः, पञ्चानां गवां समाहारः पञ्चगवं, राज्ञो गौः राजगवः, स्त्रियां परमगवीत्यादि। अतार्थे किं ? पञ्चभिर्गोभिः क्रीतः पञ्चगुः । तार्थे इति वाच्य एव, तेन पञ्चभ्यो गोभ्य आगतः पञ्चगवरूप्य इति स्यात् (१) परसूत्रे गग्रहणज्ञापकात् ।

३६५ । नावो । अर्द्धनावमिति अर्द्धञ्च तत् नौश्चेति वाक्यम्, अर्द्धं नाव इति परे । एवं द्वयोर्नावोः समाहारः द्विनावं, त्रिनावम् । अतार्थे किं ? पञ्चभिर्नौभिः क्रीतः पञ्चनौः । वाच्य एव निषेधात् द्वाभ्यां नौभ्यामागतः द्विनावरूप्य इति (२) ।

---

(१) हेतुभ्यो मयटरूप्यौ वा। नृभ्यो मनुष्येभ्यो हेतुमद्भ्यश्च आगतेऽर्थे मयट् रूप्यश्च स्यादिति ठचेकादित्यादिवक्ष्यमाणसूत्रटीकायां वार्त्तिकसूत्रम् ।

(२) अर्द्धात् परान्नौशब्दात् य स्यात्, अति समासे ये ये तार्थभिन्ने द्विगौ च, अयमेकोऽर्थश्चकारेणैव लब्ध, पुनर्गे इत्यनेन अर्थान्तरोपन्यासो यथा—नौशब्दात् य स्यात् गे अर्थात् अतद्धितार्थद्विगावित्ययरोऽर्थः । तत्र अर्द्धापेक्षा नास्तीति। अतार्थे इति विशेषणस्य उभयपक्षे योग । * * * द्विगौ तु द्वयोर्नावोरित्यर्थः नावा समाहार द्विनाव त्रिनावमिति गङ्गाधर ।

अतार्थे गे इत्यस्यानुवृत्तावपि पुनर्गग्रहणं द्विगुसमासे अर्द्धशब्दातिरिक्तपूर्व-पदस्यापि प्राप्त्यर्थम् । तेन द्वयोर्नावो समाहार द्विनावम् अत्र संख्यावाचका-दपि नौशब्दात य । पुनर्गकारग्रहणात् उभयोर्निवृत्तिरस्तु इत्याशङ्कया चकार-ग्रहणं तेनैव तावनुकृष्येते। इति कार्त्तिकेय ।

२६६। खार्य्या वा। (खार्य्याः ५।, वा ।१।)।

अर्द्धखारं अर्द्धखारी।

इति यः।

---

## तत्पुरुष समासः (षः)।

कृष्णमाश्रितः कृष्णाश्रितः।

---

२६६। खार्य्याः। अर्द्धात् परस्याः खार्य्याः यः स्याद्वा ये पे तार्थभिन्नगे च। अर्द्धखारमिति—अर्द्धञ्च तत् खारी चेति वाक्यम्, अर्द्धं खार्य्या इति परे। गे द्वयोः खार्य्योः समाहारः द्विखारं द्विखारि, त्रिखारं त्रिखारि, द्वे खार्य्यौ धनमस्य द्विखारधनः इत्यादि। याभावपक्षे द्विखारिः त्रिखारिः स्त्रियामिति न्यासः। वाशब्दस्य व्यवस्थावाचित्वात् अर्द्धखारमित्यत्र क्लीवत्वम्। अर्द्धनावः अर्द्धनावी अर्द्धनावमित्यत्र त्रिलिङ्गत्वमिति।

इति यः।

---

इदानीं षमाह कृष्णमाश्रित इत्यादि।

२७०। श्रितादेः षः। इबन्तस्याश्रितादिना सह षः स्यात्। कृष्णाश्रित इति। एवं कष्टं श्रितः कष्टाश्रितः, वेदं विद्वान् वेदविद्वान्। विप्राय वेदविदुषे इति भारते। श्रितादिर्यथा—

श्रितश्रितविद्वासोऽतीतात्यस्त(१)बुभुक्षव.।

---

(१) [illegible]

आपन्नपतितप्राप्तगमिगामिबुभुक्षवः॥

गमिन् गामिन् इत्युभयपाठात् भव्यार्थणिन्यपि वा निरित्यन्ये। औणादिक इनि गमीति परे। आकृतिगणत्वात् सुखमीप्सुः सुखेप्सुः, द्विषद्दीर्घ्यनिराकरिष्णु, हंसमण्डलद्युतिजिष्णुरित्यादि। (१)

खट्वायाः क्षेपे। इयन्तायाः खट्वायाः क्षेपे गम्यमाने क्तान्तेन सह षः स्यात्। खट्वारूढो जाल्मः (२) खट्वाप्लुतो जाल्म उत्पथप्रस्थित इत्यर्थः। न केवलं खट्वारोहणमात्रेण यस्य निन्दा सोऽभिधीयते किन्तु येन केनाप्यनुचिताचरणेन यस्य निन्दा स इति। इह वाक्ये निन्दा न गम्यते इति वाक्याभावात् नित्योऽयं सः।

सवाक्यो यः समासः स्यात् स विकल्पः सुसम्मतः।

वाक्याभावे तु नित्यं स्यादिति ग्रन्थविदो विदुः॥

क्षेपे किं? खट्वामारूढोऽध्यापकः शिष्यान् अध्यापयति।

कालानाम्। इयन्तानां कालवाचिनां क्तान्तेन सह षः स्यात्। दिनं संक्रान्ता दिनसक्रान्ता मुहूर्त्ता, रात्रिमारूढा

---

(१) समासविधिषु सत्त्ववाचकपदग्रहणमिति न्यायात् क्रियाविशेषणस्यापि, तेन नितान्तश्राम निकामसुखी नित्यभीरु मन्दगामीत्यादि इत्यपि का सि।

(२) अननुज्ञातो गुरुणा खट्वामारूढ खट्वारूढो लङ्घिताचारत्वादविनीतोऽभिधीयते इति का सि।

जाल्मोऽसमीक्ष्यकारी स्यादित्यमर। वेदं व्रतानि च समाप्य समावृत्तेन हि खट्वारोढव्या। ब्रह्मचर्य्य एव भूमिशयनार्होऽपि य खट्वामारोहति स जाल्म। इदश्चायं तेन खट्वामारोहतु न वा निषिद्धानुष्ठानपर सर्व्वोऽपि खट्वारूढ इत्युच्यते। इति तत्त्वबोधिनी।

राजारूढ़ाः किरणाः, मासं प्रमितः (१) मासप्रमितश्चन्द्रः मासं प्रमातुमारब्धवानित्यर्थः। मासस्यैकदेशस्य प्रतिपच्चन्द्रेण सह सम्बन्धान्नात्यन्तसंयोगः (२)।

व्याप्यावन्व्येव। अत्यन्तसंयोगे द्वान्तस्य कालवाचिनः क्तान्तेनान्येव स्याद्यन्तैः सह षः स्यात्। मासौ स्थितः मासस्थितः वर्षं भोग्यः वर्षभोग्यः मुहूर्त्तं सुखं मुहूर्त्तसुखं सर्व्वरात्रकल्याणी सर्व्वरात्रशोभना। इति ङीपः।

अथ तौपः।

तेनाः समार्थैः। नान्तस्य समार्थैः सह षः स्यात्। पित्रा समः पितृसमः धान्येनार्थः धान्यार्थः। समादिर्यथा—

समोऽर्थो निपुणः पूर्व्व ऊनार्थं सदृशावराः।
श्लक्ष्णः कलह-समाचाऽप्रादिमिश्रौ (३) मताविह॥

ऊनार्थग्रहणात् एकोनः गुणहीनः विकाररहित इत्यादि। प्रायो नामग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् इति न्यायात् गुरुसदृशीत्यपि। प्राद्यमादिमिश्र इति—धान्यप्रमिश्रः गुड़मिश्र इत्यादि। अस्याकृतिगणत्वात् भयविह्वलः पक्षशून्यः प्रकटजरा (४) गमनमन्थरः वयोज्येष्ठः विरहकृशः स्वेदार्द्रः गुणाधिकः बन्धुविधुरः हास्यविकलः गुरुतुल्या इत्यादि।

---

(१) अत्र मा क च माने इत्यस्मात् आदिकर्म्मणि कर्त्तरि क्तः।

(२) प्रतिपच्चन्द्रेण सह मासस्य सम्बन्धे नात्यन्तसंयोग। एतेनात्र व्याप्यावन्व्येति परसूत्रस्याविषयो दर्शित इति।

(३) कलहः प्रादिभिन्न आचारादिभिन्न इत्यर्थः।

(४) प्रकटेन पश्चिमादिवचनेन इत्यर्थ इति विद्यासागराः।

वीप्सतगुणवचनेन। वरा क्षतः वीप्सत', वीप्सतश्चासौ गुणवचनश्चेति। गुणमुक्तवान् गुणवचनः कभावेऽसौत्युक्तेर्घेऽनट्। यः पूर्वं गुणे वर्त्तित्वा पश्चात् द्रव्ये वर्त्तते स गुणवचनो, न तु गुणमात्राभिधायकः गुणेनेत्यकरणात्, तेन घृतेन पाटवमित्यत्र न स्यात्। चरन्तस्य वरन्तार्थक्षतगुणवचनेन सह ष' स्यात्। शङ्कुलया क्षतः खण्डः शङ्कुलाखण्डः, गिरिणा क्षतः काणः गिरिकाणः प्रमादेन क्षतो मूर्खः प्रमादमूर्खः। खण्डकाणादयः खण्डननिमीलनादौ गुणे वर्त्तित्वा (१) पश्चात् तद्वति द्रव्ये वर्त्तन्ते। शङ्कुला शस्त्रभेदः (२) गिरिः शिशुक्रीडनद्रव्य (३) प्रमादोऽनवधानता। खण्डादयस्तु वरान्तशङ्कुलादिवाच्यक्षता इति। वीप्सतेति किम्? अक्ष्णा काणः, न ह्यत्र वरान्तेन अक्ष्णा काणत्वं क्षतं, किन्त्वन्येन केनापि। भागवृत्तिस्तु वरान्तेनाक्ष्णा काणत्वकरणादक्षिकाणः स्यादेवेत्याह। गुणवचनेन किं? गोभिर्वपावान् (४) गोशब्देन लक्षणया गव्यमुच्यते। परभृतध्वनिमुखरः शरदन्तुरः इत्यादयस्तु पौषेण मुखरदन्तुरशब्दयोरगुणवचनत्वात्। विशेषार्थावगतिः शब्दसिद्धौ क्षतमर्यावगतिनिमित्तमर्थनियम मण्डपादिवदतिक्रामतीति वीप्सस्यैव वाक्यार्थव्यवस्थाघटकत्वात् इत्यन्ये (५)। समादेराक्षतिगणत्वात् वीप्स इत्यन्यः।

---

(१) द्रव्यगुणीभूतत्वात क्रियापि गुण इति वैयाकरणानां मतमिति गोयीचन्द्र।

(२) याँति इति भाषा।

(३) गिरिश्चूरोगविशेष इति कश्चित।

(४) वपा मेद।

(५) ननु सम्बन्धनिवचायार षष्ठीसमासे सति पदमात्रनिष्पत्तिर्भवति, वाक्यार्थव्यवस्था तु तृतीयासमासेनैव घटते अलाह प्रतीतिर्विषयमपहरतीति न्याया-

घघयोः क्रता बहुलम् । घघयोर्विहिता या क्ती तदन्तस्य कृदन्तेन सह षो बहुलं स्यात् । नखलूनः चक्रच्छिन्नः अहिहतः हरित्रातं इत्यादि । बहुलग्रहणात् गलेचोपकः पादहारक इत्यादौ क्यन्तरस्यापि षः (१)। दात्रेण लूनवान् परशुना छिन्नवान् इत्यादौ न स्यात् । घघयोः किं ? भिक्षाभिरुषितः, अत्र हेतौ चौ ।

स्तुतिनिन्दयोर्ल्येः । स्तुतिनिन्दयोर्गम्यमानयोर्घघविहितक्तान्तस्य ल्यसंज्ञकान्तैः सह षः स्यात् । करचेतव्यानि पुष्पाणि (२) वाष्पच्छेद्यानि तृणानि(३) विश्वैरुपास्यो विश्वोपास्यः शम्भुः, श्वना लेह्यः श्वलेह्यः कूपः (४)। अनयोः किं ? काकेन पातव्यं जलं, मैत्रेण गम्यो ग्रामः । बहुलानुवृत्तेस्तृणोपेक्ष्यं तृणैन उपेक्ष्यं स्खलनम् इत्यादि स्यात्, नात्र स्तुतिनिन्दावगम्यते । पूर्व्वस्यैवायं विधिः प्रपञ्च इत्यन्ये ।

---

हर्षव्यस्येति । प्रतीतिरर्थविशेषावगति· विषयम् अर्थावगतिनिमित्तं यद्विधौ तत्तमन्वयनियममपहरतीति अतिक्रामतीत्यर्थः । तथाहि मयङ्पयन्दाङ्गुत्पन्नार्थविशेषावगति· मयडं विवृतीति यद्विधौ तत्तमन्वयमतिक्रामतीति समासपादे १५ सूत्रस्य टीकायां गोयीचन्द्र· ।

(१) तृतीयायाविहितः समासो विभक्त्यन्तरस्यापि भवतीत्यर्थः ।

(२) अत्र स्तुति· । एवं नाम अप्यपि विश्वगुणानाति यतः करेणापि प्रचीयन्ते ।

(३) अत्र निन्दा । एवं नामासारमिदं यत् वाष्पेणापि छिद्यते ।

(४) निन्दात्र गम्यते । अनादेयत्वोद्भावनं निन्दा, एवमनादेयोऽयं यत श्वभिरपि लिह्यते । अथवा अत्रापि स्तुति, एवं नामाधयोदकः कूप· यतः श्वभिरपि लिह्यते ।

संस्कारस्य संस्कार्य्येण। ञान्तस्य संस्कारवाचिनः संस्कार्य्य-वाचिना सह षः स्यात्। दध्ना उपषिक्त ओदनः दध्योदनः, गुड़ेन मिश्रा धानाः गुड़धानाः, गुड़पूपा इत्यादि। अश्वरथः गोयानं मणिमुकुटं कुङ्कुमवस्त्रं जलगर्गरी दधिभाण्डं धान्यकुशूल इत्यादयस्तु अश्वयुक्तो रथ इति पक्षे शाकपार्थिवादित्वात् मध्यपद-लोपः। इति ञोषः।

अथ चोषः।

च्या बल्याद्यैः। च्यन्तस्य बल्यादैः सह षः स्यात्। कुवेराय वलिः कुवेरवलिः। बल्यादिर्यथा।

बलिर्हितसुखे चैव रचितोऽन्ये प्रयोगतः।

आकृतिगणत्वात् वरप्रदेया कन्या, गुरुप्रदेयाधिकनिस्पृहोऽर्थी, पितृदानमित्यादि।

विकृतेः प्रकृत्या तादर्थ्ये। तादर्थ्यविहितच्यन्तस्य विकृति-वाचिनः प्रकृतिवाचिना सह षः स्यात्। यूपाय दारु यूपदारु, कुण्डलाय हिरण्यं कुण्डलहिरण्यम्। अन्यत्र रन्धनाय स्थाली अश्वाय वासः। अश्ववासः वासगृहं रन्धनस्थालीत्यादि तु षीषेण।

नित्यं प्रयोजनार्थार्थेन वाच्यलिङ्गता च। प्रयोजनवाचिना अर्थशब्देन सह च्यन्तस्य षः स्यात् नित्यं, वाच्यलिङ्गता च। ब्राह्मणार्थं पयः ब्राह्मणार्थः सूपः ब्राह्मणार्था यवागूः। वाच्य-लिङ्गताविधानात् यत्र वाच्यलिङ्गता नास्ति तत्र न स्यात्। तेन नृपाय अर्थः। मशकार्थो धूमः इत्यत्र मशकशब्देन लक्षणया

मशकनिवृत्तिरभिधीयते, अर्थशब्दस्तु प्रयोजनार्थः (१)। अत्र अप्रयोजनार्थार्थशब्दप्रयोगे चीविधानाभावेऽपि प्रयोजनार्थग्रहणं निवृत्तिरूपप्रयोजनवाच्यर्थशब्देन चीयविधानार्थमिति कश्चित्। मशकस्यार्थो निवृत्तिर्यस्मात् इति व्यधिकरणहेनेत्यन्यः। इति चीपः।

अथ पीपः।

प्या मुक्ताद्यैः। प्यन्तस्य मुक्ताद्यैः सह पः स्यात्। पापान्मुक्तः पापमुक्तः। मुक्तादिर्यथा।

मुक्तो भीतिरपत्रस्तो जुगुप्सा-भीत-निर्गताः।
इतरः पतितोऽपेतो भयापोढ़ौ मताविह ॥

अस्याकृतिगणत्वात् वृकभीः अधर्मजुगुप्सुः तदन्यः सुखच्युतः भास्वद्ग्रावोत्थितः वेदबहिष्कृत इत्यादि। अनभिधानात् क्वचिन्न स्यात् महाप्रासादात् पतितः महाभोजनादपत्रस्त इत्यादि। इति पीपः।

अथ षीपः।

सम्बन्धे कृता च ष्याः सदा स्वकेन क्रीड़ाजीविकयोः। सम्बन्धे कृद्योगे च विहिता या षी तदन्तस्य स्याद्यन्तैः सह पः स्यात्, क्रीड़ाजीविकयोर्विहितषकान्तेन तु नित्यम्। राज्ञः पुरुषः राजपुरुषः विग्रहस्तम्। गोस्वामी गवीश्वर इत्यादौ स्वामीश्वरेत्यादिना विहितत्वेऽपि सम्बन्धे षेव, सम्बन्धषीबाधकत्तोविधाने ष्यप्राप्तौ चकारेण तदनुकर्षणात्। कृद्योगे यथा,

(१) मशकनिवृत्तिप्रयोजनको धूम इत्यर्थः।

एधसो व्रश्चनः एधोव्रश्चनः, पलाशानां शातनं पलाशशातनम् इत्यादि । क्रीड़ायां—पुष्पभञ्जिका, मदनभञ्जिका, पुष्पप्रचायिका । जीविकायां—दन्तलेखकः, नखलेखकः, चित्रलेखकः ; नित्यसादाख्याभावः (१) । क्रीड़ाजीविकयोर्ण्वको वक्तव्यः । क्रीड़ाजीविकयोरिति किम् ? ओदनस्य भोजकः ।

न निर्द्धारणे सञ्ज्ञार्थक्तेन च । निर्द्धारणे वर्त्तमानक्तयोर्विहितक्तेन योगे च विहिता या षष्ठी तदन्तानां षो न स्यात् । नराणां क्षत्रियः शूरतमः, गवां कृष्णा चीरिणी, अध्वगानां धावन्तः शीघ्रतमाः,(२) राज्ञां ज्ञातः, नराणां पूजितः । "कालहं स राममहितः कृतवा"निति तु अतीतक्तान्तेन षष्ठ्याः स्यात्, सम्बन्धषष्ठ्याः साधु (३) । इदमेषामुपगतम् (४) ।

---

(१) पुष्पभञ्जिकादिष्विति शेषः ।

(२) "कथं तर्हि पुरुषोत्तम इति ? यतश्चनिर्द्धार्य्यते, यच्चैकदेशो निर्द्धार्य्यते, यत्र निर्द्धारणे हेतुस्तत्त्रितयसन्निधौ सत्येवायं निषेध इति "द्विवचनविभज्येति" सूत्रे कैयटः । यद्वा पुरुषेषूत्तम इति निर्द्धारणसप्तम्या "सप्तम्या"मिति समासः । न चैवं "न निर्द्धारणे" इति व्यर्थम् । स्वरे भेदात् । सप्तमीसमासे हि पूर्वपदप्रकृतिस्वरः । षष्ठीसमासे तु अन्तोदात्तत्वं स्यात्" इति प्रौढमनोरमा । "* * * तन्मन्दं, "संज्ञाया"मिति समासस्य नित्यत्वेन स्वपदविग्रहासङ्गतिप्रसङ्गात् । तस्मात् कैयटोक्तसमाधानमेव समीचीनमिति नव्याः"—इति तत्त्वबोधिनी । "अत्र निर्द्धारणे सप्तमीसमासोऽपि न स्यात्, निर्द्धारणे षष्ठीसप्तम्योरर्थतोऽभेदात्, षष्ठीसमासनिषेधवैफल्याच्च । न च गवामित्यादिवाक्यस्थितिरेव फलमिति वाच्यम् । समासविकल्पत्वादेव तत्सिद्धेः—इति प्रयोगरत्नमालाटीका ।

(३) रामेण महित इति कर्त्तृविहिततृतीयया तृतीयासमासः, अथवा रामस्य महित इति सम्बन्धे षष्ठी ।

(४) क्ताधिकरणे क्तः ।

ढघप्राप्तौ ढे । ढे घे च ष्याः प्राप्तौ सत्यां ढे या षी तदन्तस्य षो न स्यात् । गवां दोहो गोपालकेन, समुद्रस्य बन्धो वानरैः । उभयप्राप्तौ ढे इत्यनेन यत्र नियमः (१) तत्रैवायं निषेधस्तेन इक्षुभक्षिका विप्रस्य, अर्थेहा दरिद्रस्य इत्यत्र ष्याः षः स्यात् (२) । ओदनपाकः सूपकारस्य इत्यत्र तु ओदनस्येति सम्बन्धविवक्षायां षी, ततोऽनेन न निषेधः ।

तृषकाभ्यामहोत्रादिभ्याम् । होत्रादिभिन्नाभ्यां तृनन्तषकान्ताभ्यां सह ष्यन्तस्य षो न स्यात् । पुरां भेत्ता, अपां स्रष्टा, ओदनस्य भोजकः, तण्डुलस्य पाचकः । अहोत्रादिभ्यां किं ? हविर्होता शचीभर्त्ता । पत्यर्थभर्तृग्रहणात् वज्रस्य भर्त्ता धारक इत्यत्र निषेधः । क्षत्रिययाजकः देवपूजक इत्यादि ।

होत्रादिर्यथा—

होता पत्यर्थ-भर्त्ता च हन्ता याजकपूजकौ ।
गणको रथपङ्क्तिभ्यां (३) स्नापकः परिचारकः ।
उत्सादकोद्वर्त्तकाध्यापकाश्च परिवेषकः (४) ।
प्रयोजक इमे प्रोक्ताः शेषं ज्ञेयं प्रयोगतः ॥

रथपंक्तिभ्यां परस्य गणकस्यैवेह पाठात् ग्रहाणां गणक इत्यत्र

(१) षष्ठीविहितकृद्योगे ढघे तृतीयास्तीति शेषः ।

(२) भक्षिकादीनां क्तोविहितकप्रत्ययान्तत्वात् पूर्वोक्तनियमाभावे षष्ठीसमासः स्यादेवेति भावः ।

(३) काशिकायां सिद्धान्तकौमुद्यां बृहन्मुग्धबोधे च पङ्क्तिरित्यत्र पत्तिरिति पाठो दृश्यते ।

(४) भक्तिप्रकाशे बृहन्मुग्धबोधे च परिवेषक इत्यत्र तादृश्यप्रकारो दृश्यते ।

षप्रतिषेधः। आकृतिगणत्वात् चित्तग्राहकः सम्प्रदानबोधक इत्यादि। तृन्साहचर्य्यात् षविहितणकान्तस्यैवेह ग्रहणं, तेन तमोभेदिका चन्द्रस्येत्यादौ षः स्यात् भावविहितत्वात्।

ध्यक्तच्छत्रानपूरणैः। ध्यसंज्ञकक्तदन्तेन, शतृशानाभ्यां, पूरणत्यान्तेन च सह षन्तस्य षो न स्यात्। ब्राह्मणस्य कृत्वा, विप्रस्य प्रकृत्य, देवस्य कुर्व्वन्, ब्राह्मणस्य कुर्व्वाणः, सर्व्वत्र सम्बन्धविवक्षायां षो। विप्राणां दशमः, छात्राणां पञ्चमः (१)। एभिः किं? त्वदुपरि, मदुपरि। तथाच—"यत्क्षतेऽरीन् व्यरंक्षीत समुद्रमतराम चे"ति भट्टिः। यस्याः क्षते इति वाक्यम्।

द्रव्यात्मगुणैः। ये गुणा गुणे गुणिनि च वर्त्तन्ते ते द्रव्यात्मगुणाः, तैः सह षन्तस्य षो न स्यात्। पटस्य शुक्लः जलस्य शीतमित्यादि। यदुक्तं—

कदाचिन्न प्रयोगोऽस्ति गोशुक्लोगुण इत्ययम्।
तेनैयमादिषु प्राप्तः समासोऽयं निषिध्यते इति (२)॥

इह वैशेषिकशास्त्रीयाणां संख्यासुखदुःखादीनां न ग्रहणं, तेन गोशतं मत्सुखं त्वदुःखमित्यादि। यदुक्तं—

वैशेषिकगुणा नेह संख्यादुःखसुखादयः।
गृहीता गोशतं सीतादुःखमित्यादिदर्शनात्॥

---

(१) कथं तर्हि "तान्यच्छयशङ्कितसैकतानी"ति? प्रमाद एवायमित्येके। वस्तुतस्तु छन्देषु षष्ठ छन्दात्मक षष्ट इति वा व्याख्येयमिति प्रौढमनोरमा।

(२) जयादित्यकारिकेयम्।

द्रव्याक्तेति किं ? चन्दनगन्धः, कन्यारूपं, नदीघोषः, फलरसः, क्षारस्पर्श इत्यादि, गन्धादिशब्दानां केवलगुणस्थत्वात्।

यदुक्तं —

न कदाचित् प्रयोगोऽस्ति चन्दनं गन्ध इत्ययम्।
चन्दनस्यैव गन्धो हि स्वप्रधानं प्रतीयते (१)।
एवं रूपादयस्तस्मात् समासो न विहन्यते ॥ इति।

पटशौक्ल्यं अर्थगौरवं वचनकौशलं गात्रमार्दवमित्यादौ भावत्यान्तानां केवलगुणवृत्तित्वात् षः स्यादेव। तथाच—

यथा गन्धादयः शब्दा गुणमात्रव्यवस्थिताः।
तथा शौक्ल्यादयस्तेन पटशौक्ल्यादयः स्मृताः ॥ इति भागुरिः।

अन्ये तु भावत्यान्तेनापि कार्ष्ण्यादिना निषेधस्तेन काकस्य कार्ष्ण्यं, बलाकायाः शौक्ल्यमित्यत्र निषेधः, अर्थगौरवमित्यादौ तु स्यादेवेत्याहुः। एवं (२) पुरुषोत्तमदेवेनाप्युक्तं, न्यासकारादिभिस्तु नोक्तमिति।

समानाधिकरणैः। समानाधिकरणैः ष्यन्तैः सह स्याद्यन्तस्य षो न स्यात्। सुन्दरस्य देवदत्तस्य धनम्, कट्टस्य राज्ञो मातङ्गाः।

(१) भट्टकारिकेयम्। रामानन्दोऽप्येवमाह, यथा—तत्स्थैर्गुणैः षष्ठी समस्यते। तत्स्थे केवलगुणस्थैर्गुणवाचकैर्गन्धादिभिः सह षष्ठ्यन्तस्य तत्पुरुषो भवतीत्यर्थः। यथा—चन्दनगन्धः हिमस्पर्शं फलरस इत्यादि। गन्धादयो गुण एव वर्त्तन्ते न कदाचिद्गुणिनीत्यादि।

(२) एवमित्यनेन काकस्य कार्ष्ण्यमित्यादिकं भवितव्यमिति। काशिकायां सिद्धान्तकौमुद्यां च एवमेव। "अनित्योऽयं गुणेन निषेधः। 'तदशिष्यं संज्ञाप्रमाणत्वा दित्यादिनिर्देशात्। तेनार्थगौरवं बुद्धिमान्द्यमित्यादि सिद्धम्" इति सिद्धान्तकौमुदी।

समानाधिकरणे: किं ? राजश्रियो गौरवं, खणचरणौ वन्द्यौ । घृतस्य तीव्रो गन्धः, चन्दनस्य मृदुर्गन्धः इत्यादौ त्वन्वयाभावान्न स्यात् (१) । इति षीपः ।

अथ सीपः ।

स्याः शौण्डाद्यैः । स्यन्तस्य शौण्डाद्यैः सह पः स्यात् । अक्षेषु शौण्डः अक्षशौण्डः । शौण्डशब्दः सुरापे रूढ़ः, इह तूपचारात् अक्षधूर्त्त इत्यभिधीयते । नन्वऽक्षेष्विति क्रियाभावादधिकरणत्वाभावादेव कथं सी इति चेत् सत्यं, प्रसक्तिक्रियाया वृत्ता(२)यन्तर्भावाद्विषयसी । शौण्डादिर्यथा—

शौण्ड कितव संवीत प्रवीण व्याड़ पण्डिताः ।
सिद्ध साहसिको दक्षचतुरौ निपुणः पटुः ।
कुशलचपलो धूर्त्तः शुष्कपक्कावधीत्यपि ।
मध्यार्थोन्तस्तथा बन्धः परे शिष्टप्रयोगतः ॥

अधिशब्दस्याधेयप्राधान्येऽत्र पाठः । यथा ब्राह्मणेष्वधि ब्राह्मणाधीनः, परेष्वधि पराधीनः, अध्युत्तरदात् सदैव ईनः केवलाधिप्रयोगाभावात् । मध्यार्थस्यान्तःशब्दस्याधिकरणप्राधान्ये पाठः । यथा वनान्तर्वसति, वनमध्ये वसतीत्यर्थः । अधिकरणप्राधान्येऽधिशब्दस्य पूर्व्वपदार्थप्राधान्येऽन्तःशब्दस्य तु व-सः । यथा अधिस्त्रि अन्तर्वणमिति (३) । आकृतिगणोऽयम् ।

---

(१) अत्र गन्धादिना घृतादे साक्षात् सम्बन्धो न तु तीव्रादिनेत्यसमासः ।

(२) वृत्तौ समासे इत्यर्थ ।

(३) अन्तर्वणं वनमध्यवर्त्ती वनव्यतिरिक्तो मध्यभाग उच्यते । तत्पुरुषे तु वनमेव मध्यभूतमित्यर्थः—इति गोयीचन्द्र ।

ल्ययेन नियमे। ल्य-संज्ञक-यकारत्यान्तेन सह ल्यन्तस्य षः स्यात् अवश्यकरणीयत्वे गम्यमाने सति। मासे एव देयमृणं मासदेयं, मासे समाप्ते सति ऋणम् अवश्यं दातव्यमित्यर्थः। एवं वर्षदेयमृणं, पूर्व्वाह्णगेयं साम, मासकरणीयम्। जन्मकृतमित्यादौ तु शौण्डादेराकृतिगणत्वात्। येनेति किं? पर्व्वणि स्थातव्यम्।

तवाहोरात्रावयवानां क्तेन षेपे च। ततेस्तस्य, दिनावयवरात्र्यवयवयाचिनश्च ल्यन्तस्य क्तान्तेन सह षः स्यात्, निन्दायाञ्च। तत्र कृतं तत्रकृतं, तस्येदं तात्रकृतम्, आद्यचो त्रिः। मध्याह्नगतः, पूर्व्वरात्रकृतः, अपररात्रकृतः। अवयवेति किम्? अह्नि कृतं, रात्रौ कृतम्। "दिनकृताः सिध्येयुः रात्रिवृत्तमावेदयत" इत्यादि धघयोः कृता बहुलमित्यनेन बोसात्। निन्दायां—प्रवाहे मूत्रितं प्रवाहमूत्रितं, (१) भस्मनि हुतं भस्महुतम्, उदकविशीर्णम् (२), अन्धकारनटितमित्यादि। प्रवाहादिना मूत्रितादिना च मुख्यार्थमपहायार्थान्तरमभिधीयते, तथाहि प्रवाहइव धनादेये कार्य्ये, मूत्रितमिव निष्फलं प्रवर्त्तनमित्युभयोरेव मुख्यार्थत्यागात् निन्दा गम्यते (३) इत्यादिक्रमेणार्थो बोद्धव्यः।

---

(१) यथा स्रोतसि मूत्रिते न किञ्चिदपचीयते तथेत्यर्थं इति प्रयोगरत्नमालाटीका।

(२) विशीर्णं गलितमित्यर्थः। * * * जलान्तरितत्वात् केनापि विशेषतो न ज्ञातमतो निष्फलत्वमिति निन्दा—इति प्रयोगरत्नमालाटीका।

(३) एवंविधा हि मन्त्रा शब्दार्थं प्रयुञ्जाना न लेशं गमयन्ति, नापि पुत्रां, अतएव षिंशादयः मन्त्राः ये पुत्रार्थं प्रयुज्यन्ते, ताडादयोऽपि ये पुत्रार्थं, तेऽपि गौण्या वृत्त्या। अन्यथा पुत्रादेर्योरनभिधानम् इति समासवादे [illegible] सुषेण टीकायां गोयीचन्द्र।

ध्वाङ्क्षार्थेन । ध्वाङ्क्षार्थेन सह क्तान्तस्य षः स्यात् निन्दायाम् । तीर्थध्वाङ्क्षः (१) तीर्थे ध्वाङ्क्ष इव स्थित इत्यर्थः । एवं तीर्थकाकः, नगरवायस इत्यादि ।

पात्रेसमितादयः । क्षेपे गम्यमाने पात्रेसमितादयः सौपे निपात्यन्ते । पात्रे (२) एव समिताः सङ्गता न पुनः क्वचित् कार्य्ये पात्रेसमिताः, आखनिके (३) खाते वक इव आखनिकवकः, वको यथा खातगतमेव भक्षयति तद्वत् यो गृहगतमेव भक्षयति नान्यत्र गच्छति सः । मातरिपुरुषः प्रतिषिद्धसेवीत्यर्थः (४) । उडुम्बरे मशका इव एकस्था उडुम्बरमशकाः, यथा उडुम्बरमध्ये मशकाः एकस्था एव नान्यत् पश्यन्ति तथा ये अदृष्टदेशान्तरास्ते इत्यर्थः । पिण्डानेव शूरः पिण्डीशूरः अन्यकार्य्याक्षम इत्यर्थः । एवं गेहेविजितीत्यादावपि निन्दा गम्यते ।

पात्रेसमिता आखनिकवको मातरिपुरुष उडुम्बरमशकाः ।
पिण्डीशूरो गृहेविजिती गेहेनर्द्दी गेहेनर्त्ती ।
गेहेदाही गेहेदृप्तो गेहेमेही गर्भेतृप्तः ।

---

(१) ध्वाङ्क्षः काक । तीर्थध्वाङ्क्ष इत्यादौ पूर्व्ववत् मुख्यार्थपरित्यागेन तीर्थादि शब्दाना ध्वाङ्क्षादिशब्दानाञ्च गौणेऽर्थे वृत्ति । तीर्थध्वाङ्क्ष इति यथैव तीर्थे ध्वाङ्क्षो न चिर स्थाता तद्वदन्योऽपि यस्तीर्थ इव कार्य्ये ध्वाङ्क्ष इव अनवस्थित स तीर्थ-ध्वाङ्क्ष इत्युच्यते, कार्य्ये प्रत्यनवस्थितत्वमेवात्र क्षेप इति समासपादे ४२ सूत्रस्य टीकाया गोयीचन्द्र· ।

(२) भोजनसमये इत्यर्थ ।

(३) आङ्पूर्व्वात् खनु ञ विदारे इत्यस्मात् खनो डुडरेकेकवका इत्यनेन इक ।

(४) प्रतिषिद्धसेवीति य प्रतिषिद्धमाचरति स मातरिपुरुष उच्यते । मातरि पुरुषत्व निषिद्धं तद्वदन्यनिषिद्धाचरणेन क्षेपो गम्यते इति गोयीचन्द्र ।

गोष्ठेपण्डित गोष्ठेशूरो गेहेक्ष्वेड़ी गेहेव्याड़ः ।
उडुम्बरकृमिः पात्रेबहुलाः कूपकच्छपः ।
कर्णेचुरचुरायैव कूपमण्डूक इत्यपि ।
कर्णेटिरटिरा गेहेप्रगल्भोऽन्ये प्रयोगतः ॥

येषां गणे व्याप्तता तेषां प्रयोगेऽपि व्याप्तता। तथा च हतस्त्वं पात्रेसमितैरिति भट्टिः। पात्रेसमितादीनां ह्यतिरिक्तमान्तरं न भवतीत्येतदपि ज्ञेयं, तेन परमाः पात्रेसमिता इत्यादौ न यः। बहुपात्रेसमिता इत्यादौ हः स्यादेव।

वनेकशेरुकाद्या नाम्नि। वनेकशेरुकाद्याः सौपे, निपात्यन्ते संज्ञायाम्। वनेकशेरुकाः वनेकिंशुकाः पुरुषोत्तमः नगाधिराज इत्यादि। वनेकशेरुकादीनां पात्रेसमिताद्यन्तर्गतत्वे सिद्धे पृथग्विधानमनिन्दार्थम्। पुरुषोत्तमः नगाधिराज इत्यत्र न निर्द्धारण इति निषेधे प्राप्ते वनेकशेरुकादिपाठात् संज्ञायां स इत्यन्ये। परे तु संज्ञायामिति सूचयित्वा वनेकिंशुकाः वनेकशेरुका इत्युदाहरन्ति। ते तु यत्र समुदाये निर्द्धार्य्यमाणो निर्द्धारणहेतुश्चेति द्वयं तत्रैव न निर्द्धारण इति निषेधस्तेन पुरुषोत्तम इत्यादौ न निषेध इत्याहुः। यद्यपि इत्यादिभ्यन्तपूर्व्वदानामेव सम्यक्ता प उक्तास्तथापि प्राप्तपूर्व्वदानामप्यभिधानाज्ज्ञेयमिति। तथा च।

नञः। नञिति व्यस्य स्याद्यन्तेन सह षः स्यात् (१)। न

(१) स्यन्तेन सह नञ्पूर्वपदार्थस्य समासो वा भवति। स च समासः उत्तरपदार्थप्रधान इति अविप्रकारे (समासपादे १म सूत्रम्) तत्र बोधिन्याम् — "इदमनेकभिन्नवचनत्तरपदार्थप्रधानत्वे सिध्यति, तथाह्यत्र अमरमात्

ब्राह्मणोऽब्राह्मणः। नञोऽर्थो हि द्विविधः पर्य्युदासः प्रसज्यप्रतिषेधश्चेति। यदुक्तम्—

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता।
पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्॥
अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥ इति।

अब्राह्मण (१) इत्यादौ परपदार्थसदृशार्थकत्वात् विधेः प्राधान्यं, प्रतिषेधांशे तात्पर्य्याभावात् प्रतिषेधस्याप्राधान्यम्, अतएव पर्य्युदासनञः परदेन सह परस्परसापेक्षत्वात् सः। किञ्चित् न कुर्व्वाण इत्यादौ विध्यंशे, तात्पर्य्याभावात् विधेरप्राधान्यं, प्रतिषेधांशे शब्दप्रयोगात् तस्य प्राधान्यम्, अतएवोत्तरदेन सह प्रसज्यप्रतिषेधनञः करोत्यर्थक्रियया सह सम्बन्धेन परस्परसापेक्षत्वाभावान्न

---

द्वित्वाद्यर्थे एकत्वस्यारोपितस्याभिधाता एकशब्द उभासंख्य एव द्वित्वादीन् अभिदधातीति एकवचनमुपपद्यते। अनेकशब्दस्य सामानाधिकरण्यादन्येकवचनमेव नियतम्। यथा—"अनेक· प्राकृत करेणु· प्रस्थितानेका" इति। अनेके अनेकेषामिति बहुवचनमपि कैश्चित् समाधीयते। किन्तु तद्वृत्तिकृद्भिर्ण न व्यवस्थितमिति वृत्तिकता नाङ्गीकृतं, यतो "भवन्त्यनेके जलधेरिवोर्म्मय·" इत्यपपाठ इति वृत्तिकृतोक्तम्। यदा तु विजातीयानामर्थानां प्रत्येकमनेकत्वं विवक्ष्यते, तदा अनेकस्यैवानेकत्वे द्विवचनबहुवचने अपि भवतः। धवश्च खदिरश्च उभावनेकौ, धवश्च खदिरश्च पलाशश्च प्रत्येकतया इमे अनेके धवखदिरपलाशा इत्यत्रानेकशब्दप्रयोगो नास्त्येव अनेकत्वस्य द्वन्द्वादेवाधिगते। अनेकैराचार्य्यैः खण्डशः प्रणीतं शास्त्रमित्येकत्वद्वित्वेऽेकस्य न विद्यते एकत्व येष्विति वाक्ये बहुव्रीहिः कार्य्य" इति।

(१) एवञ्च सादृश्येन क्षत्रियादौ ब्राह्मणभ्रम सम्भवति, स एव गौणब्राह्मणशब्दार्थोऽब्राह्मण उच्यते इत्यर्थं इति विद्यासागरः।

सः। नन्वेवं सति सूर्यं न पश्यन्ति इत्यर्थे असूर्यम्पश्यानि मुखानि, पुनर्न गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण इत्यादौ कथं स इति चेत् सत्यं, न हि क्रियया सह सम्बन्धः सनिषेधकारणं, किन्तु अगमकत्वं ; तथाहि असूर्यंपश्यानीत्यादौ गमकत्वात् सः, किञ्चिन्न कुर्वाण इत्यादावगमकत्वान्न स इति। यद्वा असूर्यंपश्यानि मुखानि सूर्यविषयकदर्शनवद्भिन्नानि मुखानि, नैतत्कर्तृकपुनर्गेयभिन्नाः श्लोकाः, श्राद्धकर्मकभोजनवद्भिन्नो ब्राह्मण इत्यर्थात् पर्युदास एवेति (१)। देवदत्तेन न भूयते, न स्थीयते इत्यादौ क्रियया सह सम्बन्धात् प्रसज्यप्रतिषेध इति दिक्।

प्राञ्चस्तु नञोऽर्थः षड्विधः। यदुक्तम्—

> तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
> अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

यथा अब्राह्मणः, अपापम्, अघटः पटः, अनुदरी कन्या,

---

(१) "असूर्या भवता नाथ दृष्टपूर्वमपि वा पुरा"—इत्यत्र असूर्येति प्रसज्यप्रतिषेधार्थं नञः असुप्सुपसमासो विधेयाविमर्शदोषघटकतया न युक्त इत्युपप्रश्न तत्र दर्पणकारैरुक्तम्—"ननु अश्राद्धभोजी ब्राह्मणः असूर्यम्पश्या राजदारा इत्यादिवत् असमासेऽपि प्रसज्यप्रतिषेधो भविष्यतीति चेत्, अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात् तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम्। न च तथा, विशेष्यतया प्रधानेन तद्धोज्यर्थेन कर्त्रंशेनैव नञः सम्बन्धात्। यदाहुः—

> श्राद्धभोजनशीलो हि यतः कर्ता प्रतीयते।
> न तद्भोजनमात्रं तु कर्त्रादेर्विधानतः॥ इति।

असूर्यमत्र तु क्रियैव सह सम्बन्ध इति दोष एव।"

अकेशी वेश्या, असुर इत्याहुः। असितम् इत्यादौ रूढ़िविषयत्वात् न सादृश्याद्यवगमः। केचित्तु नञ्समं येऽन्तर्भावयन्ति, तन्मते उच्चैर्मुख इत्यादिवत् विशेषणविशेष्यत्वमवगन्तव्यम्। न नीलोऽनील इत्यादौ नञो द्योतकत्वादप्राधान्येन विशेषणत्वात् न पूर्व्वनिपातानियम इति। अन्ये तु तदसदेवेत्याहुः (१)।

ईषतो गुणवचनैः (२)। गुणमुक्त्वा गुणिनि वर्त्तन्ते ये ते गुणवचनास्तैः सह ईषदिति व्यस्य षः स्यात्। ईषत्पिङ्गलस्तस्यापत्यं ऐषत्पिङ्गलिः। एवं ईषद्विकटः ईषत्पीतः ईषदुन्नत (३)

---

(१) अत्र गोयीचन्द्रः—नञ्समासं काश्चात्र कर्म्मधारयसमासेऽन्तर्भावयन्ति। तदसत्, उभयगतविशेषणविशेष्यभावस्याप्रसिद्धत्वात्। अनीलमित्यत्र विशेषणविशेष्यभावस्यानियतत्वात् पूर्व्वनिपातानियम स्यादिति।

अत्र कार्त्तिकेय—ब्राह्मणस्य न (सदृश), सुरस्य न (विरोधी), राज्ञो न (भेदाश्रयः) इत्यादिवाक्यमङ्गीकृत्य अब्राह्मण असुर अराज इत्यादौ तत्पुरुष एव साध्यः। यदा ब्राह्मणशब्देन अप्रशस्तब्राह्मण उच्यते तदा नञ प्राशस्त्याभाववदर्थकतया कर्म्मधारय एव इति ध्येयमिति केचिच्छिन्नमतम्। वस्तुतोऽब्राह्मणपदेन ब्राह्मणसदृशं ब्राह्मणाभाव, ब्राह्मणादन्य इत्यादयः षट लभ्यन्ते। तत्र यदा अब्राह्मणपदेन ब्राह्मणसदृशं कथ्यते तदा ब्राह्मणपदेन लक्षणया ब्राह्मणसदृश उच्यते, नञ पदन्तु तमेवार्थं द्योतयति, नान्यमर्थं, तेन द्वयोरेकार्थता, अतएव कर्म्मधारय स्वीक्रियते। यदा नञोऽर्थः सदृशः, ब्राह्मणस्य मुख्यार्थः तदैव द्वयोरर्थभेदेनैकार्थताभावात तत्पुरुष एव कथ्यते। अतएतद्द्वय शिष्टैरङ्गीकृतमेव। * * * किमङ्गो तदसदित्युक्ता कर्म्मधारयवादिमत यत् सांचिप्रसारिकैर्मत्याख्यात तत्कथमिदानीं मया न बुद्धमिति।

(२) वचनग्रहणात् गतभुक्तपीतादयः क्रियाशब्दा अत्र न गृह्यन्ते इति विद्यालङ्कारः।

(३) ईषदुन्नत इति दैर्घ्यादिरूपपरिमाणार्थत्वेन गुणार्थक इति विद्यालङ्कारः।

इत्यादि। ईषद्गार्ग्य इत्यत्र गार्ग्यद्रव्याश्रित-गुणक्रिययोरल्पत्व-बोधकत्वेऽपि ईषतो गार्ग्यशब्देन सह न यो द्रव्यवाचित्वात् (१)।

पूर्व्वादेरंशिनैकत्वे। एकत्वे वर्त्तमानेनांशिना सह पूर्व्वादेः यः स्यात्। पूर्व्वं कायस्य पूर्व्वकायः अपरकायः उत्तरकायः पूर्व्वाह्णः मध्याह्नः सायाह्नः पश्चिमरात्रः। "उपारताः पश्चिमरात्रगोचरा"दिति भारविः। यद्यप्येकदेशे समुदायोपचारात् विशेषणविशेष्ययोर्यसेनैव पूर्व्वकाय इति सिध्यति तथाप्यवयवावयविसम्बन्धपक्षे ये कायपूर्व्व इत्याद्यनिष्टरूपनिरासार्थमिदम्। यीपेऽसि राजदन्तादित्वात् परनिपात इति कश्चित्, तन्मते तु नेदं सूत्रमिति। एकत्वे किं? पूर्व्वं छात्राणां, पूर्व्वं वर्षाणाम्। पूर्व्ववर्षा इति तु वर्षाख्यस्यांशिन एकत्वात् (२)।

क्लीवार्द्ध तुर्य्य द्वितीय तृतीय चतुर्थ तुरीयाणां वा। क्लीबलिङ्गानामेषामेकत्वे वर्त्तमानेनांशिना सह यः स्याद्वा। अर्द्धं कायस्य अर्द्धकायः (३), तुर्य्यभिक्षा द्वितीयभिक्षा तृतीयभिक्षा

---

(१) गार्ग्यशब्देनेति शेषः। अत्र गोयीचन्द्रः—"गुणवचनेनेति किम्? ईषद्गार्ग्यं, अयं जातिशब्दो द्रव्यवचनः गार्ग्यद्रव्याश्रितगुणक्रिययोः बोधनं गमयितुं शब्दः प्रयुज्यते, यथा गोत्वं इति जात्याद्युक्तवीभावात् न्यूनताबोधने प्रयुक्तः गुणस्य प्रकर्षं गमयितुं प्रकर्षप्रत्यय"।

(२) "अत्र यद्यपि बहुमानित्वं, तथापि एकत्वस्य विवक्षा एव। तथाचोक्तम्—आपो दाराः वर्षाः सिकताः अक्षाः असवः दारादेरेकत्वेऽपि बहुवचनम्" इति गोयीचन्द्रः।

(३) अर्द्धं नपुंसकमिति पाणिनिसूत्रम् (२।२।२)। "समप्रविभागे अर्द्धशब्दो नपुंसकलिङ्गोऽयं प्रयुज्यते। अर्द्धं पिप्पल्या इत्यादावर्द्धपिप्पलीति समासो भवति। अर्द्धभागवाचकस्तु अर्द्धः पुंलिङ्गः"—इति काशिका। भाष्ये तु—"क्वचनार्द्धपिप्पलीति? समासविकल्पो भविष्यति"।

चतुर्थभिक्षा तुरीयभिक्षा। पक्षे कायार्द्धम्। तथाच "अपूपार्द्धं भक्षितं मये"ति भाष्यम्। एवं भिक्षातुर्यमित्यादि। एकत्वे किम्? अर्द्धं धान्यानाम्। अर्द्धपिप्पल्य इति तु अर्द्धपिप्पली च अर्द्धपिप्पली च अर्द्धपिप्पली च इति एकशेषात्। अस्यानित्य-

---

अर्द्धं च सा पिप्पली च अर्द्धपिप्पलीति। न सिध्यति। परत्वात् षष्ठीसमासः प्राप्नोति। यत्र पुनरयमेकदेशिसमास आरभ्यमाणः षष्ठीसमासं बाधते। दृश्यते च षष्ठीसमासोऽपि। तद्यथा—अपूपार्द्धं मया भक्षितं, ग्रामार्द्धं मया लब्धमिति। एवं पिप्पल्यर्द्धमित्यपि भवितव्यम्" इत्युक्त्वा पाणिनिसूत्रमिदं प्रत्याख्यातम्। "सुनिश्चयाद्धि भाष्यकारः प्रमाणतरमधिकलक्ष्यदर्शित्वात्"—इति कैयटः। "एतच्च सूत्रं 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'रिति सूत्रे भाष्ये प्रत्याख्यातम्। तथाहि—अर्द्धपिप्पलीति कर्म्मधारयेण सिद्धम्। समुदाये दृष्टाः शब्दाः अवयवेऽपि वर्त्तन्ते इति न्यायात्। समप्रविभागादन्यत्र हि तथाप्येवैव गतिः। अर्द्धोङ्गारः, अर्द्धजरतीयम्, अर्द्धवैशसम्, अर्द्धोक्तम्, अर्द्धविलोकितमित्यादिदर्शनात्। न च समप्रविभागे षष्ठीसमासं बाधितुं सूत्रमिदमिति वाच्यम्। षष्ठीसमासस्यापि दृष्टत्वात्। तथाच कालिदासः प्रायुङ्क्त—प्रेम्णा शरीरार्द्धहरां हरस्येति"—इति प्रौढमनोरमा। तत्त्वबोधिन्यामप्येवमेव। कविप्रसादेऽपि नपुंसकार्द्धेन सह षाष्ठिकसमास उक्तः (समासपादे ५ सूत्रम्)। अतएव तर्कवागीशेन भाष्यकारक्रमदीश्वरयोर्मतमनुसृतम्। "एवं सति पुंलिङ्गेनाप्यर्द्धशब्देन अर्द्धग्राम इति स्यात्। नायं विरोधः, तस्यापीष्टत्वात्, यतो भाष्यकारेण अर्द्धं नपुंसकमिति पाणिनिसूत्रमेव निरस्तम्। तस्मादिहापि नपुंसकार्द्धेन कृतं स्पष्टार्थम्। अर्द्धभोजनं भोजनार्द्धमित्यादिविग्रहार्थम् अर्द्धशब्दोऽप्यन्यैरत्र पठ्यते, तत्कर्म्मधारय-षष्ठीसमासाभ्यामेव साधनीयम्। अर्द्धस्रोत, अर्द्धदृष्टा, अर्द्धजरतीत्यसाकल्यवृत्तेरप्यर्द्धस्य तृतीयासमासः। भुवमनयोरर्द्धेन वैशसं भवतीति वाक्येऽपि तत्प्रयोगो दृश्यते"—इति गोयीचन्द्रः। विधिना कृतमर्द्धवैशसमिति कुमारे ४।३१, प्रेम्णा शरीरार्द्धहरां हरस्येति च कुमारे १।५०, मल्लिनाथेन तु "अर्द्धं हरतीति अर्द्धहरा, शरीरस्यार्द्धहरा शरीरार्द्धहराम्। कुलधुरन्धरादिवत् अन्यपदद्वारा समुदायविशेषकत्वात् समासः, अन्यथा त्वर्द्धस्य समप्रविभागवचनत्वात् अर्द्धशरीरेति स्यात्"—इत्युक्तम्।

सत्वादेव अहं कायस्येत्यादिवाक्यसत्त्वेऽपि वाग्रहणं पाक्षिकपोष-ज्ञापनार्थम्। तेन व्यञ्जनच्छवानपूरणैरिति न पोषनिषेधः (१)।

कालानां परिमाणिभिः (२)। कालवाचिनां परिमाणि-वाचिभिः सह षः स्यात्। मासो जातस्य मासजातः, द्वाहो जातस्य द्वाहजातः द्वे अहनी जातस्य द्वाह्नजातः (३)। यद्यपि द्रोणाढ़कादीनामेव परिमाणत्वं प्रसिद्धं, तथाप्यत्र कालस्य गौण-परिमाणत्वमवच्छेदहेतुत्वात् (४)। तथाहि मासो जातस्येत्यादौ मासादयो जातसम्बन्धिनीः सूर्यगतीर्गमयन्ति इत्यवच्छेदहेतव इति (५)।

द्वा प्राप्तापन्नयोः। अनयोर्द्वितीयान्तेन सह षः स्यात्। प्राप्तो जीविकां प्राप्तजीविकः आपन्नजीविकः। जीविकाप्राप्तः जीविका

---

(१) ननु भिक्षार्थं भिक्षादौ पूरणार्थे यत्प्रयोगेऽपि व्यञ्जनच्छवानपूरणैरित्यनेन न कथं पोषनिषेध इत्यत आह वाग्रहणादि।

(२) परिमीयते परिच्छिद्यते यैस्तानि परिमाणानि परिच्छेदकानि तान्येषां सन्तीति परिमाणिनस्तैः।

(३) "यस्य हि जननादूर्द्धं मासो गतः स मासजात इति व्यपदिश्यते। तत्र व्यवहारे मासजननयोरन्तराभावो मासो जननद्वारा जातमपि परिच्छिनत्ति"—इति प्रौढ़मनोरमा। "मासो जातस्य कालेन परिच्छिद्यते। तथाहि—कियान् कालोऽस्य जातस्येति प्रश्ने मास इत्यादि प्रतिवचनं, न च परिच्छिद्यमानसिद्धमन्तरेण परिच्छेदकत्वं संभवति" इति कैयट। द्वाह इति द्वयोरह्नोः समाहार इति वाक्ये द्विगु समासः, अह्नोऽह्न इत्यादिना षः।

(४) कालस्य व्यवहारकालत्वेऽपि, अव्यवहारकालतयानवच्छिन्नैतावच्छेदकत्वाभावात्। अवच्छेद॰ व्यावर्तकतया इति विद्यासागर।

(५) मासस्य सूर्यगतिरूपस्य ... इति विद्यासागर।

पन्न इति श्रश्रितादित्वात्। प्राप्ता जीविकां या सा प्राप्तजीविका आपन्नजीविका इत्यत्र तत्वग्रहणज्ञापकात् पुंवद्भावः (१)। एवं द्वितीया भिक्षाया द्वितीयभिक्षा इत्यादावपि।

स्वयंसाम्योः क्तेन। स्वयं सामि इत्येतयोर्व्यसंज्ञयोः क्तान्तेन सह षः स्यात्। स्वयं धौतः तस्येदं स्वायंधौतं, (२) सामिकृतम्। सामिशब्दोऽर्द्धपर्य्यायः, तेन तदर्थस्य ग्रहणात् नेमिकृतम् अर्द्धकृतमित्यपि कश्चित्। कृदन्तग्रहणे कारकोपसर्गपूर्व्वस्यापि ग्रहणमिति न्यायात् स्वयंचिरविलीनः स्वयंधर्म्मगत इत्यादि (३)।

कुप्राद्योर्नित्यम्। कु इत्यस्य प्रादेश्च व्यसंज्ञकस्य स्याद्यन्तेन सह षः स्यान्नित्यम्। नित्यषे स्वपदविग्रहाभावात् पदान्तरेणार्थकथनम्। कुत्सितः पुरुषः कुपुरुषः, ईषज्जलं काजलं, प्रकृष्टः प्रगतः प्रपतितो वा पुरुषः प्रपुरुषः। विशिष्टो विरुद्धो वा पुरुषः विपुरुषः, दुष्टो जनः दुर्ज्जनः, शोभनो जनः सुजन इत्यादयः शिष्टप्रयोगानुसारेण ज्ञातव्याः।

क्रान्तादावत्यादिर्द्वा। क्रान्तादावर्थे वर्त्तमानस्यात्यादेर्द्वान्तेन

(१) प्राप्ता जीविका येन यया वेति बहुव्रीहिसमासाश्रयत्वेन चरितार्थत्वेऽपि माप्तप्रिय इत्यादौ पुंवद्भावो न स्यात्। प्राप्तराम इत्यादौ समासान्तप्रत्ययोऽपि न स्यादित्यततस्तत्पुरुषसमासाश्रयणमिति बोध्यम्—इति हरिनामामृतबोधम्।

(२) समासैकपदत्वे सति फलं दर्शयति स्वायंधौतमिति।

(३) क्तेन केवलेन समासासम्भवात् तदन्तग्रहणं तावद्भवतु सोपसर्गेण कथं समासः? अत आह कृदन्तेत्यादि। कारकोपसर्गौ पूर्व्वौ यस्मात् स कारकोपसर्गपूर्व्वस्तस्य कारकोपसर्गपूर्व्वस्य कृदन्तस्येति शेषः। कारकोपसर्गाभ्यां सह समस्तोऽपि कृत् सर्व्वेण कृदन्तग्रहणेन गृह्यते इत्यर्थः। विशेषणसमासेन सिद्धे सामिशब्दस्यैव पूर्व्वनिपातार्थं सामिग्रहणमिति गोयीचन्द्रः।

सह नित्यं यः स्यात् । अतिक्रान्तो वेलामतिवेलः, उद्गतो दिवां उद्दिवः (१) ।

क्रुष्टादाववादेस्त्या । क्रुष्टादावर्थे वर्त्तमानस्यावादेस्त्यन्तेन सह नित्यं यः स्यात् । अवक्रुष्टं कोकिलया अवकोकिलं वनम्, अवक्रुष्टः कोकिलेन अवकोकिलो हृष्टः सशब्दः कृत इत्यर्थः । सन्नद्धो वर्म्मणा संवर्म्मा, परिणद्धो वीरुद्भिः परिवीरुत्, सङ्गत-मशनेन समशनं, प्रतीतोऽर्चेण प्रत्यर्चो घटः, सुवङ्गतो वेलया सुवेलः, अधिगतोऽर्चेण अध्यर्चो घट इत्यादि ।

ग्लानादौ पर्य्यादेश्या । ग्लानादावर्थे वर्त्तमानस्य पर्य्या-देश्यन्तेन सह नित्यं यः स्यात् । परिग्लानोऽध्ययनाय पर्य्यध्ययनः, पर्य्याप्तं कुमार्य्यै अलंकुमारिः (२) । अलशब्दस्य पाक्षिकः स इति कश्चित्, तन्मतेऽलं कुमार्य्यै इति वाक्यमपि । उद्युक्तो युद्धाय उद्युद्धः, अभिगतः सुतायाभिसुतः ।

क्रान्तादौ निरादेः प्या । क्रान्तादावर्थे वर्त्तमानस्य निरादेः

---

(१) उभयत्र गवाद्यादेरिति तुल्यं । ननु अप्रधानस्य तेन तुल्यो विधीयते, उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्य । उच्यते—तस्य व्यभिचारो प्रागेव प्रतिपादितः । यो वेलामतिक्रान्तः स एवात्र प्रधानम् । यद्येवम् अतिवेल उद्दिव इति बहुव्रीहिणापि सिध्यति । अर्थभेदोऽपि नास्ति, किमनेन यत्नेन ? नैवं ; यदि बहुव्रीहि. स्यात्तदा अतिनदि अतिभर्त्ता इत्यादौ नादिघंशादे. ( यातः क ) इति नित्य क. स्यात्, अतिराज इत्यादौ टः ( प. ) न स्यात्, अतिधर्म्म इत्यत्र अन् ( धर्म्मादन् ) स्यात्, अतिजाय इत्यत्र जानि. स्यात्—इति गोयीचन्द्रः ।

(२) कुमार्य्यै कुमार्य्यर्थम् अलं समर्थः अलङ्कुमारिरेव, तादर्थ्यचतुर्थीयम्—इति प्रयोगरत्नमालाटीका ।

३६७ । व्यं पूर्व्वम् । (व्यं १।, पूर्व्वं १।) ।

परं व्यं पूर्व्वं स्यात् से सति ।

राजानमतिक्रान्ता अतिराजो, अतिखी, अत्यङ्कः, अतिस्त्रिः ।

---

व्यन्तेन सह नित्यं षः स्यात् । निष्क्रान्तो वनात् निर्वणः, अपगतो ग्रामात् अपग्रामः, अन्तर्गतो सुखात् अन्तर्मुख इत्यादि ।

क्वचिदन्यत्रापि । एतैः सूत्रैर्यत्राप्राप्तः तत्रापि शिष्टप्रयोगदर्शनात् षः स्यात् । पुनाराजः पुनर्गवः भूतपूर्व्वः (१) पुनःशिष्यो अविनाभूतम् अविनाभावः सहभावः अन्यथोपपत्तिः (२) अध्वगन्तव्य इत्यादि ।

घस्याद्यन्तेनापि कृतोपपदस्य । स्याद्युत्पत्तेः प्रागपि कृदन्तेन सहोपपदस्य नित्यं षः स्यात् । कुम्भं करोतीति कुम्भकारः, अग्निप्रदः, धनक्रीतीत्यादि । हरिभाविनीत्यादौ तु णिनोऽन्यार्थत्वात् ङ एवोक्तः ।

न इत्यादिनिमित्तस्य प्रत्यादेः । इत्यादिनिमित्तस्य प्रत्यादेः कुमादेरित्यनेन प्राप्तः षो न स्यात् । वृक्षं प्रति विद्योतते विद्युत्, अभिमन्युरर्ज्जुनतः प्रति स्थित्वा गतः, त्रिगर्त्तेभ्यः परीत्यादि ।

३६७ । व्यम् । व्यमिति सविधायकलक्षणे षोनिर्दिष्टस्योप-

---

(१) पुनाराज इत्यत्र सत्यहोरात्र इत्यनेन पुनर्गव इत्यत्र गोरतार्थे इत्यनेन षप्रत्ययविधानार्थं समासविधानम् । भूतपूर्व्व इति भूत पूर्व्वमित्यर्थः । एवम् अध्वा गन्तव्य अध्वगन्तव्य इति ।

(२) अन्यथोत्पत्तिरिति अन्यार्थोपपत्तिरिति च पाठान्तरम् ।

लक्षणं, तेन पूर्व्वकायः अर्द्धपिप्पलीत्यादौ पूर्व्वादीनां पूर्व्वनिपातो, न तु ग्रामं प्रति इत्यत्र प्रतेरिति। अतिराजीति—अतिक्रान्ता राजानमित्यादिरूपेणार्थकथनमित्यन्ये। सख्यह्नोराज्ञः षः षगे च इति षः, षित्त्वादीप्। अतिश्वीत्यत्र शुनोऽत्यप्राण्युपमानात् इति षः। अत्यङ्ग इत्यत्र सख्यह्नोराज्ञ इति षे सर्व्वैकदेशेत्यादिनाङ्गोऽङ्गादेशः। पूर्व्वदार्थप्राधान्येऽपि षविधानस्येत्यादि फलम्। एवम् अतिनदिः अतिभर्त्ता अतिधर्म्म इत्यादौ कादयो न स्युः अंद्वत्वात्। अतिस्त्रिरिति—परदार्थस्याप्राधान्याद्गौणत्वेन गवादेरिति ह्रः।

राजदन्तादिषु परम्। प्राप्तपूर्व्वनिपातं टं राजदन्तादिषु पठितं चेत् परं स्यात्। दन्तानां राजा राजदन्तः लिप्तवासितं सिक्तसंमृष्टं नग्नमुषितं अटलुठितं (१) अवक्लिन्नपक्वं अर्पितोदस्तः उप्तगाढ़ः। समस्तु पूर्व्वकालस्य लक्षणस्य विषयः। उदूखलमुषलं तण्डुलक्लिन्नं चित्ररथवाह्लीकं विष्वक्सेनार्ज्जुनौ चित्रास्वाती भार्य्यापती पुत्रपश्वो केशश्मश्रू विशेषणविशेष्ये स्नातकराजानौ प्रतिष्ठानिषे शूद्रार्य्यौ मर्य्यादाभिविधी शिरोजानु पाण्डुधृतराष्ट्रौ (२)। अनाहूय कर्म्मभूय ते, ईदूतोर्या परदे इति ह्नः, ते च हन्भूय ता अनाहुककर्म्मभूहन्भ्वः। उदूखलादिभिर्मुषलादीनां चे परनिपातः। विशेष्यविशेषणे इत्यपि स्यादिति कश्चित्।

---

(१) अटलुठितमित्यत्र क्वचित्पाठे अटलुण्ठितमिति पाणिनीये।

(२) द्वन्द्वोऽराजदन्तेषु न क्वचित् बहुत्वात् क्वचिद्बहुत्वाभावेऽपि क्वचित् अभिधानादित्यात् बहुत्वेऽपि... नप्रवात इति वृन्दावनबोधम्।

३६८। संख्याव्याद्रात्राङ्गुलिभ्यामः।

( संख्या-व्यात् ५।, रात्रि अङ्गुलिभ्यां ५॥, अः १। )।

संख्याया व्याच पराभ्यां रात्रग्ङ्गुलिभ्या-मः स्यात् याद्यौ, न तु यार्थे। अतिरात्रः अत्यङ्गुलः।

हरिणा त्रातो हरित्रातः। विष्णवे दत्तं विष्णुदत्तम्। अच्युतात् जातम् अच्युतजातम्। कृष्णस्य सखा कृष्णसखः,

---

एवं वनस्याग्रे अग्रेवनं, राज्ञीणां गणो गणराज्ञं, वाणस्य वारो वारवाणः, अन्तरं गृहं गृहान्तरम् (१) अन्तरशब्दोऽत्रान्यार्थः, श्वः परं परश्व इत्यादि। शेषं शिष्टप्रयोगानुसारेण ज्ञेयम्।

३६८। सख्या। मण्डूकगत्या यादावित्यनुवर्त्तते इति। न च तत्र यसे संख्यावाचिनो रात्रेः याविधानात् पगयोरेवास्य विषय इत्यत आह यादाविति। न च तत्र पित्त्वात् स्त्रियामीब्विधानात् संख्याग्रहणं कर्त्तव्यमिति वाच्यं, रात्रान्ताना-महोरात्रादित्वादेव पुंस्त्वात्। संख्याव्यादिति क्रनिर्देशाच्च यथासंख्यमित्यत आह—अतिरात्रः अत्यङ्गुल इति। गे तु द्वयोः रात्र्योः समाहारः द्विरात्रम्। एवं निर्गतमङ्गुलिभ्यो निरङ्गुलं, द्वे अङ्गुली परिमाणमस्य द्व्यङ्गुलं क्षेत्रं, द्व्यङ्गुला भूमिः। 'भूमे-रप्यर्द्धमङ्गुल"मिति तु यवमानार्थोऽङ्गुलशब्दस्तथाच "अङ्गुलन्तु यवो मत" इत्यमरमाला। कृष्णसख इति—सख्यहरिति पः। महा-

---

(१) गृहान्तरमित्यत्र विशेषणात् गृहशब्दस्य कर्मधारये परनिपातनिरासः। एतदर्थं गणपाठशामर्द्धादिति हरिनामामृतम्।

महाघासः, ग्रामतक्षः, मृगसक्थं, जालसरसं, मण्डूकसरसं, राजगवः, वर्षारात्रः।

३६९। मुख्यार्थोरसः। (मुख्यार्थोरसः ५।)।

मुख्यार्थादुरस्शब्दादः स्यात् यादौ। अश्वोरसं, मुख्योऽश्व इत्यर्थः। पुरुषेषु उत्तमः पुरुषोत्तमः, अवन्तिषु ब्रह्मा अवन्तिब्रह्मः।

इति यः।

---

घास इति—महतो महत्या वा घास इति वाक्यं, घासशब्दे परे महतस्तयोराः। ग्रामतक्ष इति—ग्रामस्य तक्षा इति वाक्यं, कौटग्रामादिति यः। मृगसक्थमिति—मृगस्य सक्थि इति वाक्यं, पूर्व्वोत्तरमृगादिति यः। जालसरसमित्यत्र सरोऽगोऽयोऽश्मन इति यः। कालस्य कालकूटाख्यगरलस्य सरः कालसरसं कालियह्रद इति परे। राजगव इति—गोरतार्थे इति यः। वर्षारात्र इति—वर्षाणां रात्रिरिति वाक्यं, सर्व्वैकदेशेत्यादिना यः।

३६९। मुख्या। मुख्योऽर्थो यस्य तत् मुख्यार्थं, तच्च तत् उरश्चेति तस्मात्। अश्वोरसमिति—अश्वस्य उर इति वाक्यम्। उरःशब्दो मुख्यवृत्त्या हृदयवाची, लक्षणया प्रधानार्थः, तथाहि यथा उरः शरीरावयवानां प्रधान तथा अश्वानां प्रधानमित्यर्थः। मुख्यार्थादिति किं? मैत्रस्योरो मैत्रोरः। अवन्तिब्रह्म इति—अवन्तिर्देशभेदः, तत्र ब्रह्मा ब्राह्मणः। एवं सुराष्ट्रब्रह्मः कान्यकुब्जब्रह्म इत्यादि। देशादिति किं? देवब्रह्मा नारदः।

## द्विगु-समासः, (गः)।

तस्यार्थे विषये, वाच्ये अपत्यार्थण्णिकादिकम्।
प्रोज्झ्याजादेः, समाहारे, गस्त्रिधोत्तरदे परे॥
पञ्चभिर्गोभिः क्रीतः पञ्चगुः।

इदानीं गमाह तस्यार्थे इत्यादि। गस्त्रिधा त्रिप्रकारः, तत्र तस्यार्थे एकः, समाहारे एकः, उत्तरदे परे एक इति। तस्यार्थे कृतगसात् तत्यस्य सत्त्वासत्त्वात्(१) तस्यार्थे इत्यत्र एकस्याः स्या एव विषयत्वं वाच्यत्वं चेत्यर्थ इत्यत आह विषय इत्यादि। अपत्यार्थं ण्णिकादिकञ्च (२) विहाय अजादेस्तस्यार्थे वाच्ये, ण्णिकादिकस्य हसादेश्च तस्यार्थे विषयभूते ग इत्यर्थः (३)। यथा पञ्चसु

(१) तस्यार्थे तद्धितस्यार्थे कृतगसात् कृतद्विगुसमासात तत्यस्य तद्धितप्रत्ययस्य अजादेर्हसादेर्वेति शेष सत्त्वासत्त्वात विद्यमानत्वाविद्यमानत्वेन इत्यर्थः।

(२) ण्णिरेव ण्णिक छन्दोऽनुरोधात् स्वार्थे कः ण्णिप्रभृतिकमित्यर्थ इति दुर्गादास कार्त्तिकेय गङ्गाधराः।

(३) अपत्यार्थण्णिकादिकस्य हसादेश्च तद्धितस्यार्थे ,विषय एव द्विगुर्न तु वाच्य इत्यभिप्राय।

अत्र दुर्गादास.—यत्र तस्यार्थविषये समास क्रियते तत्र तद्धितप्रत्ययोत्पत्ते पूर्वावस्थायां समासे कृते तत प्रत्ययोत्पत्ती इत्यादि, तेन द्वयोर्मात्रोरपत्यमित्यत्र प्राप्तव्यस्य ण्णप्रत्ययस्योत्पत्ते पूर्वावस्थाया द्विमातृ एतयोरेकपदीभावे पश्चात् ण्ण-प्रत्यये कृते द्वि इत्यस्यैव इद्धौ सङ्ख्यासभद्रादित्यादिना उरि कृते द्वैमातुर इति। एव पञ्चानां नापितानामपत्य पाञ्चनापिति। वाच्ये तु यथा पञ्चभिर्गोभि क्रीत पञ्चगुरित्यत्र कर्म्मणि वाच्ये करणकारकात टक्केकादित्यादिना प्राप्तव्यप्रत्ययस्यार्थे वाच्ये समासेनैव तद्धितस्य उक्तार्थत्वे उक्तार्थानामप्रयोग इति न्यायात् तद्धित-प्रत्ययस्यानुत्पत्ती गवाचादेरिति ह्रस्व। अजादेरिति कि? द्वयोर्मूर्ध्नोर्भव-द्विमूर्द्ध्य इत्यादौ विषये एव समास स्यात न वाच्ये इति। कार्त्तिकेय गङ्गाधरा-वप्येवमाहतु।

कपालेषु संस्कृतः सूपः पञ्चकपालः सूपः, द्वौ वेदौ वेत्त्यधीते वा द्विवेदः द्वितन्त्र इत्यादौ संस्कृताद्यर्थस्य सेनोक्तत्वात् उक्तार्थानामप्रयोग इति न्यायात् न ष्णादयः। पञ्चानां नापितानामपत्यं पाञ्चनापितिः, द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशौर्पिकं, द्विखारीकः, अर्द्धखारीणः, पञ्चानां गर्गाणां भूतपूर्व्वो गौः पञ्चगर्गरूप्यः, पञ्चसु ब्राह्मणेषु साधुः पञ्चब्राह्मण्य इत्यादौ अपत्याद्यर्थस्य विषयभूतत्वेनानुक्तत्वात् ष्णादयः स्युरेव। ष्णिकादि इत्यनेन अर्हति इत्यादौ विहितो यः ष्णिकस्तदाद्या, अर्हति इत्यादिविहिता ये त्याः संज्ञायामेव तेषां, वेत्त्यादिभिन्नेष्वर्थेषु येऽजादयस्त्यास्तेषाञ्च ग्रहणं, तेन पञ्चगुरित्यत्र क्रीतार्थस्य अर्हतीत्यादित्वेऽप्यसंज्ञायामष्णिकादित्वाद्वाच्ये गः। संज्ञायान्तु पञ्चभिर्लोहितैः क्रीतं पाञ्चलोहितिकमित्यादौ विषय एव गः ष्णिकादित्वात्। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकं द्विसुवर्णं, द्विसाहस्रं द्विसहस्रमित्यादौ संज्ञायामपि वा त्यस्य विधानात् विषये वाच्येऽपि गः। एतत् सर्व्वं तपादे विशिष्य वक्तव्यम् (१)।

---

(१) तद्धितार्थोत्तरपदसमाहारे च इति पाणिनिसूत्रम्। (२।१।५१।) अत्र विषयद्विगुरेव लभ्यते न तु वाच्यद्विगुः। वोपदेवमते यत्र वाच्यद्विगु पाणिनिमते तत्रापि तद्धितप्रत्ययो भवति लुप्ता च "द्विगोर्लुगनपत्ये" (४।१।८८) इत्यनेन तस्यैव उत्पन्नस्य तद्धितप्रत्ययस्य लुग्भवति। "यदि तु तद्धितार्थे वाच्ये इति व्याख्यायेत तर्हि पौर्वशाल इत्यादौ तद्धितो न स्यात्। तदर्थस्य समासेनैवोक्तत्वात्। द्विगोर्लुगनपत्य इति ज्ञापकाद्वाच्येऽपि तद्धितार्थे तद्धितो भवतीति कल्पना प्रतिपत्तिगौरवमिति भाव" इति तत्त्वबोधिनी। संक्षिप्तसारेऽप्येवमेव। वोपदेवेन तु कातन्त्रमतमनुसृतमिति प्रतीयते। तथाच—"पाणिनिना तद्धितार्थविषय एव समासं कृत्वा पश्चादुत्पन्नस्य तद्धितस्य लोपार्थं "लुगनपत्ये" इत्यादि सूत्राणि

## ३७०। गैक्यादतोऽपात्रादेरीप्।

( गैक्यात् ५।, अतः ५।, अपात्रादेः ५।, ईप् ।१। )।

गैक्यादकारान्तादीप् स्यात्, न तु पात्रादेः।

त्रयाणां लोकानां समाहारः त्रिलोकी।

पात्रादेस्तु—द्विपात्रं त्रिभुवनं, चतुर्युगम्।

---

३७०। गैक्या। गस्यैक्यं गैक्यं तस्मात्। पात्रमादिर्यस्य स पात्रादिर्न पात्रादिरपात्रादिस्तस्मात्। निषेधो यज्जातीयस्य विधिरपि तज्जातीयस्य इति न्यायात् पात्रादिवर्जनेनैवात इत्यस्य लाभेऽपि अतो ग्रहणं कृतसान्तादन्तस्यापि प्राप्त्यर्थं, तेन षोडशराजी द्विधुरी पञ्चराजीत्यादि। पञ्चराजशब्दस्य पात्रादौ पाठात् पञ्चराजमिति भाष्यम्। त्रिलोकीति—ईपः पित्करणादेव चगैक्यमित्यनेन न क्लीवत्वमतो नित्यस्त्रीत्वमिति। एवं पञ्चपूली सप्तशतीत्यादि। ननु समाहारस्यानेकवृत्तित्वात् कथमेकापूपीति चेत् सत्यं, दानक्रियया सम्भ्रमेण (१) वा एकस्याप्यपूपस्य बहुत्वमध्यारोप्य समाहार इति (२)। पात्रादेस्त्वित्यादि—द्विपात्रं

---

विहितानि। * * * यत्र यत्र परमते लुगस्ति तत्राप्यत्र अभिधेये, यत्र च लुङ् नास्ति तत्र विषयभूते समासोऽयमिष्यते इति"—इति चतुर्दशस्त्री २६४ सूत्र टीकायां कविराजः।

(१) सम्भ्रमेण आदरेण, तथाच—सम्भ्रम आदरेऽपि स्यात् सम्भ्रमादरयोरपि—इति मेदिनी। सम्भ्रमेण त्वरया वा इत्यर्थं, विलम्बस्य दानस्यानुचितत्वात्—इति विद्यालङ्कारः।

(२) दानक्रियाया बहुत्वेन एकापूपस्यापि बहुत्वं संगच्छते। तथाच एकमपूपं गृहीत्वा सर्वेभ्यो ददातीति रूपेण एकस्याप्यपूपस्य बहुत्वमध्यारोप्य समाहार इति पाणिनीया अप्यस्यापमन्नीति कार्सिकेयः।

३७१। वानापः। (वा ।१।, अनु-आपः ५।१)। (१)

अनन्तादापश्च ईप् स्याद्वा। पञ्चकर्म्मी पञ्चकर्म्मं, त्रिखट्वी त्रिखट्वम्।

३७२। तार्थे मानात् काण्डाञ्चाचेत्रे।

(तार्थे ७।, मानात् ५।, काण्डात् ५।, तु १।, अचेत्रे ७।)।

त्र्याढ़की, त्रिकाण्डी रज्जुः। चेत्रे तु त्रिकाण्डा भूमिः।

---

त्रिभुवनं त्रिगुणं चतुःशतं चतुष्पथं चतुर्मुखं पञ्चनावं पञ्चगवं द्विखारमित्यादि शिष्टप्रयोगानुसारेण बोध्यम्। अत इति किं ? त्रिजगत् पञ्चपटु।

३७१। वा। मण्डूकगत्या संख्याव्यादित्यतोऽकारानुवृत्त्या, वा इत्यत्राऽप्रश्लेषाद्वा अ-इत्यस्य लाभः (२)। वाशब्दोऽत्र समुच्चयार्थः। तथा चानन्तावन्ताभ्याम् अ ईप् च स्यादित्यर्थः। तेन पञ्चकर्म्मं त्रितक्षमित्यादि स्यात्। अस्येवस्तत्संश्लेषकत्वेन पञ्चकर्म्मी त्रितक्षीत्यत्र नकाराकारयोर्लोपः।

३७२। तार्थे। इहाकारत्वो नानुवर्त्तते, परन्तु वा पदं स्यात् (३)। तार्थे गे मानार्थकादीप् स्यात्, काण्डशब्दात्तु चेत्र-

---

(१) (वा ।१।, अ ।१।, अनु आप ५।१) इति वा पदच्छेदः।

(२) केचित् मण्डूकगत्या संख्याव्यादिति यकारादतोऽनुवर्त्तनमङ्गीकुर्वन्ति, तन्न युक्तं, अतिव्यवहितत्वेनोऽनुवर्त्तितत्वेन निराकाङ्क्षत्वात्, एकेन चकारेण कार्येऽपि सङ्ग्राह्यस्यानुवर्त्तनीयत्वाच्च इति कार्शिकेय।

(३) अत्र अकारो नानुवर्त्ततेऽविद्यमानत्वात्, यदि नानुवर्त्तेत तदा वा पदं स्यात्। ईबेवानुवर्त्तते इष्टत्वात्। इष्टतोऽनुवर्त्तने अतिव्याप्तिदोषो न स्यादिति न्यायात्। इति कार्शिकेय।

३७३। पुरुषाद्वा। (पुरुषात् ४।, वा।१)।

त्रिपुरुषी त्रिपुरुषा। त्रिसखं त्रिगवं त्रिनावं, त्रिखारं त्रिखारि, त्र्यहः।

---

भिन्ने वाच्ये। त्र्याढ़की—त्रय आढ़का मानमस्या इति वाक्यम्। एवं द्वौ द्रोणौ मानमस्या द्विद्रोणी द्व्याढ़कीत्यादि। त्रिकाण्डीति—त्रयः काण्डाः परिमाणमस्या इति वाक्यम्। एवं द्विकाण्डीत्यादि। सर्व्वत्र परिमाणार्थविहितस्य मात्र-त्यस्य लुक्। अक्षेत्रे इति किं? त्रिकाण्डा भूमिः द्विकाण्डा क्षेत्रभक्तिः, क्षेत्र-भक्तिः क्षेत्रैकदेशः। मानात् किं? पञ्चभिरश्वैः क्रीता पञ्चाश्वा। द्विवर्षा त्रिशता इत्यत्रापि न स्यात्, सुपञ्चालादौ सङ्ख्यापूर्व्व-परिमाणार्थसंवत्सरसंख्यानां पृथग्ग्रहणेन कालसंख्ययोरपरि-माणार्थत्वात्। समाहारे तु दशशतीत्यादयः स्युरेव।

न बिस्ताचितकम्बल्यात्। तार्थे गे मानार्थेभ्य एभ्य ईप् न स्यात्। द्वे बिस्ते मानमस्या द्विबिस्ता द्व्याचिता द्विकम्बल्या।

३७३। पुरु। तार्थे गे मानार्थात् पुरुषादीप् स्याद्वा। त्रिपुरुषीति—त्रयः पुरुषा मानमस्या इति वाक्यम्। एवं द्विपुरुषी द्विपुरुषा परिखा। त्रिसखमित्यादि—त्रयाणां सखीनां समाहार इति वाक्यम्। क्रमेण सख्यहोरात्रः, गोरतार्थे, नावोऽर्द्धात्ते च, खार्य्या वेति अ-प्रत्ययः। त्रिखारि—पाभावपक्षे चगेक्लवमिति क्लीवत्वात् क्लीवे ह्रस्वः। त्र्यह इति—त्रयाणाम् अह्नां समाहार इति वाक्यं, सख्यहोरात्र इति ये सर्व्वांशादेश इत्यत्र ऐत्वनिषेधात्

३७४ । द्वित्रेर्व्वाञ्जलेरः ।

( द्वित्रेः ५।, वा ।१।, अञ्जलेः ५।, अः १।) ।

द्यञ्जलं द्याञ्जलि, द्याङ्गुलं त्रिरात्रम् ।

पञ्च गावो धनं यस्यासौ पञ्चगवधनः द्विनावधनः द्विखारधनः द्व्यङ्गप्रियः ।

इति गः ।

---

अङ्गो नाङ्गादेशः, अह्नोरात्रादित्वात् पुंस्त्वम् । एवं द्व्यह्नः । अनैक्ये तु द्वयोरङ्गोर्भवः द्व्यङ्गः त्र्यङ्ग इत्यादि स्यादेव ।

३७४ । द्वित्रेः । वाग्रहणात् मानात् तार्थे इत्यस्य च निवृत्तिः । तथाच द्वित्रिभ्यां परादञ्जलेरः स्याद्वा अतार्थे गे (१) । द्यञ्जलमिति—द्वयोरञ्जल्योः समाहार इति वाक्यम् । पक्षे द्याञ्जलि । एवं त्र्यञ्जलं त्र्यञ्जलि, द्वावञ्जली जनमस्य द्यञ्जलजनः द्याञ्जलिजन इत्यादि । तार्थे तु द्वाभ्यामञ्जलिभ्यां क्रीतः द्याञ्जलिः । द्याङ्गुलमित्यादि—संख्याव्ययादित्यः । उत्तरदगमाह पञ्चगवधन इति । आदौ त्रिभि दं षः, पश्चात् धनशब्दे परे पूर्व्वयो दंयो गः, गर्भे

---

(१) तद्धितार्थे द्विगौ न भवतीति सर्व्वसम्मतम् । पाणिनिजिनेन्द्रामरचन्द्रगोमिप्रमुखाचार्य्यैरपि स्वीकृतम् । दुर्गादासकविराजोऽपि "द्वित्रिभ्यां परादञ्जलेः अः स्याद्वा तद्धितार्थे द्विगौ । द्वाभ्यामञ्जलिभ्यां क्रीतं द्व्यञ्जलं पक्षे तद्धितस्य लुकि अनत्यादित्वात् नोऽन्तम्" इत्याह । तदयुक्तम् इति दुर्गादासादयः । तस्माद् इदं वचनम् अत्र पक्षपातिभिरेव ग्राह्यं ।

## अव्ययीभाव-समासः, (वः)।

वः क सामीप्य-सादृश्य-साकल्यानुक्रमर्द्धिषु।
वीप्सा-पर्य्यन्त-योग्यत्व पश्चादर्थानतिक्रमे।
शब्दप्रादुर्भावाभाव यौगपद्येष्वनेकधा॥

गोरुत्तरदलत्वात् गोरतार्थे इति पः (१)। एवं द्विनावधनः द्विखारधनः द्विखारीधनः द्व्यङ्गप्रिय इत्यत्र नावोऽर्द्धात् गे च, खार्य्या वा, सख्यहोरात्र इति क्रमेण पः, पेऽह्नोऽह्नादेशः। द्वे अह्नी जातस्य द्व्यह्नजात इत्यादौ त्रिभिर्द्वैः पः, पश्चात् पूर्व्वयो र्द्वयो र्गः। अभिधानात् उत्तरदे गसौ नित्य एव, तेन पञ्चगोधनम् इति न स्यात्। अन्ये तु समाहारः संघः, तत्र तार्थे इत्यनेनैव गे सिद्धे समाहार इति कृतं संघरूप तार्थे ग निराकरणार्थमित्याहुः (२)। परे तु दिग्वाचिपूर्व्वदानामपि गमुक्त्वा पूर्व्वस्यां शालायां भवः पौर्व्वशालः पूर्व्वा शाला प्रिया अस्य पूर्व्वशालाप्रियः इत्युदाहरन्ति।

इति गसः।

---

इदानीं वमाह। वः कीत्यादि। वपूर्व्वदानां सौ वस्र उक्तः।

---

(१) तद्धितार्थप्रतिपत्तिकरे बहुव्रीहौ सत्यपि पदमध्ये समासविहितकार्य्यार्थं उत्तरपदे द्विगुरभिहित इति गङ्गाधर।

(२) "तद्धितार्थे समाहारे द्विगु• संख्याया•" इति संक्षिप्तसार सूत्रम् (समासपादे ११८)। ननु पञ्चानां गवां समाहार इति वाक्ये समासान्तप्रत्यये कृते, पुनस्तस्य लुकि, तद्धितार्थद्विगो र्गोपरत्वात् समासान्तनिषेधात्, पञ्चगुरित्यनेन भवितव्यम्, न तु पञ्चगव इत्याशङ्कयाह समाहार इति। तथाच समाहारस्थले न पुनस्तद्धितार्थे समास इति भाव। गोयीचन्द्रस्य टीका द्रष्टव्या।

## ३७५। वात् क्तेर्मोऽतोऽप्याः।

( वात् ५।, क्तेः ६।, मः १।, अतः ५।, अप्याः ६।)।

अकारान्तात् वात् परस्याः क्ते र्मः स्यात् नतु प्याः।

क्षणमधिकृत्य प्रवृत्ता कथा, अधिकृक्षणम्।

अप्याः किं ? क्षणस्य समीपात् गतः, उपकृष्णात् गतः।

---

स च व सामीप्याद्यर्थेषु (१) गम्यमानेषु स्यानां दानां स्याद्यन्तैः सहाभिधानप्रामाण्यान्नित्यं स्यात्। व-सामीप्याद्यर्थभेदादनेकधा अनेकप्रकार इत्यर्थः। परसूत्रसापेक्षत्वादिह नोदाहृतम्।

३७५। वात्। अप्या इति पृथग् दकारणं 'सुक् परा'दित्यत्रानुवर्त्तनार्थम्। क्षणमधिकृत्येत्यादि। यद्यपि व इति सामान्येनोक्तं तथाप्यभिधानात् ङीस्योरर्थ एव ज्ञेयः। एवं स्त्रीष्वधिकृत्य कथा प्रवर्त्तते अधिस्त्रीत्यादि। अन्ये तु स्वर्थ एव वसं कुर्व्वन्ति। नित्यत्वादस्य ङीस्यन्तादेनार्थकथनम्। उपकृष्णादिति—अप्या इत्यस्य प्रत्युदाहरणेनैव सामीप्योदाहरणं दर्शितम्। एवं कुम्भस्य समीपम् उपकुम्भमित्यादि। "दण्डकान् दक्षिणेनाहं सरितोऽद्रीन् वनानि च" इत्यत एनन्तान्तदक्षिणेनेति व्यस्य सामीप्यार्थत्वेऽपि न सः अनभिधानात्। गृहस्योपरि तिष्ठति, उपरि शिरसो घट इत्यत्र सामीप्यार्थस्याविवक्षितत्वात्, अन्यथा उपरिशब्दस्य द्वित्वं स्यात्।

---

(१) अत्र सामीप्य-साहश्य-साकल्य-योग्यतानां धर्म्मिवाचकत्वेन निर्द्देशात् एवं वक्ष्यमाणोदाहरणस्वमे धर्म्मिवाचकत्वेन निर्द्देशाच्च उभयत्वैव स्यात्, तेन उपकृष्णं भूमि, उपकृष्णं भूम्या इत्यादि, अन्येषु विशेषो नास्तीति गङ्गाधरः।

३७६। वीप्सो र्वा।

( वी-प्सोः ६॥, वा ।१। )।

उपकृष्णं उपकृष्णेन कार्य्यम्। उपकृष्णं उपकृष्णे स्थितः।

३७७। लुक् परात्।

( लुक् ।१।, परात् ५। )।

अकारान्तादन्यस्मात् वात् परस्याः क्तेः लुक् स्यात्।

३७८। सहः सोऽकाले।

( सहः ६।, सः १।, अकाले ७। )।

सहस्य सः स्यात् नतु काले।

हरेः सदृशं सहरि। काले तु सहपूर्व्वाह्णम्।

---

३७६। वी। अकारान्तात् वात् परयोस्तीप्स्योर्मः स्याद्वा। वाशब्दस्य व्यवस्थावाचित्वात् सुमद्रम् उन्मत्तगङ्गम् एकविंशतिभारद्वाजमित्यादौ समृद्धिनदीसंख्यावयवेभ्य. स्या न वा मादेशः।

३७७। लुक्। वेति नानुवर्त्तते, क्लीवाड्इत्यत्र वाग्रहणात्। क्तेरित्यनुवर्त्तते इत्यत आह क्तेरिति।

३७८। सहः। वादित्यस्यार्थवशात् क्तेर्विपरिणामः, तेन वे इत्यर्थः। हरेः सदृशः इति सहरि गुरुरित्यत्र गुणभूतेऽपि सादृश्ये वः, सादृश्येत्यनेन गुणागुणभूतसादृश्यग्रहणात्। एवं सदृशः किख्याः सकिखि, हरेः सादृश्य सहरि गुरोः, सकिखि कुकुरस्येत्यादौ। किखिः खेखीति ख्यात. शृगालभेदः। तथाच— "किखिः शृगालभेदे स्या"दिति विश्वः ; वानरीति केचित्। सह-

तृणेन सह सकलमत्ति सतृणम्। ज्येष्ठमनुक्रम्य अनुज्येष्ठम्। मद्राणां समृद्धिः सुमद्रम्। विष्णुं विष्णुं प्रति प्रतिविष्णु। अग्निग्रन्थपर्य्यन्तमधीते साग्नि। रूपस्य योग्यं अनुरूपम्। शिवस्य पश्चात् अनुशिवम्। शक्तिमनतिक्रम्य यथाशक्ति। हरेः शब्दः प्रादुर्भूतः इतिहरि। पापस्याभावः अपापम्। चक्रेण युगपद्देहि सचक्रम्। यावन्तः श्लोकास्तावन्तोऽच्युतप्रणामाः यावच्छ्लोकम्।

पूर्व्वाह्णमिति—पूर्व्वाह्णस्य सदृशमित्यर्थः। कालस्य निषेधाच्च सहस्य सः। तृणेन सहेति—यदर्थं यद्गृहीतं तत्र तस्याशेषत्वं साकल्यम्। सतृणमत्ति तृणमपि न परित्यजतीत्यर्थः। ज्येष्ठमनुक्रम्येति—अनुक्रम (१) आनुपूर्व्व्याम्, अनुज्येष्ठं प्रविशति ज्येष्ठानुपूर्व्व्येण प्रविशतीत्यर्थः। मद्राणां (२) समृद्धिरिति—सुमद्रं वर्त्तते सुभिक्षं वर्त्तते, मद्राणां भिक्षाणां वाधिक्येन ऋद्धिः प्रवर्त्तते इत्यर्थः। यदा समृद्धेः प्राधान्यं तदैव वसः। यदा समृद्धेरप्राधान्यं तदा प्रादित्वात् य एव, यथा समृद्धाः मद्रा सुमद्रा इति, समृद्धा मद्राणां

(१) अनुक्रमणमत्र यौगपद्यं, तेन ज्येष्ठपरिहाराभावविशिष्ट-प्रवेशादिरिति विद्यानन्दः। "अनुक्रमे व्याप्ते अनुज्येष्ठमिति—ज्येष्ठस्य हीनो भूत्वा गच्छतीत्यर्थः। ज्येष्ठमनुक्रम्य इत्यत्र हीनार्थेन अनुना योगे द्वितीया, न तु कर्म्मणि, अन्यथा कारकत्वादेव समासे सिद्धे अनुक्रमस्य पृथग्ग्रहणं निष्फलं स्यात्। अस्याकर्म्मकोऽयं क्रमधातु"रिति दुर्गादास गङ्गाधरौ।

(२) देशभेदे तथानन्दे पुमान् मद्रः प्रकीर्त्तितः।
यदा मद्रा नदीभेदे स्त्रियां तत्रेति शासनम्॥
इति गङ्गाधरधृतकोषवचनम्।

विशेष्यमाणत्वात् । विष्णुं विष्णुं प्रतीति—यद्यप्यस्य नित्यसत्त्वात् वाक्याभावः, तथापि धिक्समयेत्यनेन वीप्सायां प्रतिना द्वीविधानानर्थक्यात् वाक्यस्थितिः । वीप्सार्थस्य तेनोक्तत्वान्न द्विः । अग्निग्रन्थपर्यन्तमधीते इति—यद्यप्यत्र साकल्यमस्ति, तथाप्यग्निग्रन्थपर्यन्तमधीते ततोऽन्यन्नाधीत इत्यस्यासाकल्यार्थं वचनम्, एवं सालोकमधीते, असकलेऽप्यध्ययने आलोकपर्यन्तं पठतीत्यर्थः । रूपस्य योग्यमिति—अनुरूपं ददाति, रूपस्य योग्यं ददातीत्यर्थः । शिवस्य पश्चादिति—अनुशिवं भक्ताः । एवमनुरथं पादाताः, रथानां पश्चादित्यर्थः । मेघदूते—"तदनु जलद श्रोष्यसि श्रोत्रपेय"-मिति तु प्रमादात् । अत्र त्विवर्जनमिति परे (१) । शक्तिमनतिक्रम्येति—यथाशक्ति ददाति, एवं यथाबलमधीते इत्यादि । हरेः शब्दस्य प्रादुर्भूतमिति—प्रादुर्भावः प्रकाशः, हरिशब्दो लोके प्रकाशते इत्यर्थः (२) । एवम् इतिपाणिनि उद्विक्रमादित्यमित्यपि (३) । अभावस्योदाहरणमाह अपापमिति । अभावः संसर्गाभावः (४) स

---

(१) अत्र सर्वनामशब्देन सह अव्ययीभावसमासो न भवतीति पाणिनीयानां मतमित्यर्थः । अतएव तदनु इत्यादौ नाव्ययीभावः ।

(२) स्वरूपपरेण षष्ठ्यन्तेन हरिशब्देन सह प्रकाशार्थस्य इतिशब्दस्य समास इति प्रौढमनोरमा तत्त्वबोधिनी च । शब्देति षष्ठ्यन्तात् हिमालयो नाम इत्यत्र, तथा दिलीप इति राजेन्दुरित्यादौ च न समासः, अर्थप्रकाशनार्थत्वात्—इति विद्यालङ्कार ।

(३) उत्शब्दोऽपि प्रकाशनार्थकः, तथाच मेदिनी—"उत् प्रकाशे विभावे च"त्यादि—इति विद्यालङ्कारः ।

(४) यद्यपि प्रागभावो ध्वंसोऽत्यन्ताभावश्च संसर्गाभावस्तथापि सामयिकात्यन्ताभाव एवात्र गृहीत इति विद्यालङ्कार ।

च प्रतियोगिनिरूपणाधीननिरूपक एव, (१) तेन अर्थाभाव (२) ऋद्ध्यभावप्रध्वंसाभावोपभोगाभावानां ग्रहणम्। अत्रार्थाभावो ह्युत्तरदार्थाभावः, यथा अपापं, मक्षिकाया अभावो निर्मक्षिकम् इत्यादि। ब्राह्मणो न भवतीत्यत्र प्रसज्यप्रतिषेधनञा ब्राह्मणत्वधर्मो निषिध्यते, गौरश्वो न भवतीत्यत्र अन्योन्याभावेनार्थान्तरं निषिध्यते, अतो नास्त्युभयत्रार्थाभावः, अर्थशब्दस्यात्र वस्तुपरत्वात्। ऋद्ध्यभावो यवनस्य दुर्यवनं, दुर्भिक्षमित्यत्र नोत्तरदार्थाभाव, किन्तु यवनादिसम्बन्धिन्या ऋद्धेरिति। अत्ययः शीतस्य अतिशीतम् (३) अत्ययो वसन्तस्यातिवसन्तमित्यादि। अत्ययोऽतिक्रमः, प्रध्वंसा-

---

(१) यद्यप्यभावस्य निरूपणत्वेन नास्ति भेदः, तथापि यस्यासावभाव स सम्बन्धी भिद्यते। तद्भेदादभावस्याप्युपकल्पितो भेद इति कातन्त्रटीका (२७१सू)।

(२) अर्थाभाव कश्चिद्देशे सर्व्वथैवाभावो वस्तूनां, न तुल्यवस्य पश्चादिति कातन्त्रटीका। अर्थविरोधी अभावः अर्थाभावः अत्यन्ताभाव एव, अन्योन्याभावस्य तु सर्व्वत्र प्रतियोगितावच्छेदकनैव निरोधादित्याशयेन अर्थपदमुपात्तम्। अयञ्च समास उत्तरपदार्थाभावद्योतकः नञ्नञ्साधारण्याव्ययेन भवति। नञ्तत्पुरुषस्तु नञैव अन्योन्याभावबोधकः सर्व्वत्र क्वचिदभावबोधकोऽपीत्यनयोर्विशेषः। अतएव निर्म्मक्षिकम् अपापमित्यादिवत् अनुपलम्भ इत्यादीनामभावबोधकत्वेऽपि न क्षतिः। वस्तुतो नाशपर्य्यायाव्ययस्य पृथग् ग्रहणात् प्रागभावनिवारणार्थं विद्यमानपदार्थप्रतियोगिताद्योतनार्थञ्चार्थपदग्रहणं, तेन प्रागभावाभिप्रायेण कपाले अघटमित्यादिर्न प्रयोग, न वा अपदार्थस्य शशशृङ्गादेरभावबोधनाय निःशशशृङ्गमित्यादि एषामप्रतीततयार्थत्वाभावेन तत्प्रतियोगिकाभावाप्रसिद्धेः इत्युक्तं सिद्धान्तकौमुदीटीकायां तारानाथेन।

(३) यद्यपि कस्यचिदतीतत्वे कस्यचिद्वर्त्तमानत्वेऽपि अतिशीतमिति भवति, तथापि शीत तत्प्रध्वंसेऽयं प्रयोग इति विद्यालङ्कारः। अतिशीतं शीतान्यतीतानि ध्वस्तानीत्यर्थं इति प्रयोगरत्नमाला।

भाव' (१) स च नात्यन्ताभावः किन्तु शीतादिप्रध्वंसः संसर्गाभाव एव (२)। यौवनस्य नायमुपभोगकालोऽतियौवनम् अतिकम्बलमित्यादि। गतोपभोगस्तु (३) विद्यमानस्यैव यौवनादेर्वर्त्तमानकाले उपभोगाभावः अतो नार्थाभावोऽव्ययमेति। चक्रेण युगपद्धेहीति—यौगपद्यम् एककालता, सचक्रं निधेहि, युगपच्चक्रं निधेहीत्यर्थः (४)। सहः सोऽकाले इति सहस्य सः। यौगपद्येष्विति त्वनिर्द्देशादन्येष्वर्थेष्वपि, तेनावधारणे गम्यमाने यावदिति अस्य नित्यं वस इत्यत आह यावन्त इत्यादि। अवधारणमियत्तापरिच्छेद, इयदेवेति निश्चय इत्यर्थः (५)। यावच्छ्लोकमच्युतप्रणामाः, (६) एव यावद्भोजनपात्रं ब्राह्मणानामन्त्र

---

(१) अतिक्रम इति—अतीतत्वमित्यर्थ इति विद्यालङ्कार।

(२) अर्थाभावस्तु सम्बन्धेन क्वचित्प्रदेशे वस्तुन संसर्गाभाव न तु वस्तुनः प्रध्वंस, अत अव्ययोऽत्र अर्थाभावाद्भिद्यते इति गोयीचन्द्र।

(३) अत्र तु उपभोगस्य सामयिकात्यन्ताभाव इत्यर्थ। एतच्च उपपद्यते यस्मिन्निति उपभोग' उपभोगवर्त्तमानकाल इत्यर्थं। गतश्चासावुपभोगश्चेति कर्म्मधारयः, उपभोगवर्त्तमानकालाभाव इत्यर्थ इति विद्यालङ्कार। सम्प्रति नोपभोगकाल, किन्तु गत आगमिष्यति वेति कालोपाधेर्ध्वंस प्रागभावो वेत्यर्थं। यद्वायमुपभोगकालादन्य एवत्यन्योन्याभाव इत्यर्थ इति प्रयोगरत्नमाला (८१८ पृ)।

(४) युगपच्छब्दस्याव्ययत्वेऽपि असमर्थत्वात् युगपच्चक्रमिति वाक्ये न समास, तेन चक्रं युगपन्निधेहि गमनेऽवधारणमित्यर्थं इति विद्यालङ्कार·। द्वे विष्णो यस्मिन् काले चक्रेण सह गदां धारय इत्यर्थं इति दुर्गादास।

(५) इयत्तया परिमाणेन वा न्यूनानतिरिक्तोऽवच्छेदनमित्यर्थं इति विद्यालङ्कार।

(६)। श्लोकानामियत्तया प्रणामानामियत्ता विवक्षिता इत्यर्थं इति दुर्गादास।

यस्य (१) यावद्दत्तं आनयस्व (२) इत्यादि। अवधारणे किं? यावत् दत्तं तावद्भुक्तं, कियद्दत्तं कियद्भुक्तमिति नावधारितमित्यर्थः(३)। एवमसादृश्यार्थे वर्त्तमानस्य यथेति व्यस्य वसस्तेन ये ये तथाभूताः यथातथमिति, ये ये वृद्धा यथावृद्धं ब्राह्मणास्तिष्ठन्ति। यथाशक्ति ददातीत्यत्रानुक्रमानतिक्रमयोः पूर्व्वेणैव इति। सादृश्ये तु यथावृद्धास्तथा युवानः (४)। इह गुणभूतसादृश्ये निषेधादन्यत्र स्यादेवेति ज्ञापितम्।

अव्ययस्य च प्रतिनाऽल्पत्वे। अल्पत्वे वर्त्तमानेन प्रतिना सह व्यस्याव्ययस्य च वो नित्यं स्यात्। स्वःप्रति सायंप्रति सूपप्रति शाकप्रति, स्वर्गादेः स्तोकमित्यर्थः (५)। अल्पत्वे किं? वृक्षं प्रति द्योतते विद्युत्, वृक्षं लक्ष्यीकृत्य विद्योतते इत्यर्थः।

एकद्वित्रिचतुरक्षशलाकानां परिणा द्यूतपराजये। द्यूतपराजये गम्यमाने परिणा सहैषां नित्यं वः स्यात्। एकेन परि एकपरि द्विपरि त्रिपरि चतुष्परि। एकादिशब्दैरक्ष एवाभिधीयते, द्यूतपराजय इत्यस्य सम्बन्धात्तथाहि एकेनाक्षेण हारितमित्यादिक्रमेणार्थः, तथाच पञ्चभिरक्षैः शलाकाभिर्वा पञ्चिका

---

(१) यावन्ति भोजनपात्राणि वर्त्तन्ते तावतो ब्राह्मणानित्यर्थः।

(२) यावन्तो घटाः पञ्च वा षड् वा वर्त्तन्ते तावदेवानय इति गोयीचन्द्रः।

(३) संख्यानियमः परिमाणनियमो वा न कृत इत्यर्थः इति विद्यालङ्कारः।

(४) वृद्धसदृशा युवान इत्यर्थः।

(५) न सूपप्रति दारिद्र्ये इति प्रयोगरत्नमाला। दारिद्र्ये सत्यपि सूपं नाश्नीयादित्यर्थः। एवम् अन्नम् शाकप्रति—इति तट्टीका।

नाम द्यूतं, तत्र यदि पञ्च उत्ताना: अवाञ्चो वा पतन्ति तदा पातयिता जयति, अन्यथापाते पातयिता हारयतीति। एवम् अक्षपरि, शलाकापरि—अक्षेण शलाकया वा परिहारितमित्यर्थः। इहाक्षशलाकयोरेकत्वे (१) वर्त्तमानयोरेवायं सः स्वभावात्, न हि स्वभावार्थौ निमित्तान्तरमपेक्षते इति।

अनोर्दैर्घ्यसमीपयोः। अनयोर्वर्त्तमानस्यानोः स्याद्यन्तेन सह वो नित्यं स्यात्। अनुयमुनं मथुरा, यमुनेव दीर्घेत्यर्थः। अनुवृक्षं नदी, वृक्षस्य समीपा इत्यर्थः। धर्म्मिवचनस्यानोरनेन सः, सामीप्यधर्म्मवाचिनस्तु पूर्व्वेणैव। यथा अनुवृक्षं, वृक्षस्य सामीप्यमित्यर्थः। अनयोः किं? वृक्षमनु विद्योतते विद्युत्, वृक्षं लक्ष्यीकृत्य इत्यर्थः।

नाम्नि नदीभिरन्यार्थे। नदीवाचिभिः शब्दैः सहान्यदर्थे वर्त्तमानस्य स्याद्यन्तस्य वो नित्यं स्यात् संज्ञायां विषये। उन्मत्त-गङ्गं, लोहितगङ्गं(२), शनैर्गङ्गं, तूष्णींगङ्गं—चत्वारि देशनामानि।

---

(१) मत द्वित्वबहुत्वयोरित्यर्थः। तथाच अक्षाभ्याम् अक्षैः शलाकाभ्यामित्यादि मोदाहरणंञ्च अनयोर्द्वित्वादिनिषेधादिति प्रयोगरत्नमाला (९०२ सू.) अक्षेण परिहारितमित्यर्थकथनेनैतत् सूचितं, अक्षादयः करणतृतीयान्ताः समस्यन्ते इति—इति विद्यालङ्कारः।

(२) अतिवेगवत्तया अनवरतं तीरभूमिभङ्गकारिणीति उन्मत्ता इव गङ्गा यस्मिन्, मृत्तिकादिलोहितयोगात् लोहिनी गङ्गा यस्मिन्निति विग्रह इति प्रयोगरत्नमालाटीका। एतत्तु अर्थकथनमात्रं मत वाक्यं, तथाच—"नित्यसमासत्वात् वाक्यमेषां न विद्यते" इति गोयीचन्द्रः।

नाम्नि किं ? शीघ्रा गङ्गा यस्मिन् शीघ्रगङ्गो देशः । अन्यार्थे किं ? कृष्णा चासौ वेणा चेति कृष्णवेणा (१) ।

तिष्ठद्ग्वाद्याः । तिष्ठद्ग्वाद्या वसंज्ञका निपात्यन्ते ।

तिष्ठद्ग्वादिषु तिष्ठद्गु वहद्गु चायतीगवम् ।
खले-संक्रियमाणाभ्यां लूयमानाच्च संस्कृतात् ।
लूनाद्यवबुषे पूत पूयमानात् यवस्तथा ।
आयतीपुण्यपापाच्चात् समा अथ समं समात् ।
भूमिः पदातिरित्येतौ सुनिर्दुरपरात् समम् ।
प्रदथं प्रमृगं प्राह्णमपसव्यं प्रदक्षिणम् ।
सम्प्रत्यसम्प्रत्येकान्तं तथापदिशमित्यपि ।
षट्त्रिंशत् कथिता श्रेयं शेषं शिष्टप्रयोगतः ॥

तिष्ठन्ति वहन्ति आयन्ति च गावो यस्मिन् काले स कालः तिष्ठद्गु वहद्गु आयतीगवञ्च (२) । खले यवा यस्मिन् काले स कालः खलेयवं, संक्रियमाणयवं लूयमानयवं संस्कृतयवं लूनयवं खलेबुषमित्यादि । पूता यवा यस्मिन् काले स कालः पूतयवं, पूयमानयवम् । आयत्याः समाः संवत्सरा आयतीसमम् । एवं पुण्यसमं

(१) वेणा नदीविशेष इति सिद्धान्तकौमुद्यामुपादिदर्शत् । तत्त्वबोधिन्यां तारानाथतर्कवाचस्पतिकृतसिद्धान्तकौमुदीटीकायाञ्च कृष्णवेणीति पाठो दृश्यते, काशिकायान्तु कृष्णवेण्णा इति । तर्कवागीशटीकायां, पयस हस्तलिखितेषु प्रादर्शपुस्तकेषु गुप्तप्रकाशिकानामिकायां प्रयोगरत्नमालाटीकायाञ्च (८१० पृ.) वेन्या इति पाठो दृश्यते । संक्षिप्तसारे तु वेण्या इति ।

(२) तिष्ठद्गु प्रदोषो रात्रिर्वा । वहद्गु प्रातःकालो दिवा पूर्वाह्णो वा । आयतीगवं प्रदोषः । खलं धान्यादिमर्दनस्थानं, खलेयवं वसन्तः । लूयमानयवं शिशिरः । पूतेयवं हेमन्तः—इति प्रयोगरत्नमाला तट्टीका च (८११ पृ.) ।

पायसमम् अयसमम्। समत्वं भूमेः समभूमि समभूमि। एवं समंपदाति समपदाति। पूर्व्वपदार्थप्राधान्य एव वसः, परपदार्थप्राधान्ये तु समभूमिः समपदातिरिति ष एव। समाः पदातयो यस्मिन् समपदातीति पारायणम्। समशब्दस्य वा सममादेशो निपातनात्, समंभूमि समंपदातीत्यन्ये। समार्थसममिति व्यस्य आभ्यां सह वस इति कश्चित्। शोभनत्वं समस्य सुषमं, निःषमं दुःषमं अपरसमम्। एवं प्रगतत्वं रथस्य प्ररथं, प्रमृगं प्राह्णमपसव्यं प्रदक्षिणमिति। परपदार्थप्राधान्यात्तु कुमार्य्योनित्यमिति ष एव। सम्प्रतिशब्दं पठित्वा असम्प्रतीति पठितं वसे सति साम्तराभावात्। एकत्वमन्तस्य एकान्तम्। दिशोर्मध्यमपदिशमिति। अस्याकृतिगणत्वात् अप्रदक्षिणमित्यादि(१)। इह यद्यत् कार्य्यं लक्षणेन न सिध्यति तत्तत् सर्व्वं निपातनाज्ज्ञेयम्। तिष्ठद्ग्वादीनां वादन्यः सो न स्यात्, यथा परमं तिष्ठद्गु इत्यादि। वसस्तु स्यादेव, तथाच—"पातिष्ठद्गु जपन् सन्ध्यां प्रक्रान्तामायतीगव"मिति भट्टिः (२)।

अभिप्रत्योराभिमुख्ये लक्षणदशा वा। आभिमुख्ये वर्त्तमान-

---

(१) अत्राप्रदक्षिणशब्दयोः पृथक्पाठस्त्वेतेषां समासान्तरनिषेधार्थं इति मुग्धबोधम्। अस्तु हस्तलिखितेषु व्याकरणपुस्तकेषु संक्षिप्तसारे च अप्रदक्षिणमित्यत्र अपरदक्षिणमिति, काशिकायां तारानाथकृतसिद्धान्तकौमुदीटीकायाञ्च अपरदक्षिणमिति पाठो दृश्यते।

(२) भट्टौ ४। १८, तत्र भरत —"तिष्ठन्ति स्थिरीभवन्ति गावो यस्मिन् स तिष्ठद्गु कालः, रात्रेः प्रथमनाडिका, तत्र हि विश्रान्ता गावः पश्चादुत्थाय दुह्यन्ते। आयन्ति गोष्ठं गावो यस्मिन् काले स आयतीगवः कालः अर्द्धास्तमितभास्करः, आयपालस्यैव नयानयनात्" इति।

योरभिप्रत्योर्लक्षणेऽर्थे विहिता या द्वी तदन्तेन सह वः स्याद्वा। अभ्यग्नि प्रत्यग्नि, पक्षे अभ्यग्निं प्रत्यग्निं शलभाः पतन्ति, अग्निं लक्ष्यीकृत्य शलभाः पतन्तीत्यर्थः। अत्राग्निर्लक्षणं, तेन पतङ्गानां पातो लक्ष्यते, तयोर्लक्ष्यलक्षणसम्बन्धो यथाऽभिप्रतिभ्यां द्योत्यते तथा शब्दशक्तिस्वाभाव्यादाभिमुख्यमपि द्योत्यते, अतएव अग्नेर-भिमुखमेव पतङ्गाः पतन्ति न पार्श्वे न पृष्ठत इत्यर्थः (१)। आभिमुख्ये किं ? गङ्गामभिवसति (२)। लक्षणद्वेरिति किं ? स्रुघ्नं प्रतिगच्छति, स्रुघ्नान्मथुरायाश्चलितो दिङ्मोहात् स्रुघ्नमेव निवर्त्तत इत्यर्थः। नात्र लक्षणे द्वी किन्तु ढ इति।

आङ्पर्य्यपवहिरञ्चां ध्या। एषां ध्यन्तेन सह वः स्याद्वा। आपाटलिपुत्रं परित्रिगर्त्तम् अपत्रिगर्त्तं (३) वहिर्ग्रामं प्राग्ग्रामं वृष्टो देवः। पक्षे आ पाटलिपुत्रात् परि त्रिगर्त्तेभ्य इत्यादि। वहिरादिसाहचर्य्यादाङादीनां योगे येष्वर्थेषु पी तेष्वर्थेषु (४) एवेह ग्रहणं, तेनापगतः शब्दात् अपशब्दः अपधर्म्मः अपचार इत्यादौ क्रान्तादौ निरादेः ष्या इति यः (५)। वहिरङ्गो गुण

(१) तथाच अग्निपार्श्वं शलभकर्तृकमग्न्यभिमुखं पतनमिति बोधः।

(२) अत्र अभिना लक्ष्यलक्षणसम्बन्धो द्योत्यते, न त्वाभिमुख्यमिति गोयीचन्द्र।

(३) अपपरी वर्जनार्थौ इति प्रयोगरत्नमाला। तेन त्रिगर्त्तान् वर्ज-यित्वा इत्यर्थः। त्रिगर्त्तशब्दो वाहीकसन्निहितदेशविशेषस्य संज्ञा।

(४) तेन अपपरि इत्येतयोर्वर्जनार्थे एव, आङ् इत्यस्य मर्यादाभिविध्यो-रेवेति बोध्यम्।

(५) एतेनैतत्प्रतिपादितं क्रान्ताद्यर्थव्यतिरिक्तोऽस्य विषय इति गोयीचन्द्र।

इत्यत्र त्वन्यदार्थप्राधान्यात् हः। वहिरङ्गं प्राग्ग्राम (१) इति तु विशेषणविशेष्यत्वेन यसात्।

पारे मध्ये षा। पारे मध्ये इत्येतयोः षन्तेन सह वः स्याद्वा। पारेगङ्गं, मध्येकाशि। सूत्रनिर्देशात् स्या अलुक्। पक्षे पारे गङ्गायाः, मध्ये काश्याः। गङ्गापारं, काशीमध्यम् इति तु षीपात्। एके तु अग्रेऽन्तरोर्ग्रहणं कृत्वा अग्रे रामस्य अग्रेरामम्, अन्तःप्रयागस्य अन्तःप्रयागमित्यप्याहुः।

संख्याया विद्याजन्मैकयोगैः। विद्यया जन्मना वा एको योगो यत्र, तद्वाचिभिः सह संख्यावाचिनो वः स्याद्वा। द्वौ मुनी व्याकरणस्य, द्विमुनि व्याकरणस्य, विद्यया पाणिनिकात्यायनयोर्मुन्योरेको योगः (२)। पूर्वदार्थप्राधान्य एव वसस्तेन द्विमुनिरागम इत्यत्रान्यदार्थप्राधान्यात् हः। एके तु वा त्वन्यार्थे इति सूत्रं विधाय द्विमुनि शब्दानुशिष्टेः, द्विमुनिरागम इत्याहुः (३)। द्वौ गार्ग्यौ लोकानां द्विगार्ग्यं दशभारद्वाजं (४) द्वयोर्गार्ग्ययोर्दशानां भारद्वाजानाञ्च जन्मनैकयोगः। एके तु अनेकसंख्याया एव वसं विधाय एकमुनिर्भाष्यस्येत्यादि प्रत्युदाहरन्ति।

समाहारे नदीभिश्च। समाहारेऽर्थे नदीवाचिभिः सह

---

(१) बहिश्च तदङ्गञ्चेति, प्राक् चासौ ग्रामश्चेति वाक्यम्।

(२) जनकतासम्बन्धे इत्यर्थः, उभयोरेव व्याकरणजनकत्वात् इति विद्यासागरः।

(३) शब्दानुशिष्टेर्व्याकरणस्येत्यर्थः।

(४) भरद्वाजवंश्योद्भवानां दशसंख्येत्यर्थः।

३७९। शरद्विपाड़यश्चेतोमनोविड़ुपानद्धिमवद्दिग्विनडुद्दिक् चतुर्यत्तदोऽः।

(शरद्—तदः ५।, अः १।)।

एभ्यः अः स्यात् वे। उपशरदम्।

---

संख्यावाचिनो वः स्यात्। द्वयोर्गङ्गयोः समाहारः द्विगङ्गं, सप्तगोदावरम् (१)। समाहारे किम्? एकनदी।

३७९। शरत्। शरच्च विपाट् च अयश्च चेतश्च मनश्च विट् च उपानच्च हिमवांश्च विच्च दीश्च अनड्वांश्च दिक् च चत्वारश्च यश्च तश्च तत् तस्मात्। उपशरदमिति—शरदः समीपमिति वाक्यम्। एवम् उपविपाशम् उपायसम् उपचेतसं प्रतिमनसं प्रतिविशम् उपोपानहम् उपहिमवतम् उपविदं प्रतिदिवं प्रत्यनडुहं प्रतिदिशम् उपचतुरम् उपयदम् उपतदम् इति। वे किं? चतसृणां दिशां समाहारः चतुर्दिक्, तथाच—"चतुर्दिगीशानवमन्य- मानिनी"ति कालिदासः। अन्ये तु पथि-दृश्-उपसत् कियदन्तः शरदादौ पठन्ति, अयश्चेतोमनोविड्दिवस्तु नाहुः।

---

(१) यद्यपि गोदावरी एकैव, तथापि सप्तपदसमभिव्याहारात् तत्तद्देव तीर्थावगाहनमन्तरेण सप्तनद्यो भण्यन्ते, तीर्थभेदेनाविशेषात्, तेन गङ्गा यमुना गोदावरी सरस्वती नर्मदा सिन्धुः कावेरी च इत्यर्थः। अव्ययीभावो द्विगोर्बाधकः विशेषत्वात्। ननु पञ्चनदमित्यत्र द्विगुसमासकरणे कोदोष? उच्यते—समाहारद्विगौ क्लीबत्वात् सर्वोरेव समास- स्यात्, अव्ययीभावे तु पञ्चमीभिन्नसर्वविभक्तौ दृश्यते इति। अतएव सप्तगोदावरं स्नाता इति सप्तम्यन्तादिप्रयोगाभाव एव दोष इत्यर्थः—इति प्रबोधप्रकाशटीका (८०९)

३८० । जराया जरस् च ।

(जरायाः ६।, जरस् ।१।, च ।१।) ।

उपजरसम् ।

३८१ । सरजसोपशुने । (सरजस-उपशुने १॥) ।

निपात्ये ।

३८२ । सम्परःप्रत्यनुभ्योऽक्ष्णः ।

(सम्-परस्-प्रति-अनुभ्यः ५।।।, अक्ष्णः ५।) ।

समक्षम् ।

---

३८० । जरायाः अः स्याद्दे तस्मिन् जरसादेशश्च । उपजरसमिति—जरायाः समीपमिति वाक्यम् ।

३८१ । सर । सरजसञ्च उपशुनञ्च ते । रजसा सह सकलमत्ति सरजसं, साकल्ये षः, सहः सोऽकाले इति सहस्य सः । हे तु सरजसं पद्ममित्यसाधु । सरजसतामवनेरपां निपातः इति किराते चिन्त्यम् । शुनः समीपम् उपशुनं, श्वयुवमघोनामिति ते निषेधेऽपि वस्योत्वं निपातनात् । सहोपाभ्यामेव नियमात् उपरजः प्रतिष्ठ इत्यत्र अन इत्यनेन सूत्रेण अत्वोऽपि न स्यात् ।

३८२ । सम्परः । सञ्च परञ्च प्रतिश्च अनुश्च ते तेभ्यः । एभ्यः परादक्ष्णः अः स्याद्दे । समक्षमिति—अक्ष्णोः समीपमिति वाक्यम् । पर इति कृतसान्ताद्यशब्दे परे मनीषादित्वात् परिग्रम्दसा-

३८३ । अनः । (अनः ५।) ।

अनन्तात् अः स्यात् वे । अध्यात्मम् ।

३८४ । क्लीवाद्वा । (क्लीवात् ५।, वा ।१।) ।

उपचर्म्मं उपचर्म्म ।

---

दिष्टस्य परस् इत्यस्य ग्रहणम् । अक्ष्णः परि परोक्षम्, आङ् पर्य्यपबहिरञ्चामित्यादिना वः (१) । अन्ये तु अक्षि अक्षि परि परोक्षमिति वीप्सायां व इत्याहुः । एके तु अक्ष्णोः परः परोक्षं, पारस्करादित्वात् सुम् इत्याहुः । अक्षिणी प्रति प्रत्यक्षम्, अभिप्रत्योराभिमुख्ये इत्यादिना वः । वीप्सायामित्यन्यः । प्रत्यक्षो घट इति तु इन्द्रियार्थेनाक्षशब्देन प्रादिसात् । अक्ष्णोः समीपमन्वक्षं, सामीप्ये वः ।

३८३ । अनः । अध्यात्ममिति—आत्मानमात्मनि वा अधिकृत्य अध्यात्मं, कार्य्ये वः । अत्वे न्वोर्म्मीपीताविति नलोपे यथोरित्यादिना अलोपः ।

३८४ । क्लीवात् । क्लीवमिन्नान्तमस्मादः स्याद्वा वे । उपचर्म्ममित्यादि—चर्म्मणः समीपमिति वाक्यं, सामीप्ये वः । एव प्रत्यर्थं प्रत्यर्थः, वीप्सायां वः ।

---

(१) अक्ष्णः परमिति विग्रहे * * * नित्यसमासः परश्चोकारादेशः, परोक्षम् । परोक्षा क्रियेत्यादि तु अर्थे अप्रत्यक्ष—इति नित्यसमासो [illegible] । अक्ष्णः परमिति—[illegible] इति [illegible] ।

३८५ । झप्नदीपौर्णमास्याग्रहायणीगिरे र्व्वा ।

। (झप्—गिरेः ५।, वा ।१।).।

उपसमिधं उपसमित्, उपनदं उपनदि ।

इति षः ।

---

## षट् समासाः ।

३८६ । पथ्यप्पुरः से ।

(पथिन्-अप्-पुरः ५।, से ७) ।

एभ्यः अः स्यात् से सति । सखिपथौ, रम्यपथो देशः, महापथः, दक्षिणापथः, चतुष्पथं, उपपथं, विमलापं सरः, विष्णुपुरम् ।

---

३८५ । झप् । झप् प्रत्याहारः । झप् च नदी च पौर्णमासी च आग्रहायणी च गिरिश्च तत्तस्मात् । झबन्तान्नद्यादेश्च षः स्याद्वा वे । पुनर्व्वाग्रहणं परत्र निवृत्त्यर्थम् । उपसमिधमित्यादि—समिधः समीपमिति वाक्यम् । एवम् उपदृषदम् उपतड़ितम्, पक्षे उपसमित् इत्यादि । उपनदमित्यादि—नद्यादीनां स्वरूपस्य ग्रहणं, नद्याः समीपमिति वाक्यम् । एवम् उपपौर्णमासम् उपपौर्णमासि उपाग्रहायणम् उपाग्रहायणि उपगिरम् उपगिरि, "अनुगिरमृतुभिर्वितायमानामिति माघः (१) । इत्यव्ययीभावः ।

३८६ । पथ्यप् । पन्थाश्च आपश्च पूश्च तत् तस्मात् । स

---

(१) शिशुपालवधे ० । ।, गिरौ ऋतुभिर्वितन्यमानामित्यर्थः ।

३८७। द्व्यन्तर्गेयोऽपोऽनात्।

(द्वि-अन्तर्-गेः ५।, ई ।१।, अः १।, अपः ६।, अनात् ५।)।

एभ्योऽनवर्णान्तेभ्योऽपोऽकार ईः स्यात्।

द्वीपं अन्तरीपं समीपम्। अनात् किं ? प्रापम्।

३८८। समापानूपौ। (समाप-अनूपौ १॥)।

निपात्यौ। समापो देवयजनं, अनूपो देशः।

---

इति सामान्यार्थम्, अतः षट्सूदाहरति सखिपथावित्यादि। सखा च पन्थाश्च तौ, रम्यः पन्था यत्र, महांश्चासौ पन्थाश्चेति, दक्षिणस्यां पन्था इत्यर्थे दक्षिणोत्तरादाहौ इति स्या आकारादेशः। चतुर्णां पथां समाहारः, पथः समीपे, विमला आपो यस्मिन्। विष्णुपुरमिति—विष्णोः पूरिति वाक्यम्। यद्यपि अदन्तः पुर-शब्दोऽस्ति तथापि पुर्शब्देनानिष्टनिवारणार्थमिदम्।

३८७। द्व्यन्त। द्वौ च अन्तश्च गिश्च तत् तस्मात्, न अः अनस्तस्मात्, ई इति लुप्तप्रोक्तं दम्। द्विशब्दान्तःशब्दौ अनदन्तावेव। अनवर्णान्तेभ्य इति गेर्विशेषणम्। एभ्य इति—द्विशब्दा-दन्तःशब्दादनवर्णान्ताद्गेरित्यर्थः। द्वीपमित्यादि—द्विर्गता आपो यत्र इति वाक्यम्। एवम् अन्तर्गता आपो यत्र, सम्यगापो यत्रेति। एषां रूढशब्दत्वादेतद्व्युत्पत्तिमात्रम्। एवमन्वीपं प्रतीपमित्यादि। प्रापमिति—प्रगता आपो यत्र इति वाक्यम्। एवं परापमिति।

३८८। समा। निपातौ ह्यर्थविशेषे अत आह समापो देवयजनमित्यादि। समीचीना आपो यत्र, अनुगता आपो यत्रेति

३८९। सम् तुम् मनः-कामे, ऽवश्यं स्ये, ऽन्त्यलोपं, सम्-मांसौ तु हित-तते पाक-पचने वा ।

(सम् तुम् ।१॥, मनः-कामे ७।, अवश्यं ।१।, स्ये ७।, अन्त्यलोपं २।, सम् मांसौ १॥, तु ।१।, हित-तते ७, पाक-पचने ७।, वा ।१।) ।

सम् तुम् च मनः कामयोः, अवश्यं स्ये, अन्त्यलोपं याति ; सम् हित-ततयोः, मांसः पाक पचनयो र्वा ।

समनाः सकामः, रन्तुमनाः रन्तुकामः, अवश्यसेव्यः, सहितः संहितः, सततः सन्ततः, मांसपाकः मांसपाकः मांसपचनं मांस-पचनम् ।

---

वाक्यम् । अन्यत्र समोपमन्वीपमिति । अन्ये तु समाङ् पूर्व्वादपः समापमिति साधयन्ति ।

३८८। सम्। सम् तुम् इति लुप्तप्रोथं, (१) सम् च तुम् च तौ, सौत्रत्वादीलुक् । मनश्च कामश्च तत्तस्मिन् । अन्त्यस्य लोपः अन्त्यलोपस्तम् । सम् च मांसश्च तौ । हितश्च ततश्च तत्तस्मिन् । पाकश्च पचनश्च तत्तस्मिन् । स इत्यनुवर्त्तते । स्ये तव्यादौ । हित-तते मांसः पाक-पचने इति पदद्वयकरणात् सम्मांसा-वित्यनेन यथाक्रमं दर्शयति सम् हित-ततयोर्मांसः पाकपचन-योरिति । सकाम इत्यादि—सम्यक् कामो यस्य, सम्यङ् मनो

---

(१) सम् इति तुम् इति च लुप्तप्रथमैकवचनं मनःकामाभ्यां यथासंख्य-निरासार्थमिति दुर्गादास कार्त्तिकेय-मह्लाघरा- ।

३९४। अक्ष्णोऽचक्षुषि।

( अक्ष्णः ५।, अचक्षुषि ७।)।

गवामक्षीव गवाक्षं। चक्षुषि तु विप्राक्षि।

३९५। ब्रह्महस्तिराजपल्यात् (१) वर्च्चसः।

(ब्रह्म—पल्यात् ५।, वर्च्चसः ५।)।

ब्रह्मवर्च्चसं हस्तिवर्च्चसं राजवर्च्चसं पल्यवर्च्चसम्।

---

३९४। अक्ष्णो। अनेचार्थादक्ष्णः षः स्यात् से। गवामक्षीव इति (२)—गावो जलानि तेषामक्षीव गवाक्षं पद्मादि, वातायने रूढ़स्तु पुंलिङ्गः (३)। एवं पुष्करमक्षीव पुष्कराक्षं, लवणमक्षीव लवणाक्षं, सर्व्वत्र उपमेयस्य व्याघ्राद्यैरिति यसः। विप्राक्षः पद्माक्ष इति तु हसात्। विप्राक्षीति—विप्रस्य अक्षीति षीपात्।

३९५। ब्रह्म। ब्रह्मा च हस्ती च राजा च पल्यश्च तस्मात्। एभ्यः परात् वर्च्चसः षः स्यात् से। ब्रह्मवर्च्चसमिति—ब्रह्मणो वर्च्च इति वाक्यम्। एवं हस्तिवर्च्चसं राजवर्च्चसं पल्यवर्च्च

---

(१) "अत्र पल्येत्यपपाठः। भाष्ये काशिकायां कौमुद्याञ्च पल्येत्येव पठितत्वात्। कौमुदीटीकायां तत्त्वबोधिन्यां वर्च्चं भासमर्हतीति पल्यो भावबोधीति व्याख्यातत्वाच्च। रामतर्कवागीशेनापि पल्येत्येव पठितं व्याख्यातञ्च" इति वङ्गमुग्धबोधम्। संक्षिप्तसारेऽपि पल्येत्येव पाठः। कातन्त्रे तु पल्येत्येव (८८६सू)।

(२) सादृश्यविशिष्टे अक्षण्वाच्यप्रयोजनार्थमेव इत्यमस्य, न तु समासान्तत्वं तस्य—इति गङ्गाधरः।

(३) गावः किरणाः। अक्षिवत् रन्ध्रभावो। गवाक्षस्य—इति तत्त्वबोधिनी।

३८६ । समवान्धात् तमसः ।

(सम्-अव-अन्धात् ५।, तमसः ५।) ।

सन्तमसम् ।

३८७ । श्वोवसीयस-श्वःश्रेयस-निःश्रेयसम् ।

(श्वोवसीयस—निःश्रेयसम् १।) ।

एते निपात्याः ।

---

समिति । वर्चस्तेजस्तथाच—"तेजःपुरीषयोर्व्वर्च्चं" इत्यमरः । "पलमुन्मानमांसयो"रिति रुद्रः । पलमुन्मानमर्हतीति पल्यम्, उन्मानप्रकारेण रक्ष्यं द्रव्यमित्यर्थः । सर्व्वस्वे तु पलालरज्ज्वा वेष्टयित्वा व्रीहेरवस्थापनं पल्यमित्युक्तम् । यत्र पलालरज्ज्वा व्रीहिं वेष्टयित्वास्थापयन्ति तत् पल्यमिति धातुपारायणम् ।

३८६ । सम । एभ्यः परात् तमसः अः स्यात् से । सन्तमसमिति—सन्ततं व्याप्तं तम इति प्रादिसः । एवम् अवहीनं तमः अवतमसम् । अन्धयतीति अन्धम्, अन्धस्य इक्षये—अस्मात् पचादित्वादन्, अन्धञ्च तत् तमश्चेति अन्धतमसमिति यः (१) ।

३८७ । श्वो । निपातो ह्यर्थविशेषे, तेन श्वोनिभ्यां श्रेयसः श्वसो वसीयश्च शुभे वाच्ये यसे अदन्ता निपात्यन्ते । वसुमत्-शब्दादीयस्, लुङ्महद्बहिनामिति मतोर्लुक्, ओमंश्चेति डित्त्वादुकार-लोपे वसीयःशब्दः शक्त्या श्रेय आह । श्वोऽनागतेऽह्नि वसीयः

---

(१) यत् तम॰ चार्ध्यं करोति तदुच्यते । * * * अदन्त तमसशब्देन सन्तम-सादिसिद्धौ सचक्षमिदं सन्तम इत्यादिरूपनिवृत्त्यर्थम्—इति गोयीचन्द्र॰ (२२।सू॰) । ध्वान्ते गाढेऽन्धतमसं क्षीणेऽवतमसन्तम । विष्वक् सन्तमसम्—इत्यमरः ।

३९० । धुरोऽनक्षस्याः ।

(धुरः ५।, अनक्षस्य ६।, अः १।) ।

राजधुरा । अक्षस्य तु अक्षधूः ।

---

यस्य, रन्तुं मनो यस्य, रन्तुं कामो यस्य इत्यादि वाक्यम् । अवश्य-सेव्य इति—अवश्यं शब्दस्य मयूरव्यंसकादित्वात् स्यान्तेन सह वा यसः । असे तु अवश्यं सेव्य इति । तथाच भट्टवार्त्तिके—"सम्ब-न्धानुभवोऽवश्यमेषणीयश्च लिङ्गिन" इति । सहित इत्यादि—सम्यक् हितं प्राप्तं येन इति वाक्यम् । सततमित्यादि—सम्यक् ततमिति प्रादिसः (१) । वाशब्दस्य व्यवस्थावाचित्वात् सातत्य-मित्यत्र नित्यम् । मांसपाक (२) इत्यादि—मांसस्य पाकः, मांसस्य पचनम् इति वाक्यम् । समृमांसौ त्विति—तुशब्दो भिन्नक्रमार्थ-स्तेन वाशब्दस्य पूर्व्वोक्तैस्त्रिभिर्न सम्बन्धः । अवश्यं गिप्रादुरादि-व्यवधानेऽपि (३) । अवश्यप्रसेव्यः अवश्यप्रादुःसेव्यः अवश्याङ्गीकर-णीय इत्यादि ।

३९० । धुरो । धुरः अः स्यात् से, न तु अक्षसम्बन्धिन्याः । राजधुरेति—राज्ञो धूरिति वाक्यं, स्त्रीत्वादाप् । अक्षधूरिति—अक्षस्य धूरिति वाक्यम् । अक्षो रथावयवचक्रसम्बन्धिकाष्ठवि-शेषस्तस्य धूर्भारः । एवं दृढधूरक्ष इत्यादि ।

---

(१) अत्रापि सम्यक् ततमव्येति अक्रमोहरिरिति दुर्गादासवार्त्तिकेद-गङ्गाधरः ।

(२) मांसपाक इत्यत्र अकारलोपस्य स्थानिवत्त्वात् विसर्गं इति दुर्गादासः ।

(३) अन्यमोर्थं यातीति येव ।

३९१ । ऋचः । (ऋचः ५।) ।

ऋचः परः अः स्यात् से । अर्द्धर्चम् ।

३९२ । नञ्बह्वोर्माणवक-चरणे ।

( नञ्-बह्वोः ५।, माणवक-चरणे ७।) ।

अनृचो माणवकः, बह्वृचः चरणः । अन्यत्र अनृक् साम, बह्वृक् सूक्तम् ।

३९३ । प्रत्यन्ववात् सामलोम्नः ।

( प्रति-अनु-अवात् ५।, साम लोम्नः ५।) ।

प्रतिसामं प्रतिलोमम् ।

---

३९१ । ऋच. । अर्द्धर्चमिति—अर्द्धम् ऋच इति वाक्यम् । सप्त ऋचो यस्मिन् सप्तर्चो मन्त्रः ।

३९२ । नञ् । नञ् च बहुश्च तत्तस्मात्, पुंस्त्वं सौत्रत्वात् । माणवकश्च चरणश्च तत्तस्मिन् । नञबहुभ्या परस्या ऋचः अः स्यात् क्रमात् माणवकचरणयोर्वाच्ययोः (१) । अनृक् सामेति (२) —अक्तसान्तत्वात् वा के अनृकं बह्वृकमित्यपि ।

३९३ । प्रत्य । प्रतिश्च अनुश्च अवश्च तत्तस्मात् । एभ्यः पराभ्यामाभ्याम. स्यात् से । प्रतिसाममिति—प्रतिगत साम इति प्रादिसः, प्रतिगतं साम यस्येति वा ह., साम साम प्रति इति वीप्साया वा वः । एवं प्रतिलोममिति । एवम् अनुसामम् अनुलोमम् अवसामम् अवलोमम् ।

---

(१) माणवको बटु, चरण वेदशाखा । (२) साम सूक्तञ्च वेदांशविशेषौ ।

३६८ । तमान्ववाद्रहसः ।

(तम-अनु-अवात् ५।, रहसः ५।) ।

तमरहसम् ।

३६६ । प्रत्युरसानुगवे । (प्रत्युरस-अनुगवे १॥) ।

एते निपात्ये ।

---

श्वोवसीयसम् (१) । एवं प्रशस्यशब्दादीयसः श्रेयः, श्वःश्रेयसं निःश्रेयसम् (२) उभयत्र मयूरव्यंसकादित्वात् सः । यद्यपि श्वः-शब्दोऽनागतदिनार्थः वसीयःश्रेयशब्दौ श्रेयोऽर्थौ तथाप्युज्झितावयवार्थेन समुदायेन शुभमाह निपातनात् । निश्चितं श्रेयो निःश्रेयसमिति प्रादिसः ।

३८८ । तमा । एभ्यः परात् रहसः अः स्यात् से । तमरहसमिति—तमसिव तमं, तमच्च तत् रहश्चेति वाक्यम् । अकर्थ्यं यद्भवेत् वाक्यं तत् तमरहसं विदुः इति (३) । एवम् अनुगतं रहः अनुरहसम् । अवकलितं रहः अवरहसमिति प्रादिसः (४) ।

३८८ । प्रत्यु । उरसि प्रतिवर्त्तते प्रत्युरसं, (५) स्यर्थे अः ।

---

(१) श्वोवसीयसम् कल्याणमित्यर्थ इति कातन्त्रे । १८७ पृ. । मङ्गले श्वोवसीयम् मतम् ।

(२) श्वःश्रेयसं कल्याणम् । निःश्रेयसं निश्चितमिति कातन्त्रे ( १८८ पृ ) ।

(३) यथा—"परेषामविगम्यं हि यद्गुह्यं वक्तिसत्वरम् ।
तमश्च तद्रहश्चेति तमोरहसं विदुः ॥" इति प्रोद्धमनोरमा ।

(४) अवकीर्णं रहः इति भाष्यकाराः, अथवा अवकीर्णं निक्षिप्तं रहोऽस्मिन्निति बहुव्रीहिः —इति गोयीचन्द्रः । तत्रत्याभिधानमध्येयमेव । अवतप्तं रहः इति दुर्गादास-वाचस्पती ।

(५) प्रत्युरसं कोष इति कातन्त्रे । १८० पृ० ।

४०० । **गोरध्वनः ।** (गोः ५।, अध्वनः ५।) ।

प्राध्वो रथः ।

४०१ । **पाण्डूदक्कृष्टात् भूमेः ।**

पाण्डु-उदक्-कृष्टात् ५।, भूमेः ५।) ।

पाण्डुभूमो देशः ।

---

गवामनुदीर्घम् अनुगवं शकटम्(१) अनोर्दैर्घ्यसामीप्ययोरित्यादिना वः । अन्यत्र उरः उरः प्रति प्रत्युरः, वीप्सायां वः । गवां पश्चात् अनुगु, पश्चादर्थे वः ।

४०० । गोः परादध्वनः अः स्यात् से । प्राध्व इति—प्रगतोऽध्वानमिति वाक्यं, कुप्रादयोर्नित्यमिति सः । प्रगतोऽध्वा येन इति वा हः ।

४०१ । पाण्डु । एभ्यः परस्या भूमेरः स्यात् से । पाण्डुभूम इति—पाण्डुर्भूमिर्यस्मिन् देशे इति वाक्यम् । एवं पाण्डुश्चासौ भूमिश्चेति पाण्डुभूमा । उदीची भूमिरस्यां नगर्याम्, उदीची चासौ भूमिश्चेति वा उदग्भूमा । कृष्टा भूमिर्यस्यां नगर्यां कृष्टा चासौ भूमिश्चेति वा कृष्टभूमेति । कृष्टस्थाने कृष्ण इति वदन्ति केचित् (२) ।

---

(१) गौरिव शकटमपि दीर्घमित्यर्थ इति गोयीचन्द्रः ।

(२) पाणिनीयवार्त्तिके काशिकायां संक्षिप्तसारे शब्दकल्पद्रुमे च कृष्ण इति पाठो दृश्यते । तथाच—

कृष्णोदक्पाण्डुपूर्वाया भूमेरच् प्रत्ययः स्मृतः ।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि ॥ इति कारिका ।

चान्द्रे तु कृष्टेति पाठ । ३८१ ११ ।

४०२। सङ्ख्याया नदीगोदावरीभ्याञ्च।

(सङ्ख्यायाः ५।, नदी-गोदावरीभ्याम् ५॥, च ।१।)।

पञ्चनदं सप्तगोदावरं, द्विभूमः प्रासादः।

४०३। निसः शतो डः।

( निसः ५।, शतः ५।, डः १।) ॥

निस्त्रिंशः निश्चत्वारिंशः।

---

४०२। संख्याया। संख्यायाः पराभ्यां नदीगोदावरीभ्यां भूमेश्च अः स्यात् से। पञ्चनदमित्यादि—पञ्चानां नदीनां समाहारः पञ्चनदं, सप्तानां गोदावरीणां समाहारः सप्तगोदावरम्। चकारात् द्वे भूमी यत्रेति।

४०३। निसः। निसः परात् शदन्ताड्डः स्यात् से। निस्त्रिंश इति—निर्गता त्रिंशत इति वाक्यं (१), क्रान्तादौ निरादिः प्या इति पः। अस्य प एव विषय इति परे। एके तु सामान्य एवेत्याहुः। एवं निश्चत्वारिंशः निष्पञ्चाशः। शत इति किं? निःषष्टिः निःसप्ततिः इत्यादि।

गोष्टश्वाद्या। गोष्टश्वाद्या निपात्यन्ते। गोष्ठे श्वेव गोष्ठश्वः (२) पुरुषस्यायुः पुरुषायुषं, पौषः (३)। द्वे आयुषी समाहृते द्व्यायुषं,

(१) निर्गतानि त्रिंशतो निस्त्रिंशानि वर्षाणि चैत्रस्य. निर्गतस्त्रिंशतोऽङ्गुलिभ्यो निस्त्रिंशः खड्ग इति सिद्धान्तकौमुदी।

(२) एतेन समासान्तप्रत्यय पर्वेति नियमो दर्शितस्तेन षष्ठीतत्पुरुषे गोष्ठश्वा इत्येव इति तत्त्वबोधिनी।

(३) पुंसि न भवति, पुरुषस्य आयुष पुरुषायुषो इति काशिका (५।४।७७) समासान्ते न भवतीति गोयीचन्द्र (२०६ सू.)।

## ४०४। सूत्सुरभिपूते गन्धादिर्वातूपमानात्।

( सु-उत्-सुरभि-पूतेः ५।, गन्धात् ५।, इः १।, वा।१।, तु।१।, उपमानात् ५।)।

सुगन्धिः, पद्मगन्धिः पद्मगन्धः।

---

त्रीणि आयूंषि समाहृतानि त्र्यायुषं, समाहारे गः (१)। द्विस्तावा त्रिस्तावा वेदिः, प्रकृते यज्ञे यावती वेदिः करणीयेति कथिता ततो द्विगुणा त्रिगुणा वा अन्यस्मिन् यज्ञे इत्यर्थः। क्रियया सह सामानाधिकरण्यात् द्वित्रिशब्दात् सुच्, तयोस्तावतीशब्देन मयूरव्यंसकादित्वात् सः (२)। एषां विशेषार्थविशेषयोर्निपातनात् गोष्ठस्य श्वा गोष्ठश्वा, पुरुषस्य आयुश्च पुरुषायुषी, द्वयोस्त्रयाणां वा आयुः द्व्यायुस्त्र्यायुर्द्विस्तावती रज्जुरित्यत्र न स्यात्।

४०४। सूत्। सुश्च उच्च सुरभिश्च पूतिश्च तत्तस्मात्। एभ्यः पराद्गन्धात् इः स्यादुपमानात्तु वा। सुगन्धिरिति—शोभनो गन्धोऽस्येति वाक्यम्। एवम् उद्गतो गन्धोऽस्य उद्गन्धिः, सुरभिर्गन्धोऽस्य सुरभिगन्धिः, पूतिर्गन्धोऽस्य पूतिगन्धिः। यद्यपि सामान्येनोक्तं तथापि इ एवास्य विषयः। अत्र यदा समवायसम्बन्धेन (३)

---

(१) व्यद्विगौ तु द्वयोरायुः द्व्यायु—इति गोयीचन्द्रः। १८२ पृ)।

(२) तावतीशब्देन तु यावत्यपेक्षेण द्रव्यवृत्तिना संख्याशब्दस्य सामानाधिकरण्याभावात् विशेषणसमासो न भवतीत्यत आह—मयूरव्यंसकादित्वादिति—इति गोयीचन्द्रः।

(३) नतु संयोगसम्बन्धेन इत्यर्थः। अतएव घटगन्धेन गन्धसंयोग स्यादिति कार्त्तिकेयः। "गन्धस्येत्वे तदेकान्तग्रहणं कर्त्तव्यम्" इति पाणिनीयवार्त्तिकम्

४०५। नार्चायां स्वतेः सख्यादेरः ।

(न ।१।, अर्चायां ७।, सु-अतेः ५।, सख्यादेः ५।, अः १।)।

स्वतिभ्यां परात् सख्यादेरो न स्यात् पूजायाम् ।

शोभनो राजा सुराजा, अतिशयेन राजा अतिराजा ।

अर्चायां किं ? गामतिक्रान्तः अतिगवः ।

---

गन्धो वर्त्तते तदेकारस्तथाच—"आघ्रायि वान् गन्धवहः सुगन्ध" इति भट्टिः । कस्तूरिकामृगविमर्द्दसुगन्धिरिति माघे उपमानविवक्षयेति । पद्मगन्धिरिति—पद्मगन्ध इव गन्धो यस्येति वाक्यम् । एभ्यः किं ? दुर्गन्धः ।

भृतित्यादेर्मासादिकः । भृतिर्वेतनं, तत्र विहितो यस्त्यस्तदन्तादेर्मासादिकः स्यात् से । पञ्चास्य भृतय इत्यर्थे कः, पञ्चको मासोऽस्य पञ्चकमासिकः । एवं दशकमासिक इत्यादि । अस्यापि ह एव विषयः ।

४०५। नार्चायाम् । सुश्च अतिश्च तत्तस्मात् । सखा आदिर्यस्य स तस्मात् । सख्यादेरिति—सख्यह्नोरात्र इत्याद्यारभ्य (८) सूत्रे येभ्योऽकारो विहित स्तेभ्यः पूजार्थस्वतिभ्यां परेभ्यो न अः स्यात् । सुराजा, अतिराजा—कुप्राद्योर्नित्यमिति यः । सख्यादेः किं ? शोभनं सक्थि यस्य सुसक्थः, अत्यचो विप्रः । स्वतेः किं ? परमराजः । अन्ये तु पूजार्थस्वतिभ्यां परस्याः संख्याया डोऽपि न स्यात् ; सुदशा अतिदशा ब्राह्मण इत्याहुः ।

---

(८) गेहधम इति पर्यन्तेषु—इति दुर्गादास गङ्गाधरौ ।

४०६। **किमः क्षेपे।** (किमः ५।, क्षेपे ७।)।

किंराजा।

४०७। **नञोऽह्वे।** (नञः ५।, अ-ह्व-वे ७।)।

नञः परात् सख्यादेरो न स्यात्, न तु ह्व-वयोः।

असखा। ह्व-वे तु अनपं सरः, अधुरम्।

४०८। **पथो वा।** (पथः ५।, वा ।१।)।

अपथं अपन्थाः। ह्व-वे तु अपथो देशः, अपथम्।

---

५०६। किमः। क्षेपो निन्दा, तस्यां वर्त्तमानात् किमः सख्यादेरो न स्यात्। किंराजा, कुत्सितो राजेत्यर्थः। एवं निन्दिता धूः यस्य तत् किंधूः शकटम्। क्षेपे किं? केषां राजा किंराजः।

४०७। नञो। ह्व यस्य तत्, न तत् तस्मिन्। ह्वभिन्ने वे नञः परात् सख्यादेरो न स्यात्। असखेति—न सखा इति वाक्यम्। "नञः" इत्यनेन षमः। यद्यपि नञ इत्यनेनैव सिध्यति, तथापि नञः ष्याद्यन्तेन सह ह्व-षस-ज्ञापनार्थमहण इत्युक्तम्। अनपं सर इति—न सन्त्यापो यस्मिन् सरसीति वाक्यम्। अधुरमिति—धुरोऽभाव इति वाक्यम्।

४०८। पथो। ह्वभिन्ने वे नञः परात् पथः षः न स्याद्वा। अपथमिति—न पन्था इति वाक्यम्। ष्यन्तत्वाभ्यां पथ इति क्लीबत्वम्। पक्षे अपन्था इति। अपथो देश इत्यादि—नास्ति पन्था यस्मिन् देशे, पथोऽभाव इति वाक्यम्।

४०९। कत् त्र्यच्‌विरथवदे।

( कत् ।१।, कु ।१।, अच्-त्रि-रथ-वदे ७। )।

कोः स्थाने कत् स्यात् से अजादौ परे।

कदन्नं कत्त्रयः।

४१०। काऽक्षे। (का ।१।, अक्षे ७।)।

काक्षम्।

---

४०९। कत्। अच्‌ त्रिश्च रथश्च वदश्च तत्तस्मिन्। कदन्नमिति—कुत्सितमन्नमिति वाक्यं, कुमाद्योर्नित्यमिति षः। एवं कुत्सितास्त्रयः कत्त्रयः, कुत्सितो रथः कद्रथः। कद्वद इति—वदतीति वदः, पचाद्यन्। एष्विति किं? कुब्राह्मणः। अस्य सूत्रस्य षस एवाभिधानात् कुत्सितो रथो यस्येत्यादौ न स्यात्(१)।

जातौ तृणे। तृणशब्दे परे जातौ वाच्यायां कोः कत् स्यात्। कत्तृणं नाम जातिः। अजातौ कुत्सितानि तृणानि।

४१०। का। अक्षशब्दे परे कोः काः स्यात्। काक्षमिति—अक्षमिन्द्रियं, कुत्सितमक्षमिति वाक्यं, कुमाद्योर्नित्यमिति षः। अक्ष इत्यस्य सामान्यतो ग्रहणात् कुत्सिते अक्षिणी यस्य काक्षो विप्र इत्यत्राक्षिशब्दात् षे कृतेऽपि स्यात्।

---

(१) पापकुत्सेषदर्थे कु इत्यमरोक्तस्य अव्ययकुशब्दस्यैवात्र ग्रहणं मत्र इत्यौ-मापद्मस्य, तेन कोः पृथिव्याः रथित कुरथित इत्यादौ न स्यादिति दुर्गादास कार्त्ति-केय-गङ्गाधराः।

## ४११ । पथिपुरुषे वा ।

( पथि-पुरुषे ७।, वा ।१।) ।

कापथं कुपथं, कापुरुषः कुपुरुषः ।

---

४११ । पथि । पन्थाश्च पुरुषश्च तस्मिन् । कोः काः स्यात् वा पथिपुरुषयोः परयोः । कापथमिति—कुत्सितः पन्था इत्यर्थः, व्यसंख्याभ्यां पथ इति क्लीवत्वम् (१) । एवं कुपथमिति ।

---

(१) अत्र सर्वेषु प्रचलितेषु मुद्रितमुग्धबोधपुस्तकेषु सूत्रे कापथ इति पुंलिङ्ग-पाठो दृश्यते । स च न तर्कवागीशसम्मतः "व्यसंख्याभ्यां पथ इति क्लीवत्वम्" इत्युक्तत्वात् । कार्त्तिकेयोऽपि तर्कवागीशमतमनुसृतवान् । दुर्गादासगङ्गाधर-मते तु पुंलिङ्गपाठः । अत्र पुंस्त्वं न पाणिनीयवार्त्तिकसम्मतम्, "पथः संख्या-व्ययादेः" इति वार्त्तिके क्लीवत्वस्योक्तत्वात् । सिद्धान्तकौमुद्यामपि क्लीवलिङ्गपाठो दृश्यते । पथः सङ्ख्याव्ययादेरिति नपुंसकत्वमिति तत्र तत्त्वबोधिनी । संक्षिप्त-सारेऽपि "कुत्सितः पन्थाः कापथम् । कुपथमित्यसाधुः" इत्युक्तं (१४६ सू) । संख्याव्ययात् पथ इति नपुंसकत्वम् । कुपथमित्यसाधुरिति—पथिशब्देन समासे नित्यं कादेश । पथिशब्दसमानार्थेन पथशब्देनापि क्लीवत्वाभाव इत्यभिप्राय इति गोयीचन्द्रः । 'अध्वो दुरध्वो विपथ कदध्वा कापथः समाः' इत्यमर, 'अध्वो विपथ कापथा'विति रभसश्च, इत्युभयत्रापि पुंलिङ्गपाठो दृश्यते । "पथिन् शब्देन समासे संख्यादीत्यनेन नपुंसकत्वनियतः पदान्तपथशब्देन समासः । गति पथश्च मार्गश्चेति त्रिकाण्डशेष"—इत्यमरटीकायां रघुनाथः । प्रौढमनोरमापि अमरवचने क्लीवत्वापत्तिनिरासाय पदान्तपथशब्देन समासमुक्त्वा "न चैवं विपथ-शिहारेऽपि कापथो न स्यात्, कादेशस्य दुर्लभत्वादिति वाच्यम् । ईषदर्थे च तत्-सम्भवात्, कुत्सायामप्यर्थे, पर्यवसानात्" इत्याह । अयं भावः—कुत्सितः पन्थाः कापथः पथ्यपुर इति च । यद्यपि पथ संख्याव्ययात् पथ इति क्लीवत्वं तथापि लिङ्गस्य लोकाश्रयत्वात् विपथ कापथौ पुंस्यपि" इत्याह । प्रौढमनोरमा टीकायां शब्दरत्नेऽप्येवमाह । अयमेव समाधीयते—अतएव विपथकापथौ पुंस्त्वेऽपि विचारात् क्लीवत्वस्याप्यदर्शनादिति । अतएव तत् कापथ इति लिङ्गैकदेशस्य पथशब्दस्यापि सिध्यति । तर्कवागीशेनापि तदङ्गीकृतम् । एवं सति पाणिनीय

४१२ । **कोरीषदर्थे** । (कोः ६।, ईषदर्थे ७।) ।

ईषज्जलं काजलम् ।

४१३ । **कत्कवौ चाग्न्युष्णे** ।

(कत्-कवौ १॥, च ।१।, अग्नि-उष्णे ७।) ।

कदग्निः कवाग्निः काग्निः, कदुष्णं कवोष्णं कोष्णम् ।

---

कापथ इति तु ईषदर्थे अकारान्तेन पथशब्देन । परे तु कापथमिति नित्यमाहुः । कापुरुष इति—कुत्सितः पुरुष इत्यर्थः । ईषदर्थे कोः पुरुषशब्दे परे वा कादेश इति भागवृत्तिः, तन्मते ईषत् पुरुषः कापुरुषः कुपुरुष इति ।

४१२ । कोः । पुनः कुग्रहणं पथिपुरुषयोरननुवर्त्तनार्थम्, अत आह काजलमिति । एवम् ईषल्लवणं कालवणम्, ईषद्वादो यत्र कावाद इत्यादि । ईषदर्म्नं काम्नम्, ईषदम्लं काम्लम्, ईषदाकारो यस्य स काकार इत्यादौ तु अनेनापि कदादेशो बाध्यते, अपेक्षितविधित्वात् परत्वाच्च(१) । तथाच भारविः—देवाकानिनि कावादे वाहिकास्वस्वकाहि वा । काकारेभभरे काका निस्वभव्यव्यभस्वनि (२) ।

४१३ । कत् । ईषदर्थे कोः कत्-कव-काः स्युरग्न्युष्णयोः

---

वार्त्तिकं सिद्धान्तकौमुद्यां संक्षिप्तसारव्याख्यामसन्दिग्धमतमनुसृत्य तर्कवागीशटीकानुयायिभ्यस्मिन् मुग्धबोधे कापथमिति क्लीबलिङ्गनिर्देशमेव युक्ततममाम इति ।

(१) कोरीषदर्थे इत्यनेन यत् कादेशविधानं तदवश्यमीषदर्थमपेक्षते, तस्मिन्नर्थ एव तद्विधानादित्यपेक्षितविधित्वम् । परत्वादिति—विप्रतिषेधे परं कार्यमिति न्यायेन कोरीषदर्थे इत्यस्य परवर्त्तित्वादित्यर्थः

(२) किराते १५।२५ ।

४१४ । ज्योति जनपद रात्रि नाभि बन्धु गन्ध पिण्ड लोहित कुक्षि वेणी ब्रह्मचारि तीर्थ्य पत्नी पक्षे समानः सः ।

(ज्योतिः—पक्षे ७, समानः १, सः १) ।

समानं ज्योति र्यस्यासौ—सज्योतिः ।

---

परयोः । कदग्निरिति—परे तु अग्निशब्दे परे का कवादेशौ नाहुः । कदुष्णमिति—अनीषदर्थेऽपि उष्णशब्दे परे कोः कत्-कव कादेशा इत्यन्ये ।

११४ । ज्योतिः । एषु चतुर्दशसु परेषु समानस्य सः स्यात् । सज्योतिरिति—समानञ्च तत् ज्योतिश्चेति वाक्यम्, एकादीनाञ्च इति यसः । एवं सजनपदः सरात्रिः सनाभिः सबन्धुः सगन्धः सपिण्डः सलोहितः सकुक्षिः सवेणी । ब्रह्म वेदः, तदध्ययनार्थं यद्व्रतं तदपि ब्रह्म, तच्चरतीति ब्रह्मचारी, समानो ब्रह्मचारी सब्रह्मचारी, तस्यैव वेदाख्यस्य ब्रह्मणः सदृशं व्रतं चरतीत्यर्थः । (१) समाने तीर्थे गुरौ वसतीति सतीर्थ्य एकगुरुः, समानतीर्थशब्दात् तत्र वासिनीत्यर्थे ष्णेत्र त्ये समानस्य सः (२) । समानः पतिरस्याः सपत्नी, ईपि पतिशब्दस्य पत्नादेशे समानस्य सः । समानः पक्षः

---

(१) एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः इत्यमरः ।

(२) निर्यंकारे तीर्थे न स्यात्, तेन समानं तीर्थं गङ्गातीरादि येषां ते समानतीर्था इति—इति दुर्गादास-कार्त्तिकेय गङ्गाधराः ।

४१५ । रूप नाम गोत्र स्थान वर्ण वयो वचन धर्म्म जातीयोदर्य्ये वा ।

( रूप—उदर्य्ये ७, वा ।१) ।

सरूपः समानरूपः ।

इति स-पादः ।

---

सहायः सपक्षः । परे तु गन्ध पिण्ड लोहित कुक्षि वेणीति पञ्च नाहुः । अन्ये तु पिण्डभिन्नानाहुः (२) सेतुशब्दञ्चाहुः ।

३१५ । रूप । एषु दशसु समानस्य सः स्याद्वा । सरूप इति—समानं रूपं यस्येति वाक्यम् । एवं सनामा सगोत्रः सस्थानः सवर्णः सवयाः सवचनः सधर्म्मा, समानः प्रकारः सजातीयः, समान उदरे शयिता इत्यर्थे यः सोदर्य्यः । पक्षे समानरूप इत्यादि । परे तु उदर्य्यभिन्नेष्वपि नित्यमाहुः । धर्म्मोदर्य्यभिन्नेषु नेति चान्द्राः ।

अरिष्टादिचिह्नार्थस्य कर्णे घः । रिष्टादिभिन्नस्य चिह्नार्थस्य घः स्यात् कर्णशब्दे परे । दात्रमिव चिह्नं कर्णे यस्य स दात्राकर्णः । द्वौ गुणौ यस्य स द्विगुणः, तदाकारं चिह्नं कर्णे यस्य स द्विगुणाकर्णः, गुणशब्दोऽत्रावयवार्थः । द्वयोरङ्गुल्योः समाहारः द्व्यङ्गुलं, तदाकारं चिह्नं कर्णे यस्य स द्व्यङ्गुलाकर्णः । इह चिह्नशब्देन पशूनां स्वामिविशेषसम्बन्धज्ञापनार्थं कर्णे दात्राकारादि

---

(२) पिण्डव्यतिरिक्तान् अपरान् गन्धादीन् चतुरो नाहुः । (भट० वृ०) ।

यत् क्रियते तस्यैव ग्रहणं, तेन शोभनकर्णः महाकर्ण इत्यादौ न स्यात् । रिष्टादेस्तु रिष्टकर्णः । रिष्टादिर्यथा—

रिष्ट-स्वस्तिक-पञ्चाष्ट च्छिन्न-च्छिद्राणि च स्रुवः ।
भिन्नश्चेतीह रिष्टादावष्ट शब्दाः प्रकीर्त्तिताः ॥

विश्वस्य वसुनि । विश्वस्य घँः स्यात् वसुशब्दे परे । विश्वं वसत्य विश्वावसुः ।

अपील्वादेरिको वहे । पील्वादिभिन्नस्येगन्तस्य घँः स्यात् वहशब्दे परे । वहतीति वहः, पचाद्यन्, कपिं वहतीति कपीवहं मुनीवहं शमीवहम् (१) । पील्वादेस्तु पीलुवहं चारुवहमित्यादि । इकः किं ? गन्धवहः ।

णेः काशे । इगन्तस्य णेः काशशब्दे परे घँः स्यात् । निकाशते इति पचाद्यन्, नीकाशः अनूकाशः । इकः किं ? प्रकाशः ।

गेर्घञमनुष्ये बहुलम् । गेर्घँः स्यात् घञन्ते परे, न तु मनुष्ये वाच्ये । बाहुल्यात् क्वचिन्नित्यं, क्वचिद्विकल्पः, क्वचिन्निषेधः, क्वचिदन्यथापि । यथा अपामार्गः वीमार्गः नीक्लेदः नीहारः नीशारः नीवारः, वृतौ प्राकारः, गृहभेदे प्रासाद इत्यादौ नित्यम् । अन्यत्र प्रकारः प्रसादः । प्रतीवेशः प्रतीहारः प्रतीकारः प्रतीरोधः नीकारः प्रतीसारः परीहासः, पक्षे प्रतिवेश इत्यादौ विकल्पः । प्रवेशः प्रहारः विसारः परिवेशः इत्यादौ निषेधः (२) ।

---

(१) एषूदाहरणेषु "घोषाग्रयत्नात् दीर्घत्वं साध्यम्" इति गोयीचन्द्रः ।

(२) नीक्लेदः—निक्लिद्यतीति कर्त्तरि घञ् । अपामार्गः—अपमृज्यतेऽनेन इति करणे घञ्, आपाढ़ इति ख्यात औषधिविशेषः । नीहारो हिमः ।

पूर्व्वं मुखमस्य पूर्व्वामुखः पश्चिमामुख उत्तरामुखः दक्षिणामुखः इत्यादौ णिभिन्नस्याप्यघजन्तेऽपि। अमनुष्ये किं? निषाद-चाण्डालः।

क्विबन्तरुचादौ कस्य च। णेः कस्य (१) च क्विबन्तरुचादौ परे घैः स्यात्। अभीरुक् नीवृत् प्रावृट् परीतत् उपानत्। कस्य—मर्म्माविध् मृगाविध् (२)। णिकयोः किं? तिग्मा रुग् यस्य स तिग्मरुक् (३)।

तुरादेः सहि वा तु वेरुह्नधयोः। तुरादे घैः स्यात् सहि,

---

नीशारः प्रावरणम्। नीवारो धान्यविशेषः। प्राकारो वृत्ताविति—वेष्टने वाच्ये। गृहभेदे प्रासाद इति—देवानां भूभुजाञ्च गृहविशेषः। प्रक्रियते इति कर्म्मण्यपि घञ्, प्रतीहन्ति अत्र इत्यधिकरणे घञ्। अन्यत्र प्रकार. प्रसाद इति—प्रकारो विशेष, प्रसाद स्तुष्टा दानम्। प्रतीवेषः—प्रतिविषतीति कर्त्तरि घञ्। प्रतीकार—प्रतिकरणमिति भावे घञ्, अथवा प्रतिकुर्व्वन्त्यनेन इति करणे। प्रतीहारः—प्रतिहरन्ति वारयन्ति तेनेति प्रतीहारो द्वाःस्थः। नीकारः—निकरणमिति कृ ञ विक्षेपे इत्यस्मात् भावे घञ्। अतीसार—अतिसरणमिति सृ गतौ इत्यस्मात् भावे घञ्। परिहसनं परिहासो, भावे घञ्। विसरतीति विसारो मत्स्यः—इति गोयीचन्द्रः (२१२ पृ.)

(१) कस्य कारकस्य।

(२) अभिरोचते इति अभिपूर्व्वात् रुच ङ रु दीप्तावित्यस्मात् कर्त्तरि क्विप्, नित्यं कुगाद्योरिति समासः। नियर्त्तते इति नीवृत्, निपूर्व्वात् वृत ङ वृ वर्त्तने इत्यस्मात् कर्त्तरि क्विप्। प्रवर्षतीति प्रावृट् प्रपूर्व्वात् वृषु सेचने इत्यस्मात् कर्त्तरि क्विप्। परितनोतीति परीतत्, यम मन तन इत्यादिना मकारलोपः, स्वार्थ तन-क्विप्। उपानत् नह्यो ञ बन्धे क्विप्. नहोधट् भो इति धट्। मर्म्माविध्—मर्म्म विध्यतीति व्यधो ताड़े इत्यस्मात् कारकपूर्व्वात् क्विप्, ग्रहस्वपाद्योरिति ञिः। एवं मृगाविध् व्याधः।

(३) मात्र ण-वर्णपूर्व्वस्य कारकपूर्व्वस्य वा दघे क्विबन्तता।

वेस्तु रुहधयोर्वा। तुरः वेगस्तं सहते, ढाञ्जवद्दसह इति विण्, तुरापाट्। एवम् ऋतीषाट् जलाषाट् इत्यादि। विरोहति क्विप्, वीरुड्भो धड् कौ, वीरुत् विरुत्। रुधधोः क्विपीत्यन्ये। विवधतीति पचाद्यन्, वीवधः विवध इति।

शुनो दन्तादौ। दन्तादौ परे शुनो घँः स्यात्। शुनो दन्तः श्वादन्तः श्वादंष्ट्रा।

दन्तादिर्यथा—

दन्त दंष्ट्रा कर्ण कुञ्ज (१) पद पुच्छाः षड़ीरिताः।

वराहशब्दोऽप्यत्र, एतेन श्वावराहाविति कश्चित्।

पदपुच्छयोर्वेति चान्द्राः, तन्मते श्वपदः श्वपुच्छ इत्यपि।

चितेः के। अक्षतसान्ताद्दित्यनेन विहिते के परे चित्यन्तस्य घँः स्यात्। एका चितिर्यस्य एकचितीकः।

कोटरकिंशुलकाद्यो वँनगिर्यो र्नाम्नि। कोटरादेर्वनशब्दे परे, किंशुलकादेर्गिरिशब्दे परे घँः स्यान्नाम्नि। कोटराणां वनं कोटरावणम्।

कोटरादिर्यथा—कोटर शारिक सिश्रक पुरगा मिश्र इति पञ्चैव प्रोक्ताः। किंशुलकानां गिरिः किंशुलकागिरिः। किंशुलकाञ्जनभञ्जनलोहितकुक्कुटमिति पञ्चैव प्रोक्ताः। नाम्नि किं? कोटरवनं भञ्जनगिरिः।

मिश्रस्य मिश्रनरयोः। मिश्रस्यानयोर्घँः स्यान्नाम्नि।

---

(१) कुञ्ज इत्यत्र भक्तिप्रकारे कूर्द इति (२१० पृ.) काशिकायां कुन्द इति (६।१।१२७) पाठभेदो दृश्यते।

विश्वामित्रो नाम ऋषिः, विश्वानरो नाम कश्चित्।

नाम्नि किं? विश्वं मित्रं यस्य विश्वमित्रो विप्रः, विश्वे नरा यस्य विश्वनरो राजा।

अष्टनो वक्रादौ। अष्टनो घः स्यात् वक्रादौ नाम्नि। अष्ट वक्राणि यस्य अष्टावक्रो नाम ऋषिः, अष्टापदं सुवर्णमित्यादि। नाम्नि किम्? अष्टवक्रो वृक्षः।

गोकपालयोर्युक्तहविषोः। गोशब्दे परे युक्ते वाच्ये, कपाल-शब्दे परे हविषि वाच्ये अष्टनो घः स्यात्। अष्टभिर्गोभिर्युक्तम् अष्टागवं शकटम्, अष्टसु कपालेषु संस्कृतं अष्टाकपालं हविः, उभयत्र तार्थे गः। युक्तहविषोः किम्? अष्टकपालं विप्रस्य, समाहारे गः।

इष्टकादेश्चितादौ स्वः। इष्टकादेः स्वः स्यात् चितादौ परे। इष्टकाभिश्चितम् इष्टकचितम्, इषीकायास्तूलं इषीकतूलं, मालां भर्त्तुं शीलमस्य मालभारीत्यादि। तदन्तस्यापि (१)। पक्वेष्टकचितं मुञ्जेषीकतूलं, मल्लिकामालभारिण्य इति दण्डी।

आवीपोर्नाम्नि बहुलम्। आवीपोर्बहुलं स्वः स्यात् नाम्नि। बहुलञ्च क्वचित् नित्यं, क्वचिद्विकल्पः, क्वचिन्निषेधः, क्वचिद-पूर्व्वविधिः।

यदुक्तं —

> प्रवृत्तिश्च निवृत्तिश्च विभाषोक्तविधिः क्वचित्।
> अपूर्व्वस्य विधानञ्च बहुलं स्याच्चतुर्व्विधम्॥

---

(१) परान्तरपूर्व्वकेष्टकादिशब्दस्यापीत्यर्थः।

कन्या कुब्जा यस्मिन् देशे कान्यकुब्जो देशः, शिलां वहतीति शिलवहं, शिला प्रस्थोऽस्येति शिलप्रस्थं नगरं, मन्दुरायां जातो मन्दुरजोऽश्वः, रेवती मित्रमस्य रेवतिमित्रः, रोहिण्याः पुत्रो रोहिणिपुत्र इत्यादौ नित्यम्। शिंशपस्थली शिंशपास्थली, प्रमदवनं प्रमदावनं, रेवतीपुत्रः रेवतिपुत्रः, कालीदासः कालिदास इत्यादौ विकल्पः। लोमकाष्ठहं लोमकाषण्डं नान्दीकरः नान्दीघोषः नान्दीविशाल इत्यादौ निषेधः। कलशः सुसूक्ष्मजटकेश इत्यादौ असंज्ञायामपि, बाहुल्यात्।

अनीविवुव्यस्य यूतो वा परदे। ईप इयुव-ईदूतो व्यसंज्ञकादन्यस्य ईदूतः स्वः स्याद्वा परदे। ग्रामणीपुत्रः ग्रामणिपुत्रः, धीवन्धूपुत्रः धीवन्धुपुत्रः। अलावूकर्कन्धूहनभुफलमित्यत्र हनूभ्वा एव स्वः न तु पूर्व्वयोः, से तु सर्व्वास्तदस्योत्तरदत्वात्। यदा अलावूश्च कर्कन्धूश्च अलावुकर्कन्धौ, तौ च हनूभूश्च अलावुकर्कन्धुहनूभ्वः, तासां फलम् अलावुकर्कन्धुहनभुफलमिति वा स्यादेव(१)। ईवादेस्तु गार्गीपुत्रः श्रीकुलं भ्रूकुलं शक्लीभूतम्।

भ्रुवः कुंसादावदती च। भ्रुवः कुंसादौ परे अत् अत् स्वय एते बहुलं स्युः। भ्रुवः कुंसो भासनमस्य भ्रकुंसय भ्रकुंसय भ्रुकुंसय भ्रूकुंसय इति शब्दार्णवः। एवं भ्रुवोः कुटिः भ्रकुटिः भ्रकुटिः भ्रुकुटिः भ्रुकुटियेति। अन्ये वा स्वाभाव इत्याहुः।

(१) अर्थमेवोत्तरपदानां सत्त्वादित्यर्थः।

तथाच—तन्द्री प्रमीला भ्रकुटि र्भ्रुकुटि र्भूकुटिः स्त्रियामित्यमरः। कुंसः स्याद्भासने पुंसि।

यङ ईः पुत्रपत्योः पे। प्याण्गोरनार्षयोरित्यादिना विहितस्य यङ (१) ईः स्यात् पुत्रपत्योः परयोः पे सति। कारीषगन्ध्यायाः पुत्रः कारीषगन्धीपुत्रः, कारीषगन्ध्यायाः पतिः कारीषगन्धीपतिः, एवं वाराहीपुत्रः वाराहीपतिरित्यादि। पे किं? कारीषगन्ध्या पतिर्यस्य स कारीषगन्ध्यापतिर्ग्रामः।

बन्धौ हे वा तु मातामातृमातृकेषु। यङ ईः स्यात् बन्धौ हे सति, वा तु मातादिषु। कारीषगन्ध्या बन्धुरस्य कारीषगन्धीबन्धुः, कारीषगन्ध्या माताऽस्य कारीषगन्धीमातः कारीषगन्ध्यामातः, कारीषगन्धीमाता कारीषगन्ध्यामाता, सान्तविधेरनित्यत्वाद्वा कः, कारीषगन्धीमातृकः कारीषगन्ध्यामातृक इति। मातृकशब्दस्य आकारान्तमातादेशो वचनसामर्थ्यात् मनीषादित्वाद्वा। सर्वं सुस्थमिति (२)।

इति श्रीश्रीरामतर्कवागीशभट्टाचार्यविरचिता सपादस्य टिप्पनी सम्पूर्णा।

---

(१) २०७ सूत्रस्य टीकायाम् व्यजादिगणो द्रष्टव्य।

(२) समासविधि शास्त्रेणोक्त द्रष्टव्यं।

## तद्धितः (त) ।

४१६ । बाह्वाद्यतोऽत्र्याबादेर्गर्गादेर्नड़ादेः पितृष्वस्रादेरेवत्यादेः शेषशिवादेः णि-णेय-णार-णायन-णीय-णिक-णा अपत्ये ।

( बाह्वाद्यतः ५।, अत्र्याबादेः ५।, गर्गादेः ५।, नड़ादेः ५।, पितृष्वस्रादेः ५।, रेवत्यादेः ५।, शेषशिवादेः ५।, णि—णाः १।॥, अपत्ये ७।) ।

एभ्यः परा एते क्रमात् स्युरपत्यार्थे ।

---

४१६ । बाह्वा । बाहुरादिर्यस्य सः बाह्वादिः, स च अत तत्तस्मात् । अत्रिश्च आप् च तौ अत्र्यापौ, तावादी यस्य सः अत्र्याबादिः तस्मात् । गर्ग आदिर्यस्य स तस्मात् । रेवती आदिर्यस्य स तस्मात् । शिव आदिर्यस्य सः, शेषश्च शिवादिश्च तत्तस्मात् । पुंस्त्वं सौत्रत्वात् । णिश्च णेयश्च णारश्च णायनश्च णीयश्च णिकश्च णाश्च ते । एते सप्त दभिश्रेभ्यः (१) सप्तभ्यः क्रमात् स्युरित्यर्थः ।

अपत्य इति—अपतनादपत्यं, यो व्यवहितेन जनितः सोऽप्यपत्यं भवत्येवेति । तस्मिन् वाच्ये यस्य सम्बन्धोऽवगम्यते तस्मात् षष्ठ्यन्तात् भवतीत्यर्थः । यद्यपि अपत्ये इति सामान्येनोक्तं

---

(१) बाह्वादतः अत्र्याबादेरित्यादिभिः षड्भ्य इत्यर्थः ।

 

तथाप्यभिधानात् गर्गनड़ादिभ्यां गोत्रापत्य एव। तत्र किं गोत्रमिति चेत्, अत्रोच्यते—

पौत्रादि गोत्रमेकस्यस्तत्र, लुङ् न भवाद्यचि (१)।
तस्मादेवास्त्रियां यूनि, तत्र लुङ्, ष्णायनस्तु वा॥
वंश्ये जीवत्यपत्यं तु स्यात् पौत्रप्रभृतेर्युवा।
जीवति भ्रातरि ज्येष्ठे कनीयांस्तु स उच्यते॥
वृद्धतरे स वान्यस्मिन् सपिण्डे सति जीवति।
पूज्ये वृद्धं युवा वा स्यात् कुत्सायां वा युवाऽयुवा (२)॥

---

(१) भवाद्यर्थविहिते अजादितद्धितप्रत्यये विषये इत्यर्थः। भवादिः परत्र स्फुटीभविष्यति।

(२) छात्राणां बोधसौकर्यार्थं तर्कवागीश न्यायपञ्चाननटीकातः समुद्धृत्य सुस्पष्टमेकत्र व्याख्यायतेऽयं सन्दर्भः।

"पौत्रादि गोत्रम्"—पौत्रादि पौत्राद्यपत्यं गोत्रं गोत्रसंज्ञकम्। "एकस्यस्तत्र"—तत्र तस्मिन् गोत्रापत्यार्थे एक एव स्यः ष्णप्रत्ययः स्यात्, न तु तत्तदपत्यभेदेन प्रत्ययान्तरोत्पत्तिरित्यर्थः। "लुङ् न भवाद्यचि"—भवाद्यर्थविहिते अजादितद्धितप्रत्यये विषये सति तस्य ष्णप्रत्ययस्य लुक् न भवतीत्यर्थः। "तस्मादेवास्त्रियां यूनि"—यूनि वाच्ये सति तस्मादपत्यप्रत्ययान्तादेव प्रत्ययान्तरं स्यादिति शेषः। स्त्रियां प्रपौत्र्यां वाच्यायां प्रत्ययान्तरोत्पत्तिर्न भवति। "तत्र लुक्"—तत्र तस्मिन् भवाद्यचि विषये युवार्थप्रत्ययस्य लुक् भवतीति शेषः। "ष्णायनस्तु वा"—भवाद्यचि विषये युवार्थप्रत्ययो ष्णायन ष्णायन्योर्लुक् वा स्यात्। "वंश्ये जीवत्यपत्यं तु स्यात् पौत्रप्रभृतेर्युवा"—वंश्ये पित्रादौ जीवति सति पौत्रप्रभृतेरपत्यं प्रपौत्रप्रभृत्यपत्यं युवा युवसंज्ञकं स्यात्। "जीवति भ्रातरि ज्येष्ठे कनीयांस्तु स उच्यते"—यत्र द्वौ प्रपौत्रौ जातौ तत्र ज्येष्ठे भ्रातरि जीवति सति कनीयान् स युवा उच्यते। "वृद्धतरे स वान्यस्मिन् सपिण्डे सति जीवति"—पित्रादौ ज्येष्ठे भ्रातरि चाविद्यमाने किं स्यात् तत्राह वृद्धतरे इति। अन्यस्मिन् वृद्धतरे स्थानवयोभ्यां ज्येष्ठे सपिण्डे पितृव्यादौ पितामहभ्रातरि वा जीवति सति स प्रपौत्रः वा

आदैजचां यस्य भवेत् तदादिः
प्राग्देश एङ्त्यमथ त्यदादि।
वृद्धं तथा गोत्रपरोत्तरं दं
वा नामधेयं प्रणयन्ति वृद्धाः (१)॥

अस्यायमर्थः—यत् पौत्राद्यपत्यं तद्गोत्रं परिभाष्यते (२)। तस्मिन् विवक्षिते भेदेन (३) अपत्य-त्योत्पत्तिप्रसङ्गे नियमः क्रियते एकस्य इति।

तत्र गोत्रे एक एव त्य इत्यर्थः। तथाच एकस्य त्यस्य तत्तद-पत्यार्थबोधकत्वमिति। यथा—गर्गस्यानन्तरापत्यं गार्ग्यस्तत्पुत्रो-ऽपि गार्ग्यस्तत्पुत्रोऽपि गार्ग्य इति।

---

विकल्पेन युवसंज्ञो भवतीति शेषः। "पूज्ये वृद्धं युवा वा स्यात्"—पूर्वोक्तलक्षणेन यस्य युवसंज्ञा न भवति, तदपि प्रपौत्राद्यपत्यं पूज्ये पूजायां वा युवा स्यात्। वृद्धं वृद्धसंज्ञकं यत्, तदपि विकल्पेन युवसंज्ञं स्यात्। वृद्धसंज्ञान्तु वक्ष्यति। "कुत्सायां वा युवाऽयुवा"—कुत्सायां गम्यमानायां युवा वा विकल्पेन अयुवा भवति।

(१) तर्कवागीशटीकायाः सन्दर्भस्य सुस्पष्टमेकत्र व्याख्यायते वृद्धलक्षणम्। अचां मध्ये आत् ऐच् यस्य शब्दस्य आदिः भवेत् तत्, तथा प्राग्देशे प्राच्यदेशाभिधाने एङ् त्यम्, यस्य शब्दस्य आदिर्भवेदित्यर्थः। अथ त्यदादि त्यदादिगणं, तथा गोत्रपरोत्तरं गोत्रम अपत्यप्रत्ययः परं येषां, तादृशानि पदानि उत्तराणि उत्तरपदानि यस्य, तादृशं दं पदं वृद्धाः वृद्धं वृद्धसंज्ञकं प्रणयन्ति कथयन्ति। नामधेयं संज्ञाशब्दं वा विकल्पेन वृद्धं प्रणयन्तीति शेषः।

(२) यद्यपि अपत्यं पुत्र एव रूढं तथापि अपतनाद् अपत्यमिति व्युत्पत्त्या व्यवहितेन जनितेऽपि पौत्रादौ परिभाष्यते। अत्र भट्टाचार्य—यद्यप्यभिधानात् अपत्यशब्दः केवलकन्यापुत्रवाची तथापि न पतति वंशो येन तदपत्यमिति व्युत्पत्तिनिर्देशबलेन अपत्यापत्यमपि अपत्यमुच्यते, अतोऽत्र तात्पर्यात् पुत्रपौत्र प्रपौत्रादौ वाच्ये कन्यायाञ्च वाच्यायां एष्य एते क्रमात् स्युरित्यर्थः।

(३) प्रतिव्यक्तिभेदेन।

तस्य गोत्रत्यस्य भवाद्यचि गर्गीयस्क इत्यादिना प्राप्तो लुग्न भवतीत्यर्थः । यथा गर्गस्यानन्तरापत्यानां छात्राः गार्गीयाश्छात्राः, एवं यास्कीया वैदीया इत्यादि । भवादीति किं ? गर्ग्येभ्यो हितं गर्गीयम् । अचि किं ? गार्ग्येभ्य आगतः गर्गरूप्य इति ।

गोत्रापत्यस्य ञ्ये लोपिनो यूनि ञ्यान्तस्य छादयोरलुक् । विदानामपत्यं युवा वैदः, विदानामपत्ये युवानौ वैदौ, वैदशब्दात् यूनि वाच्ये ष्णौ कृते ष्णट्रुचत्रियेत्यादिना ष्णोर्लुक् । छाद्यन्तस्य गोत्रस्य तु यूनि ञ्ये लुग्भवत्येव । यथा वैदस्य वैदयोर्वा अपत्यानि युवानः विदाः, एवम् उर्वा इत्यादि । ननु यून्यपत्ये विवक्षिते कस्याः प्रकृतेस्त्यो भवतीत्यत आह तस्मादित्यादि ।

तस्मादेव गोत्रादेव युवत्यो भवतीति नियम्यते, स्त्रियां न भवति । यथा—गर्गस्यानन्तरापत्यं गार्ग्यः, गार्ग्यस्यानन्तरापत्यं युवा गार्ग्यायणः, एवं वात्स्यायनः । दक्षस्यानन्तरापत्यं दाक्षिः, तस्यापत्यं युवा दाक्षायणः, एवं प्लाक्षायणः । उपगोरनन्तरापत्यम् औपगवः, तस्यापत्यं युवा औपगविः, एवं कापटविः । नड़स्यानन्तरापत्यं नाड़ायनः, तस्यापत्यं युवा नाड़ायनिः, एवं चारायणिः । स्त्रियां दाक्षी गार्गीत्यादि ।

तत्रेत्यादि—तत्र भवाद्यचि विषये युव-त्यस्य लुग्भवति । यथा फाण्टाहृतस्यानन्तरापत्यं फाण्टाहृतिस्तस्यापत्यं युवा फाण्टाहृतः, सौवीरगोत्रत्वात् फाण्टाहृतिमिमताविति णः, फाण्टाहृतस्य छात्रा इति विवक्षिते यस्य लुकि गोत्रत्वात्तस्मात् ण्यः प्राप्तः, फाण्टाहृताश्छात्राः । एवं भागवित्तस्यानन्तरापत्यं भागवित्तिः,

भागवित्तेरपत्यं युवा भागवित्तिकः, रेवत्यादित्वात् ष्णिकः, तस्य छात्रा भागवित्ता इत्यादि।

णायनस्तु वेति—णायन्निति नान्तनिर्देशात् ष्णायनणायन्योर्ग्रहणम्। तथाच भवाद्यचि विषये युव-त्यस्यायनो लुग्वा भवति। यथा गार्ग्यायणस्य छात्राः गार्ग्यायणीयाः गार्गीयाः, तथा वात्स्यायनीयाः वात्सीयाः, यस्कस्यानन्तरापत्यं यास्कस्तस्यापत्यं युवा, इति तिकादित्वात् णायनिः यास्कायनिः, तस्य छात्रा यास्कायनीया यास्कीया इत्यादि। भवाद्यचि किं? फाण्टाहृतरूप्य इत्यादि।

प्रसङ्गादाह वंश्ये जीवतीति—वंशे भवो वंश्यः पित्रादिः, तस्मिन् जीवति सति पौत्रप्रभृतेरपत्यं युवोच्यते, गर्गे गार्ग्ये गार्ग्ये च जीवति सति गार्ग्यस्यापत्यं युवा गार्ग्यायणः, नड़ादित्वात् ष्णायनः। तुशब्दोऽत्रावधारणार्थः। युवैव न गोत्रमिति।

असति वंश्येऽपि ज्येष्ठे भ्रातरि जीवति सति कनीयान् भ्राता स युवोच्यते। गार्ग्यस्य द्वौ पुत्रौ जातौ, तयोः कनीयान् युवा, ज्येष्ठो गार्ग्य एव। ज्येष्ठे अविद्यमाने कनीयानपि गार्ग्य एव।

वृद्धतरे इत्यादि—सप्तपुरुषावधयो ज्ञातयः सपिण्डाः, तत्र भ्रातुरन्यस्मिन्नपि सपिण्डे पितृव्ये पितामहभ्रातरि वा वयोधिके जीवति पौत्रादेरपत्यं वा युवा भवति। पितृव्ये पितामहभ्रातरि वा वयोऽधिके गार्ग्यस्यापत्य गार्ग्यायणो गार्ग्यो वा। वृद्धतराभावे मृते वा गार्ग्य एव।

पूज्य इत्यादि—शास्त्रान्तरे परिभाषणादगोत्रं वृद्धं पूजायां वा

युवोच्यते । स भवान् गार्ग्यायणो गार्ग्यो वा । पूजायामिति किं ? गार्ग्य एव ।

कुत्सायामिति—ये ये युवान उक्तास्ते निन्दायाम अयुवानो वा भवन्ति । गार्ग्यायणो गार्ग्यो वा जाल्म इत्यादि ।

इदानीं वृद्धलक्षणमाह, आदैजित्यादि—स्वरा मध्ये यस्य आत् ऐच् आदि तद्वृद्ध वृद्धा प्रयन्ति । यथा मालाया इद मालीयम् । ग्रिवस्य विषयो देश ग्रैव, तत्र भव ग्रैवीय, औपगवीय इत्यादि ।

प्राग्देशाभिधानेऽचा मध्ये एङादि यत् तद्वृद्धम । यथा—एनीपचनो देशस्तत्र भव एनीपचनीय । एव गोनदीय भोजकटीय, गोमतीया मत्स्या । एङिति किम् ? अहिच्छत्रे भव आहिच्छत्र, कान्यकुब्ज । प्राग्देश इति किं ? देवदत्तो नाम वाहीकग्राम, तत्र भव देवदत्त, गोमतामिद गौमतम् (१)।

प्राग्देशस्तु—

प्रागुदीच्यौ विभजते हस क्षीरमिवोदकम् ।

विदुषा शब्दसिद्धार्थं सा न पातु शरावती (२) ॥

त्यदादिरपि वृद्धमुच्यते । त्यत्र भवस्त्यदीय, अस्मदीय इत्यादि ।

तथेति—एव गोत्र प्यादि पर येषा तानि गोत्रपराणि(३) उत्तराणि यस्य तद्गोत्रपरोत्तर, दमित्यस्य विशेषणम् (४) । यथा

---

(१) अत्र गोमच्छब्दस्य तद्देशवाचित्वाभावात् न वृद्धता ।

(२) शरावती नदीविशेष ।

(३) पदानीतिशेष ।

(४) ईदृश पद वृद्धसंज्ञकमित्यर्थ ।

४१७ । णित्ते त्रिरादाचः सुभग-सुपञ्चालायोस्तु द्वान्त्यदानाम् ।

( णित्ते ७।, त्रिः १।, आद्यचः ६।, सुभग-सुपञ्चालायोः ६॥, तु ।१।, द्वान्त्यदानां ६॥। )।

अचां मध्ये आद्यचो त्रिः स्यात् णिति ते परे, सुभगादेस्तु द्वयोर्द्वयोः, सुपञ्चालादेस्तु अन्त्यस्य दस्य ।

शुद्धगार्ग्यस्यायं शुद्धगार्गीयम्छात्रः । एवं शुद्धकाश्यपीय इत्यादि । परे तु जिह्वाकात्य-हरितकात्ययोर्वृद्धत्वं नेच्छन्ति, तेन जैह्वाकातः हारितकात इति ।

नामधेयं वा वृद्धमुच्यते । यथा—यज्ञदत्तीयः याज्ञदत्त इत्यादि । एतास्त्रिस्रः संज्ञा (१) यथायथं विविच्य तत्तल्लक्षणेषु वक्तव्या इति ।

४१७ । णित्ते । ण इदस्य स णित्, णिश्चासौ तश्चेति णित्तस्तस्मिन्, आदिश्चासौ अचेति आद्यच् तस्य, सुभगश्च सुपञ्चालश्च तौ, तावादौ ययोः तौ सुभगसुपञ्चालादी तयोः, द्वे च अन्त्यश्च तानि, तानि च तानि दानि चेति द्वान्त्यदानि तेषाम् । आद्यच इति अजपेक्षया बोद्धव्यम् । अन्यथा आग्निशर्म्मिः औपगविः इत्यादिष्वेव स्यात् न तु कार्ष्णिरित्यादौ, अच आदित्वाभावात् इत्याह अचां मध्ये आद्यच इति । औडुलोमिः औडुलोमौ उडुलोमाः । एवं शवललोमिः शवललोमौ शवललोमाः । ञ्ये तु गेयादित्वात् अनित् ञ्यः ।

(१) गोत्र वृद्ध-द्वन्द्वा ।

(२३८) ण्वोर्लोपौतौ तेऽचे । बाह्वोरपत्यं बाहविः, उपविन्दोरपत्यम् औपविन्दविः, उडुलोम्नोऽपत्यम् औडुलोमिः, अग्निशर्मणोऽपत्यम् आग्निशर्मिः । कृष्णस्यापत्यं कार्ष्णिः ।

बाह्वादिर्यथा—

बाहुः कुनामोपबाकु शिवाक्रान्तरश्मतम् (१) ।
भद्रशर्माग्निशर्माणौ देवशर्मा च काश्यपः ॥
युधिष्ठिरार्ज्जुनौ रामः कृष्ण-प्रद्युम्न केशवाः ।
शाल्वो दशरथोऽनड्वान् पञ्च सप्ताष्ट लक्षणः ॥
चेमधूर्त्तेन्द्रशर्माणौ गद माय शराविणौ ।
शङ्खभेदि-सुनामानौ सेन लोम-गिरोऽन्तदाः (२) ॥
ण्यौ शीर्षःशिरस(३)याथ चटाकु खरनर्हिंसौ ।
पुष्करसदजीगर्त्त(४)द्रोण जीवन्त-पर्व्वताः ॥
अजधेनुश्च मण्डूक उदङ् भगरनर्हिंसौ ।
चूडा सुमित्रा दुर्म्मित्रा भगला छगला तथा ॥
ध्रुवका ध्रुवका जङ्घा हिडिम्बा चैव मूषिका ।
सवर्णा शकला चैव नगनः कारुवाचिन' ॥
उदङ्क श्वशुरी नाम्नि, वेद-प्राकारनर्हिंसौ ।
सस्य लोपो भवेत् ण्यौ च मद्रूयोऽश्मोऽमितौजसाम् (५) ॥

(१) कुनामन् उपबाकु शिवाद् अन्तरम् ।
(२) सेनान्त लोमान्त गिरोऽन्तानि पदानीत्यर्थः ।
(३) ण्यौ परे शिरसः स्थाने शीर्षादेशोऽनयन्त इत्यर्थः ।
(४) पुष्करसद् अजीगर्त इति द्वयम् ।
(५) मद्रूयत् अश्मन् अमितौजस्—एषां ण्यौ परे सलोपो वक्तव्य इत्यर्थः ।

अकौशिके शलङ्कुश लोपः ष्णौ ष्णायनेऽप्युतः ।
उपविन्दुर्व्यास-विश्वौ निषाद-वरुडौ तथा ।
पट् सुधाता च चण्डालो व्यासादौ परिकीर्त्तिताः ॥

इह केषाञ्चिदप्राप्ते पाठः, अदन्तानां ष्णिबाधकबाधनार्थः । अन्तरङ्गतोऽपत्यम् आन्तरङ्गतिः, सुभगादित्वात् द्वयोर्वृ्द्धिः ।

काश्यपस्य त्रिषु (१) पाठात् काश्यपिः काश्यपेयः काश्यपः । युधिष्ठिरादिद्वयोः कुरुवंशत्वात्, रामादिपञ्चानां वृष्णिवंशत्वात् शिवादिष्णबाधनार्थः । दशरथस्योभयत्र (२) पाठात् दाशरथिः दाशरथः, तथा च "प्रदीयतां दाशरथाय मैथिली"ति । उभयत्र(३) अनड्हः पाठात् आनडुहिः आनडुह्यः । लक्षणशब्दस्य इह कुर्व्वादौ (४) च पाठात् लाक्षणिः लाक्षण्यः । एवं सेनान्तानां (५) हारिषेणिः हारिषेण्यः । सहस्रशिरसोऽपत्यं साहस्रशीर्षिः; ष्णौ शिरसः शीर्षादेशः, एवं हास्तिशीर्षिरित्यादि । पुष्करसदोऽपत्यं पौष्करसादिः, सुभगादित्वाद्द्वयोर्द्वयोर्वृद्धिः । द्रोणादित्रयाणाम् उभयत्र(६) पाठात् द्रौणिः द्रौणायनः, जैवन्तिः जैवन्तायनः, पार्श्वतिः पार्श्वतायनः । मण्डूकशब्दस्य त्रिषु पाठात् माण्डूकिः माण्डूकेयः माण्डूकः । उदौषोऽपत्यम् औदश्विः, मनीषादित्वात् उदश्वादेशः । मूषिकाशब्दस्य इह गोधादौ च पाठात् मौषिकिः मौषिकारः । सवर्णाया उभयत्र (७) पाठात् सावर्णिः सावर्णेयः । कादवाषि-

(१) बाह्वादावत्रादिविधादिषु ।
(२) बाह्वादौ शिवादौ च ।
(३) बाह्वादौ गर्गादौ च ।
(४) कस्मात्प्रभृतिकुर्व्वादिगणे ।
(५) उभयत्र बाह्वादिरिति भेदः ।
(६) बाह्वादौ नडादौ च ।
(७) बाह्वादौ रेवत्यादौ च ।

४१८। य्वोर्युम् दान्तेऽस्वङ्ग-व्यङ्ग-व्यड़-व्यवहार-व्यायाम-स्वागत-स्वध्वर-णनः।

(य्वोः ६॥, युम् ।१।, दान्ते ७।, अस्वङ्ग—णनः ६। )।

आद्यचः स्थाने जातयोर्दान्ते स्थितयोर्यवयोः स्थाने क्रमादि-युमौ स्तो णिति ते परे, न तु स्वङ्गादेः।

---

नाम इह कुर्व्वादौ च पाठात् ताम्बवायिः ताम्बवाय्यः, नापितिः नापित्यः। उदङ्को नाम कश्चित्, तस्यापत्यम् औदङ्किः, अदन्तत्वात् प्राप्ते यौगिकशब्दाभिधेयार्थः पाठः। एवं श्वाशुरिः। नाम्नीति किम्? औदङ्कः श्वशुर्थः (१), तथाच—"श्वशुर्य्यौ देवरश्यालौ" इति। सङ्कृयसोऽपत्य साङ्कृयिः, ण्यौ सलोपः। एवम् आम्भिः, आमितौजिः। इहाकौशिके शलङ्कुः पठ्यते, कौशिके तु नड़ादौ। तथाच ण्यौ ष्यायने च उतो लोपो भवति। तेनाकौशिके शालङ्किः, कौशिके शालङ्कायनः।

४१८। य्वोर्युम्। य च व च तौ तयोः, इय उय यू, ताभ्यां मसितं करोति, युम्। दस्यान्तो दान्तस्तस्मिन्। स्वङ्गश्च व्यङ्गश्च व्यड़श्च व्यवहारश्च व्यायामश्च स्वागतश्च स्वध्वरश्च णन् च तत्, न तत् अस्वङ्गव्यङ्गव्यड़व्यवहारव्यायामस्वागतस्वध्वरणंस्तस्य। पूर्व्वसूत्रादाद्यच इत्यनुवर्त्तयन्नाह आद्यच इति। णित्ते आदौ इयुमि सति पदादृभिः। उदाहरणानि वैयश्विरित्यादीनि वक्ष्यति। आद्यच इति किं? दधिप्रियोऽश्वः मधुप्रियोऽश्वः शाकपार्थिवादि-

---

(१) कुर्व्वादेर्ण्यिरित्यादि वक्ष्यमाण वार्त्तिकसूत्रेण य'।

४१८। द्वार स्वर स्वः स्वस्ति स्वादुमृदु व्यल्कस श्वः श्वन् स्फाकृत स्व स्वाध्याय स्वग्रामैकन्यग्रोधानां श्वापदन्यङ्कोस्तु वा न त्विति श्वादेः।

(द्वार—न्यग्रोधानां ६।॥, श्वापद-न्यङ्कोः ६।, तु ।१।, वा ।१।, न ।१।, तु ।१।, इति ७।, श्वादेः ६। )।

द्वारादेरद्वितीयस्य न्यग्रोधस्य च य्वोरैम् स्यात्, श्वापदन्यङ्कोस्तु वा, न तु श्वादे-रिकारादौ ते।

वैयश्विः सौवश्विः। स्वङ्गादेस्तु स्वाङ्गिः व्याङ्गिः व्याडिः।

स्वाम्मध्यपदलोपे दध्यश्वः मध्वश्वः, तस्यापत्यं दाध्यश्विः, एवं माध्वश्विः। दान्ते इति किम्? इन स गतौ अत यत्, तस्येदं याँ यातमित्यादि। ननु कथं द्वाग्रौतिक इति चेत्, (१) सुपद्मालादिपाठेन पूर्व्वदस्यानिमित्तत्वात् (२)।

४१८। द्वार। एकयासौ न्यग्रोधश्चेति एकन्यग्रोधः, दान्तरानुपलक्षित इत्यर्थः (३)। द्वारश्च स्वरश्च स्वश्च स्वस्ति च स्वादुमृदुश्च व्यल्कसश्च श्वश्च श्वा च स्फाकृतश्च स्वश्च स्वाध्यायश्च स्वग्रामश्च एकन्यग्रोधश्च ते तेषाम्। श्वापदश्च न्यङ्कुश्च तत्तस्य, पुंस्त्वं सौत-

(१) द्वाग्रौतिकमित्यत्र कथं यकारस्य प्रथम इम् न स्यादित्याशङ्कायां सुपद्मादाविति।

(२) पूर्व्वपदस्य अनिमित्तत्वात् इकिनिमित्तोभूतयुमनिषेधादित्यर्थः। अत्र अस्मिति "अतोऽकारे अन् अतो"ति विहितो अन् तदन्तस्य न स्यात्, तदन्तस्य च सार्थे अण् इति वक्ष्यति। तेन श्वानहारी श्वाकोषोत्कादि।

(३) पदान्तरेणासमस्तमात्र इत्यर्थः।

## ४२० । व्यासादेर्ङक् ष्णौ (१) ।

( व्यासादेः ६।, ङक् ।१।, ष्णौ ७। ) ।

वैयासकिः सौधातकिः ।

आत्रेयः शौभ्रेयः ।

---

त्वात् । स्वा आदिर्यस्य सः स्वादिस्तस्य, आदिः पूर्व्वः (२) । एतेषां यवयोरदान्तत्वात् आद्यचः स्थानेऽजातत्वाच्च पूर्व्वेणाप्राप्ते वचनमिदम् । पूर्व्वसूत्रोदाहरणमाह वैयश्विरिति—विगतोऽश्वो यस्य स व्यश्वः, तस्यापत्यमित्यर्थेऽदन्तत्वात् ष्णिः, यस्यादावित् पश्चात् त्रिः । एवं शोभनोऽश्वो यस्य स स्वश्वः, तस्यापत्यं सौवश्विः । प्रत्युदाहरति—स्वाङ्गिरिति, शोभनमङ्गं यस्य स स्वङ्गः, तस्यापत्यम् इत्यादि वाक्यम् ।

४२० । व्यासा । व्यास आदिर्यस्य सः तस्य । व्यासादेर्ङक् स्यात् ष्णौ परे । वैयासकिरित्यादि—व्यासस्यापत्यं, सुधातुरपत्यम् ,इत्यादि वाक्यम् । ङित्वादन्त्यस्यात् । एवं वैश्वकिः नैषादकिः वारुड़किः चाण्डालकिरिति । एषामप्यन्धक-वृष्णि-कुरुभ्यश्चेति ष्णे प्राप्ते बाह्वादौ पाठः । येऽत्र (३) गोत्रवाचित्वेन प्रसिद्धास्तेभ्यो गोत्रवाचित्वे ष्णिः, तेन वाहुर्नाम कश्चित्, तस्यापत्यं वाहव इत्यादि ।

---

(१) व्यासादिर्बाह्वाद्यन्तर्गतः, व्यासादिश्चण्डालान्ताः षट् ।

(२) पदान्तरेण समासे पूर्व्वावयवीभूतः, अदंड़ः अगण्यादिरित्यर्थः । स्वनोत्तानृप्रभृतिशब्दाना मातिप्रसक्तिनिरासार्थमिदं वचनम् ।

(३) बाह्वादौ ।

ण्य-ट्न-क्षत्रियार्षेभ्यो युव-ण्योर्लुक् । ण्यात् ट्नात् क्षत्रियात् आर्षाच्च यून्यर्थे ण्योर्लुक् स्यात् । कुरोर्ब्राह्मणस्यापत्यं कौरव्यः (१) तस्यापत्यं युवा कौरव्यो (२) ब्राह्मणः । क्षत्रिये तु कौरव्यायणिः । ट्नात्—विदस्यापत्यं वैदः तस्यापत्यं युवा वैदः । एवमौर्वः । क्षत्रियात्—श्वफल्कस्यापत्यं श्वाफल्कः तस्यापत्यं युवा श्वाफल्कः । एवं वासुदेवः आनिरुद्ध इत्यादि । आर्षात्—वशिष्ठस्यापत्यं वाशिष्ठः तस्यापत्यं युवा वाशिष्ठः । एवं वैश्वामित्रः । भर्गशब्दो नडादिः, त्रैगर्त्ते (३) भर्गस्यापत्यं भार्गायणः, त्रैगर्त्तातिरिक्ते भर्गस्यापत्यं भार्गिः तस्यापत्यं युवा भार्गायण इति ।

आत्रेय इति—अत्रेरपत्यं ण्येयः, ञ्लेर्लुकि ययोर्लोपः, त्रिः । शौभ्रेय इति—शुभ्रस्यापत्यमिति वाक्यम् ।

अत्र्यादिर्यथा—

अत्रिः शुभ्र-सुनाम-दत्त-शवलाः शालूक-जिह्माशिनौ (४) ।
शाकस्त्वन्यतराजवस्ति-शकलाः कर्पूर-वीजाश्विनः (५) ॥
विश्वक्रन्दि शलाखला-परिधयः कद्रुः खडूरोऽजिरः ।
श्वापर्णी भरती खकण्डु-ककलाशौ भारताश्वौ दिशः (६) ॥

---

(१) अत्र कुरुशब्दात् कुर्व्वादित्वात् ण्यप्रत्ययः ।
(२) अत्र कौरव्यशब्दात् ण्यिप्रत्यये तस्यानेन लुक् ।
(३) अत्र त्रैगर्त्तस्त्रिगर्त्तेश स्वनेरपत्यमिति ।
(४) सुनामन् जिह्माशिन् ।
(५) शाकस्त्रि अन्यतर अजवस्ति बीज अश्विन् ।
(६) अत्र अश्वीरभारत अश्व दिश् ।

गङ्गा विमाता विधवा शलाका
किशोरिका विष्टपुरी मयूरः ।
प्रवाहणालीढ़-सुदत्तमश्म-(१)
कुमारिकाशोक-सुदत्त-गोधाः (२) ॥
वायुदत्त-शलाकाभ्रू-लेखाभ्रू-गन्धपिङ्गलाः (३)।
अन्तर्दृष्टी बलीवर्दी हरिती (४) विश्वचित्तया ॥
शतद्वारः शताद्वारः खरोन्मत्ता कुबेरिका (५) ।
रुक्मिणी रोहिणी ब्रह्मकृताकाशायनी (६) हरः ॥
विश्वी, भ्रुवो भ्रुवः ष्णेयी, वाशिष्ठे श्यामलक्षणौ (७) ।
अण्णयो ह्रस्विकारान्ता (८) वड़वा शुक्ले मता (९) ॥
विकर्णः काश्यपे प्रोक्तस्तथैव हि कुषीतकः (१०) ।
अम्बिका च चतुष्पादः पाण्डु-मण्डूक-दुष्कुलाः ।
मातापितृष्वसुः ष्णेयो डकारेददितिर्दितिः ॥

अश्विशब्दस्य ऋषिवाचकत्वात् ष्णे प्राप्ते पाठः । अश्वादन्तानां

(१) प्रवाहण आलीढ सुदत्त अश्मन् ।
(२) कुमारिका अशोक ।
(३) अत्र गन्धपिङ्गला अन्यत्र युवपिङ्गला इत्यपि पाठ ।
(४) एते त्रय इगन्ता । अन्तर्दृष्टिन् इत्यत्र अनुदृष्टिन् इत्यपि पाठ ।
(५) खड़ोन्मत्ता इति कुबेरिक इति च पाठ ।
(६) ब्रह्मकृत व्याकाशायन ।
(७) वाशिष्ठे वाच्ये श्यामलक्षणशब्दात्वलादौ ।
(८) ष्णप्रत्ययान्तभिन्ना द्विस्वरविशिष्टा इकारान्ता हरिप्रभृतय इत्यर्थ ।
(९) शुक्लमाचर्य्यविशिष्टार्थे वड़वाशब्दोऽश्वादिर्नान्यत्र ।
(१०) विकर्णशब्द कुषीतकशब्दश्च काश्यपे वाच्येऽश्वादि ।

पाठोऽतः ष्णिवाधनार्थः । शलाखलादिशब्दानां श्वावीबल्लानाम् अवृद्धानां (१) नदीभानुपीसंज्ञकानां शिवादित्वात् ष्णे प्राप्ते पाठः । शलाखलः इत्यत्र नामनि शलाथलशब्दोऽपीति कश्चित् । इह कद्रुशब्दः पिङ्गलवर्णार्थकः । तथाच मेदिनिः—"कद्रूस्त्रिषु स्वर्ण-पिङ्गे नागानां मातरि स्त्रियाम्" इति । कृकलास-रोहिणी-अजवस्तिप्रभृतयो येऽत्र चतुष्पाज्जातिवाचिनस्तेषाम् अचतुष्पा-ज्जातिवाचकत्वेऽपि ष्णेयार्थः पाठः । विधवाशब्दस्यावादित्वात् ष्णेये सिद्धे पाठः यदा दुःशीलाभिधायी तदैव बाधनार्थः । प्रवाहण-शब्दस्य सुभग-सुपञ्चालाद्योः पाठात् प्रावाहणेयः प्रवाहणेयः । गोधाशब्दस्य पाठो गोधाशब्दादेरारस्यानित्यत्वज्ञापनार्थः । भ्रुवो-ऽपत्यं भ्रौवेयः, ष्णेये भ्रुवादेयः । भ्रुव इति किं ? शालाकाभ्रेयः लैखाभ्रेयः, ष्णेये भ्रौलीपः । श्यामेयो वाशिष्ठः, लाक्षणेयो वाशिष्ठः; अन्यत्र श्यामायनः लाक्षणायणिः लाक्षण्यः । अण्णय इत्यादि— हरेरपत्यं हारेयः, एवं वैधेयः शाक्रेय इत्यादि । अण्णय इति किं ? दाक्षेरपत्यं दाक्षायणः, प्लाक्षायणः । इच इति किं ? मारीचः सौरुचः । वड़वाया अपत्यं वाड़वेयः शुक्रम्, अन्यत्र वाड़वः । वैकर्णेयः काश्यपः, कौषीतकेयः काश्यपः ; अन्यत्र वैकर्णिः कौषीतकिः । चतुष्पाद इति—कमण्डलुचतुष्पदजाति-विशेषः, तस्यापत्यमिति ष्णेये उलोपार्थं सूत्रमाह ।

---

(१) वाटिकोपवनवर्जितानाम् ।

## ४२१ । ओर्लोपोऽकद्रुपाण्डोरेये ।

( ओः ६।, लोपः १।, अकद्रु-पाण्डोः ६।, एये ७। ) ।

उवर्णस्य एये परे लोपः स्यात् न तयोः ।

कामण्डलेयः । तयोस्तु काद्रवेयः पाण्डवेयः । गाङ्गेयः (१) । माद्रेयः यौवतेयः ।

---

४२१ । ओर्लो । कद्रुश्च पाण्डुश्च तत् कद्रुपाण्डु तस्य । पुंस्त्वं सौत्रत्वात् । अनेन उकारलोपे कामण्डलेयः, एवं शितिबाहोरपत्यं शैतिबाहेयः । काद्रवेय इति नागमातृवाचकस्य नेह (२) ग्रहणं, तस्योवन्तत्वात् ण्येयप्राप्तेः(३) । पाण्डवेय इति । शिवादित्वात् णे पाण्डवः । दौष्कुलेयः दौष्कुलीनः । मातृष्वसृपितृष्वसृभ्यां ण्येयो डित्, मातृष्वसेयः पैतृष्वसेयः, पितृस्वस्रादित्वात् मातृष्वस्रीयः पैतृष्वस्रीयः । अदितेरपत्यम् आदितेयः, कुर्व्वादित्वात् आदित्यः, एवं दैतेयः दैत्यः । आकृतिगणोऽयम् ।

*भाष्यादुदाहरति माद्रेय इति—मद्र्या अपत्यम् इति वाक्यम् ।* एवं यौवतेयः (४) सौपर्णेयः कौम्भकारेयः । अनिताका गौः रुच्यते, तेन जम्ब्वा अपत्यम् जाम्बेयः (५) ।

---

(१) सूत्रे गाङ्गेय इत्यत्र तर्कवागीशमते अत्र्यादित्वात् ण्येयः ।

(२) इह अत्रादौ । (३) २८० सूत्रस्य टीका द्रष्टव्या ।

(४) युवतेरपत्यं यौवतेयः । अत्र युवत्यनड्वाहीति निपातस्थलेण युवन्शब्दात् ततस्य तिप्रत्ययस्यापि अत्र्यादित्वात् ण्येयः । पाच्छोवादीत्यनेन पक्षे ईपि कृते तु युवत्या अपत्यं यौवतेयः । अत्र ईवन्तत्वात् सुतरां ण्येय इति दुर्गादासकार्त्तिकेयौ ।

(५) इह उदन्तोदाहरणे कामण्डलेय इत्यपि बोध्यम् । तत्र कमण्डलूर्नाम काचित्, तस्या अपत्यमिति ण्येय ।

४२२। कल्याणी सुभगा दुर्भगा बन्धकी रजकी बलीवर्द्दी ज्येष्ठा कनिष्ठा मध्यमा परस्त्र्यनुसृष्ट्यनुदृष्टि कुलटाभ्य इनेयः ।

( कल्याणी—कुलटाभ्यः ५।।। इनेयः १। ) ।

सौभागिनेयः दौर्भागिनेयः ।

---

द्व्यचोऽनद्याः । नदीवर्जितात् स्त्रीत्यान्तात् द्व्यचः ण्येयः स्यात् । दात्तेयः गौपेयः । अनद्या इति किम् ? गोणा गोदावरी गौणः(१) । अहह्वाभ्यो नदीमानुषीसंज्ञाभ्य इति ण्ये प्राप्ते(२) ण्येय-विधानम् । एतत् (३) अन्यज्ञाता माहेय इत्युदाहरणेन ज्ञापितम् ।

४२२ । कल्याणी । कल्याणी च सुभगा च दुर्भगा च बन्धकी च रजकी च बलीवर्द्दी च ज्येष्ठा च कनिष्ठा च मध्यमा च परस्त्री च अनुसृष्टिश्च अनुदृष्टिश्च कुलटा च ताः ताभ्यः । जरतीस्थाने रजकीति लिपिकरप्रमादः, जिनेन्द्रबुद्धिपादैन जुधोरत्वेन साधितत्वात् । एभ्यस्तुदंगभ्यः पूर्व्वस्थितत्यन्तनिर्द्दिष्टस्य ण्येयस्य त्रिविपरिणामात् इनेयः स्यात्, यकारणकारं विनेत्यादेशः (४) । अतएव पित्वादीप् णित्वाद्वृद्धिः, (५) तेन काल्याणिनेयीत्यादि ।

---

(१) अतएव सूत्रे गाङ्गेय इति व्याख्यानोदाहरणं न सङ्गच्छते, गङ्गायास्तु नदीवाचकत्वात् ।

(२) शिवादौ "गङ्गा मातृपोसंज्ञा नदीसंज्ञा मता इह" इत्युक्तेः शिवादित्वात् ण्ये प्राप्ते इत्यर्थः ।

(३) एतत् द्व्यचोऽनद्याः इति वार्त्तिकप्रोक्तविधानमित्यर्थः ।

(४) एवञ्च इनेय स्यादित्यर्थः ।

(५) ण्यनिषेधादेवैतदिष्टार्थं सिद्धमिति वार्त्तिकीयः ।

इतो लुगिनेयस्य परस्त्रियाः । परस्त्रीशब्दात् परस्य इनेयस्य इतो लुक् स्यात् । पारस्त्रैणेयः, सुभगादित्वात् द्वयोर्वृद्धिः (१)। इह सत्यर्थकुलटाया ग्रहणं, तेन सत्याः कुलटाया अपत्यं कौलटिनेयः, भ्रवगादेराकृतिगणत्वात् ण्येयः । असत्यास्तु कौलटेरः कौलटेयः । सौभागिनेय इति । सुभगादिर्यथा—

भग जङ्गल हृत् सिन्धु धेनु वलजदोत्तराः (२) ।
वध्योगोऽगारवेणुश्च (३) शतकुम्भ-परस्त्रियौ ॥
इह-सर्व्व-परादिस्तु लोकः (४) प्रयोग इत्यपि ।
अधिहत्या चतुर्व्विद्या कुरुपञ्चाल एव च ॥
अधिदेवाधिभूतौ च, ण्ये राजपुरुषो मतः ।
सर्व्वात् पुरुषभूमी च तथान्तान्तरहृत् स्मृतः (५) ॥
अन्वादिर्यतिकोऽपि (६) स्यादनुसंवत्सरो मतः ।
अस्यहेत्यस्यहत्यौ (७) च तथा कुरुकतो मतः ॥
स्यात् पुष्करसदित्येव सूत्रपूर्व्वनडः स्मृतः (८) ।
अभिगमोऽनुहोडश्च प्राग्देशनगरान्तदाः (९) ॥

---

(१) दुर्गादासस्तु परस्त्रीशब्दाद्धिनेये कृते सुभगादिपाठसामर्थ्यात् ययोर्लोप ईकारस्य लोपाभावे सत्त्वे तत्रैव वृद्धिरित्याह ।

(२) भगान्त, जङ्गलान्त, हृदन्त, सिन्ध्वन्त धेन्वन्त, वलजान्त शब्दा इत्यर्थः ।

(३) अङ्गारवेणुरिति पाणिनीये ।

(४) इहलोक सर्व्वलोकः परलोकश्च इत्यर्थः ।

(५) सर्व्वपुरुषः सर्व्वभूमिः अन्तरहृत् इत्यर्थः ।

(६) अनुयतिक इत्यर्थः ।

(७) अस्यहेति, अस्यहत्य इत्यर्थः ।

(८) सूत्रनड इत्यर्थः ।    (९) प्राच्ये देशे वाच्ये नगरान्तशब्दा इत्यर्थः ।

नेन्द्रात्मघोदिवरुणास्तच्चे चेद्देवता अपि ।
अथ प्रवाहणः ण्योये, ण्येयान्तश्च स इत्यपि (१) ॥
घर्द्धादिपरिमाणञ्च भवेदाद्यजनद्यदि ।
अनीश्वरोऽशुचिर्येवावित्राकुशली मतौ ।
सुभगादिरिति ख्यातोऽसंख्यस्तन्त्रेषु तान्त्रिकैः ॥

भगादीनि दान्युत्तरदानि येषां ते। सुभगाया अपत्यं सौभागिनेयः। द्वयोर्द्वयोर्ञ्णिः। एवं सौभाग्यं दौर्भाग्यम्। महते सौभगाय दीयते, उद्गातादिषु छान्दसः। कुरुजङ्गले भवः कौरुजाङ्गलः। केचित् जङ्गलधेनुवलजान्ताः सुभगादौ न पठ्यन्ते, तन्मते कौरुजङ्गलः वैश्वधेनवः सौवर्णवलज इति। सुहृदो भावः सौहार्दं दौर्हार्दम्, इह मुख्यस्य (२) ग्रहणात्। आदिष्टस्य (३) तु सौहृद्यं सौहृदमिति। सुहृद इदं सौहार्दं। सक्तुप्रधानः सिन्धुः, मध्यपदलोपात् सक्तुसिन्धुः, तत्र भवः साक्तुसैन्धवः। सिन्धुशब्दः कच्छादिषु पठ्यते, तेन तदन्तविधिरपि ण्यः। वैश्वधेनवं समूहे, आधेनवम्। सौवर्णवालजम्। वध्योगशब्दो विदादिस्तस्यापत्यं ट्ठः वाध्योगः, अनन्तरापत्ये वाध्योगिः। अगारवेणुनामा कश्चित् तस्यापत्यम् आगारवैणवः, एवं शातकौम्भम्। परस्त्रिया अपत्यं पारस्त्रैणेयः, ण्येयस्य इनेयः। इहलोके भव ऐहलौकिकः, लोकोत्तरादिति

(१) ण्योये परे प्रवाहणशब्दः सुभगादिः, ण्येयान्तः स प्रावाहणेयशब्दोऽपि इति एवं सुभगादिरित्यर्थः। प्रावाहणेयशब्दस्य सुभगादिपाठफलं परत्र स्फुटीभविष्यति।

(२) अनादिष्टस्य हृच्छब्दस्येत्यर्थः।

(३) हृदयशब्दस्यादेशजातस्येत्यर्थः।

ष्णिकः। सर्व्वलोके विदितः सार्व्वलौकिकः, परलोके भवः पार-लौकिकः। प्रयोगे भवः प्रायोगिकः, अध्यात्मादित्वात् ष्णिकः। असिद्धत्यायां भवः आसिद्धात्यः। चतस्रो विद्याः चतुर्विद्याः चतुर्विद्या एव चातुर्वैद्यं, चतुर्वर्णादित्वात् ष्यः। परे तु विद्या-स्थाने वेदमाहुः। कुरुपञ्चाले भवः कौरुपाञ्चालः। अधिदेवे अधिभूते भवम् आधिदैविकम् आधिभौतिकम्, अध्यात्मादित्वात् ष्णिकः। राजपुरुषस्य भावः, ब्राह्मणादित्वात् ष्यणः, राजपौरुष्यम्। ष्णेर किं? राजपुरुषस्यापत्यं राजपुरुषायणिः। सर्व्वपुरुषस्येदं सार्व्वपौरुषं, सर्व्वभूमेर्निमित्तम् ईश्वरः संयोग उत्पातो विदितो वा सार्व्वभौमः। अन्तरहतोऽपत्यम् आन्तरहातिः। अनुशतिक-स्येदम् आनुशातिकम्। अनुसंवत्सरेण दीयते आनुसांवत्सरिकम्। अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः, गणपाठात् ष्यलुक्। अस्य हत्येऽभियुक्तः आस्यहात्यः ष्णः। अत्र परैकदेशिनः अस्यहेति-अस्यहत्यौ शब्दौ न पठन्ति। अस्यहत्यशब्दोऽध्याये वर्त्तते। कुरुकतस्यापत्यं कौरुकात्यः, गर्गादित्वात् ष्यञः। पुष्कर-सदोऽपत्यं पौष्करसादिः, बाह्वादित्वात् ष्णिः। सूत्रपूर्व्वेति— सूत्रं पूर्व्वं यस्य, स चासौ नड़श्चेति सूत्रनड़ः, तस्यापत्यं सौत्रनाड़िः। अभिगमम् ऋच्छति आभिगामिको गुणः। अनु-होड़ेन पठति आनुहौड़िकः। प्राग्देशेति—नगररूपमन्तरं येषां ते प्राग्देशे वर्त्तमानाश्चेत् सुभगादयः (१)। पुण्ड्रनगरे भवः

(१) येषां शब्दानामन्ते नगरशब्दोऽस्ति तादृशशब्दा यदि प्राचां देशनामानि भवन्ति, तदा ते सुभगादय इत्यर्थः।

पौण्ड्रनागरः सौह्मनागरः। प्राग्देश इति किं? मद्रनगरे भवः माद्रनगरः। नेन्द्रान्त इति—इन्द्रोऽन्तो यस्य स इन्द्रान्तः, घं आदिर्यस्य स घांदिः, घांदिश्चासौ वरुणश्चेति घांदिवरुणः, इन्द्रान्तश्च घांदिवरुणश्च, तौ न विद्येते यासु ताः, तस्मे इति—तच्छब्देन देवतोच्यते, तासाम्चः द्वन्द्वः तस्मिन्। तथाच देवताना घं सति उक्तलक्षणदेवतावाचकशब्दाः सुभगादौ पठ्यन्ते। तेन अग्निश्च मरुच्च, तौ देवते अस्य, आग्निमारुतं कर्म्म क्रियते। यो देवताद्वन्द्वः सूक्तसम्बन्धी हविःसम्बन्धी वा तत्रैवायं विधिः। इह तु न भवति—स्कान्दविशाखः, ब्राह्मप्राजापत्यम्। नेन्द्रान्तघांदिवरुणा इति किं? सौमेन्द्रम्, ऐन्द्रावरुणं (१) हविः। इह तु स्यादेव—ऐन्द्राग्नम् आग्नीवारुणम् (२)। अथ प्रवाहण इति—अथानन्तरं प्रवाहणशब्दोऽश्वादिषु पठ्यते, अतएव तस्य ग्रहणं, तेन प्रवाहणस्यापत्यं प्रावाहणेयः, तस्यापत्यं युवा प्रावाहणेयिः। एतदादिमर्व्वं (३) सुपञ्चालादावपि पठ्यन्ते। तेन पूर्व्वदस्य त्रि-विकल्पः, प्रवाहणेयः प्रवाहणेयिः। अर्द्धादीति—आदिश्चासौ अच्चेति आदच्, न अत् अनत्, आदच् अनत् यस्य तत्, परिमाणविशेषणम्। तथाच अकारभिन्नाच् अर्द्धादि परिमाणं सुभगादौ पठ्यते। अर्द्धद्रोणेन क्रीतम् आर्द्धद्रौणिकम्, आर्द्धकौड़विकम्। अनदिति किम्? अर्द्धप्रस्थेन क्रीतम् आर्द्धप्रस्थिकम्।

---

(१) अत्र वरुणदेवतात्वेऽपीति [illegible] पर, ऐन्द्र इत्यादि [illegible]।

(२) अत्र अग्नेर्दीर्घो [illegible]।

(३) प्रावाहणादयः [illegible]।

आर्द्धप्रास्थिकम् इति कयित् । सुपञ्चालादित्वात् अर्द्धद्रौणिकम्, अर्द्धकौड़विकम् । एवम् आनैश्वर्य्यम् अनैश्वर्य्यम्, आशौचम् अशौचम्, आचैवत्नम् अचैवत्नम्, आकौशलम् अकौशलम्, आनैपुणम् अनैपुणम् इत्यादि । अर्द्धस्य: सुभगादिः तन्त्रे तान्त्रिकैरुक्तः, तेन उदकशुद्धस्यापत्यम् औदकशौद्धिरित्यादि । प्रसङ्गसङ्गत्या (१) साहित्येन (२) सुपञ्चालादिरिह निरूप्यते ।

सुसर्व्वार्द्धाज्जनपदा, अथामद्रा दिशश्च (३) ते ।
प्राग्ग्रामनगरा दिग्भ्योऽवयवादृतुवाचिनः ॥
संवत्सरस्तु संख्यादिः, संख्या संख्यादिरेव च ।
अधानपरिमाणञ्च संख्यादि चेदनामनि ॥
अभविष्यति संख्यादि वर्षं, प्रोष्ठपदास्तु जे ।
अथ प्रवाहणः ण्येये ण्येयान्तश्च स इत्यपि ॥
अर्द्धादि परिमाणञ्च भवेदाद्यजनश्चदि ।
अनीश्वरोऽशुचिश्चैवाचेत्रश्चाऽकुशलौ मतौ ॥
अनिपुणश्च, कोऽप्यक्तायथातथा-यथापुरौ ।
सुपञ्चालादयश्चैते कथ्यन्ते कोविदोत्तमैः ॥

सु सर्व्व अर्द्ध इत्येतेभ्यो जनपदाः सुपञ्चालादौ पठिताः, तेन सुपञ्चाले भवः सुपाञ्चालकः, एवं सर्व्वपाञ्चालकः । अथानन्तरं ते जनपदा मद्रभिन्ना दिक्पूर्व्वाश्चेद्भवन्ति तदा सुपञ्चालादौ

(१) सुभगादिगणव्याख्याने सुपञ्चालादिगणोल्लेखेनेत्यर्थं ।
(२) सूत्रे सुभग सुपञ्चालाद्योरित्येकत्र पाठेनेत्यर्थः ।
(३) दिश इति पञ्चम्यन्तं, तेन दिग्वाचकशब्देभ्यः परवर्त्तिन इत्यर्थं ।

पठ्यन्ते। यथा पूर्व्वपाञ्चालक उत्तरपाञ्चालकः दक्षिणपाञ्चालकः। अमद्रा इति किं? पौर्व्वमद्रः, आपरमद्रः। दिग्वाचकेभ्यः प्राग्देशवर्त्तिग्रामनगरवाचकाः सुपञ्चालादौ। यथा पूर्व्वा चासौ इषुकामशमी चेति, तत्र भवः पूर्व्वेषुकामशमः पूर्व्वकार्ष्णमृत्तिकः। नगराणां तावत्—पूर्व्वस्मिन् पाटलिपुत्रे भवः पूर्व्वपाटलिपुत्रकः पूर्व्वकान्यकुब्जः। नगराणां ग्रामग्रहणेनैव सिद्धे भेदेन यत् उभयोरुपादानं तत् सम्बन्धभेदप्रतिपत्त्यर्थम् (१)। तथाच दिक्पूर्व्वसमुदायं पूर्व्वेषुकामशम्यादि ग्रामनामधेयम्, इह तु दिग्वाचकं विनैव पाटलिपुत्रादिशब्दो नगरमाह। पूर्व्वत्र ग्रामवाचकसमुदायस्य दिक्पूर्व्वावयवादुत्तरस्य ञिः। इह तु दिग्वाचकान्नगरस्योत्तरस्य ञिरिति। अवयवादिति—ऋतुशब्दस्य समभिव्याहारात् ऋत्ववयववाचिनः पूर्व्वदात् ऋतवः सुपञ्चालादौ पठ्यन्ते। यथा-पूर्व्वं वर्षाणां (२) पूर्व्ववर्षासु भवः पूर्व्ववार्षिकः, पूर्व्वहैमन्तः। अवयवादिति किं? पूर्व्वासु (३) वर्षासु भवः पौर्व्ववार्षिकः। संख्यापूर्व्वसंवत्सरः सुपञ्चालादौ पठ्यते। यथा द्वौ संवत्सरौ व्याप्याधीष्टो भृतो भूतो भावी (४) वा द्विसांवत्सरिकः।

---

(१) दिग्वाचकशब्दैः सह सम्बन्धेन यो भेदस्तस्य प्रतिपत्तिनिमित्तमित्यर्थः।

(२) वर्षाणां पूर्व्वभाग इत्यर्थः।

(३) अतीतास्वित्यर्थः।

(४) अधीष्टः सत्कृत्य व्यापारितः। भृतो वेतनेन क्रीतः। भूतः स्वसत्तया व्याप्तकालः। भावी तावन्तमेवानागतकाल इति सिद्धान्तकौमुदी। कालमधीष्टोऽध्यापय इत्युदाहरणे काशिका च (५।१।८०) "ननु अध्येषणं भरणं च इहैवं क्रियते, तेन कथं कालो व्याप्यते? अध्येषणभरणे क्रियार्थे। तत्र स्वभूतया क्रियया कालो व्याप्यमानकालाश्रयेण व्याप्त इत्युच्यते"।

संख्यापूर्व्वसंख्यायि सुपद्मालादौ, यथा—द्वे षष्टी व्याप्याधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः, द्विसाप्ततिकः । द्विषष्ट्यादिशब्दाः संख्यासु वर्त्तमानाः कालाधिकारीय-त्यमुत्पादयन्ति (१)। संख्यादि मानवर्ज्जितं परिमाणमसंज्ञायां सुपद्मालादौ पठ्यते। यथा—द्वौ कुड़वौ मानमस्य द्विकौड़विकः, द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम् । अनामनि इति किं? पाञ्चलोहितिकः पाञ्चकपालिकः। अमान इति किं ? द्वाभ्यां मानाभ्यां क्रीतं द्वैमानम् । अत्र केचित् वा कुलिजस्य ग्रहणं, तेन द्विकौलिजिकं द्वैकुलिजिकमित्याहुः । अभविष्यति संख्यादि वर्षं सुपद्मालादौ पठ्यते । द्वे वर्षे व्याप्याधीष्टो भृतो भूतो वा द्विवार्षिकः त्रिवार्षिकः। भविष्यति तु त्रीणि वर्षाणि व्याप्य भावी, त्रैवर्षिकः । तथाच—

यस्य त्रैवर्षिकं (२) धान्यं निहितं भृत्यवृत्तये ।
अधिकं वापि विद्येत स सोमं पातुमर्हति ॥ इति महाहस्तिः ।

---

(१) कालाधिकारे य प्रत्ययो विहित एभ्य' स एव स्यात् । अतएव ठञेकादि त्यस्य टीकाया "कालेभ्य" इति वक्ष्यमाणवार्त्तिकेन विधान' ।

(२) वर्षस्याभविष्यति ७।३।१६। इति पाणिनि'। संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति । द्विवर्षं अधीष्टो भृतो भूतो वा द्विवार्षिक । त्रिवार्षिकः । अभविष्यतीति किम ? यस्य त्रैवर्षिक धान्यं निहितं भृत्यवृत्तये । अधिक वापि विद्येत स सोमं पातुमर्हति । त्रीणि वर्षाणि भावीति त्रैवर्षिकमिति काशिका ।

सिद्धान्तकौमुद्या तद्धितेषु कालाधिकारे पूर्व्वोक्तसूत्रस्यैषा वृत्ति "उत्तरपदस्य वृद्धि' स्या"दिति । द्विवार्षिक' । भविष्यति तु द्वैवर्षिक इत्युदाहृतम् ।

वर्षस्याभविष्यति इति संक्षिप्तसारे सन्धिपादे [illegible] सूत्रम् । द्वे वर्षे अधीतो यस्य द्विवार्षिक' । भविष्यति तु द्वे वर्षे भावि द्वैवर्षिकम् इति वृत्ति' । अत्र गोयीचन्द्र —संख्यावाचकात् परस्य वर्षशब्दस्य तद्धिते णिति परे उत्तरपदस्यादौ

जे इति जातार्थो निर्दिश्यते, तत्र यो विहितस्तस्मिन् प्रोष्ठपदाशब्दः सुपञ्चालादौ पठ्यते। यथा—प्रोष्ठपदा नाम नक्षत्रं, ताभिर्युक्तः काल इत्यर्थे ण्णः, तस्याविशेषे लुप् (१) प्रोष्ठपदा, तत्र जात इत्यर्थे ऋतुनक्षत्रात् ण्णः, प्रोष्ठपादः। ज इति किं? प्रोष्ठपदासु भवः कुशलो वा इत्यर्थे ण्णो प्रौष्ठपदः। प्रोष्ठपदा इति निर्देशात् तत्पर्य्याय-भाद्रपदाशब्दस्यापि ग्रहणं, तेन भाद्रपादः, अजे तु भाद्रपद इति। अथ प्रवाहण: ण्येय इत्यादिप्रयोगाः प्रदर्शिताः। केऽपीत्यादि आहुरिति शेषः, तेन अयायातथ्यं अयायापुर्य्यं, परमते तु आयथातथ्यम् आयथापुर्य्यमित्यपि।

---

वृद्धिर्भवति ह्यभविष्यदर्थे चेत्तद्धितो विहितः। द्विवार्षिक इति तु पूर्ववत् ठिकण्

* * यस्य त्रैवर्षिकं धान्यं स सोमं पातुमर्हतीति भाष्यर्थेऽत्र तद्धितः।

मुद्रितस्य कस्यचित् सुपद्मव्याकरणपुस्तकस्य वृद्धिप्रकरणे "द्विप' परस्यामङ्ख्या"मिति १० सूत्रस्य वृत्तौ द्वैवार्षिकं भक्तं, त्रैवार्षिकं धान्यमिति, तथाविधस्य कस्यचित् कलाप-व्याकरण-पुस्तकस्य च चतुष्टयवृत्तौ "वृद्धिरादौ सणे" इति ३११ सूत्रस्य टीकायां भाविन्यर्थे तु द्वे वर्षे भावि द्वैवार्षिकमिति लिपिकरप्रमादः, अन्यथा ह्यभविष्यदर्थे संख्यादिवर्षशब्दस्योत्तरपदवृद्धेः नियमस्य भविष्यदर्थक प्रत्युदाहरणे पुनस्तस्यैवोत्तरपदस्य वृद्धेः सर्वथैवासङ्गतेः, काशिका सिद्धान्तकौमुदी संक्षिप्तसार-मुग्धबोधटीकाकार लघुभाष्यन्यायपञ्चानन तत्तट्टकमुग्धबोधमतविरुद्धत्वाच्च।

यस्य त्रैवर्षिकं धान्यमिति श्लोकस्तु ब्रह्मवैवर्तपुराणे षष्टितमाध्याये श्रीकृष्ण-जन्मखण्डे नारदं प्रति नारायणवाक्ये यस्य त्रैवार्षिकं धान्यं निहितं भृत्यवृत्तये इति रूपेण पठितः, विद्यासागरेण च उत्तरचरितस्य प्रथमाङ्के सोमपीतीत्यस्य व्याख्यायां तथैवोद्धृतः पाठः। एवं मनुसंहितायाः एकादशाध्याये ७म श्लोके "यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये" इति पाठो दृश्यते। अतोऽत्र यद्युक्तं तत्सुधीभिश्चिन्त्यमिति।

(१) रूपे कविराजस्य टीकायां "अविशेषे लुबि"ति वार्त्तिकरूपं द्रष्टव्यम्।

## ४२३। क्षुद्रागोधाभ्यो वैरारौ।

( क्षुद्रा-गोधाभ्यः ५।।।, वा ।१।, एरारौ १॥ )।

नाटेरः नाटेयः, गौधारः गौधेरः गौधेयः।

गार्ग्यः वात्स्यः जामदग्न्यः पाराशर्य्यः।

---

४२३। क्षुद्रा। क्षुद्राश्च गोधाश्च ताभ्याभ्यः। बनिर्देशो गणार्थः। एयस्य एरविधानसामर्थ्यात् वा एयस्य स्थितिः। क्षुद्रादिभ्य एयस्य एरो वा स्यात्। क्षुद्रादयस्त्वङ्गहीनाः शील-हीनाः सह गोधया। गोधादिभ्य एयस्य आरो नित्य 'स्यात्, वा शब्दस्य व्यवस्थया।

गोधादयस्तु---गोधा जड़ो भृगी चैव पण्डः काकी च मूषिका।

नाटेर इति—नट्या अपत्यम् इति वाक्यं, पक्षे नाटेयः। एवं यदा कुलटाशब्दोऽसतीवाचकस्तदा कौलटेरः कौलटेयः, शीलहीनत्वात्। अङ्गहीनायास्तु काणाया अपत्यं काणेरः काणेयः। एवं कौणेरः कौणेय इत्यादि। गौधार इति—गोधाया अपत्यम् इति वाक्यं, क्षुद्रादिपाठात् गौधेरः, अत्रगादौ पृथक् पाठात् गौधेय इति। जडस्यापत्यं जाड़ारः, भृग्या अपत्यं भार्गारः, पण्डस्यापत्यं पाण्डारः, काक्या अपत्यं काकारः, मूषिकाया अपत्यं मौषिकारः, बाह्वादित्वात् मौषिकिः।

चटकाभ्यामैरो, लुक् तु स्त्रियाम्। चटकाच्च चटकायाश्च परस्य ण्येयस्य ऐरः स्यात्। स्त्र्यपत्ये ऐरस्य लुक्। अतएव

चटकात् ण्येयः (१)। चटकस्य चटकाया वा अपत्यं चाटकैरः। स्त्रियान्तु चटकस्य चटकाया वा अपत्यं स्त्री चटका।

गार्ग्य इत्यादि—ननु गर्गादि-नड़ादिभ्यां गोत्र एव ण्य-ण्यायनौ, तत् कथमपत्यसामान्ये विहित (२) इति चेत् सत्यं, जामदग्न्यः पाराशर्य्य इत्युभाभ्याम् अनन्तरे ण्यस्य, द्रौणायन इत्यत्र ण्यायनस्य च दर्शनात् सामान्येनोक्तम्, अन्यत्रान्तर एवेति भावः (३)। गर्गस्य गोत्रापत्यं गार्ग्यः, अनन्तरे तु अतः णिः गार्गिरित्यादि।

गर्गादिर्यथा—

*गर्गो वत्साकृती (४) रेभो व्याघ्रपादवटः (५) शठः।*
अजो विलस्त्यग्निवेशौ (६) जरमाणो धनञ्जयः॥
हयो विश्वावसुः शङ्खो वभ्रु-धूम-पुलस्तयः (७)।
संस्कृतिर्वेदभृद्धीनयोगोवाजस्वसे (८) मधुः॥
विप्रेऽश्व लोहितो मण्डुर्जिगीषुर्गुह्यलुर्लतुः।
कपि बोध-वतण्डाश्चाङ्गिरसेऽप्यथ कौशिके॥

---

(१) एवं चटका च चटकश्च ताभ्यामित्येकशेषः। श्वश्रादिगणे चटकशब्दस्य तत्पत्येऽपि इह सूत्रकरणादेव तस्मात् ण्येय इत्यर्थः।

(२) ण्य इति शेषः।

(३) अनन्तरे अपत्ये विहिते पौत्रादौ गोत्रे वाच्ये इत्यर्थः।

(४) वत्स आकृति। (६) विलस्ति, अग्निवेश।

(५) व्याघ्रपाद्, अवट। (७) वर्म्मन् पुलस्ति।

(८) संस्कृति, वेदभृत् शीनयोग, अश्वमार्ष्टि वाजसन्।

बभ्रु-शंखित-सुम्निन्द्र(१)-मनायी-मनु-कच्छपाः ।
मन्तुः शङ्कुः कतस्तण्डस्तरुक्षो (२) रुक्ष-मङ्कु च ।
तनुः कुरुकतश्चैव तलुक्ष-शकलेन्द्रहः (३) ॥
कण्वोऽगस्ति-विरोहितौ वृषरहपूर्व्वौ गणः (४) पिप्पलूः
कृष्णो भण्डिल-शण्डिलौ च चिकितौ दल्भस्तितिक्षो(५) भिषक् ।
गोकक्षारटकावुलूक-सुपलौ स्थूरा सुलाभ्येकलू (६)
जीतौ मन्तित भिष्णुजाऽश्मरथ गोलुन्दं तथा कुण्डिनौ ॥
अनडुद्यज्ञवल्कौ च पर्णवल्कः पराशरः ।
जतूकर्णः शर्कराक्षः पूतिमाषश्च पिङ्गलः ।
मुद्गलो बृहदग्निश्च कुटीभज्जमदग्नि च ।
लोहितादिश्च कण्वादिर्गर्गादौ परिकीर्त्तितः ॥

गर्गस्याऽन्तरापत्यमिति वाक्यं, ष्योत्र यञोर्लोप इति यकारलोपे ञिः । स्त्रियां षित्त्वादीषि गार्गी, ष्फायनपक्षे गार्ग्यायणी । एवं सर्व्वत्रोहनीयम् । इह पुलस्तिशब्दपाठात् ञ्ये पुलस्त्यः । पुलस्त्य-शब्दस्य तु ञ्ये पौलस्त्या इति । यद्यपि वेदभृच्छब्दादृषिष्णी कृते पश्चात् स्वार्थे ष्योत्र वेदभृत्य इति सिध्यति, तथापि ञ्ये लुकि वेदभृत इति सिद्धार्थः पाठः, तत्र तु वेदभृत्या इति । वाजशब्दोऽत्र गर्गादिः, तेन वाजस्यापत्यं वाज्यः; ञे तु

(१) स्रुतु, इन्द्र ।
(२) कत, तण्ड, तरुक्ष ।
(३) शकल, इन्द्रह ।
(४) वृषगण, रहगण ।
(५) दल्भ, तितिक्ष ।
(६) गोकक्ष, अरटक, उलूक, सुपल, स्थूरा, सुलाभिन्, एकलू ।

४२४ । ओदौतोऽच्वत् तक्षादय-क्यङ्याः ।

( ओत्-औतः ५।, अच्वत् ।१।, तक्षादय-क्य-ङ्याः-१।।। ) ।

ओदौद्भ्यां परस्तसंज्ञः क्तसंज्ञकय यः क्यङी च अच्वत् स्यात् ।

बाभ्रव्यः । नाड़ायनः गार्ग्यायणः दाक्षायणी । पैतृष्वस्रीयः मातृष्वस्रीयः । रैवतिकः आश्वपालिकः । यादवः आङ्गिरसः ।

---

सौवाजिः । एतेनान्येषां येऽपि सौगार्ग्यं इत्यादि । माधव्यो विप्रः, अन्यत्र माधवः ।

यकलान्ताल्लोहितादेः (१) ष्णस्य स्त्रियां ष्णायनित्यम् । तेन लौहित्यायनीत्यादि । कपेरन्तरापत्यं काप्यः, स्त्रियां काप्यायनी । एवं बौध्यः बौध्यायनी, वातण्ड्यः वातण्ड्यायनी । अनाङ्गिरसे तु कापेयः बौधिः, वातण्डः शिवादित्वात् ष्णः । अनाङ्गिरसेऽपि गर्गादित्वात् ष्णयः, वातण्ड्यः, स्त्रियां वातण्ड्यायनी वातण्डीति कश्चित् ।

४२४ । ओदौ । ओच औच तत्तस्मात्, अजिव अच्वत्, तश्च क्षश्च तौ तक्षौ, त-क्षतोर्यः तक्षादयः, तक्षादयश्च क्यश्च ङ्यश्च ते । बाभ्रव्य इति—बभ्रोरपत्यं ष्णयः, न्वोर्लोपौतावीति उवर्णस्यौकारः, यस्याच्वद्भावात् यलायवायाव इत्यवादेशः । कौशिक एवाभिधानम्, अन्यत्र बाभ्रवः । तनुस्थाने तन्तुरिति पठत्यपरः । कतो मुनिविशेषः, तस्यान्तरापत्यं कात्यः, स्त्रियां कात्यायनी ।

---

(१) गर्गादौ लोहितशब्दादारभ्य यकलशब्दपर्यन्तेभ्यः शब्देभ्य इत्यर्थः ।

कण्वादेः प्रयोजनमग्रे वक्ष्यते। गर्गादेराकृतिगणत्वात् वामरथ-शब्दः कण्वादौ ज्ञातव्यः। वामरथस्यापत्यं वामरथ्यः, द्वे तु वामरथ्याः, स्त्रियां वामरथ्यायनी वामरथ्यौ, वामरथ्यस्यापत्यं युवा वामरथ्यायनः, वामरथ्यस्य छात्रा वामरथाः। सङ्घाङ्कघोषलक्षणानि वामरथानि, (१) वामरथशब्दादगोत्रेऽप्युपचारात् (२)।

कुर्व्वादेरपिङ्गोराजश्वशुरात्त्वनिम्मनोस्तु संच। कुर्व्वादेर्गोत्रेऽगोत्रे च ण्योऽपित् स्यात्, ण्य इत्यर्थः, गोराजश्वशुरेभ्यस्तु अनित् इत्शून्यो, य इत्यर्थः, मनोस्तु ययोगे संच, न इत्। कुरोरपत्यं कौरव्यः कौरव्यौ कौरव्या इत्यादि, स्त्रियां कौरव्यायणी कौरव्या। केचित् कौरव्यायणीति नित्यमाहुः। एवं लाक्षण्यः लाक्षण्यौ लाक्षण्याः। स्त्रियां लाक्षण्या इत्यादि।

कुर्व्वादिर्यथा—

कुरु कवि गर्गर-गणिका-कूटं, शकल शलाका सत्यंकारम्।
शाकः शभ्रो मति-मद्रूपं, तथा लक्षण-वड़भीकारम्।
एरका-सुर केशोरि रथकारच पङ्क्तिका।
पिण्डीमूलेन्द्रजाली वाक् शकभूरविमारकः (३)।

(१) वामरथस्यापत्यं वामरथ्यस्तस्येमानि (सङ्घाङ्कघोषलक्षणानि) इति वामरथानि। अत्र वामरथ्यशब्दात् सङ्घादिषु वाच्येषु "ञिण्ण्यत्र-ट्ठात् संघाङ्कघोषलक्षणे" इति वक्ष्यमाणवार्त्तिकेन इदमर्थे ष्णः, तस्मिन् अपत्यण्यस्य लोपे वामरथानीति। वार्त्तिकन्तु विकारश्चेति सूत्रस्य टीकाशेषे द्रष्टव्यम्।

(२) ननु वामरथशब्दस्य गर्गादित्वात् कथमपत्यसामान्ये ण्यत्र इत्यत आह वामरथशब्दादिति। उपचारात्—*गोत्रत्वारोपादित्यर्थः*।

(३) पिण्डीमूल, इन्द्रजालि, वाच्, शकभू अविमारक।

एकजित् श्यावनायश्च पितृभृत्-पथिकारिणौ।

हन्ता भर्त्ता शूर्पणायो दामोष्णीषिरिनस्तथा (१)।

भर्वः श्यावरथः श्यावपुत्रः येनान्तदा मताः।

कारवः, क्षत्रिये सम्राट्, केशिन्याः केशिनो भवेत्।

ष्णे भ्रातुर्वम् च तस्यैव (२) वेणः केनचिदीरितः।

यमादित्यादितिश्चैवाऽपश्चाद्यादिपतिर्दितिः (३)।

पश्चादिर्यथा—

पश्चाश्व-कुल-राष्ट्रार्य-गण-वास्तु-धनं वसु।

विद्या-शत-नर-क्षेत्रं प्राण-धान्य-सभा-जगत्॥

रथकारशब्दोऽत्र जातिवचनः, शिल्पिवचनस्तु कारुत्वेनैव प्राप्तः। श्यके भवतीति श्यकभूरिह पाठबलात्सकारागमः। हारिषेण्यः वैष्वक्सेन्यः, बाह्वादित्वात् हारिषेणिः वैष्वक्सेनिः। एवं तान्त्वाय्यः तान्त्वायिरित्यादि। सम्राजोऽपत्यं साम्राज्यः, क्षत्रियः। अन्यत्र बाह्वादेराकृतिगणत्वात् साम्राजिः। केशिन्या अपत्यं कैशिन्यः, ष्णे केशिनादेशः, अन्यथा पुंवद्भावे (४) कैश्यः स्यात्। भ्रातुरपत्यं भ्रातृव्यः (५) ष्णस्य वम्, पितृष्वस्रादित्वात् भ्रात्रीयः। कस्य-

---

(१) दामोष्णीषि, इन।

(२) भ्रातृशब्दात् ष्णे सति तस्य ष्णस्यैव वम् भवति, न इन्।

(३) यम, आदित्य, अदिति, पश्चादिगण भिन्नशब्दपूर्वक पतिशब्द, दिति।

(४) पुंवद्भावविधायकसूत्रं ३०८ सूत्रस्य टीकायां द्रष्टव्यम्।

(५) भ्रातृव्यौ भ्रातृज द्विषौ इत्यमरः। भ्रातुः सपत्नश्च भ्रातृव्यौ। अत्र द्विट्पक्षे व्युत्पत्त्यर्थं, तेन सामान्यद्विषेव न तु भ्रातृद्विट्। भ्रातृपुत्रः सपत्नश्च भ्रातृव्याविति महेश्वरः। तन्मते भ्रातृव्यशब्देन भ्राता सपत्नेति अनन्यम्—इति प्रबोधरत्नमालाटीका।

चिन्मते वेणशब्दस्य कुर्व्वादित्वात् वैण्यः, तथा च—वैण्यं पृथुं हैहय-मर्ज्जुनञ्च इति । वेणाच्छन्दसीति पाणिनिसूत्राच्छान्दसमिदम् । यमस्यापत्यं याम्यः । आदित्यस्यापत्यम् आदित्यः, ण्ये ण्यलोपः(१) अदितेरपत्यम् आदित्यः । प्रजापतेरपत्यं प्राजापत्यः, एवं वैश्वपत्यः । दितेरपत्यं दैत्यः । पश्वाद्यादियतेस्तु—पाशुपतः जागतम् इति कुर्व्वादि । गोरपत्यं गव्यः । राज्ञोऽपत्यं राजन्यः, क्षत्रियेऽभिधानम्, अन्यत्र राजनः.मनुवर्ज्जेत्यादिना नियमेन न नलोपः, इनयन् इति नियमात् उड्लोपः । श्वशुरस्यापत्यं श्वाशुर्य्यः, संज्ञायां बाह्वादित्वात् श्वाशुरिः । मनोरपत्यं मनुष्यः, ये सन्, न इन् । नाड़ायन इति—नड़स्यान्तरापत्यम् इति वाक्यम् ।

नड़ादिर्यथा—

नड़ भण्डित रोहित शङ्ख पुटं
पद (२) काष चरं गिरि चक्र कुटम् ।
बिद काश वनं कुल धूम जलं
किर चित्र सुरं खड़ लोह नरम् ॥
अड़िन्नो भड़लो भड़ितः प्रकृति-(३)
चपलो नमकः खदिरो मिमतः ।
चरकः शकटः शलभी बदरः
स्थिरकः खरपः सुमनोऽञ-जनाः ॥

---

(१) अदितिशब्दस्य कुर्व्वादौ पाठात् ण्ये आदित्यः, आदित्यशब्दस्यापि तत्र पाठात् पुनर्ण्ये यथोर्लोप इत्यकारयकारयोर्लोपः ।

(२) पाद इति पाणिनीये ।

(३) प्रकृतिरित्यत्र प्रकृत इति संक्षिप्तसारे, प्रकृत इति पाणिनीये ।

सायक दासक किङ्कर दुर्ग
कातर काखल (१) पिङ्गल धूम्रम् ।
भण्डिल कौशल सुपक विशालम्
आतप चूप(२)मख विशम्पम् ॥
ओजः खरप पञ्चाल वामोदस्य धरित्रिणः ।
अश्मा गोमी च गोलाच (३) जलन्धर युगन्धराः ॥
कुमारः शिंशपा काव्यो वीणार्षीवितिशीतिकौ (४) ।
आनडुह्यार्जुनौ दण्डी श्यामो वाग्मी च सप्त च ॥
इन्द्रासुषौ निगुः (५) काश्यो राजन्य तिक पिञ्जराः ।
द्वीपः प्राणो दास मित्र मुञ्जार्को त्वण शूद्रकाः ॥
धनुर्ग्रीवः श्रविष्ठा च विश्वानरस्य हंसकः ।
मण्डपाकश्मन्(६)स्तम्भ-खर्जूर-चमसश्च चरम् ।
पीलो हस्ती वैश्य(७)वाप्यौ सुसत्यः शोण-कामुकौ ।
ब्राह्मणोडुम्बरालोह द्रोण जीवन्त पर्यताः ॥
समाउवलाग्रदण्डं (८) स्यात् गणद्रु तु छ्योगिके ।
वाग्गिष्ठे तु वणो विष्रे कण्गो जातस्तु पूरुषे ॥

(१) कातल इति पाणिनीये ।
(२) पाणिनीये अभिधानारे च चूप इत्यत्र तुल्यचकारो दृश्यते ।
(३) गोमाद इति पाणिनीये ।
(४) बीज. बर्ह इतिच इतिच ।
(५) भिगु इति पाणिनीये ।
(६) मण्डमकरन्दः पाणिनीये अभिधानारे च न दृश्यते ।
(७) वैश्य इति पाणिनीये अभिधानारे च ।
(८) सम सम्भव. रुप. दपद ।

दर्भे आग्रायणो भर्गस्त्रैगर्त्ते शुनकस्तथा।
वात्स्ये त्र्यपावग्निशर्मा स्याच्छरद्वांस्तु भार्गवे॥
भारद्वाजे तु आत्रेयो भरद्वाजः शपस्तथा।
आत्रेयेऽथ ष्फायने च क्रोष्टोरुत्तुक् सदा मतः।
ष्फान्ता ष्फान्ताश्च गोत्रार्थो टाबन्ताश्च हरितादयः॥

शिंशपाया अपत्यमित्यर्थे—आदाद्यचो णित्ते शिंशपा दित्यवाट्-श्रेयो-दीर्घसत्र-देविकानाम्। शिंशपादीनां णित्ते परे आद्याचः स्थाने त्रि-प्रसङ्गे आत् स्यात्। शांशपायनः (१)। आनडुह्य इति—गर्गादिष्यान्तः। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनायनः। बाह्वादित्वादार्ज्जुनिः। एवं साम्रायनः साम्रिः, पञ्चानामपत्यं पाञ्चायनः, बाह्वादित्वात् पाञ्चिः। वेण इति—वेणो नाम राजर्षिस्तस्यापत्यं ह्रखेकोशनाशादेरिति (२) ष्णङ्, वैणस्तस्यापत्यं युवा वैणायनः। अतएव ष्ण-ट्ठ-चत्रियार्षेभ्य इति न लुक्। द्रौणायणोऽश्वत्थामा इति ॥ युत्वे यौवत्वोपचारात्। शलङ्कोरन्तरापत्यं शालङ्कायनः ष्फायने उतो लोपः। इदमकौशिके, कौशिके तु बाह्वादिः। वाषायनो वाशिष्ठः, अन्यत्र वाषिः। कार्ष्यायनो विप्रः, अन्यत्र कार्ष्णिः। जातस्यान्तरापत्यं जातायनः पुमान्। पुरुष इति

(१) शिंशपाया विकारः शांशपो दण्ड इत्यपि। दित्यो लाङ्गलं, तं वहतीति दित्यवाट् वृषभः तस्यायं दात्यौहः। दात्यूह इति कात्यायन। दितिं वहतीति दितिवाट् कश्यपस्तस्माज्जात इत्यर्थे दात्यूह इति कश्चित्। डाउक् इति ख्यातो जलचरपक्षिविशेष। श्रेयसि भवं श्रायसम्। दीर्घसत्रे भवं दार्घसत्रम्। देविका नदी, तत्र भवं दाविकमुदकं (प्रयोगरत्नमाला ११६६ सू)।

(२) कुञ्जादेरिति ४२८ सूत्रस्य टीका द्रष्टव्या।

किं ? जाताया अन्तरापत्यं जातेयः । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमित्यस्य ज्ञापकमिदम् । दार्भायणः आश्मायणः (१) अन्यत्र दार्भिः । भार्गायणस्त्रैगर्त्तः (२), अन्यत्र भार्गिः । शौनकायनो वात्स्यः, अन्यत्र शौनकः, विदादित्वात् ट्वः । आग्निशर्म्मायणः ऋषिः, अन्यत्र वाह्वादित्वात् आग्निशर्म्मिः । शारद्वतायनो भार्गवः, अन्यत्र शारद्वतः, विदादित्वात् ट्वः । आत्रेयायणो भारद्वाजः, अन्यत्रात्रेयिः । भारद्वाजायनः शापायनश्चात्रेयः, अन्यत्र भारद्वाजः—ऋषि-ण्यः, शापिः—ष्वतः ष्णिः । क्रोष्टोरपत्यं क्रौष्टायनः, उतो लुक् ष्णायने । इदमकौशिक इति कश्चित् । गोत्रविहितष्णान्ता गोत्रविहितष्णान्ताय नड़ादौ पठ्यन्ते, तस्मादेव नियमात् यूनि प्रत्ययः । मूले गार्ग्यायण इति गर्गस्यान्तरापत्यं गार्ग्यः, तस्यापत्यं युवा इत्यर्थे ष्णायनः, याति न ण्यस्य लोपः(३)। एवं वात्स्यायन इत्यादि । मूले दाक्षायण इति दक्षस्यान्तरापत्यम् इति दाक्षिस्तस्यापत्यं युवा दाक्षायणः, एवं प्लाक्षायण इत्यादि । स्त्रियां गर्गस्यापत्यं यूनी गार्ग्यायणी दाक्षीति स्त्रियां युव त्वनिषेधात् । दाक्षायणी तु दक्षस्यापत्यं दाक्षायणः, स्त्रियां षित्त्वादीप् । गोत्रार्थे इति किं ? सोमो देवता अस्य सौम्यस्तस्यापत्यं सौम्यिः । सुतङ्गमस्य निवासः सौतङ्गमिस्तस्यापत्यं सौतङ्गमः, शेष-ष्यः । एवं ट्वान्ता हरितादयः । हरितस्यान्तरापत्यं हारितः, विदाद्यन्तर्गण-

(१) आश्मायनो मुनिभेदः ।
(२) त्रिगर्त्तस्य षष्ठे युवापत्यं त्रैगर्त्तः ।
(३) स्वरूपोपेक्षत आकारवर्जनात् ।

त्वात् फः, तस्यापत्यं युवा हारितायनः । परस्त्रिया अपत्यं(१) पारशवस्तस्यापत्यं युवा पारशवायन इत्यादि ।

पैलादेः (२) ष्णायनस्य लुक् । पैलादेः परस्य ष्णायनस्य यूनि विहितस्य लुक् स्यात् । पीलाया अपत्यं पैलस्तस्यापत्यं युवा पैलः । एवमुदीचोऽपत्यम् औदञ्चिस्तस्यापत्यं युवा औदञ्चिरित्यादि । पैलादिर्यथा—

पैल औदञ्चि-भौलिङ्गि शात्यकामिश्च सात्यकिः ।
औदव्रज्यौदमज्जौदबुद्धि(३)शालङ्कयस्तथा ।
गोपालक्ष्यौदमेघौ च देवस्थान्यौदगायनौ ।
श्वाफल्कौदन्यिनौ राहक्षतिश्चौज्जिहायनिः ।

पैङ्गलायनि वाल्कायनि पैङ्गायनि वारुणि । ष्यन्तानामेषां "प्राचां ष्णेयावैङ्गादे"रित्यनेन लुकि सिद्धे प्रपञ्चार्थं पृथगुपादानम् ।

प्राचां ष्णेयावैङ्गादेः । प्राचां गोत्रे यः ष्णिस्तदन्तात् यूनि विहितस्य ष्णायनस्य लुक् स्यात्, न तु वैङ्गादेः । पद्मागारस्यानन्तरापत्यं पाद्मागारिस्तस्यापत्यं युवा पाद्मागारिः । वैङ्गादेस्तु

(१) परस्त्रीशब्दस्य परशादेशः । अत्र गोयीचन्द्रः—अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, रूढ्यर्थं शब्दः । ब्राह्मणेनोढाया शूद्राया अपत्यं पारशवः, अन्यत्र तु पारस्त्रैणेयः ।

(२) अत्र वाल्यादेरित्यपि पाठः । वालस्यानन्तरापत्यं वालिः तस्यापत्यं युवा वालिरित्युदाहरणञ्च ।

(३) काशिकायां हरनामुग्धबोधे च उदबुद्धिरिति पाठो दृश्यते सिद्धान्तकौमुद्यान्तु उदशुद्धिरिति ।

विङ्कस्यान्तरापत्यं वैङ्कि: तस्यापत्यं युवा वैङ्कायनः। धारणस्यान्तरापत्यं धारणि: तस्यापत्यं युवा धारणायन इत्यादि।

वैङ्क्यादिर्यथा—

वैङ्कि धारणि वाल्मीकि प्राणाहतिश्च दैवतिः।
तौल्वल्यासुरि-दैवोद्दि पौष्पि-वैल्वकि-वैरकि॥
कार्ण्यपालि-वैकर्णी कालिङ्ग्याहिंसकौ तथा।
चापेटक्यासिबन्धी पौष्करसादिश्च नैयमिः।
दैवमत्यान्तरहती तथा दैवयजिर्म्मतः॥

न भरत गोत्राच्च। प्राच्यात् भरतगोत्राच्च यूनि विहितस्य लुक् स्यात्। अर्ज्जुनस्यान्तरापत्यम् आर्ज्जुनिस्तस्यापत्यं युवा आर्ज्जुनायनः। पूर्व्वस्य बाधकोऽयम्।

पैतृष्वस्त्रीय इत्यादि। पितृष्वसुरपत्यमिति वाक्ये णीयः, णित्वाद्वृद्धिः, स्त्रियां पैतृष्वस्त्रीया, पैतृष्वस्त्रीयाभार्य्य (१) इत्यादि। पितृष्वस्रादिर्यथा—

पितुःस्वसा तथा मातुः, स्वसा, भ्रातुरपिद्व भवेत्।
कुत्सायां णायनिश्चैव सौवीरगोत्रसम्भवः॥

भ्रातृगन्धात् णीयोऽणित्, तेन भ्रात्रीयभार्य्य इति (२)॥

सौवीरगोत्रसम्भवो णायनिः (३) कुत्सायां पितृष्वस्रादौ पठ्यते, तस्मादपि शर्म्मिणीयः। यमुन्दस्यापत्यं यामुन्दायनिः तस्यापत्यं

(१) अत्र युष्मत्क्रियाकारार्थप्रत्ययविधानत्वात् पुंवद्भावः।
(२) अत्र णित्त्वाभावात् पुंवद्भावः।
(३) सौवीरगोत्रापत्येऽर्थे समुत्पन्नो यो णायनिप्रत्ययस्तदन्ताः शब्दा इत्यर्थः।

सुवाऽणिरिय:, यामुन्दायनीयो जाल्मः, रैवत्यादित्वात् यामुन्दायनिकः। एवं सौयामायनीयः सौयामायनिकः, वार्ष्यायणीयः वार्ष्यायनिकः। तथाच—

यमुन्दश्च सुयामा च वार्ष्यास्तेभ्यः फिञः (१) स्मृताः।
सौवीरेषु च कुत्सायां द्वौ योगौ शब्दवित् स्मरेत्॥

इति महावृत्तिः।

द्वौ पौयण्किौ। णित्त्वाभावे पूर्व्ववत् प्रयोजनम् (२)।

रैवतिक इति—रेवत्या अपत्यम् इति वाक्यं, ययोरित्यादिना ईकारलोपः ष्णिय, स्त्रियां रैवतिकी। आश्वपालिक इति अश्वं पालयतीति अश्वपालः अण्, तस्यापत्यमिति वाक्यम्।

रैवत्यादिर्यथा—

रेवत्यश्व-मणि-द्वारपूर्व्वपालोऽथ कुत्सने (३)।
गोत्रस्त्रियश्च (४) बाहुल्याद्दृष्टाः सौवीरगोत्रजाः॥
कर्णग्राह-वृकग्राही कुक्कुटाक्षस्तथैव च।
वृकवञ्ची सपर्णी च परे शिष्टप्रयोगतः॥

अश्व-मणि-द्वारेभ्यः पालो रैवत्यादौ पठ्यते। जयादित्यस्तु अश्वपाली मणिपाली द्वारपालीति स्त्रीलिङ्गमङ्गीकरोति। न्यासे तु द्वारपालादीनामदन्तनिर्देशः। अथानन्तर गोत्रविहितत्वात्ताः

(१) पाणिनीये फिञ्प्रत्ययः, सर्व्ववर्म्मीयमते णायनिः।

(२) पुंवद्भावसिद्धिरित्यर्थः।

(३) पितुरसंविज्ञाने मात्रा व्यपदेशोऽपत्यस्य कुत्सेति काशिका।

(४) पौत्रप्रभृत्यपत्यं गोत्रं, तथाभूता याः स्त्रियः गोत्रस्त्रियः।

स्त्रीलिङ्गाः कुत्सायां रेवत्यादौ पठ्यन्ते। यथा—गार्ग्या अपत्यं युवा गार्गिको जाल्मः, ग्लुचुकायन्या अपत्यं युवा ग्लौचुकायनिको जाल्मः, भिन्नतादित्वात् गार्गः ग्लौचुकायनश्च जाल्मः। गोत्रेति किम्? कारिकेयो जाल्मः। स्त्रियः इति किम्? औपगविः। कुत्सायामिति किम्? गार्गेयो माणवकः (१)। कुत्सन इत्येव, तेन सौवीरगोत्रे ये वृद्धास्तेऽपि कुत्सायां बाहुल्याद्रेवत्यादौ पठ्यन्ते। भगवित्तस्यापत्यं भागवित्तिस्तस्यापत्यं युवा भागवित्तिको जाल्मः, बाहुल्यात् पक्षे यथाप्राप्तं भागवित्तायनो (२) जाल्मः। तृणबिन्दोरपत्यं तार्णबिन्दवः तस्यापत्यं युवा तार्णबिन्दविकः। आकशापस्यापत्यम् अश्वादेराकृतिगणत्वात् आकशापेयः, तस्यापत्यं युवा आकशापेयिकः। अन्ये तु अश्वादिपठितत्वात् आकशायनशब्दस्यैव आकशायनेयिको जाल्मः इति वदन्ति, तन्न।

तथाचाहुः—

भागपूर्व्वपदो वित्तिर्द्वितीयस्तार्णबिन्दवः।
तृतीयस्त्वाकशापेयो गोत्रात् (३) ठग्वहुलं ततः (४)॥

इति परे।

---

(१) अत्रापि गार्ग्या अपत्यं युवेति वाक्यम्। "मातामहादेरपत्यार्थे ऽयं प्रयोग इति नास्ति कुत्सा" इति कारिका।

(२) गोत्रप्रत्ययान्तानां नडादौ पाठादक् प्रत्ययः।

(३) गोत्रात् गोत्रविहितप्रत्ययान्तात्।

(४) ततस्तस्मात् भागवित्त्यादिशब्दत्रयात्।

४२५। मन्वर्ज्ञानुवर्म्मोष्टस्येनोऽनोऽध्वात्मनो-पत्यणोऽविकारण्याभावकर्म्मय ईने न न लोपः।

( मनृवर्ज्ञानुवर्म्मोष्टस्येनः ६।, अनः ६।, अध्वात्मनः ६।, अपत्यणे ७।, अविकारण्याभावकर्म्मये ७।, ईने ७।, न ।१।, न-लोपः १। )।

---

ठक् ष्णिकः। वृद्धग्रहणमिह स्त्रीनिवृत्त्यर्थम् (१)। सौवीर-गोत्रजा इति किम्? औपगविर्जाल्मः। कुत्सायामिति किम्? भागवित्तायनो माणवकः।

येषामुदाहरति यादव इति—यदुर्नाम कश्चित्, तस्यान्तरा-पत्यार्थे ष्णः। आङ्गिरस इति—अङ्गिरसोऽपत्यम् इति वाक्यम् (२)। सुनौ तु ध्रिवादित्वात् (३)। एवम् औपगवः माधवः मारीच इत्यादि।

४२५। मन्। मनं वर्ज्जयतीति मनृवर्ज्जः, स चासौ अन् चेति मनृवर्ज्जान्, स्यादिन् स्येन्, मनृवर्ज्जान् च वर्म्मा च उष्टा च स्येन् च तत्, मनृवर्ज्जानुवर्म्मोष्टस्येन् तस्य। अध्वा च आत्मा च तत्तस्य। न विकारोऽविकारस्तस्मिन् ण्यः अविकारण्य, भावस्य कर्म्म च ते भावकर्म्मणी, न भावकर्म्मणी अभावकर्म्मणी,

---

(१) सौवीरगोत्रजा इत्युक्तेरपत्यप्रत्ययान्ता सौवीरगोत्रोत्पन्नवाचका शब्दा गृह्यन्ते। ते चापत्यप्रत्ययान्तत्वादादिस्वरवृद्धौ वृद्धसंज्ञका भवन्ति, तथापि वृद्ध ग्रहणं, तथाविध-स्त्रीलिङ्गशब्द निवृत्त्यर्थमिति भाव।

(२) अत्र अङ्गिरा नाम कश्चित।

(३) ध्रिवादौ कुर्त्स्यन्यकस्यापत्य इत्युक्ते।

मनुवर्जस्यानो वर्मणः उक्षः स्यात् परस्येनश्च अपत्यार्थण्णे, अनो विकारार्थवर्जे ण्णे भावकर्मार्थवर्जे ये च, अध्वात्मनोरीने, न लोपो न स्यात् । याज्वनः भाद्रवर्मणः औक्ष्णः चाक्रिणः ।

अैवः वार्शिष्ठः ।

---

तयोर्यः अभावकर्मयः, यद्यात् अविकारण्णश्च अभावकर्मयश्च तत्तस्मिन् । याज्वनः इति—यज्वनोऽपत्यम् इत्यर्थे ण्णः ण्वोर्लोपौतौ तिऽये इति प्राप्तनलोपोऽनेन निषिध्यते । मनुवर्जे इति किं ? भाद्रसामः सौसाम. । अपत्यण्ण इति किं ? चर्मणा परिवृतो रथः चार्मणो रथः (१) । मनुवर्जानित्युक्तेः वर्मणो वर्जने प्राप्ते वर्मग्रहणादाह भाद्रवर्मणः इति--भद्रवर्मणोऽपत्यम् इति वाक्यम् । एवं गार्ग्यवर्मण इत्यादि । औक्ष्ण इत्यादि---यद्यपि मनुवर्जेत्यनेन नलोपप्रतिषेधादुक्ष्णोऽपि प्रतिषेध सिध्यति, तथाप्युक्ष्णः पृथग्ग्रहणमेवं ज्ञापयति, अपत्यण्णातिरिक्ते ण्णे नलोपनिषेधो न भवति, तेन औक्षं पदमित्यत्रानोऽविकारण्णे (२) निषेधो न स्यात् । चाक्रिण इति—चक्रिणोऽपत्यम् इति वाक्य, इनो न नलोपः । अस्य सूत्रस्य योगविभागः कर्त्तव्यः, तेन क्वचिदन्यत्रापि (३) । तथाहि---

---

(१) अत्र अनन्तत्वात् नलोपे प्राप्ते अपत्यार्थण्णाभावान्न नलोप ।

(२) औक्षमित्यत्र इदमर्थविहितण्णे इत्यर्थः ।

(३) अप्रतिषिद्ध-नलोपोऽपि न स्यादिति शेषः ।

ब्रह्मणो जातावपत्यण्वे । ब्रह्मणोऽपत्यणि मलोपो न स्यात् जातौ । ब्रह्मणोऽपत्यं ब्राह्मणो जातिः (१) । अपत्यण् इति किं ? ब्राह्मी नामौषधिजातिः । जातौ किं ? ब्रह्मणोऽपत्यं ब्राह्म इति ।

पणि गणि गाथि केशि विदथिनो वा तु हितनाम्नः । एषामपत्यण्वे मलोपो न स्यात् हितनाम्नस्तु वा । पणिनोऽपत्यं पाणिनः, एवं गाणिनः गाथिनः कैशिनः वैदथिनः । हितनाम्नोऽपत्यं हैतनाम्नः हैतनामः ।

इनोऽकलाप्यादेरनपत्ये । इनो नस्य लोपो न स्यात्, न तु कलाप्यादेः अनपत्यण्वे परे । स्राग्विणः मैधाविनः । अपत्ये तु मैधाव इत्यादि । कलाप्यादेस्तु कलापिन इदं कालापम् । कलाप्यादिर्यथा—

कलापी पीठसर्पी च कुथुमी तैतिली तथा ।
जाजली लाङ्गली स्यात् सब्रह्मचारिशिखण्डिनौ ।
कलाप्यादौ शिलाली च नव शब्दाः प्रकीर्त्तिताः ॥

कर्म्मचर्म्मणोरताच्छील्यकोपयोः । ताच्छील्यभिन्ने कर्म्मणः कोपभिन्ने चर्म्मणो मलोपो न स्यादनपत्यण्वे । कार्म्मणं चार्म्मणम् । अताच्छील्यकोपयोरिति किम् ? कार्म्मः कर्म्मशीलः, चार्म्मः कोपः ।

दण्डिहस्तिनः ष्णायने, जिह्वाशि वासिनोस्तु ष्णेयणायन्योः । नलोपो न स्यात् । दण्डिनोऽपत्यं दाण्डिनायनः, एवं हास्तिनायनः । जैह्वाशिनेयः वासिनायनिः ।

---

(१) अत्र मनन्तस्यापि अपत्यण्वे न मलोप ।

षाल्ये विकर्णोऽथ भौरकदः परिपिकोऽपि च ।
दशरथः कनीनश्च कन्यायाः ण्णे भवेत्तथा ॥
त्रिवेण्यास्त्रिवण्णो विश्रवसस्तु रवणोऽपि च ।
विश्रवणो मनोर्व्वा सन् गणसूत्रप्रमाणतः ॥

ऋष्यादन्तानां पाठः ष्णिबाधनार्थः । स्त्रजिकारान्तानां स्त्रीत्यान्तानाञ्च ढ्णेयबाधनार्थः । तक्षन्—शब्दस्य कारुवाचकत्वात् ष्णिबाधनार्थः । तक्ष्णोऽपत्यं ताक्ष्णः, मनवर्म्मान् इति अनन्तत्वात् नलोपो न स्यात्, कुर्व्वादित्वात् ताक्ष्ण्यः । गङ्गाया अपत्यं गाङ्गः, शुभ्रादित्वात् गाङ्गेयः, तिकादित्वात् गाङ्गायनिः । पीलाया अपत्यं पैलः, शुभ्रादेराकृतिगणत्वात् पैलेयः । परे तु क्वचित् अपवादविषये उत्सर्गोऽभिनिविशत इति न्यायात् इत्याहुः । एवं साल्वाशब्दस्याप्युदाहरणीयम् । जरत्कारुशब्द जबन्तस्तान्वादिपाठात् । ऋष्टिषेणशब्दस्य षेनान्तत्वात् ण्यष्णिबाधनार्थः । कुरुवंशोत्पन्ना ऋषिवाचका अन्धकवंशोपन्ना वृष्णिवंशोत्पन्नाश्च सर्व्वे शिवादौ पठ्यन्ते । कुरोः—नाकुलः, साहदेवः । ऋषेः—मूले वाशिष्ठ इति—वशिष्ठस्यापत्यम् इति वाक्यम्, एवं वैश्वामित्रः । अन्धकस्य—श्वाफल्कः, तौर्वसः । वृष्णेः—वासुदेवः, आनिरुद्ध इत्यादि । ननु सर्व्वेषां व्याकरणानां माहेशमूलकत्वेनाधुनिककुर्व्वन्धकवृष्णिवंशवाचकानां कथं शिवादौ पाठ इति चेत् सत्य, शिवस्य सर्व्वज्ञत्वात् तत्र तेषां सङ्कलनम् । यद्वा ऋषेरनादित्वात् कुर्व्वन्धकवृष्णिवंशा एवानादयः, अतएव तेभ्यस्त्वविधानमित्यदोषः । षड्दानां मानुषीसंज्ञानां तावत्—

चिन्तिताया अपत्यं चैन्तितः शैचितः गौतमः । अह्रदानां नदीसंज्ञकानां तावत्—यमुनाया अपत्यं यामुनः, इरावत्या अपत्यम् ऐरावतः नार्म्मद इत्यादि । अह्रदा इति किं ? वासवदत्तेयः चान्द्रभागेयः (१) । शुङ्गस्यापत्यं शौङ्गो भारद्वाजः, अन्यत्र शौङ्गिः । छगलस्यापत्यं छागलः आत्रेयः, अन्यत्र छागलायनिः । विकर्णस्यापत्यं वैकर्णो वात्स्यः, अन्यत्र वैकर्णिः । कन्याया अपत्यं कानीनः कर्णः व्यासश्च । त्रिवेण्या अपत्यं त्रैवणः । विश्रवसोऽपत्यं रावणः वैश्रवणश्च । मनोरपत्यम् इत्यर्थे ष्णः, तस्मिन्मनोः सन् वा, न इत्, मानुषः पक्षे मानव इति ।

विदादेर्गोत्रेऽन्त्येस्वानन्तर्य्ये ट्रः । (२) विदस्यान्तरापत्यं वैदः । एवम् और्व्वः । स्त्रियां पित्त्वादीप् वैदी इत्यादि ।

विदादिर्यथा—

विद उर्व्वौ भरद्वाजः किलातः कुशिको हरित् ।
विश्वानरः कश्यपोऽपस्तम्बो शुङ्ग-रथीतरौ ॥
कूचवारशरद्वन्तौ रथन्तरगविष्ठिरौ ।
आर्ष्टिषेणश्च किन्दर्भौ मठरो विश्वविष्टपि ॥
पुनर्भूर्दुहिता पुत्रः मतिबोध-ननान्दरौ ।
हर्य्यश्वः प्रियको धेनुर्व्बोग-शुनकावपि ॥

---

(१) अत्र चन्द्रभागा-पर्याय-चान्द्रभागा-चान्द्रभागीशब्दयोरन्यतरस्मात् ष्णेयः । अन्यथा इत्वं न स्यात् ।

(२) विदादेर्गोत्रापत्यार्थे ट्रः स्यात् । अपविदत्वनिर्णयोऽपि द्रष्टव्यः ।

ऋतभागश्च किन्दासो व्ययस्त्वाकांन्वका अपि।
महाकुलः पृदाकुश्च निषादोऽथ परस्त्रियाः—
परशुष्टे, गोपवन, शिग्रु भामज विन्दवः।
अश्वावतार श्यामाक-श्यापर्णाः समुदीरिताः॥

अत्र ये शब्दा अनृषिवाचकास्तेभ्योऽनन्तरापत्य एव ट्णः। अतएव पौत्रः पौनर्भवः दौहित्र इत्यादि। ननु कथं कुशिकस्यानन्तरापत्यं कौशिको विश्वामित्रः, कथं वा व्यवहितापत्ये इन्द्रहूर्नाम सप्तमः काश्यपानाम् क्वेऽलुक्? इति (१) चेत् सत्यं, क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति न्यायात् ऋषिष्णेन (२) भवितव्यम्, अथवा तस्येदमित्यर्थे ष्णेन। परस्त्रिया अपत्यं पारशवः, ट्णे परश्वादेशः। अत्र परस्त्रीशब्देन भिन्नजातीया स्त्री वाच्या, अतएव पारशवो विदुरः। तथाच—पारशवः पुमान्, परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च इति मेदिनीकारः। अर्थान्तरे तु पारस्त्रैणेयः। बाह्वादेराकृतिगणत्वात् विदस्यानन्तरापत्यं वैदिरित्यादौ ष्णिः, न तु ऋषिष्णः। यद्यपि शिवादित्वात् ष्णे कृते वैद इत्यादि सिद्ध्यति, तथापि विदादेः पृथक् ट्णविधानं मयड्बाधनार्थम्।

---

(१) काश्यपानामित्यत्र कश्यपशब्दस्य विदादिपाठात् विदादेर्गोत्रे इति वार्त्तिकबलेन अनृष्यानन्तर्यविहितस्य ट्णप्रत्ययस्य यञञोश्च गर्गादिभ्यश्च विदादीत्यादि सूत्रेण कथं न लुग्भवतीत्याशङ्कायामाह कश्चिदित्यादि। गर्गादिभ्यश्चेत्यादिसूत्रे गर्गवाचीयेन विदादेः परस्य ट्णप्रत्ययस्यैव लुग्भवतीति बोध्यम्। अत्र तु ऋषिष्णेन इदमर्थष्णेन वा बाधितत्वात् न लुगित्यर्थः।

(२) विदादित्वादिति शेषः।

उत्सादेश्च । उत्सादेट्टः स्यात्, पृथग्योगादपत्यसामान्ये । उत्सस्यापत्यम् औत्सः, जानपद इत्यादि ।

उत्सादिर्यथा—

उत्सो जनपदविनदौ धन्वा, विकच-महानद-तरुणं धेनुः ।
भरत-महानस-पृथिवी देवं, पङ्क्तिर्जगती कुरु-पञ्चालम् ॥
उदपान महाप्राण-ककुभस्तलुनो महान् ।
इन्द्रावसान-विकर-त्रिष्टुबुष्णिगनुष्टुभः ॥
उशीनरः सुवर्णश्च भल्लकीयो रथन्तरः ।
वृहन्मध्यन्दिनश्चाथ सत्वतो नुण् भवेदिह ॥
उदस्थानन्तु देशेऽस-बन्धयो(१)ऽंशे वृषन्मतः (२) ।
ग्रीष्मोऽहस्ते समाख्यातः शेषं ज्ञेयं प्रयोगतः ॥

इह कुरुशब्दस्य पाठात् कुरोरपत्यम् इत्यर्थे कौरव इति जयादित्यः । सत्वत्‌शब्दो वत्वन्तस्तस्य ट्टे नुण्, सत्वतोऽपत्यं सात्वन्तः । पाठबलात् उदस्थाने भव औदस्थानो देशः । अदेशे तु उदस्थानः कश्चित् तस्यापत्यम् औदस्थानिः । वृषदशब्दोऽंशे वाच्ये ट्टः वार्षदः, अनंशे तु वार्षदः ष्णः । ननु ष्णट्टयोः को विशेष इति चेत् सत्यं, ष्णान्तवार्षदस्य सङ्घे वार्षदकः । ट्टान्तस्य तु वार्षद इति विशेषः । अहस्त इति—हस्तं छन्दः, न हस्तम् अहस्तं तस्मिन्, ग्रैष्मः । अहस्त इति किं ? ग्रैष्मी त्रिष्टुबिति ऋतुनक्षत्रा-दिति ष्णः, तस्यादिकारे मयट् ग्रैष्ममयं, ट्टान्तादिकारे ग्रैष्ममिति विशेषः ।

---

(१) अन्ये बन्धमाहे बन्धक । (२) पाणिनीये वृषदिसाम प्रपठित पाठ ।

४२६ । सङ्ख्यासम्भद्रान्मातुर्डुर् णौ ।

( सङ्ख्या-सं भद्रात् ५।, मातुः ६।, डुर् ।१।, णौ ७ ) ।

द्वैमातुरः ।

४२७ । नन् पुंस्त्रियोः । ( नन् ।१।, पुंस्त्रियोः ६॥ ) ।

पौंस्नः स्त्रैणः ।

४२८ । कुञ्जादेर्णायन्योऽस्त्रीत्वेऽपत्ये ।

( कुञ्जादेः ५।, णायन्यः १।, अस्त्रीत्वे ७।, अपत्ये ७। ) ।

कुञ्जादेरपत्यार्थे णायन्यः स्यात्, न तु स्त्रियां, न च त्वे ।

कौञ्जायन्यः ब्राध्नायन्यः । स्त्रीत्वे तु कौञ्जायनी कौञ्जायनाः ।

---

४२६ । संख्या च सम् च भद्रश्च तत्तस्मात् । सख्यावाचकात् समो भद्राच परस्य मातृशब्दस्य डुर् स्यात् णौ, डित्वादन्त्यस्य । सौत्वात्र विः । द्वैमातुर इति—द्वयोर्मात्रोरपत्यमिति वाक्यं, भेपात् ण्यः, एवं षाण्मातुरः ।

४२७ । नन् । पुमांश्च स्त्री च ते तयोः । अनयोर्नन् स्यात् णौ ।

४२८ । कुञ्जादेः । स्त्री च त्वं च स्त्रीत्वं, न स्त्रीत्वम् अस्त्रीत्वं तस्मिन् । अपत्यग्रहणं, पूर्व्वेण सामान्यविधानात् । अयं(१) नड़ादान्तर्गणः णायन्येन णायनो बाध्यते, तेनानन्तरापत्ये कौञ्जिः । कौञ्जायन्य इति—कुञ्जस्यान्तरापत्यमिति वाक्यम् । एवं ब्राध्नायन्यः ।

---

(१) अयं कुञ्जादि ।

कुञ्जादिर्यथा —

कुञ्जो ब्रध्नो बुधो लोम-भस्म-शङ्खाः शठो गणः ।
शाकः शुभ्रा विपाशा च शुण्डा स्कम्भः प्रकीर्त्तितः ॥

तिकादेर्णायनिर्वृषादेस्तु यम् च ।

तिकादेरपत्ये णायनिः स्यात्, वृषादेस्तु णायनेर्यम् च, म इत् । तिकस्यापत्यं तैकायनिः, कितवस्यापत्यं कैतवायनिः ।

तिकादिर्यथा —

तिक कितवौरस-तैतिल नीड़,
भौरिकि भौलिकि-वन्ध्यारब्धम् ।
चौपयतः कुरु-संज्ञा यज्ञं
गङ्गा लाङ्कट-शूद्र यमुन्दम् ।
खल्यका लोमको रूप्य-ग्राम्य-ध्वाजयता वरः ।
शाट्या बालशिखा वैहयतः शैकयतस्तथा ॥
चैटयतः स्वग्रामोऽथ कौरव्यः क्षत्रिये मतः ।
गोकक्ष्यचन्द्रमाः चैतयतो रथान्तदा मताः ॥
ह्रस्वः प्रान्ता देवरथोऽमित्रोदन्यं (१) प्रकीर्त्तितम् ।

क्षत्रियार्थ-कौरव्यः पठ्यते (२), तेन जनपद-प्रान्तस्य ग्रहणं न तु कुर्व्वादि-प्रान्तस्य, स तु ब्राह्मणवचनस्तस्मात् ष्णोर्लुगेव । जनपद-प्रान्तात् कुरोरपत्यं युवा कौरव्यायणिः क्षत्रियः । रथान्तात्तावत्—गौरथस्यापत्यं गौरथायणिः, पाण्डरथायणिरित्यादि । ह्रस्वः प्रान्तात्तावत्—कर्त्तुरपत्यं कार्त्तः, तस्यापत्यं

(१) [illegible] ।   (२) [illegible] ।

कार्त्रायणिः । अन्यत्र कर्त्तृशब्दो ब्राह्मणवचनः, तेनात्र अब्राह्मणात् णायनेर्न लुक् । एवं कैशायनिः, ग्रैवायनिः । द्व्यच इति किम् ? औपगविः, अतः णिः ।

इषादिर्यथा—इष दगु कोशल छाग कर्म्मारा: ।

इषादेस्तावत्—वार्ष्यायणिः दागव्यायनिः कार्म्मार्य्यायणिः, कुर्व्वादित्वात् कार्म्मार्य्यः । कोशलशब्दोऽत्र जनपदवचनः । ननु कथं कौशल्यायनिवल्लभामिति भट्टिः । उच्यते—वृञातेरित इति ईपि कौशल्यायनी, तस्या अपत्यं युवा इत्यर्थे आवादित्वात् णेयस्तस्य लुकं विधाय ओैत्यस्य लुकि कौशल्यायनिरिति परे । वस्तुतस्तु तिकादेराकृतिगणत्वात् णायनिरिति । तथा च कौशल्यकार्म्मार्य्याभ्याचेति पाणिनिसूत्रम् ।

वृद्धादनपत्यान्ताद्वा पुत्रान्ताद्वाकिनादेस्तु कंच । अनपत्यान्ताद्वृद्धसंज्ञकात् णायनिर्वा स्यात्, पुत्रान्तात् वाकिनादिभ्यश्च, तेषां तु कन् च स्यात् न इत् । आम्रगुप्तस्यापत्यम् आम्रगुप्तायनिः नापितायनिः । एवं त्यादायनिः, तवापत्यं त्वादायनिः, युवयोर्युष्माकं वा अपत्यं यौष्मदायनिः । कथं भावतायनिः ? वाशब्दस्य व्यवस्थावाचित्वात् । पक्षे आम्रगुप्तिः नापितिः त्यादस्तस्यापत्यं युवा त्यादायनिः । वृद्धादिति किं ? दैवदत्तिः याज्ञदत्तिः औपगव. । अनपत्यादिति किम ? औपगविः । पुत्रान्तात्—गार्गीपुत्रकायणिः । गार्गीपुत्रायणिरिति पूर्व्वेणैव सिद्धे कन्विधानार्थः पाठः, णायन्यभावपक्षे गार्गीपुत्रिरिति रूपत्रयम् । वाकिनादेस्तावत्—वाकिनकायनिः वाकिनायनिः वाकिनिः ।

वाकिनादिर्यथा—

वाकिनश्चर्म्मि गारेधौ काकी-लङ्का तथैव च।

कार्कव्यवर्म्मिणावत्र बुधैः सप्त प्रकीर्त्तिताः (१)॥

परे तु कनं न विकल्पयन्ति, तन्मते वाकिनादेर्हैरूप्यम्।

श्चहादायनिर्व्वा। वाशब्दो बहुलार्थः। हसंज्ञकभिन्नादाय-निर्व्वा स्यात् अपत्ये। ग्लुचुकस्यापत्यं ग्लुचुकायनि, पक्षे ग्लौचुकिः। आहिंसुम्बकायनिः आहिंसुम्बकिः। बाहुल्यात् क्वचिन्न भवति, तेन दक्षस्यापत्य दाक्षिः प्लाक्षिरित्यादि।

यूनि लुक् आयनेः आस्य। आयनेः परस्य यूनि विहितस्य आस्य लुक् स्यात्। तिकस्यापत्यं तैकायनिः तस्यापत्यं युवा तैकायनिरित्यादि।

कुलाददादिनो (२) येनणेयका दादेस्त्वीनः। दादिभिन्नात् कुलात् य ईन णेयक एते स्युः दपूर्व्वादीन एव। कुलस्यापत्यं कुल्यः कुलीनः कौलेयकः, बहुकुल्यः बहुकुलीनः बाहुकुलेयकः, बहुत्वस्यादत्वात्(३)। दादेस्तु आढ्यकुलीनः श्रोत्रियकुलीनः।

---

(१) [illegible] चार्म्मिण, [illegible]। [illegible] इति गारेध [illegible] पृषोदरादित्वात् [illegible] गारे-धायनिः। [illegible] इति तत्त्वबोधिनी।

(२) [illegible] इति, [illegible]। [illegible]।

(३) [illegible]।

दुर्म्महद्भ्यां ढेयक-खीनौ वा। आभ्यां परात् कुलात् ढेयक-खीनौ क्रमाद्वा स्याताम्। दौष्कुलेयकः, अवाादित्वात् दौष्कुलेयः, पक्षे दपूर्व्वत्वात् दुष्कुलीनः। माहाकुलीनः, उत्सादित्वात् माहाकुलः पक्षे महाकुलीनः।

क्षत्रादियो जातौ। क्षत्रशब्दाज्जातावपत्ये इयः स्यात्। क्षत्रियः जातिः। जाताविति किम्? क्षात्रिः।

सौवीरगोत्रात् फाण्टाहृति मिमतात् ण आयनौ। सौवीरगोत्रात् फाण्टाहृतेर्मिमताच्च ण-आयनौ स्याताम्। फाण्टाहृतेरपत्यं युवा फाण्टाहृतः। सौवीरगोत्रत्वात् यूनस्य विषयः; फाण्टाहृतायनिः। एवं मिमतस्यापत्यं मैमतः मैमतायनिः। परे तु अस्याध्रतस्य व्युत्क्रमनिर्द्देशात् (१) यथासंख्यमिच्छन्ति, तन्मते फाण्टाहृतः मैमतायनिरित्येव। सौवीरगोत्रादिति किम्? फाण्टाहृतायनः मैमतायनः।

देवपृथिवीभ्यां ण्यणौ वा। आभ्यां क्रमेण ण्य-णौ वा स्यातामपत्ये। देवस्यापत्यं दैव्यः, पृथिव्या अपत्यं पार्थिवः, स्त्रियां दैव्या पार्थिवा, उत्सादित्वात् दैवः पार्थिवः, दैवी पार्थिवी।

स्थामान्तादौ लोमान्तात्तु व्वे। स्थामन् इत्यस्मादः स्यात्, लोमान्तात्तु व्वे। अश्वत्थामा नाम कश्चित्, तस्यापत्यम् अश्वत्थामः उडुलोम्नोऽपत्यानि उडुलोमाः। व्वे किम्? औडुलोमिः औडुलोमी।

(१) सूत्रे मिमतफाण्टाहृतेरित्यनुक्त्वा फाण्टाहृतिमिमताभ्यामित्युक्तेरित्यर्थः।

रूढ़ाद्राज्ञि च ट्ञः, ण्यात्तु द्व्यड्-मगध-कलिङ्ग-शूरमसात्। अपत्ये राज्ञि च देशतुल्याख्यक्षत्रियात् ट्ञः स्यात्, द्व्यड् मगधादेस्तु ण्यः। पञ्चालानामपत्यं राजा वा इत्यर्थे पाञ्चालः, वैदेहः। द्व्यजादेस्तु आङ्गः वाङ्गः सौह्मः मागधः कालिङ्गः शौरमसः। रूढ़ादिति किम्? पञ्चालस्य ब्राह्मणस्यापत्यं पाञ्चालिः।

वृद्धेत्कोशलाजादादगान्धारि-शाल्वेयात् ण्यड्। गान्धारिशाल्वेय-भिन्नात् वृद्धादिकारान्तात् कोशलादजादाच्चापत्ये राजनि च ण्यड् स्यात्। ट्ञणयोरपवादः। वृद्धात्—आम्बष्ठस्यापत्यं राजा वा आम्बष्ठ्यः, सौवीरस्यापत्यं राजा वा सौवीर्य्यः। इकारान्तात्—कुन्तेर्जनपदक्षत्रियस्यापत्यं राजा वा कौन्त्यः, अवन्तेरावन्त्यः, कोशलस्य कौशल्यः, अजादस्य आजाद्यः, स्त्रियामजादित्वादाप्, आम्बष्ठ्या कौशल्या आजाद्या। कौन्त्यावन्त्ययोस्तु कुन्ती अवन्ती। कुरुकुन्त्यवन्तिभ्योऽपत्य त्यस्य लुकि नृजातेरित इति ईप्। ङित्वात् पतिपुत्रादौ यङ ई, आम्बष्ठीपतिः आम्बष्ठीपुत्र इत्यादि। गान्धारि-शाल्वेयात्तु गान्धारः शाल्वेयः, पूर्व्वेण ट्ञः।

कुर्व्वादिभ्यो ण्यः पाण्डोर्डिण। कुरोर्निपूर्व्वशब्देभ्यो जनपदेभ्यो ण्यः स्यात् अपत्ये राज्ञि च, डिण पाण्डोः। कुरोर्जनपदस्यापत्यं राजा वा कौरव्यः, कथं माघे—"कुकुरकौरवस्त्रियः," तथा वेणीसंहारे—"संरब्धता कौरवा" इति? उच्यते—जनपदाविवक्षायां, विषयो देश इत्यर्थे ष्णो वा (१) तस्येदमित्यर्थे

(१) विकारवद्वेति सूत्रस्य टीकायां बहुरविचारात् परं "विषये देशे" इति वार्त्तिकमत्र द्रष्टव्यम्।

४२८ । गर्ग यस्क विदादि भृग्वत्रि कुत्साङ्गिरो वशिष्ठ गोतम रूढ़ाल्लुग् व्येऽस्त्रियाम् ।

( गर्ग—रूढ़ात् ५।, लुक् ।१।, व्ये ७।, अस्त्रियां ७। ) ।

---

वा । कथमस्त्रियै "कौरव्याः पशव" इति ? उपचारात् । न्यादेः—निधनस्यापत्यं राजा वा नैधन्यः नैपुण्यः नैषध्यः । पाण्डोर्जनपदस्य क्षत्रियस्यापत्यं राजा वा पाण्ड्यः, ड्यिति टिलोपः । रूढ़ इति किं ? महाभारते पाण्डोरपत्यं पाण्डवः । न हि तत्र पाण्डुदेशः ।

उडुम्बरादेः (१) ञिः । रूढ़ादपत्ये राज्ञि चेति । ट्यस्य बाधकः । उडुम्बरस्य जनपदस्य क्षत्रियस्यापत्यं राजा वा औडुम्बरिः तैलखलिः ।

उडुम्बरस्तिलखलो मद्रकारो युगन्धरः ।
भूलिङ्गः शरदण्डश्च कलकूटोऽश्मकस्तथा ।
प्रत्यग्रथो नव प्रोक्ताः परे शिष्टप्रयोगतः ॥

केकय-प्रलय-मित्रयूनां ष्णित्ते यादेरियः । एषां यादेर्भागस्य ष्णित्ते इयादेशः स्यात् । केकयस्यापत्यं कैकेयः, प्रलयादागतं प्रालेयं हिमं, मित्रयोर्भावः मैत्रेयिका, गोत्रचरणाद्वुञ्कः ।

४२८ । गर्ग । गर्गश्च यस्कश्च विदश्च ते आदयो येषां ते गर्गयस्कविदादयः, ते च भृगुश्च अत्रिश्च कुत्सश्च अङ्गिराश्च वशिष्ठश्च

---

(१) उडुम्बरादेरित्यपि पाठ ।

देशतुल्याख्यः चचियो रूढ़ः। एभ्यः परेषामुक्तानां त्यानां ब्वे विहितानां लुक् स्यात्, न तु स्त्रियाम्।

गर्गाः वत्साः, यस्काः लज्जाः, विदाः उर्व्वाः, भृगवः अत्रयः कुत्साः अङ्गिरसः वशिष्ठाः गोतमाः, अङ्गाः वङ्गाः कलिङ्गाः। स्त्रियान्तु भार्गव्यः।

---

गोतमश्च रूढ़श्च तत्तस्मात्। रूढ़शब्दस्य व्युत्पत्तिमाह देशतुल्याख्य इत्यादि। तथाच गर्गादि-ष्यः, यस्कादि-ष्ण-ष्णायनष्णि-ष्णेयाः, विदादि ट्टुः, अत्रि-ष्णेयः, भृगुकुत्साङ्गिरोवशिष्ठगोतमष्णः, रूढ़-ष्णय ट्टु षड् ष्ञ ष्णि इत्येषां ब्वे लुगित्यर्थः। क्रमेणोदाहरति गर्गा इत्यादि। ऋद्वयोस्तु गार्ग्यः गार्ग्यौ, यास्कः यास्कौ, वैदः वैदौ, आत्रेयः आत्रेयौ, भार्गवः भार्गवौ, कौत्सः कौत्सौ, आङ्गिरसः आङ्गिरसौ, वाशिष्ठः वाशिष्ठौ, गौतमः गौतमौ, आङ्गः आङ्गौ इत्यादि। एवं ब्वे लुकि मे गर्गाणां धनं गर्गधनम् अङ्गधनमित्यादि। ब्वे विहितानां त्यानामिति किम्? गार्ग्यश्च वात्स्यश्च आग्निवेश्यश्च ते गार्ग्यवात्स्याग्निवेश्याः। एवं गार्ग्यौ च वात्स्यौ च आग्निवेश्यौ च ते गार्ग्यवात्स्याग्निवेश्या इत्यादौ लुग् न स्यात्। परैकदेशिनस्तु एकवचनान्तानामपि द्वन्द्वसमासार्थवाक्ये समासे एकार्थाभावात् मद्भावविवक्षायां बहुत्वे लुगित्याहुः। तेन गर्गवत्साग्निवेशा इति उदाजह्रुः, प्रियवाग्ना इति प्रत्युदाजह्रुरिति। गर्गविदादौ उक्तौ।

यस्कादिर्यथा—

यस्को लह्य-तृचाऽयस्थूण-भलन्दन-द्व्यकर्णाः (१) ।
भण्डित भडित-खरपा भण्डिल-भड़िलौ सदामत्तः ।
क्रोष्टुमायो वहिर्योगः कम्बलहार कर्यकौ ।
क्रोष्टुमानो विपपुटोपरिमेखल-पादकाः (२) ।
कर्णाटकः क्रोष्टुपादस्तथा कटुकमन्थकौ (३) ।
एकसक्थः शीर्षमायः पिण्डीजङ्घस्तथैव च ।
जङ्घारथ-शीर्षमाण-लज्जा रचोऽसुरस्तथा ।
उरकाशोऽजवस्तिश्च विश्रिः कुद्रिरिमे त्रयः ॥

यस्कादयः षट् शिवादयः, भण्डितादयः पञ्च नड़ादयः, अज-वस्त्यादयस्त्रयः अश्वादयः । शेषाणामदन्तत्वात् ष्णिः । यस्का-देराकृतिगणत्वात् पुष्करसच्छब्दोऽपि, तेन पौष्करसादिः पौष्क-रसादी, व्हे पुष्करसदः ।

बह्वचो गोत्रस्य प्राच्यभरतेषु । बह्वचः शब्दात् प्राच्य-भरत-गोत्रविहितस्य त्यस्य लुक् स्यात् व्हे । प्राच्यगोत्रे—पन्नागारस्या-न्तरापत्यं पान्नागारिः पान्नागारी, व्हे पन्नागाराः । भरतगोत्रे—यौधिष्ठिरिः यौधिष्ठिरी युधिष्ठिराः । एवमार्ज्जुनिः आर्ज्जुनी अर्ज्जुनाः । बह्वच इति किम् ? भैमिः भैमी भैमयः ।

अगस्त्यकुण्डिन्योरगस्तिकुण्डिनौ च । आभ्यां गोत्रत्यस्य व्हे

(१) लह्य इत्यत्र लच इति च पाठान्तरम् ।

(२) त्रिपुट, उपरिमेखल । पादक इत्यत्र पद्क इत्यपि पाठ. ।

(३) कटुक इत्यत्र वटुक इत्यपि पाठ ।

लुक् स्यात्, लुकि सति अगस्त्य कुण्डिन्योरगस्तिकुण्डिनावादेशौ क्रमात् स्तः। अगस्त्यस्यान्तरापत्यम् ऋषि-ष्ण' आगस्त्यः, आगस्त्यौ ब्वे अगस्तयः। कुण्डिन्या अपत्यं गर्गादित्वात् ष्यः कौण्डिन्यः कौण्डिन्यौ ब्वे कुण्डिनाः।

तिककितवादेर्ये। तिकादेः कितवादेश्च परस्य गोत्रविहितस्य त्यस्य वे लुक् स्यात् ब्वे। तैकायनयश्च कैतवायनयश्च ते तिककितवाः। उपकलमकाः उजवाकुभाः उरसलङ्कटाः अग्निवेशदासेरकाः बह्वरभण्डीरथाः पफकनरकाः वकनखगुदपरिणद्धाः लङ्गशान्तमुखाः कृष्णाजिनकृष्णसुन्दराः भ्रष्टककपिष्ठलाः इत्यादि। वे किं? तैकायनयः कैतवायनयः। ब्वे किं? तैकायनिश्च कैतवायनिश्च तैकायनिकैतवायनी।

उपकादिभ्यो वाऽवे च। उपकादिभ्यो ब्वे विहितस्य गोत्रत्यस्य अवे वे च ब्वे लुक् स्याद्वा। उपकाः औपकायनाः, लमकाः लामकायनाः। उपकलमकाः औपकायनलामकायनाः। ब्वे किम्? औपकायनश्च लामकायनौ च औपकायनलामकायनाः। उपकादिर्यथा—

उपक-लमक-सुपिष्ट-मयूर जटिलक वधिरक-हुचिाक-कर्णम्।
पिष्ट-कपिष्ठल-खारीजङ्घाऽनुजक-शलाखल-कलसीकण्ठम्॥
फासङ्कतस्तो निदाघश्च मन्दकः कृष्णसुन्दरः।
कृष्णाजिनोऽथवारय भ्रष्टकः कृष्णपिङ्गलः॥
उन्तूक-दामकण्ठौ चाऽप्यटायक-कुपीतकौ।
अनुलोमाऽनभिहितः प्रतानोऽजपथस्तथा॥

उपकलमकौ नड़ादौ, सुपिष्टादयः सप्त शिवादयः, अनुलोमन् वाह्वादिः, शेषाणामदन्तत्वात् णिप्राप्तिः ।

गर्गविदादयः ञञयोः षे । गर्गादेर्विदादेश्च षे वर्त्तमानस्य ञञयोर्विहितस्य त्यस्य लुक् स्याद्वा ।

गार्ग्यस्य गार्ग्ययोर्वा धनं गर्गधनं गार्ग्यधनम्, एवं वैदस्य वैदयोर्वा धनं विदधनं वैदधनम् ।

रूढ़ात् काम्बोजादेर्नित्यम् । काम्बोजादे रूढ़ात् उत्पन्नस्य राजापत्यार्थत्यस्य लुक् नित्यं स्यात् । कम्बोज जनपदस्यापत्यं राजा वा कम्बोजः ।

कम्बोजादिर्यथा—

कम्बोजः केरलचोलः खशश्च यवनः शक इत्यादि ।

स्त्रियां कुरुकुन्त्यवन्तिभ्यः । एभ्यो राजापत्योत्पन्नत्यस्य, स्त्रियां लुक् स्यात् । कुरोर्जनपदस्यापत्यं स्त्री राज्ञी वा कुरूः, उत इत्यादिना ऊप् । एवं कुन्ती अवन्ती, षाडो लुकि ङ्जातेरित इति ईप् ।

अतश्चाप्राच्य भर्ग-यौधेयादेः । प्राच्यगोत्र-भर्गादि-यौधेयादि-भिन्नाद्राजापत्योत्पन्नस्य अतस्त्यस्य (१) स्त्रियां लुक् स्यात् । शूरसेनस्यापत्यं स्त्री राज्ञी वा शूरसेनी, इड़विड़स्यापत्यं स्त्री राज्ञी वा इड़विड़ी इत्यत्र ट्यस्य, मद्रस्यापत्यं स्त्री राज्ञी वा मद्री, दरदोऽपत्यं स्त्री राज्ञी वा दरत् इत्यत्र ञ्यः ष्यस्य लुक्, लुकि ईप् मद्र-शूरसेनाभ्याम् । अत इति किं ? कौशल्या आजाद्या । अप्राच्य-भर्ग-

(१) अकारान्तात्प्रत्ययस्य ।

यौधेयादेरिति किं ? पाञ्चाली वैदेही मागधी आङ्गी वाङ्गी सौह्मीत्यादि । भर्गादेः—भार्गी. कैकेयी । कथं "प्राक् केकयीतो भरतस्ततोऽभूत्" आद्यप्रकृतिरेव ? नदादिपाठादिति भागवृत्तिः ।

भर्गादिर्यथा—

भर्गः करूशः कश्मीरः कौरव्यः सुह्मकेकयौ ।
शाल्वोऽनुभवकश्चैव भर्गादिः परिकीर्त्तितः ॥

यौधेयादेः—यौधेयी शौभ्रेयीत्यादि । स्त्रियामिति चकारेणानुकर्षणात्र व्यमत (१) ।

न गोपवनादेः । गोपवनादेर्गोत्रत्यस्य लुङ् न स्यात् । अयं विदाद्यन्तर्गणः । गौपवनाः, गौपवनस्य गौपवनयोः कुलं गौपवनकुलमित्यादि ।

## उक्तोऽपत्याधिकारः ।

ष्णो वेत्त्यादौ यमादिभ्यस्त्वपत्यवत् । स्वार्थस्तात्तेः ष्णः स्यात् वेत्त्यादिष्वर्थेषु, यमादिभ्यस्तु अपत्यवत् त्याः स्युः । वेत्त्यादिर्यथा—

वेत्ति । अधीते । रक्तम् । युक्तः कालः । दृष्टं साम । परिवृतो रथः । उद्धृतम् । संस्कृतं भक्ष्यम् । प्रहरयिता । पौर्णमास्यस्मिन् । अस्य देवता । समूहः । विषयो देशोऽस्य । आदिरस्य प्रगाथे । संग्रामः । तदस्त्यस्मिन् देशे । निर्वृत्तः । निवासः । अदूरभवः । विकारः । अवयवः । भवः । व्याख्यानम् । प्रायभवः । जातः । कृतः । क्रीतः । लब्धः । कुशलः । वर्णं दृश्यते । संभूतः । साधुः । पुण्यात् ।

---

(१) अनुवर्त्तते इति शेषः ।

४३० । ढघे कात् ष्णीककण्णीनेया श्चानितश्च।

( ढ घे ७।, कात् ५।, ष्णीक कण् णीन इयाः १।।।, च ।१।, अनितः १।।।, च ।१। )।

कात् परा एते पूर्व्वं च सेतो ऽनितश्च स्युः ढे घे च वाच्ये।

---

पच्यमानम्। उप्तम्। देयमृणम्। मृगो व्याहरति। अस्य सोढ़म्। आगतः। प्रभवति। गच्छति। अभिनिष्क्रामति। अधिकृत्य कृतो ग्रन्थः। एकदिक्। अस्य निवासः। अस्याभिजनः। अस्य भक्तिः। रुह्यते। श्रूयते। उद्यते। प्रोक्तम्। उपज्ञातं। कृतो ग्रन्थः। इदम्।

यमादिस्तावत्—यमः आदित्यः अग्निः कलिः दितिः अदितिः पृथिवी देवः अपत्याद्यादिश्चानात्मा: उत्सादयश्च। यस्मादिर्व्यक्तः कुर्व्यादौ। उदाहरणानि तत्र तत्र वक्ष्यामि।

दित्यदितिभ्यां न ष्णेयः। आभ्यां वेत्त्यादौ ष्णेयो न स्यात्। दितिं वेत्ति अधीते वा दैत्यः, एवं आदित्य इत्यादौ ष्णः, न दैतेय आदितेय इति।

४३०। ढघे। ढश्च घश्च तत्तस्मिन्। कं कारकम्। ष्णीकश्च कण् च णीनश्च इयश्च ते। नास्ति इत् येषां ते। चकारेण पूर्वं-सत्र-त्या अनुलक्ष्यन्ते। तथाच अतत्यास्तत्याश्च त्या एकादश सेतोऽनितश्चाभिधानाद्गविषयमित्यर्थः।

ढादित्यधिक्रियते धात् प्राक्।

वेत्त्यधीते। ढात् परः ष्णः स्यात् वेत्त्यधीते अर्थे। वैया-

तर्कं वेत्ति अधीते वा तार्किकः, पदकः, क्रमकः, वैयाकरणः ; वाचा क्रतं वाचिकं, पाणिनीयं ; शक्त्या युध्यते ऽसौ शाक्तीकः, याष्टीकः, तिर्य्येण युक्ता रात्रिः तैषी, पौषी ; चत्वाय साधुः क्षत्त्रियः, यज्ञाय हितं यज्ञियं ; मथुराया आगतः माथुरः ; इह भवं ऐहिकं, कादाचित्कं, ग्रामीणः, ग्राम्यः, मूर्द्धन्यः, नादेयः शालीयः, नागरः, अग्रः ।

---

करण इति व्याङ् पूर्व्वात् क्वधोरनट् णः अट्, व्याकरणं वेत्ति अधीते वा इत्यर्थे ष्णः णित्ते युम् त्रिः ययोरित्यकारलोपः । एवं प्रभाकरोपलक्षितो ग्रन्थः प्रभाकरस्तं वेत्ति अधीते वा प्राभाकर इत्यादि ।

ष्णिक उक्थादेः षष्टिशतपथाभ्यां त्वणित् । उक्थादेः ष्णिकः स्यात् षष्टिपथ-शतपथाभ्यान्तु णिकः । उपचारात् उक्थशब्द औक्थिकार्थः, तं वेत्ति अधीते वा औक्थिकः लौकायतिकः ।

उक्थादिर्यथा—

उक्थो लोकायतः श्लक्ष्णः पुराणं संहिता शरत् ।
वर्षा वसन्तो हेमन्तः सङ्घातः संग्रहो गणः ॥
अथर्व्वा शिशिरो हस्तिवर्चोयर्व्वेण-लक्षणम् ।
न्याय न्यासावनुपदानुगुणात्मगुणा अपि ॥
द्विपदा त्रिपदा ज्योतिरायुर्व्वेदः क्रमेतरः ।
यज्ञ सक्षानुकल्पाय पुनरुक्तः पदःक्रमः ॥

चरमप्रथमाभ्यान्तु गुणोऽथ क्रतुवाचिनः ।
आख्यानाख्यायिके (१) चेतिहासो वै लक्षणोत्तराः ॥
अधर्म्माद्यादिविद्यान्ता अथ कल्पादिवर्ज्जिताः ।
सूत्रान्ताश्चाथ कल्पान्तास्तथास्मिन्ननुसूरपि ॥

अथर्व्वाणं वेत्त्यधीते वा आथर्व्वणिकः, इके न नलोपः। नैयायिकः नैयासिकः, य्वोर्युम् इतीमि त्रिः। अनुकल्पशब्दं परे पठन्ति (२)। वस्तुतस्तु कल्पान्तत्वात् सिध्यति। चारमगुणिकः प्राथमगुणिकः। क्रतुवाचिनः क्रतुविशेषवाचिनः। आश्वमेधिकः वाजपेयिकः राजसूयिकः। आख्यानं ग्रन्थान्तर्गतोपेक्षितस्य वर्णनम्। यवक्रीतमधिकृत्य कृतो ग्रन्थ इत्यर्थे ण्यो कृते कश्चित्तस्य लुक्, तं वेत्त्यधीते वा यावक्रीतिकः प्रैयङ्गविकः। मूले तार्किक इति (३)।

आख्यायिका प्रबन्धविशेषः, तमधिकृत्य कृतो ग्रन्थः, तस्य लुक्, तं वेत्त्यधीते वा इत्यर्थे ष्णिकः। वासवदत्तिकः सौमनोत्तरिक इत्यादि। लक्षणोत्तरा इति—लक्षणशब्द उत्तरो येषां, गौलक्षणिक आश्वलक्षणिकः। अधर्म्माद्यादिविद्यान्ता इति—सार्पविद्यिकः वायसविद्यिकः। धर्म्मादयस्तु धार्म्मविद्यः त्रैविद्यः आङ्गविद्यः। अथानन्तरं कल्पादिवर्ज्जिताः सूत्रान्ता इति—सांग्रहसूत्रिकः वार्त्तिकसूत्रिकः। कल्पादिषु काल्पसूत्रः। कल्पान्ता

(१) आख्यानविशेषवाचिनः, आख्यायिकाविशेषवाचिनश्च।
(२) तन्त्रान्तरानुसारेणैताभिरपि च पठित इत्याशयः।
(३) आख्यानोदाहरणमिति शेषः।

इति—मातृकल्पिकः पाराशरकल्पिकः । अनुसूर्नाम ग्रन्थविशेषः, तं वेत्त्यधीते वा इत्यर्थे ण्णिकः ।

इसुसुक्तान्तादिकस्य कः । उक् प्रत्याहारः । इसन्तादुसन्तादुक्प्रत्याहारात् तान्ताच्च परस्य इकस्य कः स्यात् । आनुसुकः, ण्णिकस्यैकस्य कत्वविधानात् ण्णित्वे व्रिः । षष्टिपथं वेत्त्यधीते वा षष्टिपथिकः षष्टिपथिकौ शतपथिकः शतपथिकौ ।

पदादेः कः । ढादित्येव । पदादेर्वेत्त्यधीते वार्थे कः स्यात् । मूले पदकः क्रमक इति । पदादिर्यथा—

पदं शिक्षा क्रमः साम मीमांसोपनिषच्च षट् ।

शिक्षकः मीमांसकः, केऽकः स्वः ।

पदोत्तरदादिकः । पदमुत्तरपदं यत्र तस्मात् इकः स्यात् वेत्त्यधीते वार्थे । पूर्व्वपदं वेत्त्यधीते वा पूर्व्वपदिक उत्तरपदिक इति । एकदेशिनस्तु पदोत्तरशब्दादेव इकः, पदोत्तरपदिक इत्याहुः । आनुपदिक इति उक्थादित्वात् ।

अनुब्राह्मणादिन् । उपनिषद्भागातिरिक्तवेदव्याख्यानं ब्राह्मणशब्देनोक्तं, तस्य सदृशम् अनुब्राह्मणं, सादृश्ये वसः, तद्वेत्त्यधीते वा अनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति । चान्द्रास्तु अस्त्यर्थेऽमा साधयन्ति इति चिन्त्यम् ।

इयस्तु वाधीते छन्दसः श्रोत्रश्च । छन्दसोऽधीतेऽर्थे इयः स्यात् वा, तस्मिन् छन्दसः श्रोत्रादेशश्च । छन्दोऽधीते श्रोत्रियः पक्षे छान्दसः, त्वन्तस्य नानुवृत्तिः ।

सूत्रात् संख्याकोडो लुक् । सूत्रवाचिनः संख्याप्रकृतेः कोडो-

ऽध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनीयमष्टकं (१) सूत्रं वेत्त्यधीते वा अष्टकः पाणिनीयः, दशको वैयाघ्रपदीयः। संख्येति किं? महावार्त्तिकं सूत्रं वेत्त्यधीते वा माहावार्त्तिकः। कोड इति किं? चतुष्टयं सूत्रं वेत्त्यधीते वा चातुष्टयः।

सहसर्व्वपूर्व्वाच्च। सहपूर्व्वात् सर्व्वपूर्व्वाच्च लेः परस्याध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। सवार्त्तिकं वेत्त्यधीते वा सवार्त्तिकः ससंग्रहः, एवं सर्व्ववेदः सर्व्वशास्त्रः, पञ्च वेदान् वेत्त्यधीते वा तार्थे वाच्ये गः।

प्रोक्ताच्च। प्रोक्तविहितत्यान्तादध्येतृवेदित्रोर्विहितस्य त्यस्य लुक् स्यात्। पाणिनिना प्रोक्तं वेत्ति अधीते वा पाणिनीयः स्त्रियां पाणिनीया, अपिशलस्यापत्यं आपिशलिः, तेन प्रोक्तम् आपिशलं, तद्वेत्त्यधीते वा आपिशलः स्त्रियामापिशला, णित्त्वेऽपि गौणत्वान्नेप्।

. कल्प-सूत्र-च्छन्दो ब्राह्मणानि तद्विषयाणि। एतानि प्रोक्ताधिकारत्यान्तानि अध्येतृवेदितृविषयाणि भवन्ति। अनन्यत्रभावो विषयार्थः। तथाच प्रोक्तत्यान्तानामध्येतृ-वेदितृ-विषयता-व्याप्य-विषयताकत्वमिति पर्य्यवसितार्थः (२)। एतेन स्वातन्त्र्यम् उपाध्यन्तरयोगे वाक्यञ्च निवर्त्तते। कल्पस्य तावत्—काश्यपेन

(१) अष्टौ अध्यायाः परिमाणमस्येति अष्टकम्।

(२) छन्द प्रभृतिभ्यस्तेन प्रोक्तार्थे प्रत्ययः स्यात् यदा प्रोक्तप्रत्ययान्तेभ्यः यन्त्रेभ्यः परं वेत्त्यधीते वेत्यर्थे प्रत्ययस्तल्लोपश्च सम्भाव्यते। न तु कठेन प्रोक्तं कठमिति स्वातन्त्र्येण प्रयोगः स्यात्। तेन कठेन प्रोक्तं कठम्। कठं वेत्त्यधीते वा कठ इत्येवं वाक्यमपि न स्यात्। अतएवोक्तं कठेन प्रोक्तमधीते इति शब्दमुग्धबोधम्।

प्रोक्तं कल्पं (१) वेत्त्यधीते वा काश्यपी, कश्यपशब्दात् प्रोक्तार्थे णिन् (२) तस्मादध्येतृवेदित्रोः ष्णः, तस्य लुक्, लुकि सति अनेन प्रोक्तस्याध्येतृवेदितृविषयत्वे लिङ्गवचने (३) न भवतः। एवं कौशिकी। इह कल्पविषयस्य ग्रहणात् पैङ्गीकल्प इत्यादौ न स्यात्। सूत्रस्य तावत्—पाराशर्य्येण प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वा पाराशरी भिक्षुः, कर्म्मन्दी भिक्षुः (४) शैलाली नटः, कृशाश्वी नटः (५)। छन्दसस्तावत्—कठो ब्राह्मणः, तेन प्रोक्तं छन्दो वेत्त्यधीते वा कठः, मोदः पैप्पलादः आर्चाभी वाजसनेयी। ब्राह्मणस्य तावत्—तण्डिना विप्रेण प्रोक्तं ब्राह्मणं (६) वेत्त्यधीते वा ताण्डी शाट्यायनी ऐतरेयी। एषामिति किम्? पाणिनीयं व्याकरणम्।

अगोत्रष्णि कण्वादिष्णाद्वृद्धादीयो भवादौ। गोत्रविहितष्णान्तवर्जितात् कण्वादिष्णान्तवर्जिताच्च वृद्धसंज्ञकादीयः स्यात् भवादिष्वर्थेषु। गार्गीयः वात्सीयः शालीयः ग्रैवीयः औपगवीयः त्वदीयः मदीयः अस्मदीय इत्यादि। गोत्रष्णि-कण्वादिष्णाभ्यान्तु दाक्षः काण्वः जामदग्न्यः। गोत्रार्थे इति किम्? सुतङ्गमेन

(१) यागक्रियोपदेशको वेदाङ्गग्रन्थविशेषःकल्पः।

(२) णिनुविधायकसूत्रं परत्र वक्ष्यति।

(३) लिङ्गवचने इति प्रोक्तस्येत्यनेनान्वयः।

(४) कर्म्मन्देन प्रोक्तं भिक्षुसूत्रं वेत्त्यधीते वेति। भिक्षुः परिव्राट् कर्म्मन्दी त्यमरः।

(५) कृशाश्वीत्यत्र वक्ष्यमाणसूत्रेण इन्।

(६) मन्त्रेतरवेदभागो ब्राह्मणम्।

निर्वृत्तः सौतङ्गमः, तस्येदं सौतङ्गमीयम्। ण्य इति किम्? कण्वो देवताऽस्य काण्वः, तस्येदं काण्वीयम्।

द्व्यचः प्राच्यभरताच्च। प्राच्यगोत्रण्यान्तात् भरतगोत्रण्यान्ताच्च द्व्यच ईयः स्यात् भवादौ। पूर्व्वेणाप्राप्तेऽनेन विधीयते। पौष्पीय वैङ्गीयः काशीयः। द्व्यच इति किम्? पान्नागारः। प्राच्यभरतादिति किम्? दाक्षः प्राचः। ननु कथं काशीय इत्युदाहृतं, काश्यादेर्णिकण्णिकयोर्विधानादिति चेन्न, तत्र चेदिशब्द-समभिव्याहृत देशवाचक-काशीशब्दग्रहणात्। इह गोत्रार्थस्य ग्रहणं, न तु देशवाचकस्येति।

कखोडो देशे। द्व्यादित्येव। ककारोडः खकारोडश्च देशे वर्त्तमानाद्द्व्यादीयः स्यात् भवादौ। कोड्यास्य वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधनार्थमिदम्। आवड्नकीयं शैवनकीयम् आश्वत्थकीयं कौटशिखीयम् आयोमुखीयम्। द्व्यादिति किम्? सौमुखम्।

ग्राम-कन्या-ह्रद-पलद-नगरोत्तरदात्। ग्रामाद्युत्तरदाद्देशवाचकात् द्व्यादीयः स्यात् भवादौ। दाक्षिग्रामीयं दाक्षिकन्थीयं दाक्षिह्रदीयं दाक्षिपलदीय दाक्षिनगरीयं माहकिग्रामीयमित्यादि। द्व्यादिति किम्? मह्नगरे भवः माहनगरः। उत्तरदादिति-किम्? वाहुग्रामं वाहुनगरम्। वाहीकग्रामेभ्यश्चेति णिकण्णिकयोर्बाधकमिदम्।

पर्णक्षकणाद्भारद्वाजे। द्व्यादिति निवृत्तम्। भारद्वाजे नाम्नि देशे वर्त्तमानाभ्यां पर्णक्षकणाभ्याम् ईयः स्यात् भवादौ। पर्णीयं क्षकणीयम्। भारद्वाजदेशभिन्ने तु पार्णं कार्कणम्।

गहादेर्भवतश्च ईङ् च । गहादेरीयः स्यात् भवादौ, भवच्छ-ब्दस्य ईये ईङ् च, ङ इत् । गहीयम् अन्तरीयम् ।

गहादिर्यथा—

गहान्तरौ नैमि समानशाखौ दत्ताम-काठेरणि-धन्विनश्च ।
आहिंसि-नाठेरणि-पूर्व्वपक्षा भौरिः समः श्रौग्रिरिहोत्तरश्च ॥
उत्तमो विषमो भौजिरन्तस्थो मगधासुरी ।
इषुप्रापरपक्षाङ्गाधमशाखा स्तथा भवेत् (१) ॥
शौङ्गिरुत्तमशाखश्च व्याडि-ख्याड़ायनौ तथा ।
इष्वनीकोऽग्निशर्म्मा च शौङ्गि-वाराटकौ तथा ॥
एकहृश्च वाल्मीकिरवस्यन्दन पार्श्वतः (२) ।
एकग्रामो देवशर्म्मिः कामप्रस्थस्तथैकतः ।
आमित्रेरकपलाशौ (३) च मुखतः चौमहूत्वि च ॥

येऽत्र वृद्धास्तेभ्य औत्सर्गिकः ष्णौ, येऽवृद्धास्तेभ्यो जनपदत्वात् षकौ, ये तु ष्णान्तास्तेभ्यो व्यभिचाराच्चभरतात् ष्णौ बाध्यते । पार्श्वतीयः, ष्यटेर्लोप इति टिलोपः । कामप्रस्थशब्दात् प्रस्था-न्तत्वात् षके प्राप्ते विधानम् । पूर्व्ववदेकतीय इति चान्द्राः । आकृतिगणोऽयम् । भवच्छब्दस्यान्तस्य ईङ् भवदीयः ।

पर्व्वताद्वा त्वऽमनुष्ये । पर्व्वतशब्दान्मनुष्ये वाच्ये ईयः स्यात् भवादौ, मनुष्यभिन्ने तु वा । पर्व्वतीयो मनुष्यो राजा वा, पर्व्व-तीयं पार्व्वतमुदकम् ।

---

(१) इषुग, अपरपक्ष, अङ्ग अधमशाख ।

(२) पार्श्वतस् ।

(३) आमित्रि एकपलाश ।

गर्त्तोत्तरदाद्देशे। देशवाचकाद्गर्त्तोत्तरदादीयः स्यात् भवादौ। वृकगर्त्तीयः। उत्तरादिति किम्? वाहुगर्त्तम्। वाहीकग्रामेभ्यश्चेति णिकणिकयोर्बाधनार्थम्।

प्राचि तु कटादेः। प्राग्देशवाचिनः कटपूर्व्वादीयः स्यात् भवादौ। कटनगरीयम्। कटघोषीयम्। प्राग्देश इति किम्? काटनगरः।

स्व-पर-देव-राज-जनस्य कंच। एभ्य ईयः स्यात्, एषां कन् च। स्वकीयः (१) परकीयः देवकीयः राजकीयः जनकीयः। आगमशासनमनित्यमिति न्यायात् स्वीयं देवीयमित्याद्यपि। तथाच धनमङ्करहृदत्तं स्वीयमिति शिष्टप्रयोगः। वामनधर्म्मदासौ तु स्वस्य इदं सौवमित्याहतुः।

पृथिवीमध्याच्च मध्यमश्च। पृथिवीमध्यशब्दात् ईयः स्यात्, तस्मिन्मध्यमादेशश्च। मध्यमीयः।

वेणुकादेर्णित्। वेणुकादेरीयो णित् स्यात् भवादौ। वैणुकीयम्। वेणुकादिर्यथा—

वेणुक चित्रकमुत्तरपदकं मध्यमपदकः प्रस्थकमन्यत्।

अन्यदित्यनेन शारदीयम्। वेणुकादिपञ्चानां कोड्त्वात् ष्णे प्राप्ते पाठः। आकृतिगणोऽयम्।

---

(१) धनमङ्करहृदत्तं स्वीयमित्यत्राहुरिति पशुपतिरिति संक्षिप्तसारे (१२८९सू) द्वारादीनाञ्चेत्यत्र वामनेन धर्म्मदासेन च स्वस्येदं सौवमित्युदाहृतम्, अस्माभिरपि स ऐरित्यत्र। तस्मात् क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इति वक्तव्यम्। इति गोयीचन्द्रः।

काश्यादेर्ञ्णिकञ्णिकौ । काश्यादेः परौ ञिकञ्णिकौ स्यातां भवादौ । काशिका काशिकी चैदिका चैदिकी । काश्यादिर्यथा ।

काशिश्च-चेद्यच्युत-मोदमानाः
संवाह-गोवासन-साधुमित्रम् ।
सुरङ्ग-सम्पालुपराज पूर्ब्बे-
कालोऽकाला अपि सिन्धुमित्रः ।
शकुलादो हस्तिकर्षूः कुनामा करणेन च ।
आपत्काल-हिरण्याभ्यां दासमित्रेण संयुतः ॥
दासग्रामो देवदत्तो युवराजयुतस्तथा ।
सर्व्वधर्म्मो देवराजो व्यासोऽरिन्दम एव च ॥
सौधावतान इत्यष्टाविंशतिः समुदीरिताः ।

काशिचेदिभ्यां जनपदत्वात् णकः, सम्पालिशब्दात् त्वभिन्न-प्राच्यभरतगोत्रव्यन्तात् ण्यो, येऽत्र वृद्धास्तेभ्यः ईयो, येऽवृद्धास्तेभ्यः ण्यो, हस्तिकर्षूशब्दाद्देशवाचकादुदन्तात् ण्णिकश्च बाध्यते । देवदत्तशब्दोऽत्र प्राग्देशवाचकः, तस्माद्वृद्धसंज्ञकत्वादीये प्राप्ते विधानम् । वाहीकग्रामवाचकात्तु (१) देवदत्तः ।

वृद्धाद्वाहीकग्रामाद्वा तूशीनरग्रामात् । वाहीकग्रामवाचकात् वृद्धात् ञिकञ्णिकौ स्यातां भवादौ । शाकलिका शाकलिकी मान्यविका मान्यविकी । अवृद्धात्तु माहनगरम् । उशीनरग्रामवाचकात्तु आह्वजालिका आह्वजालिकी सौदर्शनिका सौदर्शनिकी, पक्षे आह्वजालीया सौदर्शनीया ।

(१) वाहीकदेशीयग्रामवाचकात् ।

देशे युङ्मरुवचनाभ्यां णकोऽञ्याञः । हवाद्युडो देशवाचकाद्धन्वमरुवाचकाच्च णक. स्यात् भवादौ न तु ञ्याञः (१)। सांकाश्यकः काम्पिल्यकः मागध्यकः । धन्वन्शब्दो मरुवाची, पारेमध्ये इत्यादिना व सः, अन इत्यनेनाख्य. (२) पारेधन्वे जातः पारेधन्वकः, ऐरावते जातः ऐरावतकः । ञ्याञस्तु सुप्रख्यस्य इदं सौप्रख्यं सौप्रख्यदेशे भवः सौप्रख्यीयः, ञ्याञो यकारः शकारस्थानीयः, तस्यासिद्धत्वमिति पाणिनीयाः ।

वहप्रस्थपुरान्ताच्च । वहान्तात् प्रस्थान्तात् पुरान्ताच्च देशवाचिनो हवात् णकः स्याद्भवादौ । पैलुवहकः फाल्गुनीवहकः, मालाप्रस्थकः, नान्दीपुरकः । रुड्त्वात् परसूत्रेण सिद्धे पुरग्रहण प्राच्यार्थं, तथाहि नान्दीपुरमुदीच्याम् । हवादिति किं ? शैवपुरः ।

प्राचि स्त्री रुडः । प्राचीति देशविशेषणम । ईकारान्ताद्रेफोडव प्राग्देशवाचकात् हवात् णकः स्याद्भवादौ । माकन्दी—माकन्दकः, काकन्दी—काकन्दकः । पाटलिपुत्रकः ऐकचक्रकः, एकचक्रशब्दस्य प्राग्देशे एडादित्वात् हवसंज्ञा । हवादिति किं ? दशपुरे जातः दाशपुरः । प्राचीति किं ? दात्तामित्रीयः सौवीरनगरीयः । दात्तामित्री सौवीरनगरी, एते उदीच्यदेशस्थे ।

जनपद-तदवधिभ्याम् । हवाद्देशवाचिनो जनपदात् जनपदा-

---

(१) ञ्याधातमाश्रितयकारोऽत्र भट्टाचार्येण ।

(२) समासान्त समस्यस्य इत्यर्थः ।

वधेश्च (१) णकः स्याद्गवादौ। आभिसारकः, अप्राच्यत्वात् पूर्व्वेण-ग्रामेऽनेन णकः। आदर्शकः। जनपदावधेस्तावत् औपुष्ठकः श्यामायनकः। ननु जनपदावधिर्जनपद एव न ग्रामः, किमर्थं तर्हि पृथग् ग्रहणमिति चेत् सत्यं, तदवधिग्रहणं बाधकबाधनार्थं, तेन त्रैगर्त्तकः इत्यत्र गर्त्तोत्तरदादितीय बाधित्वा जनपदा-वधेर्णक एव स्यादिति वामनः।

व्वविषयादद्वहाच्च। अद्वहात् द्वहाच्च जनपदवाचिनस्तदवधि-वाचिनश्च व्वविषयात् णकः स्याद्गवादौ। ष्णेययोरपवादः। अद्वहाज्जनपदात्तावत्—अङ्गाः आङ्गकः (२)। अद्वहाज्जनपदा-वधेस्तावत्—अजमीढ़ाः आजमीढ़कः, अजक्रन्दाः आजक्रन्दकः। द्वहाज्जनपदात्तावत्—दार्व्वाः दार्व्वकः। द्वहाज्जनपदावधेस्ता-वत्—कालञ्जराः कालञ्जरकः। विषयग्रहणमनन्यत्रभावार्थं (३) तेन जनपदैकशेषबहुत्वे मा भूत्। तेन वर्त्तनी च वर्त्तनी च वर्त्तनी च ता वर्त्तन्यः, वार्त्तनः (४)। ननु द्वहात् पूर्व्वेणैव णके सिद्धे किमर्थं चकारेण तदनुकर्षणमिति? उच्यते—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय इति न्यायात् व्वविषयात् द्वहादाधा विधेयेत्यदोषः (५)।

---

(१) जनपदश्चासौ अवधिश्चेति कर्म्मधारयाज्जनपदरूप एवावधिर्लभ्यत— इति तत्त्वबोधिनी।

(२) अङ्गा जनपदास्तेषु भव आङ्गकः।

(३) यः शब्दो नित्यबहुवचनान्तस्तस्मैवायं विधिरिति भावः।

(४) वर्त्तनीषु भवो वार्त्तनः।

(५) अयमेव तक्रकौण्डिन्यन्याय इत्युच्यते—पूर्व्वसूत्रे हि जनपदसामान्ये

वर्त्तोऽग्नि कच्छ वल्लोत्तरदात् । वर्त्तायुत्तरदात् देशवाचकात् वृद्धादवृद्धाच्च णकः स्याद्भवादौ । ण्येययोरपवादः । चक्राणि वर्त्तन्तेऽत्र चक्रवर्त्तः वृतुङ् वर्त्तने डे घञ् तस्माच्चाक्रवर्त्तकः । एवं कालाग्नकः चारुकच्छकः ऐन्द्रवल्लकः । वर्त्ताग्निकच्छवल्लान्तादिति कृते सिद्धे उत्तरदग्रहणं बहुत्वपूर्व्वादप्राप्त्यर्थं, तेन बाहुवर्त्तः । कथं बाहुवर्त्तकः इति ? उच्यते—बहवो वर्त्तन्तेऽत्र इति व्युत्पत्त्या बाहुवर्त्तकः ।

धूमादेः । धूमादेर्देशवाचकाण्णकः स्याद्भवादौ । धौमकः घौपस्थलकः । धूमादिर्यथा—

धूमो घोपस्थलो घोपपुष्यो दाण्डायनस्थली ।
धार्त्तराष्ट्री सुराष्ट्री च तीर्थ-पल्ली शशादनाः (१) ।
भस्त्राशिला राजगृह भचालीवर्व्वरावयौ (२) ॥
शस्यायो माठरो मद्रकुलोऽञ्जीकुलगर्द्दभौ (३) ।
आर्ज्जुनायन-साकेत-पण्डण्ड-दक्षिणापथाः ॥
द्वीपाऽन्तरीपोज्जयिनी-द्वाराद्वाराऽरण-कुक्षयः ।
एकत्रिंशदिमे प्रोक्ता स्याद्वारस्य मद्रास्थलो ॥

---

वृद्धात् ण्को विहितः, यथा आम्रगुप्तायन्ये दाक्षिदानम्, एष तु बहुवचनविषये विशेषे व्यदृद्धात् ण्क, यथा कौशिक्ये तक्रदानम् । ततश्च बहुवचनादपि वृद्धात् ण्के प्राप्ते आरभ्यमाणः व्यदृद्धात् ण्क वृद्धात् ण्कस्य बाधकः स्यादिति चकारेण समुच्चीयते इत्यर्थः इति पदमञ्जरी ।

(१) पल्लीत्यत्र मल्ली इत्यपि पाठः ।

(२) वर्व्वर, व्याघ्र ।

(३) अञ्जीकुल आञ्जीकूल आजीकूल इति पाठत्रयम् ।

नगरात् कुत्सन प्रावीण्ययोः । निन्दायां प्रावीण्ये च नगर-शब्दाणकः स्याद्बवादौ । नागरकः चौरः प्रवीणश्च । कुत्सन-प्रावीण्ययोरिति किं नागरः पुरुषः ।

अरण्यान्नॄ पथि न्याय विहाराऽध्याय-हस्तिषु वा तु गोमये । अरण्यादेतेषु वाच्येषु णकः स्याद्बवादौ गोमये तु वा । आरण्यको मनुष्यः न्यायो विहारो ऽध्यायो हस्ती च । आरण्यको गोमयः आरण्यश्च । एष्विति किम् आरण्याः पशवः ।

कच्छादेर्नृ-तत्स्थयोः । देशवाचकात् कच्छादेर्मनुष्ये मनुष्यस्थे च वाच्ये णकः स्याद्बवादौ । काच्छको मनुष्यः, काच्छिका चूड़ा, काच्छको नखः, काच्छकं हसितं, काच्छको विवादः । काश्मीरको मनुष्यः काश्मीरको नखः काश्मीरकं हसितम् ।

कच्छादिर्यथा —

कच्छ काश्मीर कम्बोज मधुमत् कुरु सिन्धवः ।
कुतूभर-विरूपौ च द्वीपाऽनूप-विजापकाः ।
माल्वाऽङ्गाराऽनुषण्डायाऽजवाहौ वर्णुरङ्कु च ॥

इह साल्वशब्दपाठो वक्ष्यमाणणार्थः ।

साल्वादपदातौ । साल्वशब्दात् पदातिभिन्ने मनुष्ये मनुष्यस्थे च वाच्ये णकः स्याद्बवादौ । साल्वको मनुष्यः, साल्वक हसितम् । पदातौ तु साल्व. पदातिर्व्रजति । नियमार्थं वचनम् ।

गो-यवाग्वोश्च । साल्वादित्येव । साल्वको गौः, साल्विका यवागूः ।

वर्णौ: कन्यायाः । वर्णुर्नाम नदः, वर्णुनदसमीपवासिनः

कन्याशब्दात् णकः स्याद्भवादौ। णिकस्य बाधकमिदम्। कान्यकः अन्यत्र कान्यिकः।

वा तु कुरु-युगन्धराभ्याम्। आभ्यां णको वा स्याद्भवादौ। कौरवकः कौरवस्य गौः। नृतत्स्थयोस्तु कौरवको मनुष्यः, कौरविका चूड़ा, कच्छादिपाठात् यौगन्धरकः यौगन्धरस्य गौः। जनपदावेतौ, एताभ्यां वृद्धादपीति (१) नित्ये प्राप्ते विकल्पः।

कुलात् सौवीरे। कुलशब्दात् सौवीरे वाच्ये णकः स्याद्भवादौ। कौलकः सौवीरः, अन्यत्र कौलः।

पाथेयाऽऽनर्त्त-विदेह-पाण्डुकात्। एभ्यो णकः स्याद्भवादौ। पाथेयशब्दस्य वृद्धत्वेऽपि अदेशार्थं वचनम्। आनर्त्तविदेहयोर्जनपदत्वेऽपि अजनपदार्थम्। पाण्डुकशब्दात् कोडः ष्यस्य बाधनार्थम्। यथा पाथेयकः आनर्त्तकः वैदेहकः पाण्डुककः।

राष्ट्रादियः। राष्ट्रशब्दादियः स्याद्भवादौ। राष्ट्रियः।

दूरोत्तराभ्यामेत्य णाहौ। आभ्यामेतौ क्रमात् स्तः भवादौ। दूरेत्यः औत्तराहः।

नदी-कत्रि-पार-दिवादिभ्यः ष्णेय-णेयकेन याः। नद्यादेः ष्णेयः कत्र्यादेर्णेयकः परादेरीनो दिवादेर्यः स्याद्भवादौ। नादेयः वाराणसेयः। नद्यादिर्यथा—

नदी वाराणसी दार्वा (२) वामा कागायनी मही।
त्र्यावस्ती खादिरी दामा कौशाम्बी सेनकी (३) गिरिः॥

---

(१) अनयो कशाबाधकत्वाद्वृद्धत्वम्।

(२) दूर्वा इत्यपि पाठ।

(३) शेतकीत्यपि पाठ।

सात्वा दार्वी पुरं पूर्व्वनगरी, वड़वा हये ।

चम्पवनमिति प्रोक्तं नद्यादौ कोविदोत्तमैः ।

येऽत्र हृद्वास्तेभ्य ईयः, येऽहृद्वास्तेभ्यः ण्यः, हृद्वेकारान्ताण्णकः रुडो ण्णकश्च बाध्यते । वाडवेयो हयः, अन्यत्र वाड़वः । कत्र्यादेस्तावत्—काक्षेयकः (१) शौभ्रेयकः । कत्र्यादिर्यथा ।

कत्त्र्युग्भिपुष्करं हस्ती पुष्कल ग्राम यौवनम् ।

कुण्डी (२) चर्म्मण्वती माहिष्मती ग्रीवा तु भूषणे ।

कुक्ष्यायास्तु यलोपोऽस्मिन्नसौ कुक्षिः कुलं शुनि (३) ।

सञ्ज्ञायां नगरी पञ्चदशैह परिकीर्त्तिताः ।

ग्रैवेयकं कण्ठभूषा । कौक्षेयकः अत्र येयके यलोपः । कौक्षेयकः खड्गः । कौलेयकः श्वा । अत्र संज्ञायां नगरीशब्दः पठ्यते नागरेयकः । जातौ तु नागरः । पारादेः—पारीणः अवारीणः । पारादिर्यथा—

पाराऽवाराऽवारपार-पारावारा इमे मताः ।

ग्रामश्च पञ्च पारादावाहुः पण्डितसत्तमाः ॥

दिवादेः—दिवि भवं दिव्यम् । दिवादिर्यथा—

दिव् प्राग् वागुदक् प्रत्यक् परार्द्धग्राममित्यपि ।

ऊर्द्धाऽपरार्द्धाऽधमार्द्धोत्तमार्द्धमिह कीर्त्तितम् ।

ग्रामशब्दस्य त्रिषु (४) पाठात् ग्रामेयकः ग्रामीणः ग्राम्य इत्यादि ।

---

(१) [illegible] । (२) कुण्डिनन्तु ।

(३) यस्मिन् येयके परे कुक्षिशब्दस्य यलोप । अतो [illegible] [illegible] स्तथा शुनि वाच्ये [illegible] इत्यादि । (४) कत्र्यादौ पारादौ दिवादौ च ।

काषिश्यादेः ष्णायनो वा तु रङ्कोरनृप्राणिनि ।

कापिश्यादेः ष्णायनः स्याद्भवादौ, रङ्कोस्तु नृभिन्नप्राणिनि वा । कापिशायनः । कापिश्यादिर्यथा—

कापिशी वाह्लि पर्दुर्दि चतुष्कं परिकीर्त्तितम् (१) ।

कापिशीशब्दाद्वृद्धसंज्ञकादीयः, शेषेभ्यः अवृद्धादपि व्यविषयादिति णको बाध्यते । राङ्कवायणो राङ्कवो गौः । प्राणिनीति किं ? राङ्कवः कम्बलः । अनरीति किं ? राङ्कवको मनुष्यः । रङ्कुशब्दः कच्छादौ पठ्यते ।

कूप्योत्तरदारण्याभ्यां णः । कूप्योत्तरदादरण्याच्च णः स्याद्भवादौ । वार्क्कूप्यं, ण्यस्यापवादः । वृद्धसंज्ञकात्तु माणिक्यकूप्यात् युडो णको बाध्यते, णविधानात् । आरण्यः । स्त्रियामारण्या गौः ।

दिक्पूर्व्वदादनामनि । दिक्शब्देन दिग्वाचकोऽभिधीयते । दिक्पूर्व्वं दं यस्य तस्मात् असंज्ञायां णः स्याद्भवादौ । पौर्व्वशालः, औत्तरशाला स्त्री, दिश उत्तरदे तार्थे यस इति परे (२) । नाम्नि तु पूर्व्वा चासाविषुकामशमी चेति पूर्व्वेषुकामशमी, तस्मात् प्राग्देशनगरादिभ्य इति औत्सर्गिकष्णो सुपञ्चालादित्वात् अन्त्यस्य दस्य वृ. । दग्रहणं स्वरूपविधिनिरासार्थम् ।

मद्रात् ट्ः । दिक्पूर्व्वदादित्येव । दिक्पूर्व्वान्मद्रशब्दात्

---

(१) कापिशी वाह्लि, पर्दि, वर्हि । वाह्लिरित्यत्र वह्निरित्यपि पाठः ।

(२) स्वमते पूर्व्वा चासौ शाला चेति, तस्यां भव इति वाक्यम् । परमते तु पूर्व्वस्यां शालायां भव इति वाक्यम् ।

ट्वः स्याद्भवादौ । पूर्व्ववद्य सः । पौर्व्वमद्रः । अमद्रा दिश इति पर्य्युदासात् (१) पूर्व्वदस्य त्रिः ।

बह्वचोऽन्तोदात्तादुदीच्यग्रामात् । उदीच्यग्रामवाचकादन्तोदात्ताद्बह्वचो ले: ट्वः स्याद्भवादौ । ष्णस्यापवादोऽयम् । माहनगरम् । महनगरशब्दस्य यसः स्वरेणान्तोदात्तत्वात् । उदीच्यग्रामादिति किं, माथुरः मध्यदेशग्रामत्वात् ष्णः । बह्वच इति किं ? ध्वाजः ध्वजीशब्दात् ष्णः । अन्तोदात्तादिति किं ? शार्करीधानम् । अस्मिन् शास्त्रे स्वरलक्षणाभावेऽपि वृद्धोपदेशादन्तोदात्तादिकमवगन्तव्यम् । स्वरलक्षणानि नोक्तानि अस्मिन्नतिप्रयोजनत्वात् ।

तीरोत्तरदाच्च । तीरोत्तरदाच्छब्दात् ट्वः स्याद्भवादौ । ष्णेय योरपवादः (२) । पाल्वलतीरं काकतीरम् ।

कन्याभवद्भ्यां ष्णिकः । आभ्यां ष्णिकः स्याद्भवादौ । ष्णेययोरपवादः । कान्यिकः, भावत्कः इसुसुक्तान्तात् ष्णिकस्य कः । गहादिपाठात् भवदीयः । भवदित्यत्र डवत्वन्तस्य ग्रहणात् शत्रन्तभवच्छब्दान्ना भूत्, तेन भावत इति ।

ष्वोर्देशे ह्रदात्तु प्राचि । उवर्णान्तादेशवाचकात् ष्णिकः स्याद्भवादौ, प्राग्देशे वर्त्तमानादुवर्णान्ताद्ह्रदादेव, नान्यस्मात् । मरौ जातः मारुकः उवर्णान्तादिकस्य कः ष्णिति त्रिः । एवं नैषादकर्षुकः शाबरजम्बुकः । शबरजम्बूशब्दस्य इकस्य के क्रते केऽकः स्व इति स्वः । देशे इति किं ? पाटवः वैणवः । प्राचि ह्रदात्तु पाद्कजम्बुकः नापितजम्बुकः । उवर्णाद्ह्रदादित्येव ष्णिकः ।

(१) शुन्द्राभावार्थमित्येव । (२) ष्णस्य, ईयस्य च अपवाद इत्यर्थः ।

हृद्यादिति नियमात् वृद्धाभावो भूत्, तेन पर्णवासुशब्दस्य पार्णवास्तवः । एवं माद्रवास्तवः ।

कालेभ्यः । कालवाचिभ्यः ष्णिकः स्याद्भवादौ । मासिकम् आर्द्धमासिकं सांवत्सरिकम् आर्द्धसांवत्सरिकं (१) । यथाकथञ्चिद्गुणवृत्त्या काले वर्त्तमानादपीष्यते, तेन कादम्बपुष्पिकः व्रैहिपलालिकः (२) । न च गौणमुख्ययोर्मुख्ये कार्य्यसंप्रत्यय इति वाच्यं, गौणवृत्त्या काले वर्त्तमानेभ्यो नक्षत्रवाचिभ्यः ष्णविधानात् । कालेभ्य इति बहुनिर्द्देशः स्वरूपविधेर्निरासार्थः ।

श्राद्धे शरदो, वा तु रोगातपयोः । श्राद्धे वाच्ये शरच्छब्दात् ष्णिकः स्याद्भवादौ, रोगे आतपे च वाच्ये वा । ऋतुष्णस्य बाधकोऽयम् । शारदिकं श्राद्धम् । श्राद्धं कर्म्मविशेषः, न तु श्रद्धावान् पुरुषः । शारदिको रोगः आतपश्च, पक्षे शारदः ।

वर्षाभ्यो, वा तु निशाप्रदोषहेमन्तपूर्व्वाह्णापराह्णेभ्यः । वर्षाशब्दात् ष्णिकः स्याद्भवादौ, निशादिषु वा । वार्षिकम् । नैशिकं नैशं, प्रादोषिकं प्रादोषं, हैमन्तिकम् । हैमन्तस्य ष्णे तलोपो वा । हैमन्तः हैमनः । तथाच—"हैमनीषु रजनीषु शेरते" इति वृत्तिकृता शिष्टप्रयोग उद्भावितः । पौर्व्वाह्णिकम् अप

(१) कथन्तर्हि "शार्व्वरस्य तमसो निषिद्धये" इति कालिदासः । 'अनुदितौषसरागेति' भारविः । समानकालीनम् । प्राक्कालीनमित्यादि च ? अपभ्रंश एवैत इति प्रामाणिका —इति सिद्धान्तकौमुदी ।

(२) कदम्बपुष्पसाहचर्य्यात् कदम्बपुष्पः कालः, व्रीहि-पलालसाहचर्य्यात् व्रीहिपलालः कालः, तत्र भवः कादम्बपुष्पिकः व्रैहिपलालिकः ।

राह्णिकम् । पक्षे त्वप्रादाचिर इति ष्टनः, पूर्व्वाह्णेतनम् अपराह्णेतनम् ।

श्वसः ष्णिकस्य तम् । श्वस्शब्दात् ष्णिकस्यादौ तम् स्यात्, म इत् । शौवस्तिकम् । ननु त्वप्रादाचिरेत्यादिना त्यष्टनाभ्यां बाधिष्यते, तत् कथं ष्णिक इति चेत् सत्यम्, ष्णिकस्य तम्विधानसामर्थ्यात् ष्णिकोऽपि । तत्रोभयगणपाठात् श्वस्त्यः श्वस्तन इत्यपि ।

सपूर्व्वेदादर्द्धात् दिक्पूर्व्वात्तु यश्च । पूर्व्वेदेन सह वर्त्तमानादर्द्धशब्दात् ष्णिकः स्यात्, दिक्पूर्व्वेदात्तु यः ष्णिकश्च भवादौ । गौतमार्द्धिकं वालेयार्द्धिकम् । दिक्पूर्व्वात्तु पौर्व्वार्द्धिकं पूर्व्वार्द्ध्यं दाक्षिणार्द्धिकं दक्षिणार्द्ध्यं । दिवादित्वात् परार्द्ध्यमपरार्द्ध्यमिति नित्यम् । उभयत्र दग्रहणं स्वरूपविधेर्निरासार्थम् ।

ग्रामजनपदैकदेशाद्दिक्पूर्व्वादर्द्धात् ट्ण्य । ग्रामैकदेशवाचिनो दिक्पूर्व्वादर्द्धाज्जनपदैकदेशवाचिनो दिक्पूर्व्वादर्द्धाच्च ष्णिक-ट्ण्यौ स्यातां भवादौ । यस्यापवादः । पौर्व्वार्द्धिकाः पौर्व्वार्द्धाः दाक्षिणार्द्धिकाः दाक्षिणार्द्धाः । ग्रामजनपदैकदेशादिति किं ? पौर्व्वार्द्धिकं पूर्व्वार्द्ध्यमिति पूर्व्वेण ष्णिक-यौ ।

प्रावृष एण्यः । प्रावृट्शब्दादेण्यः स्याद्भवादौ । प्रावृषेण्यः । णत्वविधानं प्रावृषेण्यमाचक्षाणः प्रावृषेण् इत्यत्र णत्वार्थम् ।

मध्यादः साधारणे । साधारणे वाच्ये मध्यशब्दादः स्याद्भवादौ । मध्यो वैयाकरणः, नोत्तमो नाधम इत्यर्थः । त्यप्रादाचिरेति प्राप्तस्यापवादः ।

द्वीपादुपसमुद्रात् ण्यः। समुद्रसमीपे वर्त्तमानात् द्वीपात् ण्यः स्याद्भवादौ। कच्छादित्वात् ण्ये प्राप्ते नृतत्स्थयोर्णके च प्राप्ते विधानम्। द्वैप्यं, "द्वैप्यं भवन्तोऽनुचरन्ति चक्रम्"। अनुपसमुद्रात्तु द्वैपः। नृतत्स्थयोस्तु द्वैपकः।

ऋतुनक्षत्रात् णः। ऋतुवाचकान्नक्षत्रवाचकाच्च णः स्याद्भवादौ। कालणिकस्यापवादः। ग्रैष्मं, पौषम्।

कोडःकच्छपलद्यादेश्च। कोडः कच्छादेः पलद्यादेश्च णः स्याद्भवादौ। नैलीनकः। निलीनकशब्दाद्बह्वचोऽन्तोदात्तात् ट्णे प्राप्ते विधानम्। इक्ष्वाकुषु जात ऐक्ष्वाकः। इक्ष्वाकुशब्दात् "ओर्देशे" इत्यनेन णिकं बाधित्वा णः स्यात्, अवृद्धादपि व्वविषयादिति प्राप्तो णको बाध्यते। णट्णयोरिक्ष्वाकोरुतो लुक्। कच्छादेस्तावत्—काच्छः काश्मीर इत्यादि। कच्छादिः प्रागुक्तः। कच्छादौ ये जनपदवाचका अवृद्धास्तेभ्योऽवृद्धादपि व्वविषयादिति णके प्राप्ते विधानम्। उवर्णान्तात्तु "ओर्देशे" इति णिकबाधनार्थम्। कच्छशब्दो न नित्यबहुवचनान्तः, तस्मात् ण्यो वेत्यादाविति ण्ये सिद्धे इह पाठः कच्छादेर्नृतत्स्थयोरिति णकबाधनार्थं। विजायकशब्दात् कोड्त्वात् ण्ये सिद्धे नृतत्स्थयोरिति णकबाधनार्थः पाठः। कच्छादेर्देश एवाभिधानात्। पलद्यादेस्तावत्—पालदः पारिखः। पलद्यादिर्यथा—

पलदो परिखा गोष्ठी पर्यहाह्लीकपर्व्वताः।
फलकीटः शूरसेनो बहुकीटः पटच्चरः।
तथोदपानलोमानि गोमती कमलभिदा।

सन्धिवेला यक्षत् सन्ध्या पौर्णमासी त्रयोदशी ।
अमावस्या त्वमावास्या नैकती प्रतिपत् शरत् ।
पुरं वन गिरिः पञ्चदशी संवत्सरः फले ।
पर्व्वण्यपि पलद्यादौ शेषं शिष्टप्रयोगतः ॥

गोष्ठीनैकतीगोमतीशब्दानां वाहीकग्रामत्वात् प्रसक्तयोर्णिक-ण्यिकयोर्बाधक ईदन्तलक्षण णको बाध्यते। वाहीकशब्दस्य कोङ्-त्वात् ण्ये सिद्धे अत्र पाठ एवं ज्ञापयति येषा लक्षणानां वृद्धावृद्ध-सामान्यविषयस्तेषां लक्षणानां वृद्धविहित ईयो बाधको भवति, तेन औलुकी भव औलुकीयः, वाहककूपे भवः वाहककूपीयः इत्यादौ कोङ्ण्यं वह्वचोऽन्तोदात्तादुदीच्यग्रामादिति ट्णं च बाधित्वा ईय एव भवति। सन्धिवेला सन्ध्या पौर्णमासी त्रयोदशी अमावस्या अमावास्या प्रतिपत् पञ्चदशीशब्दानां पाठः काल-ण्यिकबाधनार्थः। शरच्छब्दस्येह वेणुकादौ च पाठात् शारदः शारदीयः। पुरवनगिरीणाम् इह नद्यादौ च पाठात् पौरः पौरेयः वानः वानेयः गैरः गैरेयः इति। सांवत्सरं फलं, सांवत्सरं पर्व्व, अन्यत्र सावत्सरिकमृणम्। शेषाणामुदीच्यग्रामत्वात् प्राप्तट्ण बाधनार्थः पाठः।

प्रश्नोत्तरदात्। प्रश्नोत्तरदाच्छब्दात् णः स्याद्वयादौ। माद्रीप्रस्थः माहकिप्रस्थः, वह्वचोऽन्तोदात्तादुदीच्यग्रामादिति प्राप्तट्णो बाध्यते।

निवासात् पृथ्वीमध्यान्मध्यमश्च चरणे। चरणे वाच्ये निवास-वाचकात् पृथ्वीमध्यशब्दात् णः स्यात्, तस्मिन् मध्यमादेशश्च।

पृथ्वीमध्ये निवासोऽस्य माध्यमः कठः। अनिवासस्य तु पृथ्वीमध्यादागतः मध्यमीयः कठः, पृथ्वीमध्यस्य मध्यमश्चेति ईयस्य बाधकमिदम्। चरण इति किं ? मध्यमीयः शूद्रः।

युष्मदस्मदो वा खीनञ्च। आभ्यां ण्यो खीनञ्च वा स्याद्भवादौ। इद्वादीयस्यापवादः। यौष्माकः यौष्माकीणः, पक्षे युष्मदीयः। एवम् आस्माकः आस्माकीनः अस्मदीयः। ननु ढाधिकारो धादित्यतः प्राक्, तत् कथं ढाधिकारे भवादिनिरूपणमिति चेत् सत्यम्। भवादिपठितगच्छत्याद्यर्थे ढान्तात् भवादित्या भवन्ति अतएव प्रसङ्गादुक्तमिति।

गच्छति पथिदूतयोः। ढादिति वर्त्तते। गच्छतीत्यर्थे यथाविहितं त्यः स्यात्, यो गच्छति स चेत् पन्था दूतो वा भवति। स्रुघ्नं गच्छति पन्था दूतो वा स्रौघ्नः पन्था दूतश्च। ढात् चे त्यः। माथुरः कान्यकुब्जः वाराणसेयः राष्ट्रिय इत्यादि। पथिदूतयोरिति किं ? मथुरां गच्छति साधुः।

अभिनिष्क्रामति द्वारं। ढादित्येव। अभिनिष्क्रामतीत्यर्थे यथाविहितं त्यः स्यात्, यन्निष्क्रामति तत् द्वारं चेद्भवति। स्रुघ्नमभिमुखेन निष्क्रामति द्वार स्रौघ्नं द्वारम्। एवं माथुरं कान्यकुब्जं वाराणसेयं राष्ट्रियमित्यादि। द्वार निष्क्रमणक्रियायाः साधनत्वेन प्रसिद्ध, तदिह स्वातन्त्र्येण विवक्ष्यते, यथा साध्वसिश्छिनत्ति। द्वारमिति किं ? मथुरामभिनिष्क्रामति पुरुषः।

अधिकृत्य कृतो ग्रन्थ। ढादित्येव। अधिकृत्य एतदपेक्षया ग्रौ। अधिकृत्य आरभ्य अभिप्रेत्य इत्यर्थः। अधिकृत्येत्यस्मिन्नर्थे

यथाविहितं त्य. स्यात्, यः क्रतः स ग्रन्थश्चेद्भवति। सुभद्रामधिकृत्य कृतो ग्रन्थः सौभद्रो ग्रन्थः। ग्रन्थ इति किं? सुभद्रामधिकृत्य कृतः प्रासादः।

आख्यायिकाभ्यो लुब्बहुलम्। आख्यायिकाभ्योऽधिकृत्य कृतो ग्रन्थ इत्यर्थे उत्पन्नस्य त्यस्य बहुलं लुप् स्यात्। वासवदत्तामधिकृत्य कृतो ग्रन्थः वासवदत्ता सुमनोङ्गवा उर्व्वशी। बहुलं किं? भैमरथः।

सीतान्वेषणादेरीय'। ढात् सीतान्वेषणादेरधिकृत्य कृतो ग्रन्थ इत्यर्थे ईयः स्यात्। व्यासापवादः। सीतान्वेषणीय.। सीतान्वेषण यमसभ रचोऽसुर गुणमुख्यावपि शिशुक्रन्दः। शिशुक्रन्दो नाम रोग'।

अदेवासुरादेर्घे। देवासुरादिभिन्नादधिकृत्य कृतो ग्रन्थ इत्यर्थे ईयः स्यात् घे से सति। श्येनकपोतीयो ग्रन्थ, किराताार्ज्जुनीयः, सर्व्वार्थसम्बन्धीयः। देवासुरादेस्तु दैवासुरः राचोगन्धर्व्व इत्यादि। परे तु रचोऽसुर गुणमुख्यशब्दौ देवासुरादौ प्रद्युम्नागमनशब्दं सीतान्वेषणादौ पठन्ति। तेषां मते राचोऽसुरं गौणमुख्य प्राद्युम्नागमनीयम्। येषां द्वन्द्वसमासे ईयप्रतिषेधस्ते च देवासुरादौ द्रष्टव्याः।

ष्णिको रचत्यादौ। ढादित्येव। रचतीत्याद्यर्थेषु ष्णिकः स्यात्। समाज रचति सामाजिकः। ढात् घे त्य.। रचति उञ्छति वर्त्तते वक्ति धारयते गृह्णाति समवैति हन्ति तिष्ठति प्रयच्छति करोति चरति पश्यति वर्त्तयति आह अनुपृच्छति

गच्छति अधीष्टः भृतः भूतः भावी अर्हति नित्यमर्हति पचति सम्भवति अवहरति वहति हरति आवहति। एवं शाकानुञ्छति शाकिकः।

*प्रतीपादेर्वर्त्तते। ढात् प्रतीपादेर्वर्त्ततेऽर्थे ष्णिकः स्यात्।* यद्यपि वृतधोरकर्म्मकत्वात् ढाभावस्तथापि ध्रुविशेषणत्वात् ढसंज्ञा। प्रतीपं यथा स्यात्तथा वर्त्तते प्रातीपिकः। प्रतीपादिर्यथा—

प्रतीपः प्रतिकूलञ्च प्रतिलोमानुलोमगी।
परिपार्श्वान्वीपपरिमुखानुकूलमित्यपि॥

प्रभूतादेर्वक्ति। ढात् प्रभूतादेर्वक्तीत्यर्थे ष्णिकः स्यात्। *प्रभूतं यथा तथा वक्ति प्राभूतिकः। प्रभूतादिर्यथा—*

*प्रभूतः प्रतिभूतोऽत्र पर्य्याप्तेन सहेरिताः।*
माषशब्दो नित्यशब्दश्च कार्य्यशब्दस्तथेति षट्॥

पदव्यादेस्तद्धावति। ढात् पदव्यादेस्तद्धावतीत्यर्थे ष्णिकः स्यात्। पदवी वर्त्म, पदवीं धावति पादविकः। पदस्य पश्चादनुपदं तत् धावति आनुपदिकः। आक्रन्दत्यस्मिन् आक्रन्दो देशः, तं धावति आक्रन्दिकः।

माथोत्तरदाच्च। ढान्माथशब्दोत्तरदाद्धावतीत्यर्थे ष्णिकः स्यात्। दण्डमाथं (१) धावति दाण्डमाथिकः शौल्कमाथिकः। माथशब्दः पथिपर्य्यायः।

---

(१) दण्डाकारो माथ पन्था दण्डमाथः।

पदोत्तरदात् गृह्णाति। ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात्। पौर्व्वपदिकम्। उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१)।

अर्थललामप्रतिकण्ठाच्च। ठेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात्। अर्थं गृह्णाति आर्थिकः, लालामिकः। कण्ठं कण्ठं प्रति प्रतिकण्ठ, तत् गृह्णातीति प्रातिकण्ठिकः।

समूहार्थात् समवैति। ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात्। समूहं समवैति सामूहिकः सामवायिकः।

ण्यः परिषदो, वा तु सेनायाः। ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा। परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः।

मृगमत्स्यपक्षिभ्यो हन्ति। स्वनिर्देशः स्वरूपविधेर्निरासार्थः। ढेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात्। मृगं हन्ति मार्गिकः, रौरुकः, शौकरिकः। नैयङ्कुकः, श्वापदन्यङ्क्वोस्वेति वा युम्, पक्षे न्याङ्कुकः, इकस्य कः। मात्स्यिकः शाकुनिकः शौष्ठिकः पाक्षिकः हारीतिकः मायूरिकः। पातत्कः, तान्तादिकस्य कः।

परिपथात्तिष्ठति च परिपन्थश्च। ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च। परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र दात्तादित्यनुवृत्ता पदोत्तरदादिति ग्रहणं बहुत्वे निषेधार्थमिति भावः।

पदोत्तरदात् गृह्णाति। ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात्। पौर्व्वपदिकम्। उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१)।

अर्थललामप्रतिकण्ठाच्च। ठेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात्। अर्थं गृह्णाति आर्थिकः, लालामिकः। कण्ठं कण्ठं प्रति प्रतिकण्ठ, तत् गृह्णातीति प्रातिकण्ठिकः।

समूहार्थात् समवैति। ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात्। समूहं समवैति सामूहिकः सामवायिकः।

ण्यः परिषदो, वा तु सेनायाः। ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा। परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः।

मृगमत्स्यपक्षिभ्यो हन्ति। ब्वनिर्देशः स्वरूपविधेर्निरासार्थः। ढेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात्। मृगं हन्ति मार्गिकः, रौरवकः, शौकरिकः। नैयङ्कुकः, श्वापदन्यङ्कोस्त्वेति वा युम्, पक्षे न्याङ्कुकः, इकस्य कः। मात्स्यिकः शाकुनिकः प्रौष्ठिकः पाक्षिकः हारीतिकः मायूरिकः। पातत्कः, तान्तादिकस्य कः।

परिपथात्तिष्ठति च परिपन्थश्च। ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च। परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र दान्तादित्वतुल्या पदोत्तरदादिति यद्बहु वचनप्रत्यये निषेधार्थमिति भावः।

पदोत्तरदात् गृह्णाति। ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात्। पौर्व्वपदिकम्। उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१)।

अर्थललामप्रतिकण्ठाच। ठेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात्। अर्थं गृह्णाति आर्थिकः, लालामिकः। कण्ठं कण्ठं प्रति प्रतिकण्ठं, तत् गृह्णातीति प्रातिकण्ठिकः।

समूहार्थात् समवैति। ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात्। समूहं समवैति सामूहिकः सामवायिकः।

ण्यः परिषदो, वा तु सेनायाः। ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा। परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः।

मृगमत्स्यपक्षिभ्यो हन्ति। बनिर्देशः स्वरूपविधेर्निरासार्थः। ठेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात्। मृगं हन्ति मार्गिकः, रौरुकः, शौकरिकः। नैयङ्कुकः, श्वापदन्यङ्कोस्त्वेति वा युम्, पक्षे न्याङ्कुकः, इकस्य कः। मात्स्यिकः शाकुनिकः शौष्ठिकः पाक्षिकः शारीतिकः मायूरिकः। पातलः, तात्त्वादिकस्य कः।

परिपथात्तिष्ठति च परिपन्थश्च। ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च। परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र दात्मादिमत्वात्ता पदोत्तरदादिति पञ्चमं बहुत्वे निषेधार्थमिति भावः।

पदोत्तरदात् गृह्णाति । ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात् । पौर्व्वपदिकम् । उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१) ।

अर्थललामप्रतिकण्ठाच्च । ठेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात् । अर्थं गृह्णाति आर्थिकः, लालामिकः । कण्ठं कण्ठं प्रति प्रतिकण्ठ, तत् गृह्णातीति प्रातिकण्ठिकः ।

समूहार्थात् समवैति । ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात् । समूहं समवैति सामूहिकः सामवायिकः ।

ण्यः परिषदो, वा तु सेनायाः । ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा । परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः ।

मृगमत्स्यपक्षिभ्यो हन्ति । त्वनिर्देशः स्वरूपविधेर्निरासार्थः । ढेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात् । मृगं हन्ति मार्गिकः, रौरुकः, शौकरिकः । नैयङ्कुकः, श्वापदन्यङ्कोस्त्वेति वा युन्, पक्षे न्याङ्कुकः, इकस्य कः । मात्स्यिकः शाकुनिकः प्रौष्ठिकः पाक्षिकः हारीतिकः मायूरिकः । पातत्कः, तान्त्रादिकस्य कः ।

परिपथात्तिष्ठति च परिपन्थश्च । ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च । परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र दान्तादित्यत्रक्षा पदोत्तरदादिति पक्षयं बहुप्रत्यये निषेधार्थमिति भाव. ।

पदोत्तरदात् गृह्णाति । ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात् । पौर्व्वपदिकम् । उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१) ।

अर्थललामप्रतिकण्ठाच्च । ठेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात् । अर्थं गृह्णाति आर्थिकः, लालामिकः । कण्ठं कण्ठं प्रति प्रतिकण्ठ, तत् गृह्णातीति प्रातिकण्ठिकः ।

समूहार्थात् समवैति । ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात् । समूहं समवैति सामूहिकः सामवायिकः ।

ण्यः परिषदो, वा तु सेनायाः । ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा । परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः ।

मृगमत्स्यपक्षिभ्यो हन्ति । त्वन्निर्देशः स्वरूपविधेर्निरासार्थः । ढेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात् । मृगं हन्ति मार्गिकः, रौरुकः, शौकरिकः । नैयङ्कुकः, श्वापदन्यङ्क्वोस्त्वेति वा युम्, पक्षे न्याङ्कुकः, इकस्य कः । मात्स्यिकः शाकुनिकः प्रौष्ठिकः पाक्षिकः हारीतिकः मायूरिकः । पातत्कः, तान्तादिकस्य कः ।

परिपथात्तिष्ठति च परिपन्थश्च । ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च । परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र टानादित्यतश्च पदोत्तरदादिति पदद्वयं बहुप्रत्यये निषेधार्थमिति भाव ।

पदोत्तरदात् गृह्णाति। ढात् पदोत्तरदात् गृह्णातीत्यर्थे ष्णिकः स्यात्। पौर्व्वपदिकम्। उभयत्र उत्तरदग्रहणं बहुत्वे निषेधार्थम् (१)।

अर्थललामप्रतिकण्ठाच्च। ढेभ्य एभ्यो गृह्णातीत्यर्थे ष्णिकः स्यात्। अर्थं गृह्णाति आर्थिकः, लालामिकः। कण्ठं कण्ठं प्रति प्रतिकण्ठ, तत् गृह्णातीति प्रातिकण्ठिकः।

समूहार्थात् समवैति। ढात् समूहार्थात् समवैति इत्यर्थे ष्णिकः स्यात्। समूहं समवैति सामूहिकः सामवायिकः।

ण्यः परिषदो, वा तु सेनायाः। ढात् परिषच्छब्दात् समवैतीत्यर्थे ण्यः स्यात्, ष्णिकस्यापवादः, सेनायास्तु वा। परिषदं समवैति पारिषद्यः, सेनां समवैति सैन्यः सैनिकः।

मृगमत्स्यपक्षिभ्यो हन्ति। व्यनिर्देशः स्वरूपविधेर्निरासार्थः। ढेभ्यो मृगमत्स्यपक्षिवाचिभ्यो हन्तीत्यर्थे ष्णिकः स्यात्। मृगं हन्ति मार्गिकः, रौरुकः, शौकरिकः। नैयङ्कुकः, श्वापदन्यङ्कोस्तु वेति वा युम्, पक्षे न्याङ्कुकः, इकस्य कः। मात्स्यिकः शाकुनिकः प्रौष्ठिकः पाक्षिकः हारीतिकः मायूरिकः। पातत्कः, तान्तादिकस्य कः।

परिपथात्तिष्ठति च परिपन्थश्च। ढात् परिपथात् हन्तीत्यर्थे तिष्ठतीत्यर्थे च ष्णिकः स्यात्, तस्मिन् परिपथस्य परिपन्थादेशश्च। परिपथं हन्ति तिष्ठति वा पारिपन्थिकश्चौरः, पन्थानं

(१) अत्र द्वन्द्वादित्वाद्वत्वा पदोत्तरदादिति पदार्थे बहुमत्वये निषेधार्थमिति भावः।

परिव्रज्य वृत्तिं तिष्ठति वेत्यर्थः। परिपथपर्य्यायः परिपन्थ-शब्दोऽस्तीति वृत्तिकारः।

निन्द्यात् प्रयच्छति। शास्त्रोक्तव्यवहारादितरद्व्यवहारो निन्द्य', तस्मात् ढात् प्रयच्छतीत्यर्थे ष्णिकः स्यात्। द्विगुणार्थं द्रव्यं द्विगुण, द्विगुणं प्रयच्छति द्वैगुणिकः। यदा उत्तमर्णः एकद्रव्य द्विगुणार्थं कृत्वा प्रयच्छति पश्चात्तदर्दयति तदा द्विगुणं निन्द्य, यदा त्वेकगुण प्रयच्छति पश्चाद्विगुण गृह्णाति तदा न द्विगुण निन्द्यं शास्त्रविहितत्वात्। एव त्रैगुणिकः।

वृधुषय वृद्धेः। निन्द्याद्वृद्धिशब्दात् ढात् प्रयच्छतीत्यर्थे ष्णिकः स्यात् वृद्धिशब्दस्य वृधुषादेशय। वृद्धयर्थं द्रव्यं वृद्धिः, वृद्धि प्रयच्छति वार्धुषिकः। यद्यपि वृद्धिशब्दपर्यायो वृधुषीशब्दो-ऽप्यस्ति तथापि वृद्धिशब्देनानिष्ट निवारणार्थमिदम्।

कुसीददशैकादशाभ्यां ष्णिक.। निन्द्यात् कुसीदशब्दात् ढात् दशैकादशशब्दाच्च प्रयच्छतीत्यर्थे ष्णिकः स्यात्। कुसीद वृद्धिस्तदर्थं द्रव्यं कुसीद, तत्प्रयच्छति कुसीदिक.। दशशब्दो दशार्थे वर्त्तते, एकादशशब्द एकादशार्थोऽपि उपचारात् दशसु वर्त्तते, अतः सामानाधिकरण्यात् दश च ते एकादश चेति दशः, दशैकादश प्रयच्छति दशैकादशिकः दशैकादशिकी, दश एकादशार्थं प्रय-च्छतीत्यर्थः (१)।

---

(१) दशसङ्ख्यैव एकादशसङ्ख्या यथामर्षानां तान् प्रयच्छति दशैकादशिक। दशसंख्यकान् दशैकादशसंख्यकान् प्रत्यर्पणया बोधयति परिशोधनसमया-मेकादशसंख्यकप्रदानमिति निन्द्यत्वमिति तदनुगबोधम्।

शब्ददर्दुराभ्यां करोति। आभ्यां करोतीत्यर्थे णिकः स्यात्। शब्दं करोतीति शाब्दिको वैयाकरणः, दार्दुरिकः कुलालः। दर्दुरो वाद्यभाण्डविशेषः, भाण्डसंस्कारकाले दर्दुरं शब्दविशेषं करोति इति रचितः।

धर्म्मादेश्चरति। ढात् धर्म्मादेश्चरतीत्यर्थे णिकः स्यात्। धर्म्मं चरति धार्म्मिकः। चरणमत्र सेवा, तेन कदाचिदाचरणे मा भूत्। धर्म्मादिर्यथा—

धर्म्माधर्म्मौमहानाम्नी गोदानसहितास्तथा।
आदित्यव्रतमित्येते पञ्चेह समुदीरिताः॥

अवान्तरदीक्षादेर्डिन्। ढादवान्तरदीक्षादेर्डिन् स्यात् चरतीत्यर्थे। अवान्तरदीक्षां चरति अवान्तरदीक्षी।

वयोऽवान्तरदीक्षात्र देवव्रत-तिलव्रतम्।

अष्टाचत्वारिंशतो डकश्च। ढादष्टाचत्वारिंशच्छब्दात् चरतीत्यर्थे डिन् डकश्च स्यात्। णिकस्यापवादः। अष्टाचत्वारिंशद्वर्षाणि व्रतं चरति अष्टाचत्वारिंशी अष्टाचत्वारिंशकः।

चातुर्म्मास्याना यलोपश्च। चातुर्म्मास्यशब्दात् चरतीत्यर्थे तौ स्याता, तयोर्यलोपश्च। चातुर्म्मास्यानि व्रतानि चरति चातुर्म्मासी चातुर्म्मासकः।

नाम्नि ललाटकुक्कुटाभ्यां पश्यति। ढाभ्यामाभ्यां पश्यतीत्यर्थे णिकः स्यात् संज्ञायाम्। ललाटं पश्यति लालाटिकः, यः सेवकः शिष्यो वा प्रसादचिह्नज्ञानाय प्रभोर्गुरोर्वा ललाटमेव पश्यति, यः सेवकः शिष्यो वा कार्य्याक्षमः सोऽभि-

धीयते (१)। कुक्कुटशब्देन कुक्कुटपातयोग्यदेशोऽभिधीयते, तं देशं पश्यति कौकुटिको भिक्षुः, यः कुक्कुटपातयोग्यमल्पतरदेशं पश्यन् गच्छति स इत्यर्थः।

पारायण-तुरायण-चान्द्रायणेभ्यो वर्त्तयति। ढेभ्य एभ्यो वर्त्तयतीत्यर्थे ष्णिकः स्यात्। पारायणं वेदस्य शास्त्रस्य वा समस्ताध्ययनकर्म्म, तुरायणं (२) यज्ञविशेषः, चान्द्रायणं व्रतविशेषः, संशयामुत्तरदस्य नो यः। पारायणं वर्त्तयति पारायणिकः। यद्यपि पारायणं शिष्ये गुरौ च वर्त्तते, तथापि शिष्ये एव त्य इति न्यासः। एवं तौरायणिको यजमानः, न तु याजकः। चान्द्रायणिकस्तपस्वी।

तदन्ताच्च (३)। द्वैपारायणिकः द्वैतुरायणिकः द्वैचान्द्रायणिकः।

संशयादापन्ने। ढात् संशयशब्दात् आपन्नेऽर्थे ष्णिकः स्यात्। संशयः सन्देहः, तमापन्नः सांशयिकः संशयवानिति। न्यासकारस्तु संशय्यमाने स्थाण्वादौ त्यमुत्पादयति, न तु संशयितरीति, तच्चङ्गनामसम्मतम्। अतएव "सांशयिकः संशयापन्नमानस" इत्यमरः (४)।

---

(१) "कौक्कुटिकः पथोऽनन्तरदर्शी चाक्षुषश्च" इत्यमरः।

(२) संक्षिप्तसारे तुरायणमित्यत्र उत्तरायणमिति पाठः (७१८६)।

(३) पारायणाद्यन्तात् शब्दात् वर्त्तयतीत्यर्थे ष्णिक स्यादित्यर्थः।

(४) स्थाणुर्वा पुरुषो वेति संशयविषयीभूते स्थाण्वादावेव संशय उत्पद्यते न तु सन्देग्धरीति भावः। कथं तर्हि "सांशयिकः संशयापन्नमानस" इति चेत्साङ्गः।

सुस्नातादेः पृच्छति। ढात् सुस्नातादेः पृच्छतीत्यर्थे ष्णिकः स्यात्। सुस्नातं पृच्छति सौस्नातिकः सौखसुप्तिकः। सुस्नातादिरच सुप्तिशय्यारात्रयः सुखशब्दात्।

योजनादेर्गच्छति। ढात् योजनादेर्गच्छतीत्यर्थे ष्णिकः स्यात्। योजनं गच्छतीति यौजनिकः। योजनादिर्यथा—

योजनं गुरुतल्पञ्च दारा गुरोः परादपि (१)।
शतं क्रोशात् योजनाच्च (२) बुधैरत्र षड़ीरिताः॥

पथः षिकः। ढात् पथिशब्दात् गच्छतीत्यर्थे षिकः स्यात्। पन्थानं गच्छतीति पथिकः। स्त्रियां पथिकी।

नित्यं णः पन्थश्च। ढात् पथो नित्यं गच्छतीत्यर्थे णः स्यात्, तस्मिन् पन्थादेशश्च। पन्थानं नित्यं गच्छति पान्थः। स्त्रियां पान्था।

कालेभ्योऽधीष्टभृतभूतभाविषु। बनिर्देशः स्वरूपविधेर्निरासार्थः। ढेभ्य एभ्यः कालवाचिभ्योऽधीष्टे भृते भूते भाविनि चार्थे ष्णिकः स्यात्। अधीष्टः सत्कृत्य व्यापारितः, भृतो वेतनेन क्रीतः, भूतः सत्तया व्याप्तकालः, भावी सत्तयाऽव्याप्तकालो भविष्यति यः। सदाध्वादीति ढं, मासम् अधीष्टो मासिकोऽध्यापकः। मासं भृतः मासिकः भृत्यः। मासं भूतो मासिको व्याधिः। मासं भावीति मासिक उत्सवः। नन्वध्येषण भरणे

संशयापन्नं मानसं यस्मिन् विषये स विषयः संशयापन्नमानस इति। इति तत्त्वबोधिनी।

(१) गुरुदार, परदार इत्यर्थः। (२) क्रोशशत, योजनशत इत्यर्थः।

मुहूर्त्तं व्याप्य क्रियते, तत् कथं ताभ्यां मासो व्याप्यते इति उच्यते—यदर्थं हि ते क्रियेते तत्फलभूतया क्रियया मासो वाप्यमानस्ताभ्यामपि व्याप्यत इत्युच्यते उपचारात्। संख्याशब्दोऽपि यदा काले संख्येये वर्त्तते तदापि त्वः। द्वे षष्टी भूतो भावी वा द्विषाष्टिकः द्विसाप्ततिकः, सुपञ्चालादित्वादुत्तरपदस्य व्रिः।

मासात् य-णीनौ वयसि। ढान्मासाद्वयस्यभिधेये एष्वर्थेषु य णीनौ स्याताम् (१)। मासं भूतो भावी वा मास्यः मासीनः माणवक इति पुरुषोत्तमः। परे भूतेऽर्थे अभिधानमित्याहुः (२)। वयसीति किं ? मासिकः कर्म्मकरः।

गाद्यः। ढात् क्षतगात् मासाद्वयस्यभिधेये यः स्यात्। द्वौ मासौ भूतः द्विमास्यः।

षण्मासाण्ण्यण्णिकौ च। ढात् क्षतगात् षण्मासात् वयस्यभिधेये भूताद्यर्थे ण्य ण्णिक य एते स्युः। षण्मासान् भूतः षाण्मास्यः षाण्मासिकः षण्मास्यः। विधानसामर्थ्यात् नैको लुक्।

इक-ण्यावव्वयसि। ढात् क्षतगात् षण्मासात् वयोभिन्ने भूतेऽर्थे इक ण्यौ स्याताम्। षण्मासिकः षाण्मास्यो रोगः।

---

(१) यद्यपि एष्वर्थेषु इत्युक्ते अधीष्टादयश्चत्वारोऽनुवर्त्तन्ते तथापि योग्यतया यथासम्भवमनुवृत्तिः स्यात्. तेनात्र अधीष्टभृतयोर्नानुवृत्तिः। एवं परत्रापीति।

(२) अधीष्टादीनां चतुर्णामधिकारेऽपि सामर्थ्याद्भूत इत्येव सम्बध्यते। न हि मासमधीष्टो भृतो भावी वेत्याद्युक्तौ काचित् बालकता वयोऽवस्था गम्यते इति तत्त्वबोधिनी।

समाया ईनो, गात्तु वा। ढात् समाशब्दात् ईनः स्यात्, क्षतगात्तु वा, एष्वर्थेषु। समामधीष्टो भृतो भूतो भावी वा समीनः। गात्तु—द्वे समे अधीष्टो भृतो भूतो भावी वा द्विसमीनः, पक्षे द्वैसमिकः।

गाद्रात्रहःसंवत्सरादीन-ष्णिकौ, वर्षात्तु लुक् च वा, चित्तवति नित्यम्। ढेभ्य एभ्यः क्षतगेभ्य ईन ष्णिकौ स्यातां एष्वर्थेषु, वर्षात्तु वा लुक्, चित्तवति तु नित्यम्। द्वे रात्री अधीष्टो भूतो भावी वा द्विरात्रीणः द्वैरात्रिकः। द्व्यहीनः द्वैयह्निकः। द्विसंवत्सरीणः द्विसांवत्सरिकः, सुपञ्चालादित्वात् उत्तरदस्य व्रिः। द्विवर्षीणः द्विवार्षिकः द्विवर्षः, अभविष्यति संख्यादिवर्षमिति परदस्य व्रिः। भविष्यति तु द्वे वर्षे भावी द्वैवर्षिकः। द्विवर्षो वत्सः, नित्यं तयोर्लुक्। चित्तवतीति किं? द्विवर्षीणो द्विवार्षिको द्विवर्षो व्याधिः।

अर्हति। ढात् अर्हतीत्यर्थे ष्णिकः स्यात्। वस्त्रमर्हति वास्त्रिकः श्वैतच्छत्रिकः।

दण्डादेर्यः। ढाद्दण्डादेरर्हतीत्यर्थे यः स्यात्। दण्डमर्हति दण्ड्यः कश्यः। दण्डादिर्यथा—

दण्डः कशा वधो मेधा मेधार्घौ मुसलं धनम्।
मधुपर्कं इभो वंशः भागोदक युगं पणः॥

कडङ्गर-स्थालीबिल दक्षिणाभ्य ईयय। ढेभ्य एभ्योऽर्हतीत्यर्थे ईयो यय स्यात्। कडङ्गरमर्हति कडङ्गरीयः कडङ्गर्य्यः (१)।

---

(१) पाणिनिमते कडङ्कर इत्येव (५।१।६८)। कडङ्करो माषादेः काष्ठभागः

स्थालीबिलीयः स्थालीबिल्यः (१) दक्षिणीयः दक्षिण्यः। पात्राद्घ-यौ। ढात् पात्रशब्दादर्हति इत्यर्थे घ एयश्च स्यात्। पात्रमर्हति पात्र्यः पात्रेयः।

यज्ञर्त्विग्भ्यामिय-खीनौ कर्म्मार्हति च। ढाभ्यामाभ्याम् अर्हति कर्म्मार्हति चेत्यर्थे इय खीनौ क्रमात् स्याताम्। यज्ञमर्हति यज्ञकर्म्मार्हति वा यज्ञियो ब्राह्मणः देशश्च। ऋत्विजमर्हति ऋत्विक्कर्म्मार्हति वा आर्त्विजीनः यजमानः ऋत्विक् च।

छेदादेर्नित्यमर्हति। ढाच्छेदादेर्नित्यमर्हति इत्यर्थे ष्णिकः स्यात्। छेद नित्यम् अर्हति छैदिकः(२) भैदिकः। छेदादिर्यथा—

छेदो भेदस्तथा द्रोहो नर्त्तकर्षे ष्णिको भवेत्।
विरागस्य विरङ्गो(३)ऽथ सम्प्रयोगश्च सम्प्रति।
संप्रेषणञ्च सम्प्रश्नो दशैव परिकोर्त्तिताः॥

विरागं नित्यमर्हति वैरङ्गिकः, ष्णिके विरङ्गादेशः।

शिरश्छेदात् यश्च शिरः शीर्षः। ढात् शिरश्छेदशब्दात् नित्यमर्हति इत्यर्थे ष्णिको यश्च स्यात्, तस्मिन् शिरसः शीर्षादेशश्च। शिरश्छेदं नित्यमर्हति शैर्षच्छेदिकः शीर्षच्छेद्यः।

---

(कुँडा, भूसी इति भाषा)। कडङ्गरीयो गौः। नीवारपाकादि कडङ्गरीयैः रिति रघु।

(१) स्थालीबिलं स्थाल्यां व्याकादयस्तमर्हन्ति स्थालीबिलीयास्तण्डुला इति गोयीचन्द्र। पाकयोग्या इत्यर्थ इति सिद्धान्तकौमुदी।

(२) छैदिको वेतसः चिन्नप्ररूढत्वात्—इति सिद्धान्तकौमुदी। इयदिदं प्रतिपादनपरमेतत्—इति गोयीचन्द्र। भाष्ये तु नित्यग्रहणं प्रत्याख्यातं, छेदमेव मात्र इति तदाशय इति मनोरमा (५।१।६४)।

(३) विरागशब्देऽादिः, तस्य विरङ्गादेश स्यात्।

पचति सम्भवत्यवहरति च । ढादेतेष्वर्थेषु णिकः स्यात् । सम्भवत्यर्थोऽत्र सम्भवः आधेयस्य प्रमाणानतिरेकः । तथाच—

"सम्भवः कथितो हेतावुत्पत्तौ मेलकेऽपि च ।

आधारानतिरिक्तत्वे आधेयस्य च सम्भव" ॥ इति विश्वः ।

अवहरत्यर्थोऽवहरणं संहरणमित्यर्थः । प्रस्थं पचति सम्भवति (१) अवहरति वा प्रास्थिकः कौड़विकः काटाहः । यद्यपि प्रस्थं पचति चरुं प्रास्थिक इत्यत्र पाकेऽपि सम्भवो विद्यते, तथापि प्रस्थं पचति ब्राह्मणी प्रास्थिकीत्यत्र सम्भवत्यर्थेन विनापि पचत्यर्थदर्शनात् पृथक् पचतिग्रहणम् ।

पात्राऽऽचिताऽऽढ़क-विस्तादीनो वा । ढेभ्य एभ्य एष्वर्थेषु ईनः स्याद्वा । पात्र पचति सम्भवत्यवहरति वा पात्रीणा । एवं आचितीना आढ़कीना विस्तीना (२) स्थाली । पक्षे पात्रिकीत्यादि ।

गात् पिकश्च वा । ढेभ्यः क्षतगेभ्यः पात्रादिभ्यः पिक ईनश्च स्याद्वा एष्वर्थेषु । द्वे पात्रे पचति सम्भवति अवहरति वा द्विपात्रिकी द्विपात्रीणा, द्वाचितिकी द्वाचितीना, द्वाढ़किकी द्वाढ़कीना, द्विविस्तिकी द्विविस्तीना । पक्षे णिकस्य वाक्ये लुकि (३) "तार्थे माना"दित्यादिना ईपि द्विपात्री द्वाढ़की । आचितविस्ताभ्यान्तु अजादित्वात् द्वाचिता द्विविस्ता आप्, न ईप् । पूर्व्वत्रयाणां (४) पिकण्णिकयोर्न विशेषः । पृथग्योग उत्तरार्थः ।

---

(१) स्वस्मिन् समावेशयति ।

(२) आचितं दशभारपरिमाणम् । विस्तं तोलकमानम् ।

(३) वक्ष्यमाणसूत्रेणेति शेषः ।

(४) पात्राचिताढ़कानाम् ।

कुलिजाल्लुक्पिकण्णिकीनाः । ढात् खतमात् कुलिजात् लुक् पिक ण्णिक ईन एते स्युः एष्वर्थेषु । द्विकुलिजी, "तार्थे माना" इतीप्, द्विकुलिजिकी द्वैकुलिजिकी द्विकुलिजीना ।

वंशादिभ्यो भाराद्धरत्यादौ (१) । ढात् वंशादिपूर्व्वभाराद्धरति इत्याद्यर्थे लुक् पिकः ण्णिक ईनः स्यात् । वंशभारं वहति हरति आवहति वा वांशभारिकः वाल्वजभारिकः ।

वंश वल्वज मूलेषु स्थूणाच कुटजाः कुटः ।
अश्मा खट्वा दश प्रोक्ता वंशादिरिह कोविदैः ॥

केचिद्भारशब्दस्यार्थद्वारेण वंशादीनां विशेषणाद्भारभूतेभ्यो वंशादिभ्य इत्यर्थः, तेन भारभूतान् वंशान् वहति वांशिकः वाल्वजिक इत्याहुः । वहति उत्क्षिप्य धारयति । हरति देशान्तरं प्रापयति । आवहति उत्पादयतीत्यर्थः ।

द्रव्य-वस्नाभ्यां केकौ । ढाभ्यामाभ्यां क्रमात् क इक इत्येतौ स्याताम् एष्वर्थेषु । द्रव्यं वहति हरति आवहति वा द्रव्यकः वस्निकः (२) ।

अर्हत्यादौ शताद्वयेकावशते । ढाच्छतशब्दात् अर्हतीत्याद्यर्थेषु य इक इत्येतौ स्यातां, न तु शते । शतमर्हति पचति सम्भवति अवहरति वहति वा शत्यः शतिकः कम्बलः । अशत इत्युक्तेर्यत्र प्रत्ययुक्तसङ्ख्यायाख्यवाच्यस्य संख्येयत्वं भवति तत्र न स्यात् ।

---

(१) भारविशेषेण हरति आवहति इत्येतदर्थपंचकम् ।
(२) वस्नशब्दो मूल्यवाची इति बोपदेवः । ६।३५।

तेन शतमध्यायाः परिमाणमस्य शतकं निदानमित्यादौ प्रकृत्या शतशब्देन उक्तायाः संख्यायास्त्यवाच्यस्य निदानस्य संख्येयत्वात्तौ न स्याताामिति। शत्यः शतिकः कम्बल इत्यादौ त्यवाच्यस्य कम्बलस्य न संख्येयत्वं किन्तु येन क्रीतस्तस्यैवेति।

संख्याया अ ति-शदन्तायाः कः। ढात् त्यन्त-शदन्तवर्जात् संख्यावाचकात् कः स्यादर्हत्यादौ। पञ्चकः बहुकः गणकः। अ-ति-शदन्ताया इति किं? साप्ततिकः चत्वारिंशत्कः, तादिकस्य कः। अनार्थवतस्तिशब्दस्य वर्ज्जनात् छतेरप्रतिषेधस्तेन कार्तिकः।

विंशति-त्रिंशद्भ्यां चासंज्ञायान्तु डकः। ढाभ्यामाभ्याम् अर्हत्यादौ कः स्यात्, असंज्ञायान्तु डकः। विंशतिकः त्रिंशत्कः। असंज्ञायान्तु विंशकः त्रिंशकः।

वतोः कस्येम् वा। वत्वन्तात् कस्य इम् वा स्यात्, म इत्। यावतिकः यावत्कः तावतिकः तावत्कः।

कंसार्द्धाभ्यां पिकः। ढाभ्यामाभ्यां पिकः स्यात् अर्हत्यादौ। कंसिकः कंसिकी (१) अर्द्धिकः अर्द्धिकी।

कार्षापणाद्वा तु प्रतिश्च। ढात् कार्षापणात् पिकः स्यात् अर्हत्यादौ, तस्मिन् प्रतिरादिश्यते वा। कार्षापणिकः प्रतिकः।

वसन-सहस्र-शतमान-विंशतिकात् ष्णः। ढेभ्य एभ्यः ष्णः स्यात् अर्हत्यादौ। वासनं साहस्रं शातमानं वैंशतिकम्।

(१) अत्र पष्ठ्या पक्षे. कंस इति गोयीचन्द्र (६८२घ)।

शूर्पात् ट्ञो वा। ढात् शूर्पात् ट्ञो वा स्यादर्हत्यादौ। ष्णिकस्यापवादः। शौर्पः (१) पक्षे शौर्पिकः।

गादध्यर्द्धादेरसंज्ञायां लुक्। ढात् क्रतगात् अध्यर्द्धपूर्व्वाच्चार्हत्यादौ ये विहितास्त्यास्तेषाम् असंज्ञायां लुक् स्यात्। द्विकंसम् अध्यर्द्धकंसम् (२) द्विशूर्पं अध्यर्द्धशूर्पम्। असंज्ञायामिति किं ? पाञ्चलोहितिकं (३) पाञ्चकलापिकम्, अत्र त्यान्तं नाम इति (४)।

सहस्र-शतमान-सुवर्ण-कार्षापणेभ्यो वा। ढेभ्य एभ्यः क्रतगेभ्योऽध्यर्द्धपूर्व्वेभ्यश्च अर्हत्यादौ विहितानां त्यानां लुक् स्याद्वा। द्विसहस्रम् अध्यर्द्धसहस्रं द्विशतमानम् अध्यर्द्धशतमान द्विसुवर्णम् अध्यर्द्धसुवर्णं द्विकार्षापणम् अध्यर्द्धकार्षापणम्, पक्षे द्विसाहस्रम् अध्यर्द्धसाहस्रं द्विशातमानम् अध्यर्द्धशातमानं द्विसौवर्णम् अध्यर्द्धसौवर्णं, सुपञ्चालादित्वात् अन्त्यस्य दस्य वि:। द्विकार्षापणिकम्। द्विप्रतिकम्, एवमध्यर्द्धकार्षापणिकम् अध्यर्द्धप्रतिकम् (५)।

विंशतिकादीनः। ढात् क्रतगात् अध्यर्द्धपूर्व्वाच्च विंशतिकादीनः स्यात् अर्हत्यादौ। द्विविंशतिकीनः अध्यर्द्धविंशतिकीनः; लुग्बाध्यते।

---

(१) शूर्पशब्द परिमाणवाचीति गोयीचन्द्र· (६८०सू)।

(२) अध्यर्द्ध—अध्यारूढमर्द्धं यस्मिन् तत्, सार्द्धैकमित्यर्थः।

(३) पञ्च लोहिन्यो शुक्ला· परिमाणमस्येति विग्रहे लोहिनीशब्दस्य पुंवद्भावेन लोहितरूपापत्त्या सिद्धमिति हरिनामामृतबोधम्।

(४) परिमाणविशेषस्य नामधेये एते इति तत्त्वबोधिनी।

(५) कार्षापणस्याद्या त प्रतिष इति कार्षापणशब्दस्य वा प्रतिरादिश्यते।

पाद-पण-माषात् यो वा तु शत-शाणात्। ढेभ्यः क्रतगेभ्यो-ऽध्यर्द्धपूर्व्वेभ्यश्च एभ्यो यः स्यात् अर्हत्यादौ, शत-शाणाभ्यान्तु वा। द्विपाद्यं (१) द्विपण्यं द्विमाष्यम् अध्यर्द्धपाद्यम् अध्यर्द्धमाष्यम्। शतशाणादेस्तु द्विशत्यम् अध्यर्द्धशत्यं पञ्चशाण्यम् अध्यर्द्धशाण्यं, पक्षे द्विशतम् अध्यर्द्धशतं पञ्चशाणम् अध्यर्द्धशाणम्।

खारी-काकिनीभ्यामीकः केवलाभ्याञ्च। ढाभ्यां क्रतगाभ्याम् आभ्याम् अध्यर्द्धपूर्व्वाभ्यां केवलाभ्याञ्चार्हत्यादौ ईकः स्यात्। द्विखारीकः अध्यर्द्धखारीकः द्विकाकिनीकः अध्यर्द्धकाकिनीकः खारीकः काकिनीकः।

द्वित्रेः शाणात् ष्णो वा। द्वि त्रि-पूर्व्वात् शाणात् अर्हत्यादौ ष्णो वा स्यात्। द्वैशाणं त्रैशाणं, पक्षे पूर्व्वेण वा यश्च, द्विशाण्यं, त्रिशाण्यम्, उभयत्वाभावे लुक्, द्विशाणं त्रिशाणमिति।

बहोश्च निष्क-विस्तात् ष्णिको वा। ढात् द्वि त्रि बहुपूर्व्वात् निष्कात् विस्ताच्च ष्णिको वा स्यात् अर्हत्यादौ। द्वैनैष्किकं त्रैनैष्किकं बहुनैष्किकं, द्वैवैस्तिक त्रैवैस्तिकं बहुवैस्तिकं, पक्षे द्विनिष्क त्रिनिष्क बहुनिष्क द्विविस्तं त्रिविस्तं बहुविस्तम्।

उक्तो रथत्यादिः।

युग-रथ-प्रासङ्गात् यो वहति। ढेभ्य एभ्यो वहत्यर्थे यः स्यात्।

---

(१) अत्र पादशब्दस्य परिमाणवाचकस्यैव ग्रहणात् पद्भाव पदादेश.। पदादेश-विधौ, चरणवाचकस्यैव ग्रहणात्—इति शब्दमुग्धबोधम्। सिद्धान्तकौमुदी-मध्येयम्।

युगं वहति युग्यः रथ्यः प्रासङ्ग्यः (१)। गादपि—द्वियुग्यः द्विरथ्यः, द्विप्रासङ्ग्यः।

नाम्नि तु जनात्। ढाज्जनशब्दात् वहत्यर्थे यः स्यात् संज्ञायाम्। जनं वहति जन्यो वरस्निग्धः (२)। जनीशब्दाद्वधूवाचकाद्य इति जयादित्यः।

धुरः ण्येयेनौ च। ढात् धुर्शब्दात् वहत्यर्थे ण्येय ईन य एते स्युः। धुरं वहति धौरेयः धुरीणः धुर्य्यः।

सर्व्वदक्षिणोत्तराद्धुराया ईनः। ढात् सर्व्वादिपूर्व्वात् धुराशब्दात् वहत्यर्थे ईनः स्यात्। सर्व्वधुरां वहति सर्व्वधुरीणः दक्षिणधुरीणः उत्तरधुरीणः।

एकधुराया लुक् च। एकधुरीणः एकधुरः (३)।

शकटाद्धलसीरात् ष्ण-ष्णिकौ गाच्च। ढात् शकटात् क्रतगाच्च ष्णः हलसीरात् क्रतगाच्च ष्णिकः स्यात् वहत्यर्थे। शकटं वहति शाकटः, द्वे शकटे वहति द्वैशकटः, हलं वहति हालिकः, सैरिकः, द्वे हले वहति द्वैहलिकः द्वैसीरिकः।

धनगणाभ्यां यो लब्धरि। ढाभ्यामाभ्यां लब्धर्य्यर्थे यः स्यात्। धनं लब्धा धन्यः, गण्यः शीलार्थढणौ ढे न णे।

---

(१) वत्सानां दमनार्थं यद्दारु स्कन्धे दीयते तत् प्रासङ्ग इति गोयीचन्द्रः (७८८पृ)।

(२) वरस्य स्निग्ध इति पर्य्यायमात्रम्। तथाच—जन्यो जामातुः स्निग्धः सखा चेति स विप्रकारे (८०७पृ)।

(३) गौणत्वात् महाणादेरिति सुप०।

णोऽर्थात् (१)। अर्थं लब्धा आर्थिकश्छात्रः।

वशाद्गते। ढात् वशाद्गतेऽर्थे यः स्यात्। वश आयत्तता, तं गतो वश्यः।

सर्व्वादेः पत्र-पथ्यङ्ग कर्म्म-पात्रादीनो व्याप्नोति। ढात् सर्व्वपूर्व्वात् पत्रादेर्व्याप्नोत्यर्थे ईनः स्यात्। सर्व्वपत्रं व्याप्नोति सर्व्वपत्रीणः सारथिः, सर्व्वपथीनो रथः, सर्व्वाङ्गीणं वासः, सर्व्वकर्म्मीणः पाणिः, सर्व्वपात्रीण ओदनः।

आप्रपदात् प्राप्नोति। ढादाप्रपदात् प्राप्नोतीत्यर्थे ईनः स्यात्। आप्रपदं प्राप्नोति आप्रपदीनं वासः (२)।

सर्व्वान्नाद् भक्षयति। सर्व्वान्नानि भक्षयति सर्व्वान्नीनो भिक्षुः।

अनुपदाद्बद्धा। अनुपदं बद्धा अनुपदीना उपानत्, पदप्रमाणेत्यर्थः।

अयानयान्नेये। अयः प्रदक्षिणम्, अनयः प्रसव्यम्। प्रदक्षिणप्रसव्यगामिनां शाराणां (३) यस्मिन् परैः (४) समावेशः (५)

---

(१) अर्थशब्दात्तदधिकारिणि वाच्ये णो भवतीत्यर्थः। संक्षिप्तसारेऽपि एवमेव। पाणिनीये तु "अश्चात् ण" इति सूत्रं दृश्यते (४।४।८५)

(२) यत् पादाग्रपर्य्यन्तं पतति तदाप्रपदीनम्। यौगिकत्वात् चाप्रपदीनं माल्यादि च—इत्यमरटीका।

(३) शाराणाम् अक्षगुटिकानाम्।

(४) परैः परशारैः।

(५) समावेशः पदानामिति शेषः।

सोऽयानयः। टादयानयेशब्दान्नेयेऽर्थे ईनः स्यात्। अयानयं नेयः अयानयीनः शारः (१)।

परम्पर-पुत्रपौत्र-परोवरेभ्योऽनुभवति। टेभ्य एभ्योऽनुभवतीत्यर्थे ईनः स्यात्। परश्चापरश्चानुभवति, सूत्रे निर्देशात् परम्परीणः। पुत्रश्च पौत्रश्चानुभवति पुत्रपौत्रीणः। तथाच—"लक्ष्मीं परम्परीणां त्वं पुत्रपौत्रीणतां नये"ति भट्टिः। परांश्चावरांश्चानुभवति, सूत्रे निर्देशादोत्वं, परोवरीणः। त्वेन विनापि परम्परशब्दो दृश्यते न तु परोवर इति।

पारादेर्गामिनि। टात् पारादेर्गामिन्यर्थे ईनः स्यात्। पारं गामी पारीणः। पारादिर्यथा—

पारावारावारपारपारावारं (२) प्रकीर्त्तितम्।
अत्यन्तमनुकामञ्च पारादौ कोविदोत्तमैः॥

अध्वनो यथालंगामिनि। अध्वानमलंगामी अध्वनीनः अध्वन्यः।

अभ्यमित्रादीयेनौ च। टादभ्यमित्रादलंगामिन्यर्थे ईय ईन य एते स्युः। अभ्यमित्रम् अलंगामी अभ्यमित्रीयः अभ्यमित्रीणः अभ्यमित्र्यः। अमित्राभिमुखम् अलं गच्छतीत्यर्थः। भविष्यन्निर्देशो वैचित्र्यार्थः, गन्तृमात्रे त्वः।

---

(१) इष्टिपेन शमेन बहायम समर्थं प्रापयितव्यमित्यर्थं इति गोयीचन्द्र (८२१घ)।

(२) पार अपार अपारपार पारापार।

समांसमीनानुगवीनाद्यश्वीनाः । एते निपात्यन्ते । समां समां विजायते (१) समांसमीना गौः, प्रत्यब्दप्रसवेत्यर्थः (२) । अनुगु गोः पश्चादलंगामी अनुगवीनो गोपः । अद्य श्वो वा विजायते अद्यश्वीना गौः, आसन्नप्रसवेत्यर्थः । कथमद्यश्वीनो वियोगः ? विजायते इत्यस्याननुप्रसक्तेरिति जयादित्यः (३) । निपातौ द्व्यर्थविधिषे ।

उञ्ञो ढाधिकारः ।

धात् । धादित्यधिक्रियते घादित्यतः प्राक् ।

ष्णिको दीव्यत्यादौ । दीव्यति जयति खनति जितं क्षतं भवति तरति चरति जीवति हरति निर्वृत्तं कार्य्यं लभ्यं सुकरं परिजर्य्यं संस्कृतं संसृष्टं उपसिक्तं वर्त्तते संपादी क्रीतं गच्छति आहृतं युध्यते हन्यते श्रूयते इति । धादेष्वर्थेषु ष्णिकः स्यात् । द्यूतेन दीव्यति जयति खनति जितो वा द्यूतिकः । जितेऽर्थे ढेऽपि त्यस्तेन अक्षैर्जितं द्रव्यम् आक्षिकम् । धादिति किं ? देवदत्तेन जितम् ।

---

(१) "समां समां विजायते" इत्येव पाणिनिसूत्रम् (५।२।१२) । समां समामिति वीप्सायां सुबन्तसमुदायः प्रकृति । विजायते गर्भं धारयतीति प्रत्यार्थः । गर्भधारणेन सकलापि समा व्याप्यत इति व्यत्यन्तसंयोगे द्वितीया * * * पूर्वपदे सुपोऽनुग्वक्तव्यः" इति काशिका ।

(२) समांसमीना सा यैव प्रतिवर्षं प्रसूयते इत्यमरः ।

(३) पाणिनीयव्याकरणे "समां समां विजायते" (५।२।१३) इति सूत्रानन्तरम् "अद्यश्वीनावष्टब्धे" इति सूत्रम् (५।२।१३) । तत्रापि विजायते इत्यनुवर्त्तते । ननु तर्हि अद्यश्वीनो वियोग इति कथं भवतीत्याशङ्कायां "केचित्तु विजायते इति नानुवर्त्तयन्ति, अवष्टब्धमात्रे निपातनमिच्छन्ति" इत्युक्तं जयादित्येन ।

वाक्-कायाभ्यां कृते। आभ्यामाभ्यां कृतेऽर्थे ष्णिकः स्यात्। मूले वाचिकमिति। एवं कायेन कृतं कायिकम्। आभ्यामिति किं? मनसा कृतं मानसम्। तथाच हेमसूरिः—"कायिकं वाचिकं तत् स्याद्वाचा कायेन यत् कृतम्" इत्याह। इदमपाणिनीयमिति (१)।

*तरति।* अस्मात् तरतीत्यर्थे ष्णिकः स्यात्। काण्डपूलेन तरति काण्डपूलिकः। एवं तृणपूलेन तरति तार्णपूलिकः, गौपुच्छिक।

इको नौ-इराचः। नौशब्दात् इरचश्च इकः स्यात्। ष्णिक-स्यापवादः। नाविकः। स्त्रियां नाविका। घटिकः। बाहुक। उक (२) इकस्य कः।

चरति। अश्वरति इत्यर्थे ष्णिकः स्यात्। दध्ना चरति दाधिकः, दध्ना भक्षयतीत्यर्थः। हस्तिना चरति हास्तिकः, हस्तिना गच्छतीत्यर्थः। चरेरुभयार्थग्रहणम्।

(१) अस्यायमाशय —मुखे वाचा कृतमिति वाक्ये वाचिकमिति यदुदाहृतम् तदपाणिनीयं पाणिनिसम्मतं न। तथाच "वाचो व्याहृतार्थायाम्" (५।४।३५) इति पाणिनिसूत्रम्। "व्याहृत प्रकाशितोऽर्थो यस्यास्तस्यां वाचि वर्त्तमानाद्वाक्-शब्दात् स्वार्थे ठक् (ष्णिक) प्रत्ययो भवति। पूर्वमन्येनोक्तार्थत्वात् सन्देशवाग्-व्याहृतार्थेत्युच्यते। वाचिकं कथयति व्याहृतार्थायामिति किं? मधुरा वाक् देवदत्तस्य" इति काशिका। सन्देशवाग् वाचिकं स्यादित्यमरः। वाच सन्देशे ठकमिति तट्टीकायां रघुनाथः। अतएव वाचा कृतमित्यर्थे वाचिकमित्य-पाणिनीयमिति।

(२) उक प्रत्याहार।

पर्पादेः षिकः। धात् पर्पादेश्चरत्यर्थे षिकः स्यात्। पर्पेण चरति पर्पिकः। स्त्रियां पर्पिकी। पर्पशब्देन हस्त्यादिनयनार्था तृणपूर्णा नौरुच्यते। पर्पादिर्यथा—

पर्पाकष (१) रथ न्यास व्याल जालाश्वमेव च।
पादस्य पद् भवेन्नित्यमष्ट पर्पादयः स्मृताः॥

पादेन चरति पदिकः। आकषो निकषोपलः। इह आकषशब्दपाठात् आकषिकभार्य्य इत्यत्र कोङ्त्वेऽपि न पुंवद्भावनिषेधः। न्यास-व्यालशब्दयोरषित्ते न युम्। जालशब्दस्य इकबाधनार्थः पाठः।

श्वगणाद्वा। धात् श्वगणाच्चरत्यर्थे षिको वा स्यात्। श्वगणेन चरति श्वगणिकः श्वागणिकः।

वेतनादेर्जीवति। धाद्वेतनादेर्जीवत्यर्थे ष्णिकः स्यात्। वेतनेन जीवति वैतनिकः। वेतनादिर्यथा—

वेतन-वाह जालार्द्धवाह-प्रेषण-शक्तयः।
दण्डो-धनुरुपस्थानं सुखशय्या तथैव च॥
स्फिट-पादो धनुर्दण्डोपनिषद्देशमेव च।
उपस्तिरुपदेशश्च सप्तभिर्दश कीर्त्तिताः॥

वस्र क्रय विक्रय क्रयविक्रयादिकः। येभ्य एभ्यो जीवत्यर्थे इकः स्यात्। वस्नेन जीवति वस्निकः, क्रयिकः, विक्रयिकः, क्रयविक्रयिकः।

(१) पाणिनीये तु आकष इत्यत्र आकर्ष इति पाठो दृश्यते (४।४।१०) आकर्ष इति पाठान्तरम्। 'आकर्षात् ष्ठल्' इति पाणिनीयसूत्रम् (४।४।९)।

आयुधादीयश्च । आयुधेन जीवति आयुधीयः आयुधिकः ।

व्रातादीनः । ये नानाजातीया अनियत-वृत्तयः शरीरमायासेन जीवन्ति ते व्राताः, तत्कर्म्मापि व्रातं, तेन जीवति व्रातीनो विप्रः ।

उत्सङ्गादेर्हरति । धादुत्सङ्गादेर्हरत्यर्थे ष्णिकः स्यात् । उत्सङ्गेन हरति औत्सङ्गिकः । उत्सङ्गादिर्यथा—

उत्सङ्गपिटकोड्राय उडुपोत्पतमेव च ।

भस्त्रादेः ष्ठिकः । धाद्भस्त्रादेः ष्ठिकः स्यात् हरतीत्यर्थे । ष्णिकस्यापवादः । भस्त्रया हरति भस्त्रिकः, स्त्रियां भस्त्रिकी । भस्त्रादिर्यथा—

भस्त्राऽसभार भरटाऽसेभार-भरणं तथा ।
भस्त्रादौ शीर्षभारश्च शीर्षेभारः प्रकीर्त्तितः ॥

विवध-वीवधाभ्यां वा । विवधेन हरति विवधिकः वैवधिकः । स्त्रियां विवधिकी वैवधिकी । एवं वीवधिकीत्यादि ।

कुटिलिकायाः ष्णः । धात् कुटिलिकाशब्दात् हरत्यर्थे ष्णः स्यात् । कुटिलिकाशब्देन कुटिला गतिः अग्रवक्रा लौहादिमयी यष्टिश्च उच्यते । कुटिलिकया कुटिलगत्या व्याधं हरति वञ्चयति कौटिलिको मृगः । तथा कुटिलिकया अग्रवक्रलौहयष्ट्या अङ्गारान् हरति कौटिलिकः कर्म्मकारः ।

अचद्यूतादेर्निर्वृत्ते । धादचद्यूतादेर्निर्वृत्तेऽर्थे ष्णिकः स्यात् । अचद्यूतेन निर्वृत्तम् आचद्यूतिकं वैरम् । अचद्यूतादिर्यथा—

अवद्यूत जाया पादस्वेद कण्टकमर्द्दनम् ।
यातोपयात प्रक्रत गतागत गमागमम् ॥

याचितापमित्योभ्यां क-कणौ । धाभ्यामाभ्यां क्रमात् क-कणौ स्यातां निर्वृत्ते । याचितेन निर्वृत्त याचितकम् । अपपूर्व्वमेङ प्रतिदाने यपि अपमित्य निर्वृत्तम् आपमित्यकम् । सूत्रे यौनिर्द्देशो ऽनुकरणात् ।

कालेभ्यः कार्य्य लभ्य सुकर परिजय्येषु च । ब्वनिर्द्देशः स्वरूपविधेर्निरासार्थः । घेभ्यः कालवाचिभ्यो निर्वृत्ते कार्य्यादिषु च ष्णिकः स्यात् । मासेन निर्वृत्तः मासिकः आर्द्धमासिकः सांवत्सरिकः । एवं मासेन कार्य्यः लभ्य. सुकरः परिजय्यो वा मासिक इत्यादि ।

समादेरधीष्टादिवत् । धात् समादेर्निर्वृत्तेऽर्थे अधीष्टादिवत् यथाविहितं त्याः स्युः । समया निर्वृत्तः समीनः द्विसमीनः द्वैसमिकः, द्विरात्रीणः द्वैरात्रिकः, द्व्यह्नीनः द्वैयह्निकः, द्विसंवत्सरीणः द्विसांवत्सरिकः, द्विवर्षीणः द्विवार्षिकः । द्विवर्षः, चित्तवति नित्यं लुक् । द्विवर्षो वत्स इत्येतत् पुरुषोत्तमेनोक्तम् ।

षष्टिकः । निपात्यः । षष्टिरात्रेण पच्यते षष्टिको व्रीहिः ।

संसृष्टे । धात् संसृष्टेऽर्थे ष्णिकः स्यात् । द्रव्यान्तरेण यन्मिश्रीकृतं तत् संसृष्टं । दध्ना संसृष्टं दाधिकं, शार्ङ्गवेरिकम् (१) ।

मुद्ग-चूर्णाभ्यां ष्णेनौ । धाभ्यामाभ्यां क्रमात् संसृष्टेऽर्थे ष्ण इन्

---

१। शृङ्गवेरम् आर्द्रकम् ।

एतौ स्रोतांम्। गुडेन संसृष्टः गौड ओदनः, चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः।

लवणाल्लुक्। लवणेन संसृष्टः लवणः सूपः। लवणशब्दोऽत्र द्रव्यवाची (१)।

व्यञ्जनैरुपसिक्ते। येभ्यो व्यञ्जन-वाचिभ्य उपसिक्तेऽर्थे ष्णिकः स्यात्। दध्ना उपसिक्तं दाधिकं, शार्ङ्गवैरिकम्। व्यञ्जनैभ्य इति किम्? उदकेनोपसिक्त ओदनः।

ओजःसहोऽम्भसो वर्त्तते। येभ्य एभ्यो वर्त्ततेऽर्थे ष्णिकः स्यात्। ओजसा वर्त्तते औजसिकः, साहसिकः, आम्भसिकः।

सम्पादिनि। भात् सम्पादिन्यर्थे ष्णिकः स्यात्। सम्पादी शोभायुक्तः (२)। कर्णवेष्टकाभ्यां सम्पादि कार्णवेष्टकिकं मुखं, वास्त्रयुगिकं शरीरं, वस्त्रयुगेन विशेषतो भ्राजत इत्यर्थः।

कर्म्मवेषाभ्यां यः। आभ्यामाभ्यां सम्पादिन्यर्थे यः स्यात्। कर्म्मणा सम्पादी कर्म्मण्यः, वेष्यः। वेषोऽत्र नेपथ्यवाची।

मूल्यात् क्रीते। भान्मूल्यवाचिनः क्रीतेऽर्थे ष्णिकः स्यात्। प्रस्थेन मूल्येन क्रीतं प्रास्थिकं, नैष्किकम्। मूल्यादिति किं? हस्तेन क्रीतम्। द्यन्तात् त्र्यन्ताच्च त्यो न भवति अनभिधानात्, तेन प्रस्थाभ्यां प्रस्थैर्वा क्रीतमित्यर्थे न स्यात्। यत्र तु प्रकृत्यर्थस्य

(१) द्रव्यवाची लवणशब्दो लुकं प्रयोजयति न गुणवाचीति काशिका (४।४।२४)।

(२) गुणोत्कर्षः सम्पत्ति, शोभेति यावत्। तयाच सम्पद्यते अलङ्क्रियते शोभते यत् तत् सम्पादि।

संख्याभेदावगमे प्रमाणमस्ति तत्र भवत्येव। यथा द्वाभ्यां क्रीतं द्विकं पञ्चकमित्यादि। कथं मुद्गैर्माषैर्वा क्रीतं मौद्गिकं माषिकं वसनमिति चेत् सत्यं, तत्र भवत्यभिधानात्। न ह्येकेन मुद्गेन माषेण वा क्रयणं सम्भवति।

शतादेरर्हत्यादिवत्। धात् शतादेरर्हत्यादिवत् यथाविहितं त्याः स्युः क्रीतेऽर्थे। शतेन क्रीतं शत्यं शतिकं, द्विकं पञ्चकं विंशतिकं यावतिकं यावत्कं, कांसिकं, कार्षापणिकं प्रतिकं, वासनं, शौर्पं शौर्पिकं, द्विकंसम् अध्यर्द्धकंसं, द्विसुवर्णं द्विसौवर्णं, द्विविंशतिकीनः द्विपाद्यं, द्विशत्यं द्विशतं, खारीकं, द्वैमाषं द्विमाष्यं द्विमानं, द्विनैष्किकं द्विनिष्कमित्यादि।

उत्तरादेः पथो गच्छत्याहृतयोः। धादुत्तरादिपूर्व्वात् पथिशब्दात् गच्छति आहृते चार्थे ण्णिकः स्यात्। उत्तरपथेन गच्छति आहृतो वा औत्तरपथिकः, आहृतेऽर्थे टे त्यः। वारिपथिकः। उत्तरादिर्यथा—

उत्तरो वारि कान्तार जङ्गल स्थल शङ्कवः।
अजः सप्तैतोत्तरादौ कोविदैः परिकीर्त्तिताः॥

युध्यते। धाद्युध्यतेऽर्थे ण्णिकः स्यात्। खड्गेन युध्यते खाड्गिकः, धनुषा युध्यते धानुष्कः, उसन्तत्वात् इकस्य कः।

शक्तियष्टिभ्यां ष्णीकः। धाभ्यामाभ्यां युध्यतेऽर्थे ष्णीकः स्यात्। मूले शक्त्या युध्यत इत्यादि। परे तु धाम्नोदाहृतं किन्तु प्रहरणादित्याहुः (१)।

(१) तदाच शक्तिः प्रहरणमस्येति शाक्तीक इति काशिका (४।४।५८)।

## रक्तो दीव्यत्यादिः ।

रागाद्रक्ते । षाद्रागवाचिनो रक्तेऽर्थे ष्णः स्यात् । यद्यपि रञ्जधोरनेकार्थत्वं, *यथा भोजने रक्तः, रक्तो गौः, तथाप्यत्र शुक्लस्य* वर्णान्तरापादनं रञ्जेरर्थः । कषायेण रक्तं काषायं, माञ्जिष्ठं, कौसुम्भम् । कथं काषायौ गर्द्दभस्य कर्णौ, हारिद्रौ कुक्कुटस्य पादौ ? इति तु उपमानाद्भविष्यति । कषायेण रक्ताविव काषायौ, हरिद्रया रक्ताविव हारिद्रौ इत्यर्थः । रागादिति किं ? पाणिना रक्तम् ।

हरिद्रा महारजनाभ्यां ट्ष्णो नील्यास्त्वनित् । आभ्यामाभ्यां रक्तेऽर्थे ट्ष्णः स्यात्, नीलीशब्दात् ट्ष्णोऽनित् । हरिद्रया रक्तं हारिद्रं, माहारजनं, नील्या रक्तं नीलम् । चान्द्रास्तु नीलीशब्दात् कमाहुः ।

पीतात् को, लाक्षारोचनात्तु ष्णिको, वा तु शकल-कर्द्दमात् । षात् पीतात् कः स्यात्, लाक्षारोचनाभ्यान्तु ष्णिकः, शकल-कर्द्दमाभ्यां ष्णिको वा । पीतेन रक्तं पीतकम् । लाक्षया रक्तं लाक्षिकं, रौचनिकम् । शाकलिकं, कार्द्दमिकं ; पक्षे ष्णः— शाकलं, कार्द्दमम् ।

नक्षत्रेभ्यो युक्ते काले । षेभ्यो नक्षत्रवाचिभ्यो युक्तेऽर्थे वेत्यादित्वात् ष्णः स्यात्, यो युक्तः स कालश्चेद्भवति । मूले तिष्येत्यादि, ष्णे कृते सूर्य्यागस्त्यस्येत्यादिना यलोपः । एवं पौषी । ननु कालेन सह सर्व्वदैव नक्षत्राणां योगः कालस्य नित्यत्वात्, तत् कथं तिष्यादिना कालविशेषोऽभिधीयते इति चेत्

सत्यं, गङ्गायां घोषः प्रतिवसति इत्यादौ यथा गङ्गाशब्देन तत्समीपस्थतीरमुपलक्ष्यते तथात्रापि तिष्यादिभिर्नक्षत्रैः समीपस्थचन्द्रो यदा लक्ष्यते तदा तेभ्यस्य उत्पद्यते। तथाच तिष्यसमीपस्थेन चन्द्रमसा युक्त इत्यर्थः। नक्षत्रेभ्य इति किं? चन्द्रमसा युक्ता रात्रिः। काल इति किं? पुष्येण युक्तश्चन्द्रमाः।

अविशेषे लुवश्वत्थश्रवणाभ्यान्तु नाम्नि। येभ्यो नक्षत्रवाचिभ्यो विहितष्णस्य लुप् स्यात्, अश्वत्थश्रवणाभ्यान्तु संज्ञायां, रात्र्यादिविशेषो यदि नाभिधीयते। अद्य पुष्यः अद्य मघा। अत्र यावान् नक्षत्रेण कालो लक्ष्यते स कालोऽहोरात्रस्तस्य विशेषाभावात्। अविशेष इति किं? पौषी रात्रिः, पौषमहः। अश्वत्थेन युक्तो मुहूर्त्तः अश्वत्थो मुहूर्त्तः, श्रवणा रात्रिः। विशेषार्थोऽयमारम्भः। संज्ञायामिति किम्? आश्वत्थी रात्रिः, श्रावणमहः। सर्व्वत्र लुपि युक्तवद्भावः।

भचादीयः। कृतचान्नक्षत्रवाचकात् युक्ते कालेऽर्थे ईयः स्यात्। तिष्यपुनर्वसवीयमहः, अद्य तिष्यपुनर्वसवीयं, राधानुराधीया रात्रिः, अद्य राधानुराधीयम्। परत्वाल्लुपं बाधित्वा विशेषाविशेषयोः प्रवर्त्तते। भ इति किं? विधुश पुष्यश ताभ्यां युक्तः कालः।

परिवृते रथे। धात् परिवृतेऽर्थे वेश्यादित्वात् ष्णः स्यात् यः परिवृतः स रथश्चेद्भवति। वस्त्रेण परिवृतो रथः वास्त्रो रथः, चार्म्मणो रथः, विकारभिन्ने ष्णे न नलोपः। काम्बलो रथः, समन्तादेष्टित इत्यर्थः। यस्य सर्व्वावयवो न वेष्टितस्तत्र न

भवति, यथा क्वातैः परिवृतो रथः। रथ इति किं? वस्त्रेण परिवृतः कायः।

द्वैपवैयाघ्रात् ट्ण:, इंस्तु पाण्डुकम्बलात्। षाभ्यामाभ्यां ट्णः स्यात् परिवृतरथेऽर्थे। पाण्डुकम्बलात्तु इन्। द्वैपेन परिवृतो रथो द्वैपो रथः, वैयाघ्रो रथः, पाण्डुकम्बली रथः।

हस्त-यथाकथाचाभ्यां यणौ दीयते कार्य्ये च। षाभ्यामाभ्यां क्रमात् यणौ स्यातां दीयतेऽर्थे कार्य्येऽर्थे च। हस्तेन दीयते कार्य्यं वा हस्त्य, यथाकथाच शब्दो व्य-समुदायोऽनादरार्थः। यथाकथाच दीयते कार्य्यं वा याथाकथाचम्।

छन्दसो यो निर्म्मिते उरसः ण्य। षात् छन्दसो निर्म्मितेऽर्थे यः स्यात्, उरसो यः ण्य। छन्दसा इच्छया निर्म्मितं छन्दस्यं विघ्नम्, उरसा निर्म्मितम् उरस्यम् औरसम्।

पूरणान्तात् को ग्रन्थं गृह्णाति, तस्य लुक् च। पूरणत्यान्तात् ग्रन्थं गृह्णाति इत्यर्थे कः स्यात् तस्य पूरणस्य लुक् च। ग्रन्थ-ग्रहणयोर्थ्यो रूपादिरेव(१) पूरणत्यान्ताभिधेयः। द्वितीयेन रूपेण ग्रन्थ गृह्णाति द्विको वटुः, तृतीयेन रूपेण ग्रन्थं गृह्णाति त्रिकः, लुकि पूर्व्वप्रकृतिः। ग्रन्थभिन्नग्रहणे तु पञ्चमेन दिनेन ग्रन्थं गृह्णाति, द्वितीयेन हस्तेन दण्डं गृह्णाति। एवं चक्षुषा दृश्यते चाक्षुषः, श्रवणेन श्रूयते श्रावणः, मनसा ज्ञायते मानसः, इत्यर्थार्थः। इति षाधिकारः।

---

(१) रूपं ग्रन्थानामाहत्ति.।

क्षुद्रा भ्रमर वरटा वातपात् (१) ट्णः । येभ्यः एभ्यः कृतेऽर्थे ट्णः स्यात् । क्षुद्राभिः कृतं क्षौद्रं भ्रामर वारटं वातपं मधु ।

कुलालादेर्णकः । घात् कुलालादेः कृतेऽर्थे णकः स्यात् नाम्नि । कुलालेन कृतं कौलालकम् ।

कुलालो गिरिकः सेना चण्डालः परिषद्वधूः ।
कर्म्मारो वरूडोऽनड्वान् कुम्भकार उवस्तथा ॥
ब्राह्मणो देवराजश्च श्वपाकः परिकीर्त्तितः ।
निषादश्च कुलालादौ परे शिष्टप्रयोगतः ॥

कृते ग्रन्थे । घात् कृतेऽर्थे वैत्यादित्वात् ष्णः स्यात्, यः कृतः स चेद्ग्रन्थो भवति । वररुचिना कृतो ग्रन्थः वाररुचः प्राभाकरः । यमादेस्तु याम्यः आग्नेयः प्राजापत्यः कालेयः दैव्यः दैवः श्रौतः । भवादित्वात् पाणिनिना कृतो ग्रन्थः पाणिनीयः । शास्त्रविशेषपरत्वात् मूले पाणिनीयमिति क्लीवम् । एवं कात्यकृतत्वं कात्वमित्यादि ।

प्रोक्ते । घात् प्रोक्तार्थे वैत्यादित्वात् ष्णः स्यात् । प्रकर्षेणोक्तं प्रोक्तं व्याख्यातं प्रधीतं वा, न तु कृतं, कृते ग्रन्थे इत्यनेनावगतत्वात् । यज्ञवल्केन प्रोक्तं याज्ञवल्कं, प्राभाकरं, गौतमम् । मूले गार्ग्यवर्म्मिकं शर्म्मवर्म्मणा प्रोक्तमिति वाक्यं, काश्यादित्वाश्रिक-ष्णिकौ । स्त्रियां शार्व्ववर्म्मिका शार्व्ववर्म्मिकीति । एवं व्यासेन प्रोक्ता संहिता वैयासिका वैयासिकी । एवं पाणिनीयं, पर्णोऽस्यास्तिपर्णी, तस्यापत्यं ष्णे पाणिनः, पक्षादित्वात् न नलोपः,

(१) वरटा इत्यत्र वटर, वातप इत्यत्र पातप इति पाणिनिः ।

घात्। घादित्यधिकारो जादित्यतः प्राक्।

दृष्टे साम्नि। घात् दृष्टेऽर्थे वेत्त्यादित्वात् ष्णः स्यात्, यत् दृष्टं तत् साम चेद्भवति। वशिष्ठेन दृष्टं साम वाशिष्ठं, वैश्वामित्रम्।

ष्णो डिद्वा। अत्रार्थे विहितः ष्णो डिद्वा स्यात्। विंशत्या दृष्टं साम विंशं, डिति टेर्लोपः। पक्षे वैंशतं साम। एवम् औशनम् औशनसं साम। यमादिभ्यस्त्वपत्यवत् इति। यमेन दृष्टं साम याम्यम् आदित्यम् आग्नेयं कालेयं दैव्यं दैवं प्राजापत्यं पाशुपतं औत्समित्यादि।

वामदेवात् यः। वाद्वामदेवशब्दाद्यः स्यात् दृष्टे साम्नि। वामदेवेन दृष्टं साम वामदेव्यं साम।

तीयात् ष्णीकः। तीयान्तादत्रार्थे ष्णीकः स्यात्। द्वितीयेन दृष्टं साम द्वैतीयीकं तार्त्तीयीकं साम।

गोत्रादङ्कवत्। अपत्यान्तेभ्यो येभ्योऽङ्केऽर्थे ये त्या विधेया अत्रार्थे ते त्याः स्युः दृष्टे सामन्यर्थे। औपगवेन दृष्टं साम औपगवकं साम। ग्लुचुकायनिना दृष्टं साम ग्लौचुकायनकं साम, वैदेन दृष्टं साम वैदं साम, गार्गं साम, दाक्षं साम।

नाम्नि मक्षिकादेः कृते। घान्मक्षिकादेः कृतेऽर्थे ष्णः स्यात् समुदायेन संज्ञा चेद्भवति। मक्षिकाभिः कृतं माक्षिकं मधु। मक्षिकादिर्यथा—

मक्षिका पुत्तिका गर्मुत् सरघाः परिकीर्त्तिताः।
पौत्तिकं गार्मुतं सारघं, मधुनः संज्ञा।

क्षुद्रा भ्रमर वरटा वातपात् (१) ट्णः । घेभ्यः एभ्यः कृतेऽर्थे ट्णः स्यात् । क्षुद्राभिः कृतं क्षौद्रं भ्रामर वारटं वातपं मधु ।

कुलालादेर्ण्यकः । घात् कुलालादेः कृतेऽर्थे ण्यकः स्यात् नाम्नि । कुलालेन कृतं कौलालकम् ।

कुलालो गिरिकः सेना चण्डालः परिपद्वधूः ।
कर्म्मारो वरुडोऽनड्वान् कुम्भकार उरस्तथा ॥
ब्राह्मणो देवराजश्च श्वपाकः परिकीर्त्तितः ।
निषादश्च कुलालादौ परे शिष्टप्रयोगतः ॥

कृते ग्रन्थे । घात् कृतेऽर्थे वेत्त्यादित्वात् ष्णः स्यात्, यः कृतः स चेद्ग्रन्थो भवति । वररुचिना कृतो ग्रन्थः वाररुचः प्राभाकरः । यमादेस्तु याम्यः आग्नेयः प्राजापत्यः कालेयः दैव्यः दैवः औत्सः । भवादित्वात् पाणिनिना कृतो ग्रन्थः पाणिनीयः । शास्त्रविशेषणत्वात् मूले पाणिनीयमिति क्लीबम् । एवं कात्यकृतं कात्यमित्यादि ।

प्रोक्ते । घात् प्रोक्तार्थे वेत्त्यादित्वात् ष्णः स्यात् । प्रकर्षेणोक्तं प्रोक्तं व्याख्यातं अधीतं वा, न तु कृतं, कृते ग्रन्थे इत्यनेनावगतत्वात् । यज्ञवल्केन प्रोक्तं याज्ञवल्कं, प्राभाकरं, गौतमम् । मूले शार्ङ्ववर्म्मिक शर्म्मवर्म्मणा प्रोक्तमिति वाक्यं, काश्यादित्वात्-स्निक-ष्णिकौ । स्त्रियां शार्ङ्ववर्म्मिका शार्ङ्ववर्म्मिकीति । एवं व्यासेन प्रोक्ता संहिता वैयासिका वैयासिकी । एवं पाणिनीयं, पणोऽस्यास्तीति पणी, तस्यापत्यं ष्णे पाणिनः, पण्यादित्वात् न नलोपः,

(१) वरटा इत्यत्र वटर, वातप इत्यत्र पाटप इति पाणिनिः ।

स भवान् पाणिनिः, युवत्यः पूज्ये, तेन प्रोक्तम्। न्यासकारस्तु पणोऽस्यास्ति फलादित्वादिनः, तस्यापत्यम् अतः णिः, तेन प्रोक्तं गहादिपाठादीय इत्याह। गोत्रार्थे ण्यो स्तु आपिशलिना प्रोक्तम् आपिशलम्, एवं काखेन प्रोक्तं काखम्। यमादेस्तु याम्यं प्राजापत्यम् आग्नेयं कालेयं पाशुपतम् औक्षमित्यादि।

उख-तित्तिरि वरतन्तु-खण्डिकाणीयश्छन्दसि। वेभ्य एभ्यश्छन्दसि विषये प्रोक्तार्थे णीयः स्यात्। कल्पसूत्रछन्दोब्राह्मणानि तद्विषयाणि इति तद्विषयता। उखेन प्रोक्तं छन्दोऽधीते औखीयः तैत्तिरीयः वारतन्तवीयः खाण्डिकीयः। छन्दसीति किम्? उखेन प्रोक्ताः श्लोकाः औखाः।

छगलिनो णेयिन्। वाच्छगलिनः प्रोक्तेऽर्थे छन्दोविषये णेयिन् स्यात्। कलाप्यन्तेवासित्वाण्णिनोऽपवादः। छगलिना प्रोक्तं छन्दोऽधीते छागलेयी। प्रोक्ताल्लुगित्यनेन अध्येतृवेदितृप्रत्ययस्य लुक्। एवमन्यत्र।

शौनकादेर्णिन्। वाच्छौनकादेश्छन्दसि विषये प्रोक्तार्थे णिन् स्यात्। शौनकेन प्रोक्तं छन्दोऽधीते शौनकी स्कान्दी। शौनकादिर्यथा—

> शौनकः स्कन्दः शापेयः शाम्येयः पुरुषांसुषः।
> शापायनो रज्जुकण्ठो देवदर्शेन शाङ्गरः॥
> स्कम्भ-वाजसनेयौ तलवकारेण संयुतौ।
> खाडायनो रज्जुभारः कषाय इह कीर्त्तितः।
> कठशाठौ शौनकादौ षड्भिर्दश मनीषिभिः॥

कठशाठाविति समुदितस्यात्र ग्रहणम्। कठशाठाभ्यां प्रोक्तं छन्दोऽधीते काठशाठी। केवलात्तु लुक् वक्ष्यति। येऽत्र वृद्धास्तेभ्य ईयः अन्येभ्यः ण्यो बाध्यते।

कलापिशिष्याऽकलापिवैशम्पायनशिष्येभ्यः। येभ्यः कलापिशिष्येभ्यः कलापिवर्ज्जेभ्यो वैशम्पायनशिष्येभ्यश्च छन्दोविषये प्रोक्तेऽर्थे णिन् स्यात्।

तत्र,—

कलापिशिष्याश्चत्वारो हरिद्रुश्छगली तथा।
तुम्बुरुश्चाथ वैशम्पायनशिष्यकाः।
पलिङ्ग(१) कमलाऽऽरुणि काठ-ताण्ड्य-कलापिनः॥
श्यामायनोऽपि ऋषभोऽरुणिरेते नव स्मृताः (२)।

हरिद्रुणा प्रोक्तं छन्दोऽधीते हारिद्रवो एव पालिङ्गी। ननु कलापी वैशम्पायनशिष्यः, तच्छिष्या हरिद्रादयश्चत्वारो वैशम्पायनप्रशिष्या भवन्तीति वैशम्पायनशिष्यद्वारेणैव सिध्यति, किं पृथग्ग्रहणेनेति चेत् सत्यम्, अत्र कलापिशिष्यग्रहणं साक्षाच्छिष्यज्ञापनार्थम्, अन्यथा कठशिष्यस्य खाडायनस्य वैशम्पायनशिष्यत्वात् शौनकादौ पाठोऽनुचितः। न च खाड़ायनशब्दस्तत्र न पठनीय इति वाच्यम्, अस्य प्रशिष्येभ्यो णिन्प्रसङ्गात्। अकलापिन इति किं कलापिना प्रोक्तं छन्दोऽधीते कालापः, कलाप्यादित्वाचलोपनिषेधाभावात् नलोपे इकारलोपः।

(१) पतङ्ग इत्यन्यत्र पाठः।
(२) ऋषभ इत्यत्र स्थाने वरतन्तुरिति वारतन्तविरित्यन्यत्र पाठः।

कठचरकाल्लुक् । घाभ्यामाभ्यां छन्दसि विषये प्रोक्तार्थं-त्यस्य लुक् स्यात् । कठेन प्रोक्तं छन्दोऽधीते कठः, चरकः । छन्दसीति किं काठः श्लोकः ।

ऋषेः काश्यप-कौशिकाण्णिन् कल्पे च । घाभ्यामाभ्यां कल्पे छन्दसि च वाच्ये प्रोक्तेऽर्थे णिन् स्यात् । ईयस्यापवादः । काश्यपेन प्रोक्तं कल्पं छन्दो वाऽधीते काश्यपी एवं कौशिकी । ऋषेरिति किम् ? इदानीन्तनकाश्यपगोत्रः काश्यपः, तेन प्रोक्तं कल्पं छन्दो वाधीते काश्यपीयः कौशिकीयः, इवादीयः । यज्ञकर्मण्य-नुष्ठेयविधेर्विधायको ग्रन्थः कल्पः । काश्यपेन ऋषिणा प्रोक्तः श्लोकः काश्यपीयः श्लोकः । अपरे इह छन्दो नानुवर्त्तयन्ति ।

पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः (१) । घाभ्यामाभ्यां क्रमात् भिक्षुनटसूत्रयोर्वाच्ययोः प्रोक्तार्थे णिन् स्यात् । पाराशर्येण प्रोक्तं भिक्षुसूत्रमधीते पाराशरी भिक्षुः, ईयो बाध्यते । शिलालिना प्रोक्तं नटसूत्रमधीते शैलाली नटः ।

कर्मन्द-कृशाश्वाभ्यामिन् । घाभ्यामभ्यां क्रमात् भिक्षुनट-सूत्रयोर्वाच्ययोः प्रोक्तेऽर्थे इन् स्यात् । कर्मन्देन प्रोक्तं भिक्षुसूत्र-मधीते कर्मन्दी भिक्षुः, कृशाश्वेन प्रोक्तं नटसूत्रमधीते कृशाश्वी नटः । भिक्षुनटसूत्रयोरिति किं ? कार्मन्दः कार्शाश्वः श्लोकः ।

ऋषिप्रोक्तयोर्ब्राह्मणकल्पयोर्णिन् याज्ञवल्क्यादेः । याज्ञवल्क्या-दिभिन्नात् घात् ऋषिप्रोक्तयोर्ब्राह्मणकल्पयोर्णिन् स्यात् । उप-

(१) सूत्रशब्दः प्रत्येकमभिसम्बध्यते । भिक्षुसूत्रनटसूत्रयोरित्यर्थः ।

निषङ्गागतिरिक्तवेदव्याख्यानं ब्राह्मणं। शाट्यायनेन प्रोक्तं ब्राह्मणमधीते शाट्यायनी, पिङ्गेन प्रोक्तः कल्पः पैङ्गी कल्पः। याज्ञवल्क्यादेस्तु *याज्ञवल्क्यः आश्मरथः शौलभनः*। *याज्ञवल्क्यादिभ्यो* वेत्त्यादिविहितण्यस्य प्रोक्ताधिकारविहितत्वाभावादध्येतृवेदितृविषयता मा भूत्। पैङ्गीत्यत्र णिनः प्रोक्ताधिकारविहितत्वेऽपि न स्यात् (१), कल्पग्रहणेन तत्र ऋषेः काश्यपकौशिकाणीनः कल्पे इति कल्पस्यैव ग्रहणात् (२)।

इति णाधिकारः।

अत्र अत्राय साधुः अत्रियः यत्रिय इति मूले लिपिकरप्रमादः, भात् त्याभावात्।

जात्। जादित्यधिकारो डात् प्राक्।

आगते। जादागतेऽर्थे वेत्त्यादिवत् ण्यः स्यात्। मूले मथुराया इत्यादि, ण्ये आकारलोपः प्रिय। एवं स्रौघ्न इत्यादि। *यमादागतः याम्यः प्राजापत्यः पाशुपतः आग्नेयः मौलः*। भवादिवत् गार्गीयः कायिकः राष्ट्रियः नादेय इत्यादि। इह यन्मुख्यजं तस्यैव ग्रहणं, तेनेह न स्यात् सुघ्रादागतः सन् वृक्षमूलादागत इति (३)।

---

(१) अध्येतृवेदितृविषयता इति शेषः।

(२) तथाहि यद्यत्रापि अध्येतृवेदितृविषयता तर्हि तत्सूत्रे कल्पग्रहणमनर्थकं स्यात्। तस्मात् तत्रैव कल्पे वाच्ये अध्येतृवेदितृविषयता, अत्र नेति सिध्यतीति बृहन्मुग्धबोधम्।

(३) "आद्यपादानादागते" इति श्रीविप्रसारसूत्रम् ५०। तत्र गोयीचन्द्रः—आदिमन्तः प्रथमपर्यायः। प्रथमपादानं विशेषो यस्मात् तस्मात्-

आयस्थानेभ्यः ष्णिकोऽशुण्डिकादेः । जेभ्य आयस्थानवाचिभ्यः आगतेऽर्थे ष्णिकः स्यात्, न तु शुण्डिकादेः । आयः स्वामिग्राह्यो भागः, स यस्मिन्नुत्पद्यते तदायस्थानम् । शुल्कशालाया आगतः शौल्कशालिकः आकरिकः । बनिर्देशः स्वरूपविधेर्निरासार्थः । शुण्डिकादेस्तु—शुण्डिकादागतः शौण्डिकः । शुण्डिकादिर्यथा—

शुण्डिकः ककणस्तीर्थ-भूमि-पर्ण-तृणोपलम् ।
उदपानं स्थण्डिलञ्च शुण्डिकादौ नवेरिताः ॥

ककणपर्णयोः पाठः, पर्णककणाद् भारद्वाजे इति ईयस्य बाधनार्थः । तीर्थस्य धूमादिपठितस्य णकबाधनार्थः । उदपानस्य उत्सादिपठितस्य ट्णबाधनार्थः । अन्येषामायस्थानवाचित्वात् ष्णिकनिषेधार्थः पाठः ।

विद्यायोनिसम्बन्धादृतः । विद्याकृतो योनिकृतश्च सम्बन्धो यस्य तस्मादृतो जात् आगतेऽर्थे ष्णिकः स्यात् । होतुरागतः हौतृकः मातृकः स्वासृकः, उकप्रत्याहारादिकस्य कः । विद्यायोनिसम्बन्धादिति किं ? सवितुरागतं सावित्रं कार्षम् ।

पितुर्यश्च । अस्मिन्नर्थे पितृशब्दात् य-ष्णिकौ स्याताम् । पितुरागतं पित्र्यं पैतृकं, पूर्व्ववदिकस्य कः ।

अनृतो णकः । आद्विद्यायोनिसम्बन्धादनृदन्ताण्णकः स्यात् आगतेऽर्थे । उपाध्यायादागतम् औपाध्यायकम्, पैतामहकः मातामहकः मातुलकः ।

---

गतेऽर्थे ठण् प्रत्ययो भवति । कारिपदार्थं किमर्थम् ? यदा मगधादागच्छन् इक्षुमूलादागतः, तदा इक्षुमूलशब्दात् ठण् न भवतीति ।

नृहेतुभ्यो मयट्रूप्यौ वा। जेभ्यो नृवाचिभ्यो हेतुवाचिभ्यश्च आगतेऽर्थे मयट् रूप्यश्च स्यात्। देवदत्तादागतं देवदत्तमयं देवदत्तरूप्यं। पक्षे दैवदत्तं, वृद्धपक्षे देवदत्तीयम्। एवं यज्ञदत्तमयं यज्ञदत्तरूप्यं यज्ञदत्तीयमित्यादि। हेतुभ्यस्तावत्-समादागतं सममयं समरूप्यं। पक्षे समीयं, गहादित्वात् ईयः। एव विषममयं विषमरूप्यं विषमीयं। द्वनिर्देशः स्वरूपविधेर्निरासार्थः।

अपत्यादङ्कवत्। अपत्यान्तेभ्योऽङ्केऽर्थे येभ्यो ये त्या विहितास्तेभ्य आगतेऽर्थे ते त्याः स्युः। औपगवादागतम् औपगवकम्, वैदः गार्गः दाक्ष इत्यादि।

प्रभवति। जात् प्रभवत्यर्थे वेत्यादित्वात् णः स्यात्। हिमवतो गङ्गा प्रभवति हैमवती गङ्गा। दारदी सिन्धुः। यमादेस्तु याम्यः प्राजापत्यः पाशुपतः आग्नेयः औक्ष इत्यादि। भवादित्वाद्द गाङ्गेयः काश्मिकः राष्ट्रियः नादेय इत्यादि।

वालवायाञ्ञो विदूरश्च। जात् वालवायात् प्रभवत्यर्थे ञ्यः स्यात्, ञ्ये विदूरादेशश्च। वालवायात् (१) प्रभवति वैदूर्यो मणिः। परैकदेशिनस्तु विदूरशब्दात् ञ्यत्वं विधाय वैदूर्यं साधयन्ति (२)।

धर्मादेर्योऽनपेते। जाद्धर्मादेरनपेतेऽर्थे यः स्यात्। धर्मादनपेतं धर्म्मम्। धर्मादिर्यथा—

(१) वालवायो देशविशेषः।

(२) "विदूराञ्ञ्यः" इति पाणिनिसूत्रम् (४।३।८४)।

धर्म्मार्थन्यायपथ्यानश्चत्वारोऽत्र प्रकीर्त्तिताः। इति जाधिकारः।

डात्। डादित्यधिकारः ष्णा. प्राक्।

पात्रादुद्धृते। डात् पात्रवाचिन उद्धृतेऽर्थे वेत्यादित्वात् ष्णः स्यात्। पात्रं भाजनम्, उद्धृत भुक्तोच्छिष्टम्। शरावेषूद्धृत ओदनः शाराव:, कार्पर:। पात्रादिति किं? पाणावुद्धृतः।

स्थण्डिलाद्व्रतशयितरि। व्रतेन यः शेते स व्रतशयिता, तस्मिन् डात् स्थण्डिलात् वेत्यादित्वात् ष्णः स्यात्। स्थण्डिले व्रतेन शेते स्थाण्डिलो ब्रह्मचारी। व्रतमिति शास्त्रकृतो नियम.।

संस्कृते भक्ष्ये। डात् संस्कृतेऽर्थे वेत्यादित्वात् ष्णः स्यात्, यत् संस्कृत तत् भक्ष्य चत् भवति। भ्राष्ट्रे (१) संस्कृताः भ्राष्ट्रा मुद्गाः, पैठराः (२) पूपा.। खर विषद मभ्यवहार्य्यं भक्ष्यमिति जयादित्यादिभिरुक्त रूढ़िरुक्ता। खरमभ्यवहार्य्यं भृष्टमुद्गादि, विषदमभ्यवहार्य्यम् ओदनादि। भक्ष्य इति किं पुष्पपटलेन संस्कृतो माल्यागुण.।

दध्न ष्णिको वा तूदश्वित:। डाद्दध्नः संस्कृतेऽर्थे ष्णिकः स्यात्, उदश्वितस्तु (३) वा। दध्नि संस्कृतं दाधिकम्। तेन संस्कृतमित्यत्र दधिकृतमेवोत्कर्षाधानम्, इह तु द्रव्यान्तरेण लवणादिना आधारभूत दधि संस्क्रियत इति भेदः। अन्ये तु दधि संस्कृतमित्यर्थविवक्षाया ष्णो मा भूदित्येतदर्थमित्याहुः। उदश्विति संस्कृतम् औदश्वित्कं, तादिकस्य कः। पक्षे औदश्वितम्।

(१) भ्राष्ट्र भर्जनपात्रम्।　　(२) पिठर. स्थाली।

(३) यस्मिन् अर्द्धाम्बु तक्रम्।

क्षीरात् ष्णेयः । ङात् क्षीरात् संस्कृते भक्ष्येऽर्थे ष्णेयः स्यात् । क्षीरे संस्कृता क्षैरेयी यवागूः ।

शूलोखाभ्यां यः । ङाभ्यामाभ्यां संस्कृते भक्ष्येऽर्थे यः स्यात् । शूले संस्कृतं शूल्यम्; उखायां संस्कृतम् उख्यं मांसम् ।

भवे । ङाद्भवेऽर्थे वेत्यादित्वात् ष्णः स्यात् । स्रुघ्ने भवः स्रौघ्न, माथुरः, श्रेयसि भवः श्रायसः । आदाद्यचो णित्ते व्रिंध-पेत्यादिनाद्यच आत् । एवं दार्षदतं दाविकम् । यमादेस्तु याम्यः प्राजापत्यः पाशुपतः आग्नेय औस्रः । भवादित्वात् गार्गीयः काशिकः राष्ट्रिय इत्यादि ।

अध्यात्मादेः ष्णिकः । ङादध्यात्मादेर्भवेऽर्थे ष्णिकः स्यात् । अध्यात्मे भव आध्यात्मिकः । अध्यात्मादिर्यथा—

अध्यात्ममुपजानूपकर्णं स्यादुपनीवि च ।
अधिभूताधिदैवञ्च स्वग्रामोर्द्धंन्दमं तथा ।
ऊर्द्धंदेहः समानादि-र्लोकोत्तरदमेव च ।
स्वाध्याय-चतुरर्थे च कदाचिदिह षोड़श ।
अध्यात्मादाविह प्रोक्ताः समानोऽन्ये प्रयोगतः ।

अध्यात्मादयः षट् क्लतवा. (१) । आधिभौतिकम् आधिदैविकं सुभगादित्वात् द्वयोर्द्वयोर्व्रिः । ऊर्द्धन्दमशब्द ऊर्द्धसमानार्थः । समानादेस्तावत्—सामानदेशिकः सामानग्रामिकः । लोकोत्तर दात्तावत्—ऐहलौकिकः पारलौकिकः, द्वयोर्द्वयोर्व्रिः । चतुरर्थे

(१) अव्ययीभावसमासनिष्पन्ना ।

भवः चातुरर्थिकः। अत्र पाठात् ग-वाच्ये न लुक् त्यस्य। मूले ऐहिकमिति। एवं कादाचित्कम्। समाने भवः सामानिकः। अस्याकृतिगणत्वात् ग्रीष्मे भवः ग्रैष्मिकः।

वादन्तःपूर्व्वात्। ङात् क्षतवात् अन्तःशब्दपूर्व्वात् भवेऽर्थे ष्णिकः स्यात्। अन्तरगारे भवः आन्तरगारिकः आन्तर्द्दैहिकः। अन्तःशब्दस्याधिकरणप्रसिद्धत्वात् स्वर्थे वसः।

ग्रामात् पर्य्यनुपूर्व्वात्। ङात् क्षतवात् पर्य्यनुपूर्व्वाद् ग्रामाद्-भवेऽर्थे ष्णिकः स्यात्। परिग्रामे भवः पारिग्रामिकः आनुग्रामिकः। आभ्यामिति किं? मूले ग्रामीणः ग्राम्य इति परादित्वात् ईनः दिवादित्वात् यः।

प्राण्यङ्गदिगादिभ्या यो देवादेस्तु णित्। ङेभ्यः प्राण्यङ्ग-वाचिभ्यो दिगादिभ्यश्च भवेऽर्थे यः स्यात्, णित्तु देवादेः। मूले मूर्द्धन्यमिति मूर्द्धि भवमिति वाक्यम्। एवं हृद्यं कण्ठ्यं तालव्य-मित्यादि। दिगादेस्तावत्—दिशि भवं दिश्यम्। दिगादिर्यथा—

> दिक् पक्ष-मृग-पश्यानोऽन्तोक-शाखि(१)रहो(२)गणाः।
> वर्ग मित्राऽन्तराऽऽकाश-वेग-कालादयो (३) मुखम्॥
> जघन मेघ-यूथाऽन्ता न्याय-धार्य्यानुखा(४)पि च।
> मेधोऽनुवंशो वंशोऽथ संप्रायासुदकं मतम्॥

अत्र ये द्वयास्तेभ्य ईयः शेषेभ्यः णो बाध्यते। मुखजघनयोः प्राण्यङ्गवचनत्वेऽपि प्राण्यङ्गभिन्नेऽपि यप्राप्त्यर्थः पाठः। उदके

(१) शाखिन् इत्यन्यत्र पाठः।
(२) रहस्शब्द।
(३) काल, आदि।
(४) उपादान-।

भवा उदक्या रजस्वला। नात्र प्रकृतिप्रत्ययार्थेन शब्दवृत्तिः। संज्ञायामिति किम्? औदका मत्स्याः। देवादेस्तावत्—देवे भवं दैव्यम्। यद्यपि यमादित्वात् दैव्यमिति सिध्यति तथापि भवार्थे दैवमिति वारणार्थम्। देवादिर्यथा—

देवः पञ्चजनं चैव गम्भीरोऽथ व से परे।
परिसीरानुसीरोपसीरोपस्थणमेव च ॥
पर्य्योष्ठोपकलापानुग्रीवं परिसुख तथा।
परिहन्वनुगङ्गानुमापानुयवमेव हि ॥
अनुवंश परिखनाऽनुपथानुतिलन्तथा।
अनुसूपमथो यज्ञे चतुर्मासं प्रकीर्त्तितम् ॥

अथानन्तरं परे शब्दाः परिसीरादयः सप्तदश व से देवादौ पठ्यन्ते। पूर्व्व(१)मनुवंशशब्दोऽवसे। परिसुखमित्यत्र सर्व्वतोभावार्थे-परिशब्दस्य योगविभागात्, इह व समदशज्ञापकाद्वा व-स. (२)। चतुर्षु मासेषु भवः चातुर्मास्यो यज्ञः।

मूले नादेयमिति नद्यादित्वात् ष्णेयः। शालीयमिति वृद्धादीयः, शालायां भव इति वाक्यम्। नागर इति ष्ण।

अग्रात् येयेयाः। डादग्रशब्दात् य इय ईय एतस्मुर्भवेऽर्थे।

---

(१) पूर्व्वं दिगादावित्यर्थं।

(२) वर्ज्जनार्थ परिशब्देन सह पञ्चम्यन्तपदस्याव्ययीभाव इति योग। अत्र "आङ्‌र्य्यपरिबहिरञ्चवः पञ्चम्या" इति वार्त्तिक सूत्र ९०७ सूत्रे द्रष्टव्यम्। परि शब्देन सह पञ्चम्यन्तभिन्नपदस्याप्यव्ययीभाव इति विभाग। तेनात्र सुख परि परिसुखमित्यव्ययीभाव। पश्चात्तदन्तमप्याश्रीयते वसपद्धपेति। अथवा अव्ययीभाव समासनियामित्रिशब्दानां मध्ये पाठादेवाव्ययीभाव इत्यर्थं।

४३१। व्यटे र्लोपो ऽनाराच्छ्वतोऽच्यै ऽयौ।

( व्य-टेः ६।, लोपः १।, अनारात्-शश्वतः ६।, अच्-ये ७।, अयौ ७। )।

पौनः पुनिकः, वाह्यः वाहीकः।

४३२। न दं तसौ त्वस्त्यर्थे च।

( न ।१।, दं १।, तसौ १॥, तु ।१।, अस्त्यर्थे ७।, च ।१। )।

---

मूले अग्रामिति, अग्रियम् अग्रीयम्। परेकदग्निनः तदन्तादपीच्छन्ति तेनात्यग्रामित्यादि।

४३१। व्यटेः। व्यस्य टिः व्यटिः तस्य। आराच्च शश्वच्च तत्, न तत् अनाराच्छश्वत् तस्य। अच्च यश्च अच्यं तस्मिन्। नास्ति युर्यस्मिन् सः अयुस्तस्मिन्। आराच्छश्वद्वर्ज्जितस्य व्यस्य टेर्लोपः स्यात् अचि ते युवर्ज्जिते ये च। पौनः पुनिक इति पुनःपुनर्भव इति वाक्यम्, अध्यात्मादेराकृतिगणत्वात् ष्णिकः, अनेन टिलोपः। अयाविति किम् अह्नंयुः।

वह्रियो ष्यणीकौ। डाहह्विस्शब्दात् भवेऽर्थे ष्यणीकौ स्याताम्। मूले वाह्य इति, पक्षे वाहीकः, वह्विर्भव इति वाक्यम् अनेन त्ये पूर्व्वेण टिलोपः।

४३२। नदम्। अच्ये याविव्यनुवर्त्तते। तश्च सश्च तौ। अस्ति अर्थो यस्य तस्मिन्। तस्मिन्निति निर्दिष्टे पूर्व्वस्येति न्यायात् पूर्व्वदमाधिपतेोल्वत आह पूर्व्वं दमन्न न स्यादिति। अव ञ्नेर्नुकि तुमग्निमाग्निल दले अनेन निषिध्यते आरातीय इति।

अयावचि ये च ते पूर्वं दसंज्ञं न स्यात् तान्त सान्तौ तु अस्त्यर्थे च ।

आरातीयः शाश्वतिकः ।

---

आराद्भव इति वाक्य, इडसंज्ञकत्वादीयः अनेन दत्वनिषेधान्न चपोऽवे जब् ।

क्यङ्घे च । क्ये घे च पूर्वं दसंज्ञं न स्यात् । गामिच्छति गव्यति, गौरिवाचरति गव्यते इत्यादौ दान्तत्वात् वाव गोर्दान्ते इति न अवादेश इति, एवं तड़ितमिच्छति तड़ित्यतीत्यत्र न चपोऽवे जब्, नमस्यति इत्यत्र न विः ।

शश्वतः ष्णिको वा न कश्च । डाच्छश्वच्छब्दात् ष्णिको वा स्यात् ष्णिकस्य न कश्च । मूले शाश्वतिक इति, शश्वत् विषु कालेषु भवः विद्यमान इत्यर्थः । पचे शाश्वतः न टेर्लोपः न चपोऽवे जब्‌च ।

अहि वस्त्यस्ति कुचि इति कलशिभ्यः (१) ष्णेयो ग्रीवायाः ष्णश्च । डेभ्य एभ्यो भवार्थे ष्णेयः स्यात् ग्रीवायाः ष्णेयष्णौ । अहौ भवम् आहेयं वास्तेयम्, अस्तीति त्यन्तप्रतिरूपनिपातस्य धनवाचकस्यास्तिशब्दस्य ग्रहणम्, आस्तेयं कौचेयं दार्त्तेयं कालसेयं ग्रैवेय ग्रैवम् ।

अङ्गुलिजिह्वामूलाभ्यामीयः । डाभ्यामाभ्याम् ईयः स्यात्

---

(१) कलशिभ्योऽण् सुपद्म० । तथाच भाष्य — कलसिमुदधिगुर्वीं वल्लवा लोडयन्ति — इति तद्धितपादे ४०८ सूत्रे गोयीचन्द्र० ।

भवेऽर्थे। अङ्गुलौ भवः अङ्गुलीयः जिह्वामूलीयः। कथं मुखतीयः पार्श्वतीयः (१)? गहादित्वात्।

वर्गान्ताच्च। डाद्वर्गान्ताद्भवेऽर्थे ईयः स्यात्। कवर्गे भवः कवर्गीयः पवर्गीयः। वर्गान्तादिति किं? वर्ग्यः दिगादित्वात् यः।

अशब्दे येनौ च। डाद्वर्गान्तात् य ईन ईय एते स्युः भवेऽर्थे न तु शब्दे वाच्ये। कृष्णवर्गे भवः कृष्णवर्ग्यः कृष्णवर्गीणः-कृष्णवर्गीयः। शब्दे तु कवर्गीयो वर्णः।

मध्यान्मण्मीयदिनण्ीया दस्य तुम् च। डान्मध्यादेते (२) स्युः भवेऽर्थे, दस्य तुम् च, उम् इत्। मध्ये भवः माध्यमः मध्यमीयः माध्यन्दिनः मध्यीयः।

कर्णललाटाभ्यां कोऽलङ्कारे। डाभ्यां भवेऽर्थे कः स्यात् भूषार्थे। कर्णे भवोऽलङ्कारः कर्णिका, ललाटिका, यस्यापवादः। अलङ्कार इति किम्? कर्ण्यं ललाट्यम्।

त्थामाजिनान्ताल्लुक्। डात् त्थामान्तादजिनान्ताच्च भवेऽर्थे विहितस्य त्यस्य लुक् स्यात्। अश्वत्थाम्नि भवः अश्वत्थामा वृकाजिनः सिंहाजिनः।

ग्रन्थादनेकाचः ष्णिकः। डात् ग्रन्थवाचकादनेकाचः ष्णिकः स्यात् भवेऽर्थे। इष्टौ भवः ऐष्टिकः पाशुकः। एकाचस्तु सुपि भवः सौपः तैङः।

---

(१) मुखतस् पार्श्वतस् अनयोरव्ययत्वादीये टे लोपः।
(२) मण् मीय दिनण् ईय प्रत्ययाः।

बह्वचोऽन्तोदात्ताच्च । ङ्यादन्तोदात्ताद्बह्वचो ग्रन्थाद्भवेऽर्थे ष्णिकः स्यात् । पत्वञ्च णत्वञ्च षत्व-णत्वे, तयोर्भवः षात्वणत्विकः, स-स्वरेणान्तोदात्तः(१) । अन्तोदात्तादिति किम् ? संहितायां भवः सांहितः, प्रादि-स-स्वरेणाद्युदात्तः । पूर्व्वेणैव सिद्धे अनन्तोदात्ताद्-बह्वचः ष्ण एव, पृथग्विधानात् ।

ऋद्दक्पुरश्चरणाख्यातेभ्यः । ऋदन्तात् ऋक्शब्दात् पुर-श्चरणशब्दात् आख्यातशब्दाच्च ङ्यात् ष्णिकः स्यात् भवेऽर्थे । पञ्चसु होतृषु भवः पाञ्चहोतृकः, ऋचि भवः आर्च्चिकः, एकाच्-त्वात् ष्णस्यापवादः, पौरश्चरणिकः आख्यातिकः, अनन्तोदात्तत्वात् ष्णस्यापवादः ।

ऋषेरध्याये । ङ्यादृष्यभिधानग्रन्थवाचकात् भवेऽर्थे ष्णिकः स्यादध्याये वाच्ये । ऋषिशब्द उपचारात् ग्रन्थविशेषमभिधत्ते । वशिष्ठे भवः वाशिष्ठिकः वैश्वामित्रिकः । अध्याय इति किं ? वाशिष्ठी ऋक् ।

यज्ञक्रतुवाचिभ्याम् । ङ्याभ्यां यज्ञवाचिभ्यां क्रतुवाचिभ्याञ्च ष्णिकः स्यात् भवार्थे । अनन्तोदात्तार्थं आरम्भः । नवयज्ञे भवः नावयज्ञिकः । क्रतुभ्यस्तावत्—राजसूयिकः वाजपेयिकः । क्रतुभ्य इत्येव सिद्धे यज्ञग्रहणमसोमयागे यथा स्यात्, पाञ्चौदनिकः (२)।

---

(१) से समासे स्वर उदात्तादित्वेन ।

(२) सोमसाध्येषु यागेष्वेतौ (क्रतुयज्ञशब्दौ) प्रसिद्धौ । तस्मादन्यतरोपादानेन सिद्धे उभयोरुपादानसामर्थ्यादसोमका अपीह गृह्यन्ते इति सिद्धान्तकौमुदी (४।३।६८)।

पुरोडाशपौरोडाशाभ्यामणित्। डाभ्यामाभ्यां ग्रन्थाभ्यां भवेऽर्थे णिकोऽणित् स्यात्। पुरोडाशः पिष्टकपिण्डः तत्र भवः पुरोडाशिकः। पुरोडाशिकी ऋक्। पुरोडाशसंस्कारको मन्त्रः पौरोडाशः तत्र भवः पौरोडाशिकः पौरोडाशिकी। पौरोडाश-शब्दादन्तोदात्तात् पूर्व्वेण णिकविधाने पौरोडाशिकः पौरो-डाशिकीति सिद्धे पौरोडाशग्रहणं पुंवद्भावनिषेधाभावार्थमिति।

ण्य ऋगयनादेश्छन्दसो यश्च। डाहगयनादेर्ग्रन्थाद्भवेऽर्थे ण्यः स्यात्, छन्दसस्तु य-ण्यौ। ऋगयने भवम् आर्गयनम्।

ऋगयनादिर्यथा—

ऋगयन-विद्या-निगम-न्यायं छन्दोभाषोत्पाद-पुनरुक्तम् (१)।
छन्दोविचिति-छन्दोविजिनी-छन्दोमान-व्याकरणानि।
अङ्गविद्या त्रयीविद्या पदव्याख्यानमेव च।
छन्दोव्याख्यानोपनिषच्छिक्षासंवत्सरादपि॥
उत्पातश्च मुहूर्त्तश्च क्षेत्रविद्या तथैव च।
वास्तुविद्या निमित्तञ्च निरुक्तं परिकीर्त्तितम्॥

छन्दसि भवः छन्दस्यः छान्दसश्च। सर्व्वस्मात् णिको बाध्यते।

सरय्वाः ण्ये यल्लोपः। सरय्वां भवः सारवः, अत्र यलोपः। भवे किम्? सरय्वां जातः सारयवः।

जाते। डादित्येव। तत्रात्तेऽर्थे येभ्यादित्वात् ण्यः स्यात्। भवजातयोरयं भेदः, भवो विद्यमानः जात उत्पन्नः। स्रुघ्ने जातः

---

(१) छन्दोभाषा, उत्पादः।

सौम्यः माथुरः । यमादेस्तु याम्यः आदित्यः आग्नेयः कालेयः प्राजापत्यः पाशुपतः औक्ष इत्यादि । भवादित्वात् गार्गीयः ग्रालीयः नादेयः कालिकः राष्ट्रिय इत्यादि ।

प्रावृष इकः । प्रावृषि जातः प्रावृषिकः, एण्यस्यापवादः ।

नाम्नि शरदो णकः । डाच्छरच्छब्दात्णकः स्यात् जातेऽर्थे, तदन्तेन संज्ञा चेद्गम्यते । शरदि जाताः शारदकाः कुशाः दर्भाश्च । अनाम्नि तु शारदिकं, यथाप्राप्तम् ।

मूलार्द्रावस्करप्रदोषपूर्व्वाह्णापराह्णात् कः । डेभ्य एभ्यो जातेऽर्थे कः स्यात् नाम्नि । मूले जातः मूलकः, आर्द्रायां जातः आर्द्रकः, केऽकः स्व इति स्वः । अवस्करकः प्रदोषकः पूर्व्वाह्णकः अपराह्णकः, अनाम्नि तु यथाप्राप्तम् ।

पथः पन्थश्च । के पथः पन्थादेशश्च । पथि जातः पन्थकः ।

अमावास्यामावस्याभ्यामश्च वा । डाभ्यामाभ्यां कः अश्च वा स्यात् जातेऽर्थे सञ्ज्ञायाम् । अमावास्यायां जातः अमावास्यकः अमावास्यः । पक्षे पलद्यादिष्णः आमावास्यः । एवम् अमावस्यकः अमावस्यः आमावस्य इति ।

सिन्ध्वपकराभ्यां कः ष्ण ट्णौ च । डाभ्यामाभ्यां जातेऽर्थे कः स्यात् ष्ण-ट्णौ च क्रमात् स्याताम् । सिन्धौ जातः सिन्धुकः, ष्णे सैन्धव, कच्छादिपाठात् न्तृतत्स्थयोर्णकस्यापवादः । अपकरे जातः अपकरकः, ट्णे आपकरः । एतत्पर्य्यन्तं नाम्नीत्यधिकारः ।

तिष्य पुनर्व्वसु स्वाति हस्ता-विशाखा ऽनुराधाभ्यो लुक् । एभ्यो जातार्थस्य तस्य लुक् स्यात् । तिष्ये जातः तिष्यः पुनर्व्वसुः

स्वातिः हस्तः विशाखः, बहुलाः कृत्तिकाः तासु जातः बहुलः, तस्य लुकि स्त्रीत्यस्य लुक्।

नक्षत्रेभ्यो वा। नक्षत्रवाचिभ्यो जातार्थत्यस्य लुग्वा स्यात्(१)। अश्विन्यां जातः अश्वी ष्णे तस्य लुकि स्त्रीत्यस्य लुक्, पक्षे आश्विनः। अश्वयुक् आश्वयुजः, रोहिणः रौहिणः, मृगशिराः मार्गशीर्षः, अभिजित् आभिजितः, चित्रः चैत्रः, श्रवणः श्रावणः, रेवतः रैवतः।

वत्सशालात्। वत्सशालशब्दाज्जातार्थत्यस्य लुग्वा स्यात्। वत्सशाले जातः वत्सशालः पक्षे वात्सशालः।

फल्गुनीशतभिषग्भ्यां टङौ च। आभ्यां जातार्थत्यस्य लुक् वा स्यात् लुकि सति क्रमाट्टडौ वा स्याताम्। फल्गुन्यां जातः फल्गुनः, टपक्षेऽपि फल्गुनः। स्त्रियां फल्गुना फल्गुनी च, टे कृते टित्त्वादीप्। उभयत्वक्तपक्षे फाल्गुनः, फाल्गुनी (२)। शतभिषजि जाता शतभिषा, डिति टिलोपः लोपे अत आप्, डाभावपक्षे शतभिषक्, लुगभावपक्षे शातभिषजी।

श्रविष्ठाषाढादीयणीयौ च वा। आभ्यां जातार्थत्यस्य लुग्वा स्यात् लुकि ईयः णीयश्च वा। श्रविष्ठायां जातः श्रविष्ठः श्रविष्ठीयः श्राविष्ठीयः, लुगभावपक्षे श्राविष्ठः। आषाढायां जातः आषाढः आषाढीयः, लुगभावपक्षे आषाढः। अन्ये तु अषाढेति ह्रस्वादि,

(१) विशेषविधिशेषोऽस्य विषयः।

(२) उभयं लुक् टञ्चावश्च तयोरभावपक्षे ष्णे स्त्रियामीप्।

तथाच "यद्रोहिणीयोगफलं तदेव भवेदषाढ़ासहिते च चन्द्रे" इति वराह इत्याहुः।

स्थानान्त-खरशाल-गोशालाल्लुग् नित्यम्। एभ्यो जातार्थत्यस्य लुक् नित्यं स्यात्। गोस्थाने जातः गोस्थानः महिषस्थानः खरशालः (१) गोशालः। एभ्यः किं? स्थाने जातः स्थानीयः माहिषशालः।

स्त्रियां चित्रारोहिणीरेवतीभ्यः। आभ्यो जातार्थत्यस्य नित्यं लुक् स्यात् स्त्रियां वाच्यायाम्। चित्रायां जाता चित्रा, रोहिणी रेवती कन्या, उभयत्र नदादेराकृतिगणत्वादीप्। स्त्रियामिति किं? चित्रायां जातः चैत्रः रौहिणः रैवतः।

न मघादेः। मघादेर्जातार्थत्यस्य लुक् न स्यात् (२)। मघासु जातः माघः, अश्वत्थेषु जातः आश्वत्थः, प्रोष्ठपदासु जातः प्रौष्ठपादः, सुपञ्चालादित्वात् अन्त्यदस्य वृः।

कृत लब्ध-क्रीतेषु। डादित्यनुवर्त्तते। डादेष्वर्थेषु वेत्यादित्वात् ण्यः स्यात्। स्रुघ्ने कृतो लब्धः क्रीतो वा स्रौघ्नः माथुरः। यमादेस्तु याम्यः आदित्यः आग्नेयः कालेयः प्राजापत्यः पाशुपतः श्रौत्स इत्यादि। भवादित्वात् गार्गीयः नादेयः राष्ट्रियः इत्यादि।

कुशले। डात् कुशलेऽर्थे वेत्यादित्वात् ण्यः स्यात्। स्रुघ्ने

---

(१) खराणां शाला इति वाक्ये वा तु छाया सेना सुरा शाला निशा इत्यनेन क्लीवत्वे लुकः।

(२) नक्षत्रेभ्यो वा इत्यनेन प्राप्तो लुग् निषिध्यते।

कुशलः स्रौघ्नः एवं माथुरः। यमादेस्तु याम्यः श्रौत्स इत्यादि। भवादित्वात् गार्गीयः नादेयः राष्ट्रिय इत्यादि।

पथ्यादेरकः। ङात् पथ्यादेरकः स्यात् कुशलार्थे। पथि कुशलः पथकः। पथ्यादिर्यथा—

पन्थाः पिपिच्छा निचयाश्मङ्गादा-
ङ्गादा नया-कर्ष जयैः पिशाचः।
पथ्यादयश्चेह दशैव सिद्धा (१)
भाष्यादिशास्त्राणि बुधैर्विचार्य्य।

तरु-शकुन्यशनिभ्यः कः। ङेभ्य एभ्यः कुशलार्थे कः स्यात्। तरौ कुशलः तरुकः शकुनिकः अशनिकः।

प्रायभवे। ङात् प्रायभवेऽर्थे वेत्त्यादित्वात् ष्णः स्यात्। स्रुघ्नः प्रायभवः प्रायेण बाहुल्येन भव स्रौघ्नः, माथुरः। यमादेस्तु याम्यः आदित्य, आग्नेयः प्राजापत्यः पाशुपतः श्रौत्स इत्यादि। भवादित्वात् गार्गीयः नादेयः राष्ट्रिय इत्यादि।

उपनीव्युपजानूपकर्णात् ष्णिकः। ङेभ्यः एभ्यः प्रायभवेऽर्थे ष्णिकः स्यात्। उपनीविनि प्रायभवः औपनीविकः, औपजानुकः औरिकस्य कः, औपकर्णिकः।

सम्भूते। ङात् सम्भूतेऽर्थे वेत्त्यादित्वात् ष्णः स्यात्। अत्र सम्भूतशब्देन सत्तोत्पत्ती नोच्येते भवजाताभ्यामनुगतार्थत्वात्, किन्तु आधाराधेययोरन्यूनानतिरिक्तता। स्रुघ्ने सम्भूतः स्रौघ्नः माथुरः।

(१) सिद्धा अनुशिष्टाः।

यमादिसु याम्यः आदित्यः आग्नेयः कालेयः प्राजापत्य श्रौत्स इत्यादि। भवादित्वात् गार्गीयः नादेयः राष्ट्रिय इत्यादि।

कोषादस्त्रभेदे ण्येयः। ङात् सम्भूतेऽर्थे वस्त्रविशेषे वाच्ये ण्येयः स्यात्। कोषे सम्भूतं कौषेयं क्रमिकोषोत्थं वस्त्रम्। वस्त्र-भेद इति किं? कौषः क्रमिः।

कालेभ्यः साधुपुष्प्यत्पच्यमानेषु। ङेभ्यः कालवाचिभ्य एष्वर्थेषु भवादित्वात् यथाविहितं त्याः स्युः। हेमन्ते साधुः पुष्प्यति पच्यते वा हैमन्तिकः हैमन्तः हैमनः, वासन्ती कुन्दलता, शारदाः शालयः, प्रावृषेण्याः तिला इत्यादि। पुष्प विकसने शत्र पुष्प्यत्। डुपपचीञ् पाके, ढचे शानः, पच्यमानः।

उप्ते च। ङेभ्यः कालवाचिभ्यः उप्तेऽर्थे भवादित्वात् यथा-विहित त्याः स्युः। हेमन्ते उप्यन्ते हैमन्तिकाः हैमन्ता हैमना यवाः, प्रावृषेण्यास्तिलाः, शारदा मुद्गा इत्यादि। पृथग्योग उत्तरार्थः (१)।

आश्वयुज्या णकः। ङादाश्वयुजीशब्दादुप्तेऽर्थे णकः स्यात्। आश्वयुज्यामुप्तः आश्वयुजको माषः, आश्वयुजी आश्विनी पौर्णमासी।

ग्रीष्मवसन्ताभ्यां वा। ङाभ्यामाभ्यामुप्तेऽर्थे णकः स्यात् वा। ग्रीष्मे उप्तः ग्रैष्मकः वासन्तकः, पक्षे ग्रैष्मः वासन्तः।

देय ऋणे। ङेभ्यः कालवाचिभ्यो देयेऽर्थे भवादित्वात्

---

(१) उप्तस्य पूर्वसूत्रे निर्देशेनैव सिद्धे पृथग्विधानं परत्रानुवृत्त्यर्थमिति-भाव।

यथाविहितं त्याः स्युः, यद्देयं तदृणं चेद्भवति। मासे देयमृणं मासिकम् आर्द्धमासिकं सांवत्सरिकं, सन्ध्यायां देयमृणं सान्ध्यं पलव्यादित्वात् ण्यः।

अश्वत्थ-कलापि यव-बुषादकः। ङेभ्य एभ्यः कालवाचिभ्यो देयर्णेऽर्थे अकः स्यात्। यस्मिन् कालेऽश्वत्थः फलिनः, मयूराः कलापिनः (१) यवबुषमुत्पद्यते स कालः साहचर्य्यादश्वत्थादिभिरुच्यते। अश्वत्थे देयमृणम् अश्वत्थकं कलापकं यवबुषकम्।

ग्रीष्मावरसमाभ्यां णित्। ङाभ्यामाभ्यां देयर्णेऽर्थे अको णित् स्यात्। ग्रीष्मे देयमृणं ग्रैष्मकम्, अवरसमायां देयमृणम् आवरसमकम्। अवरसमाशब्देनागामिवत्सर उच्यते।

संवत्सराग्रहायणीभ्यां ण्णिकच। ङाभ्यामाभ्यां देयर्णेऽर्थे णकण्णिकौ स्याताम्। संवत्सरे देयमृणं सांवत्सरकं सांवत्सरिकम् आग्रहायणकम् आग्रहायणिकम्। ननु वेति कृते सिद्धे णका-भावपक्षे कालवाचित्वात् ण्णिको भविष्यति किमिह ण्णिक-विधानेनेति चेत् सत्य, पलव्यादौ फलपर्व्वणोः (२) संवत्सरशब्दस्य पाठात् देयर्णत्वेन फले विवक्षिते (३) ण्णिकं बाधित्वा ण्यः प्रवर्त्तते, तद्बाधनाय इदमिति।

व्याहरति मृगे। कालेभ्य इति प्रवर्त्तते। ङेभ्यः काल-वाचिभ्यो व्याहरतीत्यर्थे भवादित्वात् यथाविहितं त्याः स्युः, यो

(१) यस्मिन् काले मयूरा कलापिनो भवन्ति स काल॰ कलापीति।

(२) फले पर्व्वणि च वाच्ये इत्यर्थः।

(३) देयर्णस्य फलत्वविवक्षायामित्यर्थः।

व्याहरन् स मृगश्चेद्भवति । निशायां व्याहरन् (१) मृगः नैशिको नैशः, प्रादोषिकः प्रादोषः, हैमन्तिकः हैमन्तः, प्रावृषेण्य इत्यादि । मृग इति किं ? निशाया व्याहरन्नरः । कालेभ्यः इति किं ? वने व्याहरति मृगः ।

ष्णिको नियुक्ते । ङेर्डान्नियुक्तेऽर्थे ष्णिकः स्यात् । द्वारे नियुक्तो दौवारिकः, धर्म्मे नियुक्तः धार्म्मिकः ।

अगारान्तादिकः । ङ्यदगारान्तान्नियुक्तेऽर्थे इकः स्यात् । देवागारे नियुक्तः देवागारिकः ।

निषिद्धदेशकालाभ्यामधीते ष्णिकः । ङाभ्यां निषिद्धदेश-कालाभ्यामधीतेऽर्थे ष्णिकः स्यात् । चतुष्पथेऽधीते चातुष्पथिकः चातुर्द्दशिकः ।

कठिनान्त-प्रस्तार-संस्थानेभ्यो व्यवहरति (२) । ङेभ्य एभ्यो व्यवहरतीत्यर्थे ष्णिकः स्यात् । वंशकठिने व्यवहरति वांशकठि-निकः प्रास्थानिकः सांस्थानिकः ।

वसति निकटात्, पिकश्चावसथात् । ङान्निकटशब्दाद्वसतीत्यर्थे ष्णिकः स्यात्, आवसथात्तु पिकः । निकटे वसति नैकटिकः, आव-सथिकः । स्त्रियाम् आवसथिकी आवसथिकभार्य्यः, पुंवद्भावः (३) ।

पृथिवीसर्व्वभूमिभ्यां ट्णष्णौ विदिते । ङाभ्यामाभ्यामेतौ

---

(१) शब्दायमान ।

(२) प्रस्थान इत्यत्र प्रस्तार इत्यपि क्वचित् पाठः ।

(३) ष्णिकान्तत्वाभावादिति शेषः ।

क्रमात् स्याताम् विदितेऽर्थे। पृथिव्यां विदितः (१) पार्थिवः, सर्व्वभूमौ विदितः सार्व्वभौमः, सुभगादित्वाद्द्वयोर्द्वयोर्व्रिः।

लोक-सर्व्वलोकाभ्यां णिकः प्रसिद्धे च। आभ्यां प्रसिद्धे विदिते चार्थे णिकः स्यात्। लोके प्रसिद्धो विदितो वा लौकिकः, सार्व्वलौकिकः, द्वयोर्द्वयोर्व्रिः।

कालेभ्यो दीयते कार्य्यं वा भववत्। ङेभ्यः कालवाचिभ्यो दीयते कार्य्यं वा अर्थे भववत् त्याः स्युः। मासे दीयते कार्य्यं वा मासिकम्, आर्द्धमासिकं सांवत्सरिकं प्रावृषेण्यं हैमन्तं हैमनमित्यादि।

व्युष्टादेः ष्णः। ङाद्व्युष्टादेर्दीयते कार्य्यं वा अर्थे ष्णः स्यात्। व्युष्टे (२) दीयते कार्य्यं वा वैयुष्टम्। व्युष्टादिर्यथा—

व्युष्ट-संघात-नित्योपवास-तीर्थ-प्रवेशनम्।
प्रवास-निष्क्रमौ पीलुमूलाऽग्निपदमित्यपि॥

यः साधौ। ङात् साधावर्थे यः स्यात्। सामनि साधुः निपुणो योग्यो वा सामन्यः। एवं ब्रह्मण्यः कर्म्मण्यः सभ्यः।

प्रतिजनादेर्यीनः। ङात् प्रतिजनादेर्यीनः स्यात् साधावर्थे। प्रतिजनं साधुः प्रातिजनीनः। प्रतिजनादिर्यथा—

प्रतिपद्यमद्दिग्विसर्व्वादिजन-संयुगौ।
परपूर्व्वकुलाऽमुष्यकुलं सम-परायुगम्।
इदंयुगमिह प्रोक्ता दश एकाधिका बुधैः॥

---

(१) विदितो ज्ञातः प्रकाशित इत्यर्थः इति काशिका (५।१।४३)।
(२) व्युष्टे प्रभाते।

जनं जनं प्रति प्रतिजनं वीप्सायां वसः, प्रतिसंयुगीनमित्यादि।
अमुष्य कुलमिति न षष्ठ्या लुक्, आमुष्यकुलीनः (१)।

भक्तास्ः परिषदो ण्यश्च। डात् भक्तशब्दात् साधावर्थे णः स्यात्, परिषदस्तु ण्यश्च। भक्ते साधुः भाक्तः शालिः। पारिषदः पारिषद्यः। परे तु परिषच्छब्दात् णं नेच्छन्ति।

कथादेः ष्णिकः। डात् कथादेः साधावर्थे ष्णिकः स्यात्। कथायां साधुः काथिकः। कथादिर्यथा—

कथा वितण्डा जनवादवोधौ गुणो गणो वेणुगुड़ौ निवासः।
अल्पूपवासौ विसुधा च वृत्तिः प्रवास-मांसोदन-संग्रहाश्च।
विकथेक्षुः कृष्णविदायुर्वेदौ निसुधा तथा।
कुल्माषापूप-संग्राम-सङ्घाताः पञ्चविंशतिः॥

पथ्यादेः ष्णेयः। डात् पथ्यादेः साधावर्थे ष्णेयः स्यात्। पथि साधु पाथेयं, स्वापतेयं धनम्। पथ्यादिर्यथा—

पन्थाश्च स्वपतिश्चैवातिथिर्वसतिरित्यपि।

सतीर्थाद्यो वासिनि। डात् सतीर्थशब्दात् यः स्यात् वासिनि वाच्ये। सतीर्थे वासी सतीर्थ्यः, एकगुरुसमीपे यस्य वासोऽस्ति स इत्यर्थः।

सोदर-समानोदराच्छयितरि। डाभ्यामाभ्यां शयितर्यर्थे यः स्यात्। सोदरे शयिता सोदर्यः समानोदर्यः।

सगर्भ-सयूथाभ्यामनुज-सहचारिणोः। डाभ्यामाभ्यां क्रमादनयोरर्थयोर्यः स्यात्। समानो गर्भः सगर्भः तत्रानुजः सगर्भ्यः,

---

(१) अत्र [illegible] इति वार्त्तिकम्।

४३३ । अह्नोऽह्नोऽनीने ।

( अह्नः ६।, अह्नः १।, अनीने ७। ) ।

आह्निकम् । ईनेतु द्व्यह्नीनः ।

सुपाञ्चालकः अर्द्धपाञ्चालकः ।

---

समानं यूथं सयूथं तत्र सहचारी सयूथ्यः । अन्ये तु छान्दस-मित्याहुः ।

४३३ । अह्नो । न ईनः अनीनः तस्मिन् । तथाच अहन् इत्यस्य ईनभिन्ने ताधि युभिन्ने तये च अह्न इत्यादेशः स्यात् । आह्निकमिति—अह्नि भवमिति वाक्यं, कालवाचित्वात् ष्णिके-ऽनेनाह्नादेशः । द्व्यह्नीन इति—द्वे अहनी अधीष्टो भूतो भावी वा इत्यर्थे गात् रात्राहः संवत्सरादितीनः, (१) सान्तविधेरनित्य-त्वात् पत्वाभावेन (२) सर्व्वैकदेशेत्यादिना नाह्नादेशः(३) । अथवा अत्र ईनवर्ज्जनज्ञापकात् पत्वे कृतेऽपि नाह्नादेशः ।

सुपञ्चालादेरन्त्यस्य दस्य ञिं दर्शयति सुपाञ्चालक इति—शोभनाय ते पञ्चालायेति सुपञ्चालास्तत्र भव इत्यर्थे व्वविपयाद-ह्वाचेति षकः (४) । पञ्चालानाम् अर्द्धम् अर्द्धपञ्चालास्तत्र भवः अर्द्धपाञ्चालकः पूर्व्ववत्षकः । पञ्चालादिः प्रागुक्तः ।

---

(१) ६१२ पत्रे वार्त्तिकधृतमिदमनुसन्धेयम् ।

(२) द्व्यह्नीन इति विषयद्विगुनिष्पादितत्वात् सप्ताह्नोरात्र इत्यनेनेति शेषः ।

(३) सर्व्वैकदेशेत्यादिसूत्रे पघरे पत्वाह्नादेश इत्युक्तेः ।

(४) ६०२ पत्रे वार्त्तिकधृतमनुसन्धेयम् ।

दौवारिकः सौवरं सौवं सौवस्तिकः सौवादुमृदवं वैयल्कसं श्वौवं श्वौवनं स्फैयकृतं सौवं सौवाध्यायिकं सौवग्रामिकं नैयग्रोधम्। एकेति किं न्याग्रोधमूलिकम्। श्वौवापदं श्वापदं, नैयङ्कवं न्याङ्कवम्। श्वागणिकम्।

द्वारस्वरेत्यादिसूत्रस्योदाहरणमाह दौवारिक इत्यादि—द्वारे नियुक्त इत्यर्थे ष्णिके वस्य उम् पश्चाद्वृद्धिः। स्वरमधिकृत्य कृतो ग्रन्थः सौवरः। स्वः स्वर्गे भवं सौवं, ष्णे व्यटेरिति टेर्लोपः। स्वस्ति वक्ष्यति सौवस्तिकः, स्वस्ति यथा स्यात्तथा वक्ति सौवस्तिकः, प्रभूतादित्वात् ष्णिक इत्यन्ये। स्वादुमृदुनि संस्कृत सौवादुमृदवं भक्तं, सस्कृते भक्ष्येऽर्थे वेत्यादित्वात् ष्णः। व्यल्कसोऽव्युत्पन्नस्तत्र भवः वैयल्कसः। अन्ये द्वारादौ न पठन्ति, तेषां मते विगतोऽर्को व्यर्कस्तं स्यति व्यर्कसः, कपिलिकादित्वात् रस्य लः, तत्र भवः वैयल्कस इति आद्यचः स्थानजातत्वात् यस्य इम् पश्चाद् वृद्धिः। श्वो भवं श्वौवस्तिकम्, श्वौवमिति पाठो लिपिकरप्रमादः। कालवाचित्वात्(१) ष्णिकः तस्य तम्(२)। तथाच श्वौवस्तिकत्व विभवा न येषां व्रजन्ति तेषां दयसे न कस्मादिति भट्टिः। शुनि भवं श्वौवन मांसम्, अविकारष्णे नलोपाभावः। स्फारकृते भव स्फैयकृतं, स्फाः खादिरः खड्गस्तेन कृतमिति चौरः। स्वे धने भवं सौवं, स्वपरदेवराजजनस्येत्यत्र (३) आत्मार्थस्वशब्दस्य ग्रहणात् इह स्वस्य

(१) अ० परदिने भवार्थकत्वात्।

(२) तस्य ष्णिकस्यादौ तकारागमः। ६१० पत्रे वार्त्तिकसूत्रमन्वेष्टव्यम्।

(३) ६८८ पत्रे स्वपरदेवराजेत्यादिवार्त्तिकसूत्रेण स्वकीय इत्येव भवति कथमत्र सौवमित्याशङ्काह आत्मार्थेत्यादि।

धनार्थत्वम् । वामनधर्म्मदासौ तु आत्मार्थस्वशब्दस्यापि इदमर्थं सौवमित्यप्याहतुः । स्वाध्याये भवं सौवाध्यायिकं वेदाध्ययनं, स्वग्रामे भवं सौवग्रामिकम्, आध्यामध्यात्मादित्वात् ष्णिकः । यद्यपि स्वाध्यायस्वग्रामशब्दयोः स्वशब्दस्य ग्रहणेनैव सिद्धिस्तथापि अन्यादिस्थितस्वशब्दस्य न स्यादित्येतदर्थं पृथगनयोर्ग्रहणम् (१)। दुर्गटीकायान्तु स्वग्राम इत्यत्र स्वर्गमनमित्युक्त्या स्वर्गमनं वक्तीत्यर्थे सौवर्गमनिक इति वर्त्तते । न्यग्रोधे जातः नैयग्रोधश्चमसः (२)। न्याग्रोधमूलिकमिति—न्यग्रोधमूलेन संसृष्टम् इत्यर्थे ष्णिकः । शुन इव पदमस्य श्वापदः, शुनो दन्तादाविति घंः, तत्र भवं शौवापद, पक्षे श्वापदमिति, पलद्यादेराकृतिगणत्वात् ष्णः, अथवा क्वचिदपवादविषये उत्सर्गोऽभिनिविशते इति न्यायात् ष्णः । न्यङ्कौ भवं नैयङ्कवं न्याङ्कवम् (३)। श्वागणिकमिति—श्वगणेन चरति, श्वगणाद्वेति यिकष्णिकौ, ष्णिकपक्षे इकारादौ ष्णित्ते न वस्य उम् । इकारादिभिन्ने तु श्वादंष्ट्रायां भवः शौवादष्टः इत्यादौ स्यादेव । अत्रापि शुनो दन्तादाविति घंः । अत्र श्वादेः श्वपूर्व्वस्यैव इकारादौ ते वस्य उम्निषेधात् द्वारादीनां सर्व्वेषां ष्णित्ते सामान्यययोः(४)रिमुमौ स्यातामित्यर्थः । अतएव न्यग्रोधस्यैकेति विशेषणस्य सार्थकत्वमिति ।

---

(१) तेन स्वोदरं पूरयतीति सौदरिक इत्यादि सिद्धम् ।

(२) न्यग्रोधो वटवृक्षः, चमसो यज्ञपात्रविशेषः ।

(३) न्यङ्कुर्मृगविशेषः ।

(४) पदान्तस्थितयवयोरादाव. स्थाने यजातयोरप्येत्यर्थ. ।

४३४। विकार सङ्घभावेदं हित स्वार्थादौ।

( विकार—स्वार्थादौ ७। )।

एष्वर्थेषु च ते त्याः स्युः।

---

४३४। विकारस्य सङ्घस्य भावस्य इदश्च हितस्य स्वार्थस्य ते आदयो यस्य स तस्मिन्। आदिशब्दः प्रत्येकमभिसम्बध्यते द्वन्द्वोत्तरश्रुतत्वात्। प्रकृतेरवस्थान्तर विकारः। सङ्घः समूहः। शब्दस्य प्रवृत्तिनिमित्तं भावः। इदमिति सम्बन्धमात्रोपलक्षणम्। हितमिष्टसाधनम्। स्वार्थ. प्रकृत्यर्थानतिरेकः। ते त्याः स्युरिति— ष्णि ष्णेय ष्णत्र ष्णायन ष्णीय ष्णिक ष्ण ष्णीक कण् ष्णीन इय एते। सेतोऽनितयेति अभिधानात् ज्ञातव्या इत्यर्थः।

ष्णः।, ष्ण इत्यधिकारः प्राः प्राक्।

विकारे। षन्ताद्विकारेऽर्थे वेत्यादित्वात् ष्णः स्यात्। मृत्तिकाया विकारः मार्त्तिकः आश्मः प्रासादः। नवा निर्द्दिष्टस्यानित्यत्वात् आश्मन इति कश्चित्। तथाच—"यथापमाश्मनप्रख्य सेषुं धत्तेऽन्यदुर्व्वह"मिति भट्टि। अस्मन्मते तु इदमर्थे भविष्यति।

प्राण्योषधिवृक्षेभ्योऽवयवे च। षन्तेभ्य एभ्यो विकारेऽवयवे चार्थे वेत्यादित्वात् ष्णः स्यात्। प्राणिभ्यष्ट्णो वक्ष्यते, तत्रैवोदाहार्य्यम्। इह प्राणिग्रहणन्तु अतः परे ये त्या वक्तव्यास्ते प्राण्योषधिवृक्षेभ्यो विकारावयवयोरन्येभ्यो विकारमात्रे भवन्तीति ज्ञापनार्थम्। ओषधिभ्यस्तावत्—मूर्व्वाया विकारोऽवयवो वा मौर्व्वः, एवं दौर्व्वः। वृक्षेभ्यस्तावत्—पलाशस्य विकारोऽवयवो

हेम्नो विकारः हैमः आग्न्य आग्नेयः, भिक्षाणां समूहः भैक्षं आङ्गं गाणिक्यं राजकं, गुरोर्भावः गौरवं यौवनं साम्यं वैरूप्यं राज्यं सौहार्दं, विष्णोरिदं वैष्णवं त्वदीयं माघवनं यौवनम् ।

---

वा पालाशः, शिंशपाया विकारोऽवयवो वा शांशपः, इकारस्याकारः ।

उ-प्राणि-रजतादिभ्यट्ष्णः । ष्णन्तात् उवर्णान्तात् प्राणिवाचकाद्रजतादेश्च ट्ष्णः स्यात् विकारावयवयोः। देवदारोर्विकारोऽवयवो वा दैवदारवः, प्रैयङ्गवः, कपोतस्य विकारोऽवयवो वा कापोतः, मायूरः, शुनो विकारोऽवयवो वा शौवं मांसं, रजतस्य विकारोऽवयवो वा राजतं कुण्डलं, काञ्चनं, तथाच—"पुरीं द्र[illegible]ी"मिति भट्टिः । "काञ्चनी वासयष्टि"रिति कालिदासः । परशव्यस्य विकारोऽवयवो वा पारशवः, विकारत्वे द्वितार्थत्यस्य लुक् वक्ष्यते (१) । रजतादिर्यथा—

रजतं काञ्चनं लौहं सीसं रोहितकस्तथा ।
उदुम्बरः पीतदारु विकङ्कत-विभीतकाः ।
कण्टकारो नीप-दारु-परशव्योऽत्र कीर्त्तितः ॥

अनुदात्तादेः । ष्णन्तादनुदात्तादेर्व्विकारेऽवयवे चार्थे ट्ष्णः स्यात् । दण्डिनो विकारोऽवयवो वा दाण्डः, दाधित्थः, कापित्थः ।

पलाशादेर्वा । ष्णन्तात् पलाशादेस्तयोट्ष्णो वा स्यात् । पालाशः, पक्षे ष्णः—पालाशः, पालाशस्य विकारः पालाशमयः ।

---

(१) परशव्यशब्दो हि परशुशब्दात् हितार्थे य-प्रत्यय-निष्पादित- ।